# MATHATHRAYASARA SANGRAHA

WITH

## Siddhanthathraya Adhikaranartha Sangraha






*By*

**VIDWAN KALI V. RANGACHARYA**

(*Vidwan Mandala Mandana, Vidya Varidhi,*
*Mathathraya Nirupaka, Danadhikari*
*Pudukkottai State*)

WITH PREFACE

in English and Sanskrit



*By*

**R. SRINIVASACHARIAR, B.A., B.L.,**

*Chief Judge, Chief Court, Pudukkottai State.*



॥ श्रीः ॥

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# ॥ मतत्रयसारसंग्रहः ॥

## ॥ सिद्धान्तत्रयाधिकरणार्थसंग्रहश्च ॥

इमौ च

विद्वन्मण्डलमण्डन, विद्यावारिधि, मतत्रयनिरूपक, इत्यादिविरुदा-
वलिसमलंकृतैः नवसाल (पुदुक्कोट्टै) संस्थानाधिपतेः
श्रीमन्महाराजराजगोपाल भूपतेः दानाधिकारिपदमधिरूढैः
तदीयविद्वत्सभाध्यक्षैश्च भारद्वाजकुलतिलकैः

**कालि. वङ्गीपुरं. रङ्गाचार्यैः**

विरचितौ,

नवसालसंस्थान प्रधानन्यायमन्दिर प्रधानप्राड्विवाकपदमधितिष्ठद्भिः

काव्यकलानिधि **श्री. श्रीनिवासाचार्यैः**

विरचितया भूमिकया

भूषितौ,

कुम्भघोणं—श्री उभयवेदान्तचतुर्वेदि शतक्रतु श्रीशैली पाट्टराचार्यापरनामधेयैः

**शिन्नाम्रु. र. श्रीनिवासपाट्टराचार्यैः**

परिशोधितौ,

कुम्भघोणं—जनार्दनमुद्रालये नवसालपुरस्थ ऐक्यमुद्रालये च
मुद्रितौ सन्तौ
विजयतेतमाम् ॥

वैशाख शुक्ल एकादशी
२—६—४७.

मूल्यं रू. १२—०—०
प्रापणव्ययः पृथक्.

# PREFACE.

The author of this memorable work has assigned to me the pleasant function of writing a prefatory note to it. I need scarcely introduce the author to the public, for he is a scholar of Southern India well known to all those that lay any claim to scholarship. He has been, for the past nearly half a century, adorning the Board of Pundits that assemble at the Dussara in this State and he has been the head of the Board for the past more than fifteen years. In this capacity almost all Pundits of Southern India have had occasion to meet him year after year and in the course of being passed by him have had occasion to gauge the soundness of his learning. His attainments in many branches of Sanskrit learning are indeed remarkable. Vyakarana and Mimamsa are his special subjects. Sahitya and Tarka are also well within his range. He has mastered all the three systems of philosophy founded by the three great Acharyas, Sri Sankara, Sri Ramanuja and Sri Madhva. He has also mastered the Yajurveda with Lakshana. His intimate knowledge of Divya Prabandams fully justifies the claim "Ubhaya Vedantacharya" which, in the case of many another pundit is not as fully deserved.

2. These accomplishments of the author have attracted the notice of His Holiness Jagadguru Sri Sankaracharya of Kanchi Kamakoti Mutt, who, in recognition of his attainments, has been pleased to confer upon him the title "Vidwan Mandala Mandanam" the ornament of the galaxy of pundits.

By reason of the author's having accepted a post in a small Indian State like Pudukkottai and having, therefore, spent practically the whole of his life in that State, he was denied the opportunity of going into the larger world outside and establishing larger contacts than he has been able to do so far.

3. The Brahma Sutras of Sri Veda Vyasa embody the quintessence of Hindu philosophy and reproduce in the form of aphorisms the teachings imbedded in the Vedas and Upanishads not to speak of other literature like the epics which are deemed to be the Upa Bṛhmana (viz., the enlargement) of the Vedas. These Brahma Sutras are the subject of interpretation by great teachers i. e., founders of distinct systems of philosophy. The three outstanding systems are the Adwaita, the Vishishtadwaita and the Dwaita. The founders of these schools were very eminent sages of their times and have impressed their personality and their systems upon their respective followers, generation after generation, down to the present day. There are those who, belonging to one or other of these three systems, have always taken pleasure in proclaiming that theirs is the only school that gives the correct interpretation of the Sutras. Their loyalty to their respective schools is no doubt commendable; but there is always in their minds a veiled feeling of contempt for the other schools and a subdued feeling of condescending sympathy for those others who accept, according to these persons, an incorrect interpretation of the Sutras.

4. One is reminded of the memorable reply of King Yudhistira to a question put by Yaksha that logic is impermanent 'तर्कोऽप्रतिष्ठः' He that is able to advance an argument unanswerable for the time being, scores the point then; but, when one cleverer than oneself appears on the scene and disturbs that conclusion by advancing an appropriate rejoinder, what was apparently settled is easily unsettled. Scholars have thus through the ages fought with one another and tried to demonstrate that their particular schools are alone correct in the interpretation of the Sutras. Incidentally we witness heat and acrimony in the discussion of what is essentially a subject that should be free from such heat and acrimony.

5. In the opinion of our author, all schools of thought are entitled to equal respect, because in each school there is a genuine attempt to understand and correlate the Sutras according to what that school considers to be the plain intendment of Sage Vyasa. It need scarcely be said that this is a perfectly reasonable view to take. It has the effect of avoiding passion of every kind. It gives to the scholars of each school the well-deserved credit of learning, discipline and devotion, and creates a healthy spirit of respect among the scholars towards one another.

6. In this work the author has aimed at achieving the unique object of bringing within the compass of a medium sized book, the respective interpretations of the Brahma Sutras by the three

great Acharyas as far as possible in their own words. How far the author has been able to achieve this purpose with effect is a matter that can best be judged by scholars like our author. It would be presumptuous on my part to attempt to indicate anything in that direction. From what I have known of the author directly and through others, I have every reason to hope that this work will be found to contain accurate information on all the matters dealt within it.

7. The author of this book is rich in years and in learning. It is a piece of good fortune that he has not allowed his learning to rust and that he has been able to keep it burnished and bright. The only reward that the author seeks, lies in the measure of satisfaction that this work gives to the learned readers and, above all, to the Lord.

*Pudukkottai,*
*10—5—44.*

R. SRINIVASACHARIAR,
*Chief Judge.*

---

# भूमिका ।

---

सद्ग्रन्थस्याऽस्य निर्माता तन्मुखसूचिकालेखनाख्ये रुचिरे कर्मणि नियोजितोऽस्मि । दक्षिणभारते तनीयसाऽपि पाण्डित्येनाऽलङ्कृतैरशेषैः बुधजनैः परिज्ञातवैदुष्यमिमं ग्रन्थकर्तारं प्रभाकरमिव दीपः प्रकटयितुमुद्युङ्क्ते । प्रतिवर्षमस्मिन् राष्ट्रे नवरात्रमहोत्सवे मिलतां विद्वज्जनानामग्रगोष्ठीं पञ्चाशत्संवत्सरानलंकृत्य, पञ्चदशसंवत्सरेभ्यः पूर्वमारभ्य तामेव गोष्ठीमधितिष्ठन् विराजतेऽयं महाशयः इति विदितमेव सर्वेषाम् ।

शोभयन्निदं स्थानं पण्डितप्रकाण्डानां निकषो भूत्वा तेनैव क्रमेण तैरपि सम्यक्प्रकाशीकृतस्वज्ञानः हर्षयति मनांसि विद्वज्जनानां । कलासु विविधासु नैपुण्यमन्यादृशमस्य पण्डितवरिष्ठस्य । व्याकरणमीमांसयोः पारदृश्वा, तर्कसाहित्यकुशली, श्रीशङ्कररामानुजमध्वसिद्धान्तत्रयसंवेत्ता, सलक्षणयाजुषाध्यायी, दिव्यप्रबन्धसारवित्, उभयवेदान्ताचार्यसंज्ञां नियतमयमेवार्हति । प्रायशः पण्डितेष्वन्येषु बिरुदमिदमुपचारतः प्रयुज्यते ।

२. कलानामेतासामेकत्र स्थितिमस्मिन्नवलोक्य नितान्तसन्तुष्टाः श्रीकामकोटिपीठमलङ्कुर्वन्तः जगद्गुरवः श्रीचन्द्रशेखरेन्द्रसरस्वतीयतीन्द्राः 'विद्वन्मण्डलमण्डनं' इति यथार्थाख्येन बिरुदेन पण्डितराजमेनं समर्हयामासुः । प्रसिद्धस्थलेभ्यो विविक्तेऽस्मिन् राष्ट्रे यावदायुषं नीतवतोऽस्य विदुषः विशाले भारतवर्षे लब्धप्रतिष्ठैर्विद्वद्भिर्विशेषतस्संमर्दो न बभूवेत्यस्मात् कारणाद्विशेषप्रसिद्धिं नालभतायं पण्डिताग्रणीरित्येतदेव नश्शोकस्थानम् ।

३. विदितमेव सर्वेषां यद्वेदेषूपनिषत्सु वेदोपबृंहणरूपेषु इतिहासपुराणेषु च निगूढानि परमतत्त्वानि परमकारुणिको भगवान् बादरायणः सूत्रयामासेति । ब्रह्मसूत्राण्येतानि महामतिभिरनेकैराचार्यैरनेकधा व्याख्यातानि च सन्ति । एवं प्रकाशितेषु मतेष्वनेकेषु, अद्वैतं, विशिष्टाद्वैतं, द्वैतं इति त्रीणि प्रसिद्धानि विराजन्ते । एतन्मतप्रतिष्ठापकाः परमाचार्याः तत्तत्कालेषु महत्या प्रतिभया विराजमानाः महतश्शिष्यवर्गानाकलय्य तथोपदेशं चक्रुः यथा अधुनाऽपि तत्तन्मतस्थाः तत्तदाचार्यपादान् सर्वेश्वरमिव पूजयन्ति । उद्घोषयन्ति च स्वाचार्या एव भगवद्व्यासहृदयं यथावत् बुद्ध्वा सूत्राणि व्याचख्युरिति । उचितमेवेदं स्वाचार्यभक्तिभरितं कृतज्ञतानिवेदनं । परं तु केषांचिदेषां मनसि इतरान् आचार्यान् तच्छिष्यांश्च विलोक्य विपरीतार्थग्रहणेन प्रणष्टा इति तान् मत्वा तेषां विषये सावज्ञ एव दयाप्रादुर्भावः जायते ।

४. "कः पन्थाः" इति पृष्टवन्तं यक्षं प्रति "तर्कोऽप्रतिष्ठः" इत्यादि युधिष्ठिरस्योत्तरं स्मृतिपदमारोहति। तर्ककौशलेनैव सिद्धान्तितो विषयः बलीयसा तर्केण दूषितो भवति। अस्माद्धेतोः काले काले पण्डितप्रवराः स्वस्वतर्कनैपुणीमवलम्ब्य परस्परं व्यवजह्रुः व्यवहरन्ति च। शान्तिप्रधाने मतविचारे चित्तखेदजनको महानूष्मा च जरीजृम्भते।

५. ग्रन्थकर्तुरस्य मते भाष्यत्रितयमपि महतो बहुमानस्य पात्रं भवति। तत्तद्भाष्यकाराः तच्छिष्यप्रशिष्यवर्गाश्च तत्तत्सिद्धान्त एव भगवद्बादरायणहृदयानुसारीति तत्वतो मन्यन्ते मन्तुमर्हन्ति च। स्थाने खल्विदमिति किमु वक्तव्यम्?। अयमेव क्रमः परस्परप्रीतिकरः उचितस्पर्धाजनकत्वेन विद्यावृद्धिकरः, अन्योन्यबहुमानोत्पादकश्च भवति।

६. नातिविस्तृते नातिसंकुचिते चास्मिन् ग्रन्थे ब्रह्मसूत्राणां तत्तद्भाष्यार्थाः यावच्छक्यं तत्तद्भाष्यकारपदैरेव संगृह्यन्ते ग्रन्थकर्त्रा। निपुणं निरूपिता वा न वेति तत्सदृशैः पण्डितवर्यैरेव वक्तुं शक्येत न मया। तादृशे साहसकर्मणि न च प्रवर्ते। मम चान्येषामपि विदितमेवेदं यदस्य ग्रन्थकर्तुरन्यादृशज्ञानानुगुणं सर्वमपि विषयजातमस्मिन् प्रबन्धे सरसं समञ्जसमेव स्यादिति।

७. ज्ञानेन वयसा च वरिष्ठोऽयं महाशयः चिरसञ्चितामतिमहतीमात्मविद्यामभ्यासातिशयेन संवर्धयन्नुपस्थितामतिनिशितां च विधत्ते। उद्यमस्यास्य फलमेकमेव कामयते यत् बोद्धारः पठितारः तुष्येरन्, सर्वशक्तो भगवान् प्रीयेतेति च।

नवसालपुरी,
१०–५–४४.

र. श्रीनिवासाचार्यः,
प्रधानप्राड्विवाकः।

॥ श्रीः ॥

# भूमिका ।

श्रीमच्चन्द्रशेखरेन्द्रयतिराट्कारुण्यवीक्षावशात्
प्रस्थानत्रयमेतदाप्य भगवत्पादीयभाष्यात्मकम् ।
श्रीरामानुजमध्ववर्यभगवत्पादीयभाष्यत्रयं
संगृह्याद्य मया कृतो विजयतां ग्रन्थस्सभायां सताम् ॥

सुविदितमेवैतत् सर्वेषामपि पण्डितवरेण्यानां, यत् श्रीशंकरभाष्यं, श्रीभाष्यं, श्रीमध्वभाष्यं इति ग्रन्थत्रितयं श्रीवेदव्यासकृतब्रह्मसूत्राणां पृथक्-पृथक् अर्थप्रकाशकं जगति सर्वेषामपि ग्रन्थानामुपरि वरीवर्ति, इति । तत्र ब्रह्मसूत्रभाष्यकृतां श्रीशंकरभगवत्पादानां महिमा तद्विरचितग्रन्थरत्नैः तदीयसुचरित्रैश्च विज्ञात एव विद्वन्मणीनां । अद्वैतमतखण्डनपरैः विशिष्टाद्वैतिभिः यतिराजविजयनाटके अद्वैतमतस्थापकश्रीशंकरभगवत्पादागमन-समयवर्णनप्रकरणे—

"सन्त्येवान्येपि लोके सकलबहुमतद्वैतविद्यावलेपाः
किंतैरद्वैतगन्धद्विरदमदमरुन्मात्रवित्रस्तचित्तैः ।
भाट्टप्राभाकरादिप्रतिभटसमयप्राणसर्वस्वहारी
संप्राप्तश्शंकरोहं क्वनु खलु वसति ब्रूत रामानुजो वः" ॥

"ब्रह्माणःकति वा नसन्ति जगतीनिर्माणपौनःपुनी-
पारीणाः परमाणवोपि कति वा लोकत्रयारम्भकाः ।
तत्तत्तत्वचिखण्डिषापरिपतन्मद्युक्तिकालानल-
ज्वालातत्क्षणभक्षितस्य जगतो भस्मापि न स्मर्यते" ॥

इत्यादिबहुश्लोकैः श्रीमदाचार्यवाग्गांभीर्यादिकं सुष्ठु वर्णितम् । श्रीमच्छंकर-भगवत्पादकृतं ब्रह्मसूत्रभाष्यं हि अतिगंभीरमनोहरपदप्रयोगप्रचुरं पण्डितानां

सर्वशास्त्रज्ञानामपि दुरवगाहमीमांसान्यायलौकिकन्याययुक्त्यलंकृतं श्रीमद्रामायणवत् सामान्यपण्डितानामपि श्रवणमात्रेणानन्दजनकं इतरपण्डितदूषणानर्हानन्यथासिद्धशास्त्रयुक्तिजालपरिष्कृतं पुनःपुनः पठने पाठनेपि च "नवोनवो भवति जायमानोह्नां केतुः" इति श्रुत्युक्तरीत्या नवनवार्थबोधजननेनाऽकलितातिशयितान्तरानन्दं "सम्राडेव भवति" इत्यादि श्रुत्यनुसारेण निर्गुणब्रह्मात्मैक्यप्रतिपादनपरं सगुणनिर्गुणश्रुतीनां अविरोधेनार्थप्रकाशकं तदीयसर्वज्ञताऽऽदर्शभूतं विराजते, इत्यत्र नमनागपि विशयः कस्यापि सचेतसः। "महाराज्यं वा परिपालनीयं महाभाष्यं वा पठनीयं" इत्यभियुक्तोक्तिः नूनं पतञ्जलिकृतं महाभाष्यमिव भाष्यमिदमपि स्वरसतः विषयीकरोति इत्येव प्रतिभायात् रसिकजनचेतसि। यद्यप्याचार्यैः अद्वैत एव श्रुतीनां तात्पर्यं पतञ्जलिप्रभृतिभ्योपि पूर्वतनैः आचार्यैः दृष्टमिति तदेव तत्र तत्र स्वविरचितेष्वप्यनेकेषु ग्रन्थेषु वर्णितं। अथापि भाष्यमिदं अद्वैते श्रुतितात्पर्यं बहुविधश्रुतिपुराणाद्युपन्यासेन सुतरां विशदयतीति वहति तद्ग्रन्थेष्वपि समुत्कर्षं परमं। तत्कृतग्रन्थरत्नानि च सूत्रभाष्योपनिषद्भाष्य गीताभाष्य सहस्रनामभाष्य मोहमुद्गरापराभिधानभजगोविन्द दशश्लोकी कनकधारास्तवप्रभृतीनि द्वादशोत्तरशतसंख्याकानि प्रथिततमानि लोके। "एकैव मूर्तिर्बिभिदे त्रिधा सा" इति महाकविकालिदासोक्त्याद्यनुसारेण

"गीर्देवतेति गरुडध्वजसुन्दरीति शाकंभरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै॥"

इति आचार्यकृतकनकधारास्तव श्लोकार्थपर्यालोचनया च, ब्रह्मविष्णुरुद्राणामभेदेनवर्णनं भक्तिश्च मूर्तित्रये तुल्यमेवाभिमतमाचार्याणाम्॥

यद्यपि यतिराजविजयनाटके "विशिष्टाद्वैतीभूतश्शंकराचार्यः" इति,

"मद्वीपाटवदर्शनाय विदधे तत्वस्थितेरन्यथा
मिथ्यामेयममेयमेव तदिति प्रस्थानमन्यन्मया।
पश्यंस्तत्वमिदं च मुह्यति जनः प्राज्ञोपि किन्त्वद्भुतं
नान्यो वेत्ति नभस्स्थले विलिखतश्चित्राणि मे कौशलम्॥"

इति पठित्वा—"अहंतु पर्यङ्कविद्यामुपासितुमनन्तपुरंगच्छमीति निष्क्रान्तः" इति च वर्णितं दृश्यते। तत्तथा न, नाटके शाकुन्तले दुर्वासमहर्ष्यागमनं तच्छापादिकमंगुलीयकभ्रंशनादि यथावा पुराणे अविद्यमानमपि रञ्जकतया स्वबुद्धिपरिकल्पनादुपपद्यते, तद्वत् अन्ते स्वमतप्रविष्टः आचार्य इति स्वमतप्राशस्त्याय तथा लिखितमिति पण्डिता जानन्तु। स्वयमीश्वरावताररूपत्वादाचार्यः महावाक्यार्थज्ञानेन शरीरवियोगादनन्तरं ब्रह्मैक्यमापेत्येव सर्वसम्मतं। श्रीरामावतारावसानसमये यथा वा श्रीरामो विष्णुर्भूत्वा स्वदेशस्थानामपि मुक्तिमदादिति प्रसिद्धिः, तद्वत् तत्कालस्थशिष्यानपि ज्ञानेनैतेपि शरीरवियोगादनन्तरं मोक्षं प्राप्नुयुरिति महावाक्यार्थोपदेशेनानुगृह्य मुक्तोऽभवदिति तु सिद्धं। श्रीमदाचार्याः अद्वैतमतप्रचारणेन सर्वामपि महीमटन्तः अन्ते बदरिक्षेत्रे स्वदर्शनार्थमागतेन भगवता दत्तात्रेयेण "यत् कर्तव्यं कृतं कार्यं दुर्मतानि जितान्यपि, इतोगन्तुं समुचितस्सत्यसंधेन शंभुना। कैलासस्सुकृतावासो भवता देशिकेश्वर" इति प्रतिबोधिताः तत्रैव गुहाद्वारं प्रविश्य क्रमेण कैलासमवापुरिति न तिरोहितमेतत् चिद्विलासीयशंकरविजयविज्ञानाम्। एतादृश सार्वजनीनवैभववतः श्रीशंकराचार्यस्य भाष्यादिकमुपदेशादिना लब्ध्वा तज्जनितहर्षवशेन मया मितज्ञेनापि तदीयार्थसंग्रहः एषः श्लोकरूपेण वाक्यरूपेण च लिखितः। अत्रकेचन विद्वांसः श्रीमद्व्याससूत्रेषु प्रायशः सगुणब्रह्मविचारपरमेव सूत्रजातं दृश्यते, कतिपयान्येव सूत्राणि अद्वैतसंशयसमुत्पादकानि दृष्टानि, अतोवगम्यते सगुणे ब्रह्मण्येव परमतात्पर्यं श्रीव्यासाचार्याणामपि, इति ब्रुवन्ति। तत्र च समाधानं दीक्षितैरेव—

"शुद्धं ब्रह्माद्वितीयं कथमपि हृदयं नाधिरोहेत्सुसूक्ष्मं
तत्र स्थैर्याय बुद्धेस्तनुगुणमहितं तच्चिरं ध्येयमादौ।
इत्यार्यैर्भक्तिसिध्यै सगुणमिह परं ब्रह्म नान्यत्ततोस्ती-
त्येवं वेदान्तवाक्यैस्सह तदनुगुणं योजितं सूत्रजातम्॥"

इति आनन्दलहर्यां स्पष्टमुक्तमिति मया विरम्यते॥

श्रीमच्छ्रीशठजिद्यतीन्द्रगुरुराट्पादारविन्दाश्रयं
श्रीमच्छ्रीशठकोपलक्ष्मणमुनेर्लब्धागमान्तद्वयं ।
श्रीमद्वीररघूद्वहाद्यशठजिन्नयस्तात्मरक्षाभरं
श्रीश्रीवासशठारिसंयमिगुरुं कारुण्यपूर्णं भजे ॥

तथा, श्रीमद्वेदमार्गप्रतिष्ठापनाचार्याः परमहंसपरिव्राजकाचार्याः सर्वतन्त्र-स्वतन्त्राः उभयवेदान्ताचार्यश्रीभगवद्रामानुजाचार्या अपि—

"श्रीरङ्गं करिशैलमञ्जनगिरिं ताक्ष्याद्रिसिंह्माचलौ
श्रीकूर्मं पुरुषोत्तमञ्च बदरीनारायणं नैमिशं ।
श्रीमद्द्वारवती प्रयागमधुरायोध्यागयाः पुष्करं
सालग्रामगिरिं निषेव्य रमते रामानुजोयं मुनिः ॥"

इति सर्वतोपि जेगीयमाननिरुपमवैभवशालिनः प्रथिततमा लोके प्रचकाशिरे । एतन्महिमा च मत्कृते यतिराजशतके विस्तृत इति नेह तन्यते । एतैः कारुण्यैकचित्तैः निखिलकल्याणगुणगणालंकृतैः विशिष्टाद्वैतमतप्रतिपादन-रतैः परमहंसपरिव्राजकाचार्यश्रीरामानुजाचार्यैः विरचितं—

"प्रतिष्ठा तर्काणां प्रतिपदमृचां धाम यजुषां
परिष्कारस्साम्नां परिपणमथर्वाङ्गिरसयोः ।
प्रदीपस्तत्वानां प्रतिकृतिरसौ तापसगिरां
प्रसत्तिं संवित्तेः प्रदिशतु यतीशानफणितिः ॥"

इति सर्वतो विनुतं सर्वातिशायि श्रीभाष्यमिति ग्रन्थरत्नं—

"नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः
त्रातं संयग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ।"

इत्येवं पूर्वाचार्यपरिरक्षितं भुवि दरीदृश्यते, तत्र च ग्रन्थे प्रायशः यद्यपि श्रीशंकरार्यभाष्यानुसारिण्येव रीतिः, परंतु "सगुणमेव ब्रह्म, निर्गुणमित्यन्य-न्नास्त्येव, नारायण एव ब्रह्मशब्दवाच्यः, तदुपासनमेव तत्प्राप्तिसाधनं, ब्रह्मशिवादयः नारायणादवराः" इति सप्रमाणं प्रत्यपादि । एतद्विरचिताः

ग्रन्थाः नव, 'श्रीभाष्यं, वेदान्तदीपः, वेदान्तसारः, वेदार्थसंग्रहः, गद्यत्रयं, गीताभाष्यं, नित्यग्रन्थः,' इति । तन्महिमा च ग्रन्थान्तरे वर्णित इति ग्रन्थविस्तरभयाद्विरम्यते ॥

---

कुत्तालंवासुदेवार्यं द्वैताचार्यं नमाम्यहं ।
मध्वभाष्यादिषु ज्ञानं यत्प्रासादान्ममाजनि ॥
मन्वादिवत्स्वीयधियैव सर्वशाखाः स्वभाष्ये य उदाजहार ।
तं सर्वशाखार्थविशेषविज्ञं आनन्दतीर्थाह्वगुरुं नमामि ॥

तथा श्रीमदानन्दतीर्थाचार्याः विश्वविदितविद्यावैशद्याः —

" आज्ञामन्यैरधार्यां शिरसि परिसरद्रश्मिकोटीरकोटौ
कृष्णस्याक्लिष्टकर्मा दधदनुसरणादर्थितो देवसंघैः ।
भूमावागत्य भूमन्नसुकरमकरोर्ब्रह्मसूत्रस्य भाष्यं
दुर्भाष्यं व्यस्य दस्योर्मणिमत उदितं वेदसद्युक्तिभिस्त्वम् ॥"

इति वायुस्तुतिप्रतिपादितरीत्या महामहिमशालिनः व्यराजन्त । द्वैतमतप्रतिपादनरतैरेतैराचार्यैः विरचितं मध्वार्यभाष्यं नाम ग्रन्थरत्नं । इदं विशिष्टाद्वैतमतानुसारीति यद्यप्यस्तिलोके, प्रथा । तेषां मतेपि विष्णुरेव परं तत्वमित्युक्तं तत्रभाष्ये, तदेव निदानं तादृशलोकप्रथायां । वस्तुतोस्त्येव अत्र महद्वैलक्षण्यं । एतद्ग्रन्थरीतिस्सर्वापि भेदप्रधाना, सूत्रार्थवर्णनमपि प्रायः अद्वैतविशिष्टाद्वैतभाष्यग्रन्थाभ्यामन्यथैवात्र प्रवृत्तं वर्तते । मुक्तिरपि तेषां मते बहुविधतारतम्योपेता अत्र वर्ण्यते सर्वत्र। अपूर्वाः श्रुतयश्चात्र बहुत्र प्रमाणत्वेनोपन्यस्ताः । एष च आनन्दतीर्थीयानां स्वकीयसिद्धान्तसंग्राहकः श्लोकः —

" सर्वेषामुत्तमा श्रीः तदुपरिपरमं विष्णुरेवात्र सिद्धः
ब्रह्माद्या विबुधास्तथर्षिपितरो भूपा नृदैत्यादयः ।

तेषां तत्पदपालनादिकरणे मोक्षस्य योग्ये हरिः
तेषां भक्त्यनुसारियोग्यफलमप्येभ्यो ददाति प्रभुः ॥ "

इति । मध्वार्यभाष्ये च यत्रयत्र इतरभाष्यद्वयविलक्षणतया नूतनोर्थः वर्णितः स तत्रतत्र ग्रन्थेस्मिन्नपि मदीये प्रदर्श्यते । श्रीमदानन्दतीर्थकृत-यस्सप्तत्रिंशदधिकाः बह्व्यवः विराजन्ते ॥

भाष्यत्रयेपि प्रतिपाद्यमानोर्थः अनादिसिद्ध एव, तत्र अद्वैतरूपोर्थः नन्दिकेश्वरपतञ्जलिप्रभृतिभ्योऽपि पूर्वैः दृष्ट इति महाभाष्यपरिशीलनवतां सुविज्ञानः । विशिष्टाद्वैतरूपोर्थस्तु नम्माल्वारित्यपरनामधेय कारिसूनुकृत-द्राविडोपनिषद्रूपगाथासु सुव्यक्तः अनन्तरं नाथयामुनप्रभृतिभिः संस्कृत-ग्रन्थरूपेण परिष्कृतः अनन्तरं श्रीरामानुजाचार्यैः संग्रभाष्यादिरूपेण विशदीकृतः । द्वैतरूपोर्थः —

" ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै
शशाप तांस्तदा भस्ममिथ्याभूतपरास्तथा ॥
भविष्यथ त्रयीबाह्याः वेदकर्मबहिष्कृताः ।

इत्यादिप्रमाणतः अवगम्यमानेन 'मम मिथ्यापवादं कल्पयन्तो यूयं इत आरभ्य मिथ्याभूतपराः वेदार्थविचारशून्याः केवलपाषण्डाः भविष्यथ, इति मुनीन्प्रति गौतमशापेन किंचित्कालं प्रच्छन्नः श्रीमध्वाचार्यैः पश्चादभिव्यक्ती-कृतः । त्रयाणामपि मते ज्ञानमेव मोक्षसाधनमित्यत्र न विवादः । तदेवं भाष्यत्रयमपि सुसमीचीनमुपादेयं, तदर्थश्च सर्वैरपि ज्ञातव्य एव, येनकेनापि मार्गेण मुक्तिं प्राप्नुयुः, इति सर्वेषां अनायासेन मतत्रयभाष्यार्थसुबोधाय एकस्मिन्नेव ग्रन्थे तदर्थसंग्रहः कृतः । सर्वेपीमं मदीयं परिश्रमं कृपया सौहार्देन च कटाक्षपातेन सफलिकुर्युरित्यभ्यर्थये ॥

पुदुक्कोट्टै,
तारण सं., वैशाख
शुक्ल एकादशी

इत्थं दासः
रङ्गाचार्यः ।

State Press Pudukkottai. 152—20-5-44.

## FOREWORD.

मतत्रयस्थगुरुभिः श्रत्यन्तविपिनस्थितम् ।
अद्यापि मृग्यमाणं तं ब्रह्मरूपं हरिं भजे ॥

The work on hand is no doubt an epoch-making publication in the domain of philosophy in that it happens to be the first of its kind in compiling together all the three great schools of thought, thus providing facilities for the students of Metaphysics to make a detailed study of the teachings of the Acaryas side by side. Even the great commentators like Vachaspathi-Misra Appaya Dikshita, Srutaprakasikacarya, Vedanta Desika, Vijayindrathirtha etc. confined themselves to taking from other *Sidhantas* only such portions as were essential for their purpose and as such no work with all the three doctrines together was brought out by any of them. Hence the absence of a single volume with all the three doctrines together was a great gap which has been properly filled up by the author. The author for the moment forgets that he belongs to a particular sect (*Vaishnavite* sect) and does justice to all the systems here.

May I submit this work as a votive offering at the altar of Sri Sarngapani the Lord at Kumbakonam who is very fittingly called the '*Aravamuahu*' by the mystic saints, the *Alwars*, because it is from him must originate the creative power that will lead the renascent world to a new era of power, prosperity and perfection.

The author's Adhikarnaartha-Sangraha (अधिकरणार्थसंग्रहः) in verse which is very similar to the 'Dramidopanishat-Thatparya-ratnavali' (द्रमिडोपनिषत्तात्पर्यरत्नावलिः) of Sri Vedanta Desika, forms

the opening pages of the work. Then comes the Sa stravatara (शास्त्रावतार:) putting in a nutshell the quitessence of all the three doctrines in the form of slokas with explanatory notes. The gist of the Adhikaranas in their order in all the *Sidhantas* appear in the form of verse with the author's explanatory notes, *Purvapaksha* and *Sidhanta* wherever necessary.

I feel mystified in my attempts to translate the author wherever necessary because the perplexing arguments which become intelligible, nay, absorbingly interesting in Sanskrit when we are initiated in the technique of discussion become a veritable Chinese Puzzle in any other language. Therefore the only method of quoting the author *verbatim* wherever necessary showing the onward flow of arguments has been adopted. *Sruti*, *Sutra* and *Bashya* are, as observed by a learned philosopher, 'a trinity in unity and a unity in trinity' and this has been made clear in this work.

In the first two Adhyayas which make up the present volume ostensible objections to the monistic doctrine are cleared and in the 3rd and the 4th Adhyayas, forming the second volume, doubts in the Vishishtadvaita and Dvaita Schools are cleared.

The author in his usual but inimitable style raises the contention that *Brahman* which is admittedly *Swayamprakasa* (स्वयं प्रकाशं) cannot be obscured by Avidya (nescience) and this is effectively answered in Slokas 21 to 26 in page 4. In page 6 the contention

ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तकः ॥
ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम् ।
ब्रह्मवत्तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥

is exhaustively answerd thus—

आचार्योपदिष्टप्रमाणजन्यज्ञानस्य 'ब्रह्मवत्तत्प्रकाशत्वात' इति तैरुक्तं, स्वयं प्रकाशत्वं न भवत्येव। ब्रह्मस्वरूपज्ञानस्याजन्यत्वात्, शास्त्रज्ञानस्य च जन्यत्वात्। 'ब्रह्मवत् तत्प्रकाशत्वात तदपि ह्यनिवर्तकं' इति तदुक्तिः 'न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति' तद्भाष्योक्तिश्च न संगच्छते। ज्ञानत्वावच्छेदेन उभयज्ञानस्य एकत्वसंभवना न युक्ता। स्वयं प्रकाशत्वजन्य-स्वरूपविशेषसद्भावात्॥

The author thrusts his arguments still further in page 8 and says

किञ्च 'ज्ञानरूपं ब्रह्म' इत्युपदिष्टज्ञानस्य ब्रह्मस्वरूपभूतज्ञानस्य च ज्ञानत्वावच्छेदेनाभेदं गृहीत्वा दोषवर्णने 'रुद्रः पशूनामधिपतिः पशवः पाशिताः पूर्वं' इत्यादि प्रमाणात जीववर्गस्य पशुत्वात पशुत्वावच्छेदेन सर्वस्यामपि तुल्यत्वाङ्गीकृतौ पशुरित्युक्ते व्यासादीनामपि बोधस्स्यात। इष्टापत्तौ आब्रह्मस्तम्बपर्यन्तेषु प्राणिषु सत्स्वपि ज्ञानतारतम्यस्य सत्वादिति' देवताधि-करणभाष्योक्तिः विरुद्ध्येत '॥

Thus it is seen that one strong point of criticism against the monistic shool which has been remaining to be answered for ages has been effectively met with.

Then comes the much contested expression 'तत्त्वमसि' and it need hardly be said that it is being interpreted in diverse ways by diverse thinkers. The contention that the term 'तत्त्वमसि' does not connote monism is adequately answered in pages 9, 10 and 11 and it is *a fortiori* expressed in slokas 28 to 34, thus creating a revolution in the realm of philosophy. With striking force and clarity the truths embodied in the monistic doctrine are expressed in Sloka No. 35 in page 12.

Slokas 38 and 39 sum up the truths embodied in Vishishtadvaita. At one metrical stroke the

quintessentials of Vishishtadvaita are secured in Sloka 44 in page 16 and the arguments advanced by the monistic school are effectively set at rest in Slokas 42 and 43. Slokas 47 to 50 in page 17 give expression to the doctrine advocated by Sri Madhwacarya.

In जन्माद्यधिकरणं—अद्वैतं page 21 para 2, the author establishes that the *Sutrakara* had in view only *Advaita Brahman* as he said जन्माद्यस्य यतः (that which is the cause of creation, preservation and dissolution of the Universe) instead of Satyam Gnanam Anantham (सत्यं ज्ञानमनन्तं ब्रह्म) in defining Brahman and if this can be achieved by the expression 'सत्यं जानमनन्तं' he would have preferrred that term which is more explicit. Brahman is defined even in the scriptures as 'यतो वा इमानि भूतानि जायन्ते' (that which is the cause of the Universe) and this 'तटस्थलक्षण' gives room for arriving at the conclusion that the Sutrakara had in view only the *Nirguna-Brahma*. (निर्गुणब्रह्म) Arguments in defence of Vishishtadvaita are advanced with striking force in slokas 57 to 60 in page 22. In page 29 समन्वयाधिकरणं—विशिष्टाद्वैतं the *Purvapaksha* in sloka 23 has been answered by the slokas from the author's Sri Sarngapani Stava and Sri Lakshminarasimha Stava. Slokas 81 to 91 in P 33 ईक्षत्यधिकरणं—विशिष्टाद्वैतं establishes very effectively Sri Ramanuja's plea. I will be failing in my duty to the author, my Acarya, if I do not quote him here to show how the author champions the cause Sri Ramanuja.

एकं च तत्त्वंपदमत्र विद्मः षष्ठीसमासाश्रयणादिना च ।
तद्दास तत्स्थ्यादि विशेषमर्थं दिशन्ति केचित् यतिराजशिष्याः ॥

मृल्लोहकार्ष्णायस सत्यवाक् तु नान्यस्य सत्त्वादि दृगद्धि किन्तु ।
ज्ञाते मृदादौ सति तद्विकाराः ज्ञाता भवन्तीति तदेव सत्यं ॥
इत्येव शब्दाच्च तथा तदर्थः मृत्स्नैव सत्यं त्विति वेदवाक् न ।
द्रव्यं च मृल्लोहमुखं च नित्यमनित्यमन्यच्च विकारजातम् ॥
ब्रह्मात्म—सदहं शब्दाः भवन्ति ज्ञानिवाचिनः ।
ईक्षां चक्रे बिभेतीति चिन्मात्रस्य कथं भवेत् ॥

The opening Sloka in अन्तरधिकरणं page 42 puts forth the real significance in the Advaita philosophy. The fact that *Suguna Brahmopasana* सगुणब्रह्मोपासनं is obligatory to the attainment of *Nirguua Brahma* (निर्गुण ब्रह्मप्राप्तिः) is very well given expression to in sloka No. 103 in page 42

अत्यल्पविज्ञानवतां च मोक्षं वक्तुं श्रुतिर्ब्रह्म गुणैस्सुपूर्णम् ।
उपास्यमाहेति महर्षिरेवं निर्वक्ति कारुण्यवशात् बहुत्र॥

In this chapter the following scriptural passage is taken as the subject matter under consideration. (विषयवाक्य) य एषोन्तरादित्ये पुरुषो दृश्यते हिरण्मयश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी etc

Here the eyes of the Lord who animates the Solar orb, who is meditated upon are compared in colour to that of the bottox of the ape by Sri Sankara in his comments on the term कप्यासं found in the scriptures. This is an object of criticism to the critics of Sri Sankara. The following lines among others which go to defend Sri Sankara deserve to be quoted.

'इन्दो इत्याह रेतो वा इन्दुः' इत्यादि यजुर्वेदे षष्ठकाण्डे चन्द्रस्य रेतस्त्वेनवर्णनं 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितावाः' इति ब्रह्मणः कैवर्तदास-द्यूतकृतजन्तूदाहृतवर्णनं श्रीकृष्णमहेश्वरोमालक्ष्म्यादीनां हीनवर्णनं यथा न दोषाय भवति तद्वत् ।

Then in P 46—

अपि च 'लोकवत्तु लीलाकैवल्यं' इति सूत्रे मध्वार्यभाष्ये

'कुरुते केवलानन्दात् यथा मत्तस्य नर्तनम् ।
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः ॥'

इति प्रमाणं संगृह्य यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिर्लीला न तु प्रयोजनापेक्षया एवमेवेश्वरस्येत्युक्तम् । पूर्णानन्दविष्णौ मत्तस्येति हीनोपमा वर्णनं कृतं । तद्वदेव श्रुत्यर्थविचारे प्रसिद्धार्थ एव ग्राह्यः नाप्रसिद्धार्थ इति ।

The author in his own characteristic way champions the cause of Sri Ramanuja also in the same context in pages 48 and 49. Then coming to ज्योतिरधिकरणं, in the Sutra ज्योतिश्चरणाभिधानात् the word 'Jyothi' in the scriptures means Brahman, because the passage refers to 'feet' and the next Sutra छन्दोभिधानेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनं literally means that if it is said that 'Jyothi' is not Brahman, as Chandas (Gayatri) alone is mentioned in the context, the reply is in the negative. The reference to Gayatri is for teaching us surrender our mind to Brahman through Gayatri Mantra. Thus there is clear declaration of the worship of Brahman here. Then the next *Sutra* भूतादिपादव्यपदेशोपपत्तेश्चैवं । means that it is only by such interpretation can there be any justification of the creation being a part of it. In this Adhikarana Sri Sankara as other Acaryas arrives at the conclusion that Gayatri that is described in the scriptures as 'being the soul of everything' cannot be a mere string of words but Paramatman Here Sri Bhagavatpada comes to the conclusion that the Gayatri referred to is the Gayatri that is popularly known. The author has done justice to Sri Bagavadpada by upholding that the Gayatri referred to in the scriptures is the one that is popularly known and his perplexing but

interesting arguments in pages 56, 57 and 58 deserve to be carefully studied. In the same chapter Sri Ramanuja comes to the conclusion that the Gayatri referred to in the Sutra is not the popular one which has only three *Padas* (quarter) but the one with four *Padas* that is found in the *Panchala - upanishad*. Here in pages 60, 61 and 62, the discussion forms an intellectual treat and the arguments of the author are based on Sruti, Smrithi, Vyakarna, Mahabhashya and Mimamsa on which subjects he is himself an authority.

In सर्वत्रप्रसिद्ध्यधिकरणं in page 69, the subject matter under consideration in Advaita is सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो etc. Sri Ramanuja accepts this scriptural passage अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके etc as *Vishayavakya* but prefers to take सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत etc as the subject matter under consideration. With striking clarity the author puts forth the case of the two Acaryas in the respective sections and establishes their conclusions.

Coming to *Daharadhikarana*, in the Vishaya-vakya यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तः तदन्वेष्टव्यं etc the word तत् is interpreted by Sankara to mean that which is in the lotus shaped heart, Dahara region (here Brahman). But Sri Ramanuja interprets the term तत to mean Paramatma and his attributes such as अपहतपाप्मत्वादिगुणजातं । In this chapter in Advaita the author's spirited appeal to the followers of the three great Acaryas bespeaks to the catholicity of his outlook and these sentences

deserve to be culled out from the original. in page 109.

तत्पर्यालोचनया च वेदान्तसिद्धमतत्रये इतरमतमितरमतयुक्तिभिः दूषयितुं न शक्यमिति प्रतीयते। आम्रान् पृष्टः कोविदारानाचष्टे' इति महाभाष्योक्तन्याय एव तत्र तत्र भासत इति प्रतीयते। अन्यमतवर्त्मा अन्य एव। एतन्मतवर्त्मा अन्य एव। तस्य तस्य तदुपयुक्तश्रुतिस्मृतिन्याययुक्त्याद्यनुष्ठानादयः तत्तन्मतग्रन्थस्थाः विलक्षणा एव दृश्यन्त ;इति सर्वैः स्वस्वमतानुगुणवर्णनमेव स्वीयग्रन्थे कर्तव्यं। नत्वन्यमतदूषणं। अन्यथा परस्परं दूषणे वेदान्तिमतत्रयस्याप्यप्रामण्यप्रसक्तौ चार्वाकमतमेव लोके प्रबलं स्यात ॥

Then in the same Adhikarana he champions the cause of Sri Ramanuja and Sri Madhavacarya and and thus shows that each school of thought as advocated by the respective Acaryas when kept in the same groove is the most satisfactory and adequate one.

Coming to the उत्पत्यधिकरणं Sri Sankara does not approve of Pancharatra as a whole as it originates from Sandilya who is a staunch critic of Vedas and as the एकायनशाखा on which the Pancharatra is based is of questionable nature. But Sri Ramanuja holds the contrary view and approves of Pancharatra in toto. Here the author acquits himself very creditably by upholding the cause of the Acaryas in the respective sections with his thought-provoking *Purvapaksha* and *Sidhantas*. Hence this *Adhikarana*, particularly Vishishtadvaita with its cross-currents of discussions furnishes enough material to the thinking mind. From this Adhikarana onwards criticisms against the Vishishtadvaita and Dvaita Schools are being taken up and answered.

Then comming to

प्राणोत्पत्यधिकरणं–विशिष्टाद्वैतं —in the second Adhyaya the author eshablishes the cause of Sri Ramanuja as below—

अस्मिन् शास्त्रे पाणिनीयसूत्रेषु स्वरितेनाधिकारः' इति सूत्रेण........ 'व्याख्यानतो विशेषाप्रतिपत्तिः, 'न हि सन्देहादलक्षणं' इति महाभाष्यन्यायादावश्यकपदानुवृत्तिविषये तत्तदाचार्यव्याख्यानमेव शरणमिति........ अत्र स्वारस्यास्वारस्यविचारणा न युक्तेति विरम्यते ॥ Tnis is quite consistent with his appeal in the Daharadhikarana.

## BIOGRAPHY.

it is in the fitness of things that the biography of the author is recorded here. Born in August 1873 (ஸ்ரீமுக-௵ ஆவணி-மீ) in an aristocratic Sri Vaishnava family in the village of Kali in Tanjore District, the author had his early education in Alankara Sastra and Divyaprabandha (all the 4000 songs of the mystic saints, the Alwars) under Vedantaramanujacarya Swami of Tiruvahindipuram. Then in his 15th year he went to Terizhandur and studied Vyakarna Mimamsa Sroutham and Advaita Vedanta under the great grammarian Sri Ramachandra Ghanapatigal who for many years adorned the post of Dhanadhikari in Trivandrum. Portions in Vyakarna and Dvaita Vedanta were studied under Sri Vasudevachar of Kuttalam. Then in later years, I am told, he used to walk all the way from Terizhandur to Tiruvalangadu, a distance of about nine miles to study further portions in Vyakarana under Sri Yegnaswami Dikshitar. Then he sat under the feet of Sri Anna Vajapeyar of Tiruvadamarudur who was then commonly known for his philanthropy as Kulapathi कुलपतिः and who devoted parental affection to his sishya पुत्रादनवमशिशिष्यः to learn all the concluding portions in Vyakarna, such as Sabdendusekharam, Maha-Bashyam, Swarasidhantachandrika, Vaiyakarana - Bhushna etc., During this two years period of his stay in Tiruvadamarudur he also learnt under Sri

Sundara Vajapeyar, the accredited brother of Sri Anna Vajapeyar, Tarka Sastra.

After finishing his studies in all the Sastras in five years he sat for the Fundits' Examination, Pudukkottai in the year 1893 and came out creditably. In the year following the then Dewan Regent of Pudukkottai Sir A. Seshiah Sastrial admitted him to the Board of examininers in recognition of his merit. In his twentieth year he sat again under various savants such as Sri Ramachandra Ghanapatigal and Veeraraghavachariar Ghanapatigal of Terizhandur and Krishnamachariar Swami of Srirangam to learn Yajurvedam Sa-Lakshanam. His Holiness Sri Vansatagopa, Sri Srinivasa Satagopa Yetindra Mahadesika (usually called the Tirukkudandai Alagiasingar) of Sri Ahobilam Math was responsible for his learning in Vishishtadvaita Vedanta and Divyaprabandha.

In the year 1917 he was appointed Head Master of the Veda Sastra Patasala in Pudukkottai and in 1923 he was elevated to the post of Danadhikari which he adorns to the present day. In recognition of his proficiency in Tamil the then Regent Saheb of Pudukkottai, Sri Viyaya-Raghunatha Tondaman Saheb Bahadur B. A., appointed him also to the Board of Examiners in Tamil. Thus it is seen within a period of five years our author acquired knowledge in all the Sastras Yajurveda - Salakshana, and also Divyaprabandham (a very rare combination in a Pundit now-a-days) and what is observed by Venkatadhvari in his Visvagunadarsa in a different context

नानाम्नायपरिश्रमं कलयतां नास्त्येव शास्त्रेषु धीः

सत्योरप्युभयोस्तयोर्न सुलभा साह्यक्षतासाहिती ।

अप्येतासु सतीषु नास्ति विनयो नाचारभक्तिक्षमा
चातुर्यस्स च सा च सा च स च ताश्चालम्ब्यखेलन्त्यमुम् ॥

holds good in the present case.

When I was entrusted with the task of publishing this book, the greatness of the work, my own limitations and the magnitude of the labour involved in getting it through the press made me hesitate but I ventured guided by the maxim फलमुखगौरवस्यादोषत्वात्।

There may be errors such as the omission of obligatory *sandhis* etc. either due to inadvertance or to some technical difficulties in print and it is my sincere request that such acts of omission and commission may be passed over.

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥

प्रकाशदोषप्रचुरे मदीयग्रन्थेप्यमुष्मिन् करुणानुबन्धात् ।
प्रसादवन्तो न कृशानवन्तु परं तु विश्वावसवन्तु सन्तः ॥

The author finishes his seventieth year this day the 31st of August 1943 and may I issue this volume in commemoration of this happy occasion with the prayer that he may be blessed with many more years of health, wealth and prosperity bringing to light such other valuable works as may lie hidden in him.

My thanks are in no mean measure due to Mr. S. Kalyanasundaram, Manager, Sri Janardana Printing Works, Limited, Kumbakonam, who with his ripe experience in the field is responsible for the quick and neat execution of the work.

श्रीमन्नपर्याप्तसुधासमुद्र श्रीशार्ङ्गपाणे जयचक्रहस्त ।
श्रीभक्तिसारादिमुनीन्द्रचित्तपीयूष हेमाब्जरमापतेऽव ॥

Ambalpuram,
Pudukkottai,
31st August '43.

**V. Srinivasan.**

---



श्रीमत्परमहंसपरिव्राजकाचार्य श्रीकामकोटिपीठाधीश्वर
जगद्गुरु श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादाः ।

[अष्टषष्ठितमपीठा]

॥ श्रीः ॥

॥ श्रीचन्द्रमौलीश्वराय नमः ॥

मुद्रा

स्वस्तिश्रीमदखिलभूमण्डलालंकारत्रयस्त्रिंशत्कोटिदेवतासेवित - श्री कामाक्षीदेवीसनाथ-श्रीमदेकाम्रनाथ - श्रीमहादेवीसनाथ- श्रीहस्तिगिरिनाथ-साक्षात्कार - परमाधिष्ठानसत्यव्रतनामांकित - काञ्चीदिव्यक्षेत्रे शारदामठ-सुस्थितानाम्, अतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसम्फुल्ल-मल्लिकामालिकानिष्यन्दमकरन्दझरीसौवस्तिकवाङ्निगुम्भविजृंभणानन्दतुन्दिलितमनीषिमण्डलानाम्, अनवरताद्वैतविद्याविनोदरसिकानाम्, निरन्तरालंकृतीकृतशान्तिदान्तिभूम्नाम्, सकलभुवनचक्रप्रतिष्ठापकश्रीचक्रप्रतिष्ठा - विख्यातयशोऽलंकृतानाम्, निखिलपाषण्डषण्डकण्टकोद्घाटनेन विशदीकृत-वेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणाम्, श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीजगद्गुरु - श्रीमच्छंकरभगवत्पादाचार्याणाम्, अधिष्ठाने सिंहासनाभिषिक्त श्रीमन्महादेवेन्द्रसरस्वतीसंयमीन्द्राणाम्, अन्तेवासिवर्य - श्रीमच्चन्द्रशेखरेन्द्र-सरस्वती श्रीपादैः श्रीमत्समस्तसद्गुणमणिगणालङ्कृतानां निगमोक्ताचारनिरतानां श्रीमद्भगवच्चरणारविन्दसपर्यापरिलब्धकमलाकटाक्षवीक्षणालङ्कृतानां काळि रङ्गाचार्याणां सर्वाभीष्टसिद्ध्यै क्रियते नारायणस्मृतिः ।

भवतां सलक्षणवेदशास्त्रकाव्यत्रितयनैपुण्यं तत्तदाचार्यसिद्धान्तपरिशीलनपरिपाटीं विद्वज्जनपक्षपातविशेषं च बहुशस्साक्षात्कृत्यामन्दानन्दतुन्दिलितमानसा वयं श्रीमत्त्रिपुरसुन्दरीसमेत श्रीचन्द्रमौळीश्वरकृपामृतधारासिक्तेन "विद्वन्मण्डलमण्डनं" इति बिरुदेन भवतोऽनुगृह्णीमः ॥

विजययात्रास्थानं, मध्यार्जुनक्षेत्रम्<br>स्वभानु नाम सं०<br>मार्गशीर्ष षष्ठी गुरुवासरः<br>२-१२-४३.

श्री नारायणस्मृतिः ।

# श्रीमतां विद्यावारिधि मतत्रयनिरूपक
# कालि रङ्गाचार्यमहाशयानां
# बिरुदाभिनन्दनम् ॥

वन्दारुबृन्दमन्दारतरवे गुरवेऽन्वहम् ।
अज्ञानभूधरोच्छेदस्वरवे करवै नमः ॥

श्रीकाञ्चीकामकोटिस्थितयतिनृपतिस्सर्वतन्त्रस्वतन्त्रः
निर्व्याजां सर्वभद्रां कलयति करुणां निर्विशेषं प्रजासु ।
वाण्या दैव्या विवृद्धौ कृतमतिरनिशं धर्ममार्गोपदेशे
सक्तस्वान्तो महात्मा तदिह कुशलिनः पण्डितान् सत्करोति ॥

कर्ता ग्रन्थशतस्य शास्त्रजलधेस्तर्ताऽयमक्लेशतः
विद्यावारिनिधिस्स्वयं श्रुतियुगेनोत्तंसितो भास्वता ।
विद्वन्मण्डलमण्डनं नृपसभास्वग्रे स्थितस्सर्वदा
रङ्गाचार्यवरो मतत्रयभिदासंशोधको राजते ॥

चन्द्रशेखरसरस्वतीगुरुः नव्यसाळजनभाग्यसञ्चयात् ।
रङ्गराजविदुषस्समर्हणं सत्यया मधुरया गिरा व्यधात् ॥

आर्याः आनन्दैकरसिकाः आस्तिकोत्तंसाः!

विदितमेवेदं श्रीमतां यत् श्रीमन्तः श्रीकाञ्चीकामकोटिपीठमधितिष्ठन्तः श्रीजगद्गुरुपूज्यपादाः सर्वतन्त्रस्वतन्त्राः स्वतस्सिद्धया सर्वोत्कृष्ट्या च वैराग्यसंपदा संपन्नाः अनुत्तमात्मज्ञाननिष्ठाः अखर्वगर्वदुर्वादिदूरीकरणचातुरीधुरीणाः प्रभाजितप्रभाकराः आत्मारामा अपि "प्रायः परार्थवपुषस्सुधियः पृथिव्यां" इति नीतिमनुरुंधानाः अज्ञजनानुजिघृक्षयैव केवलं तत्रतत्र सदाचरणप्रचारणचणविजयसंचरणाः "पादैः पुनन्तः पृथिवीं दर्शयन्तो हरेः पदम्। धूतदुस्समयध्वान्ताः आदित्या इव गां गताः" इति सर्वतोपि विजेगीयमानाः श्रीचन्द्रशेखरसरस्वतीस्वामिनः आस्तिकमतावलम्बिनां इतरभाषाभ्यसनवशादनधिगतश्रुतिस्मृतिपुराणानां केनापि जन्मान्तरीयेण सुकृतपरिपाकेनास्मच्छास्त्रोक्तानभ्युदयनिःश्रेयसहेतुभूतान् विषयानधिजिगमिषतां तत्तद्देशीयजनानां प्रार्थनापरतन्त्राः अनाविलया अतिमधुरया अज्ञानपि विज्ञान् कुर्वन्त्या अश्मनोपि विद्रावयन्त्या वैमल्येन गंगां, वेगेन वैनतेयं च अधरीकुर्वन्त्या अमृतरसनिष्यन्दिन्या सरलसरलया नातिकठिनया प्रतिविषयमुदाहरणपरिपूरितया स्वकीयवाग्वैखर्या अतिकठिनमपि दुरवगाहमपि विषयजातं सुविशदं प्रतिपादयन्तः अपनयन्तः सन्तमसमान्तरं परस्सहस्राणां जनानां विराजन्ते, इति ॥

२ संयमिसार्वभौमानामेतेषां पवित्रचारित्रगुणेन स्वाभाविकधीरतया निरुपमज्ञानप्रकर्षेण हृदयंगमया वाचा च न केवलमितरे जनाः, सहृदयधुरीणा अपि सर्वे प्रस्फुटितेषु कमलेषु मधुकरा इव नितरामेतेषु प्रेमभावेन समाकृष्टमानसाः वर्तन्त इत्येतदपि न तिरोहितं कस्यापि ॥

३ जगति सर्वत्र सनातनधर्मनैराश्यान्धकारे जरीजृम्भमाणे, प्राज्ञंमन्यनव्यपरिष्कारकोलूकानां प्रद्वेषपरिपूरितकटुवचनघूत्कृते तत्रतत्र समधिकां भीतिमुपजनयत्यपि, निरुपमोत्साहशक्तिकल्पलतिकोपघ्नायितानामेतेषामस्मदाचार्यपादानां अनितरसाधारणसनातनधर्मप्रचारणानुरागारुणरागोदयः नूनमावेदयति सनातनधर्मसमुत्कर्षसूर्योदयप्रत्यासत्तिमित्येतदपि न वक्तव्यं भवति धीमताम् ॥

४ अखिलविद्वन्मण्डलनिकषायमाणाः एते अस्मत्संस्थाननवरात्रविद्वत्परीक्षासमितिप्रधानसदस्यानां पौरुषेयापौरुषेयवेदद्वयकोविदानां निखिलनिगमान्तसिद्धान्तशुद्धान्तभूतानां मीमांसितमीमांसानां तर्ककर्कशानां पाणिनीयपारदृश्वनां सरससरलसाहितीसमुल्लसितानां आस्थानदानाधिकारिणां मतत्रयनिरूपक विद्यावारिधि इत्यादिबिरुदावळिविभूषितानां श्रीमतां काळि रङ्गाचार्यमहाशयानां अतिविस्मापनीं प्रतिभाशक्तिं सर्वमतसमचित्ततां चावेक्ष्य "विशुद्धाश्शुद्धानांध्रुवमनभिसंधिप्रणयिनः" इति रीत्या अतीव प्रणयभरिताः सादरं निरवग्रहमन्वग्रहीषुः एतान् "विद्वन्मण्डलमण्डनम्" इति बिरुदप्रदानेन । तदिदं अभिनन्दनीयतमं बिरुदमहाशयसंमेळनं "रत्नं हि संगतमभूदिह काञ्चनेन" इति रीत्या नितरामादधाति सुषुमातिशयं परस्परम् ॥

५ अस्मन्मूर्धन्यतमानामेतेषामयं श्रीमदाचार्यपादानुग्रहः न केवलं तेषां परं अस्माकमपि सर्वेषामनुग्रह एव, न मनागपि संशेतव्यमत्र ॥ अतः वयमेतेषां सुगृहीतनामधेयानां बिरुदप्रदानानुग्रहमिमं सादरं सप्रेम सबहुमानं च अत्यन्तमभिनन्दन्तः एवं अनुगृहीतवतां श्रीमदाचार्यपादानां चरणयोः बहुधन्यवादवितरणपुरस्सरं आस्माकीनामतीव कृतज्ञतामपि सभक्त्युन्मेषं समर्पयामः ।

६ आशास्महे च, आचार्यपादा इमे एवमेवास्माननवरतं दृष्टिपातेन पावयन्तः प्लावयन्तश्च उपदेशवाक्यजनितया आनन्दामृत धारया सुखं चिरं जीयासुरिति भगवन्तं सर्वेश्वरम् ॥

असारनिस्सारणचातुरीकः विशुद्धपक्षो विधिचारणोत्कः ।
यथार्थयन् स्वं परहंसभावं जयत्ययं श्रीयतिसार्वभौमः ॥

इत्थं

नवसालपुरी
स्वभानुचापशुक्लतृतीया
२०—१२—१९४३

र. श्रीनिवासाचार्यः

प्रधानन्यायसभाप्राड्विवाकः

# सभाप्रतिसत्कारः

श्रीमच्चन्द्रिरशेखरेन्द्रयतिराट् पञ्चाक्षराध्यापकः
श्रीमच्चन्द्रिरशेखरश्च गिरिजाश्लिष्टस्सदा पातु नः ।
यत्कारुण्यतरङ्गितेक्षणसुधासंसिक्तमद्याक्षरं
विद्वन्मण्डलमण्डनाख्यबिरुदं प्रापं गजोत्तंसितम् ॥ १

यतीश्वरसरस्वतीसुरभिताष्टवर्णं मुदा
वहामि शिरसा सदा बिरुदमद्य धन्योऽभवम् ।
भवद्भिरपि कोविदैः नयविनिर्णयस्थापितैः
अनूद्य महतां पुरस्सदसि यच्च सङ्काशितः ॥ २

गुरुर्मितज्ञेऽपि मयि प्रसादं मुदाव्यतानी द्विबुधैरलभ्यम् ।
तस्मिन् विवृद्धा मम भक्तिरन्या कृतज्ञताविष्करणेन भूयः ॥ ३

यो नामद्वयवान् द्विजो भवति तं प्राज्ञं श्रुतिर्मन्यते
स्पष्टीकर्तुमिमं नु मे गुरुरदाद्विद्वन्मनोरञ्जनम् ।
विद्वन्मण्डलमण्डनाख्यबिरुदं विज्ञातसर्वागमः
विद्यावारिधिनामकस्य तदहं लक्ष्मीनृसिंहं भजे ॥ ४

एतत्सदृक्षो गुरुरद्य पूर्वं पश्चाच्च नास्त्यास्त भविष्यतीति ।
दृढा मतिर्मे मनसि प्ररूढा गुरोर्गुणैर्दास्यमुपागतस्य ॥ ५

श्रीमान् काव्यकलानिधिः विजयते विख्यातकीर्तिः क्षितौ
जड्जिस्थानपरिष्कृतस्सुहृदयं श्री श्रीनिवासो बुधः ।
आचार्यं विनयान्मयि प्रणयतः श्लाघोत्सवं स्वे गृहे
कृत्वा यो नितरां तुतोष सुहृदां मध्ये स जीयाच्चिरम् ॥ ६

सरसा कविता रामभक्तिः पण्डितपूजनम् ।
दासत्वं सुहृदि प्रीतिः श्रीनिवासगुणा इमे ॥ ७

इत्थं

काळि वङ्गिपुरं रङ्गाचार्यः



एतद्ग्रन्थकर्तारः

श्रीमन्तः पुदुकोट्टैसंस्थान दानाधिकारिणः

विद्वद्वराः मतत्रयनिरूपकाः

काळि, वङ्गीपुरं रङ्गाचार्यस्वामिनः

॥ श्रीः ॥

# मतत्रयसारसंग्रहे
# श्रीशङ्कर-सूत्रभाष्याधिकरणार्थसंग्रहः ॥

## ( अद्वैतं )

### प्रथमाध्यायः ॥

आदि श्रीशङ्कराचार्यं नत्वा निध्याय तद्गिरः ।
विरच्यते तद्भाष्याधिकरणार्थस्य संग्रहः ॥
सूत्रभाष्याधिकरणनिर्णीतार्थस्य संग्रहः ।
बुधानां सुखबोधाय रङ्गाचार्येणलिख्यते ॥१ ॥

[1] ब्रह्मास्ति [2] वेद्यं जगतोनिदानं [3] वेदस्य योनिः [4] पुरुषार्थभूतः ।
अचेतनत्वाच्च न तत् [5] प्रधानं तत्स्वप्रधानं निखिलस्य [6] पुच्छम् ॥ २ ॥
[7] आदित्यनेत्रान्तरगः परात्मा ध्येयस्स [8] आकाशपदाभिधेयः ।
[9] छान्दोग्यगप्राणपदाभिधेयः [10] ज्योतिर्द्युसम्बन्धितया परात्मा ॥ ३ ॥
कौषीतकीप्राणपदाभिधेयः [11] ब्रह्मैव पूर्वापरवेदवाक्यात् ।
मनोमयत्वादि विशिष्ट आत्मा ध्येयं परं [12] ब्रह्म तथा प्रसिद्धेः ॥ ४ ॥
चराचरात्ता च परस्स [13] एव मृत्युश्च यस्याप्युपसेचनं तत् ।
गुहां प्रविष्टौ च परात्मजीवौ [14] प्रयोजकत्वेन च पानसिद्धेः ॥ ५ ॥
एषोक्षिदृष्टः पुरुषः परात्माऽमृताभयत्वादि [15] गुणोक्ति सत्त्वात् ।
योसौ पृथिव्यादिषु तिष्ठतेऽन्तर्यामी परात्मा [16] नियमादितोक्तेः ॥६ ॥

17
तदक्षरं ब्रह्म परं तु भूतयोनिश्रुतेर्दृश्यनिषेधतश्च ।

18
वैश्वानरात्मा परमेश एव द्युमूर्धतादेः परमात्मधर्मात् ॥ ७ ॥

19
द्युभ्वन्तरिक्षाऽयतनं परात्मा तमेकमात्मानमिति स्वशब्दात् ।

20
भूमा परं ब्रह्म तु संप्रसादात् ऊर्ध्वोपदेशादिति वादितोक्तेः ॥ ८ ॥

21
आरण्यकोक्ताक्षरशब्दवाच्यः खान्तस्य धृत्या पर एव चात्मा ।

22
ध्येयः परः पूरुष इत्यदश्च ब्रह्मेक्षतेः कर्मतयोक्तिसत्त्वात् ॥ ९ ॥

23
आकाशशब्दो दहराभिधेयः जिज्ञास्यतादेः परमेश एव ।

24
'तमेव भान्तं' रिवति भापदार्थः प्राज्ञो हि तस्यानुकृतिश्रुतेश्च ॥ १० ॥

25
अङ्गुष्ठमात्रः पुरुषः परात्मा त्वीशानशब्दात् प्रमितृत्वसिद्धेः ।

26
परासु विद्यासु च देवतानामस्त्येव मध्वादि विसृज्य योगः ॥ ११ ॥

27
कर्माङ्गभूतोपनयाद्यभावात् सर्वत्र शूद्रस्य न चाधिकारः ।

28
यदेजनं प्राणनिमित्तकं स प्राणः परात्माऽखिलकम्पनाच्च ॥ १२ ॥

29
श्रुतौ परं ज्योतिरिह श्रुतं तत् ब्रह्मैव तस्योत्तरवाक्ययोगात् ।

30
नाम्नश्च रूपस्य च यः प्रवोढाऽऽकाशः परात्मा तदसङ्गतोक्तेः ॥ १३ ॥

31
योयं तु विज्ञानमयः परात्मा भेदेन निर्देशत एव जीवात् ।

32
प्रधानमेवेह जगन्निदानं तत्कल्पितं हीति न युज्यते तत् ॥ १४ ॥

32
मन्वादिनोक्तं सकलं च युक्तं तत्कापिलोक्तं हि न युज्यतेऽत्र ।

33
एकामजामित्यपि न प्रधानं परात्मसम्भूतगुणात्मिकेयम् ॥ १५ ॥

33
यथाविशेषात् चमसार्थबोधो न स्यात्तथाऽजार्थ इतीह वक्ति ।

34
यत् पञ्चपञ्चेति न सांख्यरीतिः संख्याश्रयेप्यात्मनभोधिकोक्तेः ॥ १६ ॥

सृष्टौ विगानं न च सृष्टिकर्तर्यस्तीति हेतुर्जगतः परात्मा[35] ।

यो वै बलाकेत्युपदिष्टकर्ता स्वाराज्यगामिश्रुतितः[36] परात्मा ॥ १७ ॥

श्रोतव्य आत्मेत्युपदिष्ट आत्मा तत्तत्यवाक्यान्वयतः परात्मा[37] ।

घटस्य मृत्सा घटकृच्च यद्वत् ब्रह्म प्रपञ्चस्य निमित्तमेव[38] ॥ १८ ॥

नैवं ह्युपादानमपीति युक्तं यज्ज्ञानतोन्यस्य च[38] वेदनादेः ।

अण्वादि हेतूक्तिविवादशीलाः सर्वे निरस्ता गतयुक्तिभिस्ते[39] ॥ १९ ॥

## अथ द्वितीयाध्यायः ॥

मन्वादि साधुस्मृतयः प्रमाणं[40] योगोक्ततत्वादि न मानमेव[41] ।

यद्गोमयात् कीटजनिर्नराच्च केशादि जन्मास्ति तथा[42] परात्मा ॥ २० ॥

विलक्षणं कारणमस्य[42] शिष्टावादा निरस्ताह्यमुना नयेन[43] ।

भोक्तुश्च भोग्यस्य विभागसिद्धिः सिन्धूर्मिफेनादिव[44] तत्र युक्ता ॥ २१ ॥

न ब्रह्मणोन्यत् परमार्थतोस्ति तस्मादनन्यत्वमिहोच्यते[45] तत ।

हितादिकार्याकृतरूपदोषः न ब्रह्मणोयं प्रसजेन्मृषा[46] सः ॥ २२ ॥

क्षीरस्य दध्यादिवदेव सृष्टौ सामग्र्यपेक्षा न परेशितुश्च[47] ।

{ ब्रह्म स्वयं चेत् परिणामि कृत्स्नप्रसक्तिता सावयवत्वता[48] च ॥ २३ ॥

{ श्रुतिप्रमाणादुभयं न दुष्टं शुद्धप्रतीत्यै परिणामवादः[48] ।

सामग्र्यभावेपि च सर्वशक्तियुक्तं परं ब्रह्म सृजत्यमूनि[49] ॥ २४ ॥

सचेतनं ब्रह्म नृपादिवत्तत सृष्टिं विधायात्र करोति लीलाम्[50] ।

धाता यथा पूर्वमिति श्रुतेश्च सृष्टौ न दोषः[51] परमेश्वरस्य ॥ २५ ॥

सचेतनब्रह्मनिदानवादे सर्वोपपत्तिर्न परत्र[52] चेति ।

न सांख्यवादे रचनोपपत्तिः[53] वैशेषिकानामपि दोष[54] एव ॥ २६ ॥

जगन्निदानं परमाणुरेवेत्ययं च पक्षः[55] सुनिरस्त एव ।

वैनाशिकोक्ता समुदायसृष्टिः न युक्तियुक्ता[56] सुगतो[57] निरस्तः ॥ २७ ॥

तथाऽऽर्हतं चापि मतं निरस्तं[58] न तार्किकोरीकृत ईश्वरश्च[59] ।

प्रद्युम्नसंकर्षणजन्ममुख्या प्रकल्पना सात्वतजा न युक्ता[60] ॥ २८ ॥

उत्पद्यते खं[61] परमेश्वरादित्यवोचदेवं[62] स सदागतिश्च

उत्पत्त्यभावस्तत एव चोक्तः[63] ब्रह्मैव तेजो[64] जनकं[65] ततोपाम् *॥ २९ ॥

* उत्पत्तिरिति शेषः

अद्भ्यश्च[66] भूमिः परमेश्वरस्य ध्यानाच्च तद्रूपतया[67] विसृष्टिः ।

उत्पत्तिरीतेश्च विपर्ययेण क्रमेण भूम्यादि लयः प्रतीतः[68] ॥ ३० ॥

भूतक्रमस्याप्यविरोध एव विज्ञान चेतो[69] जनिराह मध्ये ।

जीवस्य चोत्पत्तिलयादिवादः शरीरसंबन्धनिमित्तकस्सः[70] ॥ ३१ ॥

नोत्पद्यते नाम कदाचिदात्मा[71] स नित्यचैतन्य[72] इति त्रयीवाक् ।

उपाधिसङ्गादणुतादिगामी जीवो विभुर्ब्रह्म महान् श्रुतेश्च[73] ॥ ३२ ॥

शास्त्रार्थवत्त्वाय[74] स एव कर्ता सा कर्तृतोपाधिकृतेति विद्यात्[75] ।

कर्तृत्वमस्यापि परेशनिघ्नं[76] वह्निस्फुलिङ्गा इव तेऽम्शभूताः[77] ॥ ३३ ॥

प्राणाश्च सर्वेपि परात्मजाताः[78] प्राणास्तथैकादश नाधिकास्ते[79] ।

ते[80] चाणवश्श्रेष्ठ इति प्रसिद्धः[81] विकारभूतस्य च वायुरेव[82] ॥ ३४ ॥

प्राणश्च मुख्योणुरुदीरितोयं[83] स जीव देवैरधिविष्ठितास्ते[84] ।
एकादशामी स च मुख्यवायुः त इन्द्रियाण्येव पृथक्[85] पृथक् च ॥ ३५ ॥
त्रिवृत्कृतं व्याकरणं परात्मा करोति नामादि[86] न जीव इत्थम् ।
द्वितीयकाध्यायगतेषु पत्सु चतुर्षुचार्था इहसंगृहीताः ॥ ३६ ॥

## अथ तृतीयाध्यायः ॥

---

देहान्तरं गच्छति भूतसूक्ष्मैः[87] जीवोऽवरोहत्यवशिष्टकर्मा[88] ।
अनिष्टकृच्चन्द्रमसं न याति[89] व्रीह्यादि साम्यं[90] भजतेऽवरोही ॥ ३७ ॥
व्रीह्यादितः प्राग्गगनादिभावे स्वल्पं च कालं स हि[91] तिष्ठतीति ।
जीवान्तराधिष्ठितधान्यकादौ संश्लेषमात्रं भजते स कर्मी[92] ॥ ३८ ॥
मायैव सन्ध्ये च रथादि[93] सृष्टिः सुप्तिश्च नाड्यादि[94] समुच्चयोस्य ।
सुप्तप्रबुद्धोपि स एव कर्मी[95] मुग्धार्धसम्पत्तिरिहापि मूर्च्छा[96] ॥ ३९ ॥
ब्रह्मैकलिङ्गं श्रुतिदृष्टमेतत् तन्निर्विकल्पं न विरुद्धलिङ्गम्[97] ।
यत् ब्रह्मणोन्यत् प्रतिभाति तन्नेत्यथात आदेश इति[98] ब्रवीति ॥ ४० ॥
न सेतुशब्दः परमात्मनोन्यत् ब्रवीति सेतुश्च[99] परस्स आत्मा ।
फलप्रदं ब्रह्म न कर्म नान्यत् नश्यत्स्वभावं तदचेतनं[100] च ॥ ४१ ॥
सर्वागमान्तेषु च याश्च विद्याः सर्वास्समा रूपफलाद्यभेदात्[101] ।
गुणोपसंहार इहेष्यतेऽर्थे तुल्ये च विद्यैक्यफलं[102] त्वमुत्र ॥ ४२ ॥
छान्दोग्यगोद्गीथविशेषविद्या ह्यारण्यकोक्तेः पृथगेव[103] सेति ।
ओमित्यदश्चात्र विशेषणं तत् उद्गीथकाङ्गं त्विति[104] चिन्तनीयम् ॥ ४३ ॥

ये प्राणविद्ये श्रुतिगे च तुल्ये गुणानुषङ्गेण विचिन्तनीये[105] ।

आनन्दविज्ञानघनादि धर्माः ब्रह्मप्रतीतौ नियमेन चिन्त्याः[106] ॥ ४४ ॥

यश्चिन्तनीयः पुरुषः परस्स आत्मा च सर्वेभ्य इति ब्रवीति[107] ।

य ऐतरेये श्रुत आत्मशब्दः परस्स आत्मैव परश्रुतौ[108] च ॥ ४५ ॥

छान्दोग्यवाजिस्थसदात्मशब्दौ तुल्याविहेत्यर्थ इति[108] ब्रवीति ।

वासोविधानार्थमनग्नतोक्तिः शुद्ध्यर्थतीर्थेष्विति[109] चिन्तनीयम् ॥ ४६ ॥

शाण्डिल्यविद्ये च समे गुणोपसंहार[110] एवात्र विधेय इत्थम् ।

स्थानप्रभेदाद्रविरक्षिचेह रव्यक्षिविद्ये च[111] विभिन्न एव ॥ ४७ ॥

यत्संभृतिज्येष्ठगुणादि भानं यत्र श्रुतं[112] तत्र तु नेतरत्र ।

छान्दोग्यगारण्यकपूरुषाख्यविद्ये विभिन्ने गुणभेदसत्वात्[113] ॥ ४८ ॥

सर्वं प्रविध्य प्रभृतीति मन्त्रजातं न विद्याङ्गमिदं[114] परत्र ।

पुण्यप्रहाणं यदिह श्रुतं तत्र चोपायनोक्तिश्श्रुतिशेषमेव[115] ॥ ४९ ॥

विधूननं चालनबोधकं न किन्तु प्रहाणं त्विति[115] वर्णनं वा ।

देहाद्विनिष्क्रान्तिसमानकालं पुण्यादिहानं सगुणस्थितस्य[116] ॥ ५० ॥

यो देवयानः क्वचिदर्थवान् सः विशुद्धनिष्ठस्य[117] स नेति युक्तः ।

या देवयानाध्वगतिश्श्रुता सा विद्यासु चिन्त्या सगुणासु[118] नित्यम् ॥ ५१ ॥

विद्या सुसिद्धौ विदुषश्शरीरनाशे तु कैवल्यसुसिद्धिरेव[119] ।

केषांचिदेवात्र विपश्चितां सा पुनश्शरीराप्तिरिहाधिकारे[120] ॥ (स्थितानामिति-शेषः

या चाक्षरत्वादि निषेधबुद्धिः सर्वत्र विद्यास्वनिवर्तनीया[120] ।

उभौ सुपर्णौ च ऋतं पिबन्तावित्येतयोरैक्यमिहोच्यते[121] च ॥ ५२ ॥

उषस्तपृच्छा च कहोलपृच्छा तुल्येति विद्यैक्यमिह [122] ब्रवीति ।
त्वं वा अहं सोऽहमहं त्वमादि चिन्ता विभिन्नश्रुतिगापि [123] तुल्या ॥ ५४ ॥

सत्याख्यविद्ये फलरूपभेदात् भिन्नेत्यतो ध्यानमपीह [124] भिन्नम् ।
चेतो गृहाद्यैक्यमिह श्रुतं तत् [125] ब्रह्मैव दहं तत एव चैक्यम् ॥ ५५ ॥

भुङ्क्ते यदा ब्रह्मविदत्र चैव प्राणाग्निहोत्रं [126] कुरुतादलोपात् ।
कर्माश्रयोद्गीथविचिन्तनादि फलान्तरेच्छावत [127] एव सिद्धम् ॥ ५६ ॥

संवर्गवायुश्च परत्नवायुः तुल्योपि भेदेन [128] विचिन्तनीयः ।
मनश्चिदाद्याश्च मनोमयास्ते विद्यात्मका एव न [129] यागशेषाः ॥ ५७ ॥

[130] देहातिरिक्तात्मसमर्थनं च [131] ह्यङ्गाश्रयाणामनुवृत्तिरेव ।
वैश्वानरात्मा च विशिष्ट एव ध्येयो हि भूमा [132] क्रतुवच्चसाङ्गः ॥ ५८ ॥

वैश्वानरात्मेव समस्य विद्याः नोपासितव्या [133] विविधा हि विद्याः ।
या का च विद्या फलसाधनाय प्रतिगृहीता फलदा तु [134] सैव ॥ ५९ ॥
अतश्च विद्यासु विकल्प एव समुच्चयो नेति [134] निगद्यतेऽत्र ।
काम्यास्तु विद्याश्च [135] यथेच्छमेव कर्माङ्गभूतास्तु [136] यथाश्रयास्ताः ॥ ६० ॥

विद्या स्वतन्त्रा [137] फलदेति सिद्धं विद्योर्ध्वरेतस्सु च [138] सिद्ध्यतीति ।
उद्गीथविद्याश्रुतरस्यताद्याः उपासनार्था [139] स्तुतिगोचरा न ॥ ६१ ॥

वेदान्तवाक्यस्थकथाश्च विद्याविधायका एव [140] परिप्लवा न ।
अग्नीन्धनादीननपेक्ष्य विद्या फलं ददातीति [141] जगाद चात्र ॥ ६२ ॥

शास्त्रीयसर्वाश्रमकर्मसङ्गापेक्षा यथार्हा [142] भवतीह विद्या ।
विद्यावतापीह निषिद्धमन्नं प्राणात्यये स्वल्पफलादि [143] भोज्यम् ॥ ६३ ॥
यज्ञादिकर्माऽऽश्रमिणाऽपि कार्यं विद्यास्थितेनापि [144] सहायसिद्ध्यै ।
द्रव्यादिसंपद्रहितप्रमीतदारादयस्तेष्वपि [145] साऽस्ति विद्या ॥ ६४ ॥
तुर्याश्रमं प्राप्य [146] ततश्च्युतिर्न सा नैष्ठिकस्यापि [147] सततसमाना ।
ये प्रच्युतास्ते [148] सुबहिष्कृताश्च [149] ऋत्विक्क्रियाज्ञाश्रयचिन्तना सा ॥ ६५ ॥
विद्यावतो [150] मौनविधिश्च सिद्धः ज्ञानी च [151] डम्भादिविवर्जितश्च ।
विद्याफलं त्वैहिकमत्र जन्मन्यमुत्र [152] वाऽप्रस्तुतबन्धके तत ॥ ६६ ॥
मुक्त्याह्वयं श्रेष्ठफलं तु विद्यासाध्यं न [153] चोत्कर्षनिकर्षवत्तत्।
तृतीयकाध्यायगतेषु पत्सु चतुर्षुचार्था इह संगृहीताः ॥ ६७ ॥

## अथ चतुर्थाध्यायः ॥

[154] [155] ज्ञानस्यचावृत्तिरिहार्थदात्मेत्युपासना सापि न च [156] प्रतीके ।
अर्कादिषु [157] ब्रह्ममतिर्हि युक्ता ब्रह्मद्रीथकेऽर्कादिमतिश्च [158] युक्ता ॥ ६८ ॥
उपास्तिमासीन इह [159] प्रकुर्यात् एकाग्रता यत्र [160] स एव देशः ।
शरीरपातावधि [161] चात्मचिन्ता यद्ब्रह्मलाभे सति [162] पापनाशः ॥ ६९ ॥
पुण्यस्य नाशोपि [163] तथैव पाते प्रारब्धकार्यं न हि [164] नश्यतीति ।
नित्याग्निहोत्रादि न नश्यतीह विद्यासुसिद्ध्यै [165] भवतीति चोक्ता ॥ ७० ॥
यत ज्ञानपूर्वं विहितं च कर्म विद्या च [166] मोक्षाय सुसाधनं तत् ।
भोगेन चारब्धमिहानुभूय कैवल्यमाप्नोति [167] विशेषविज्ञः ॥ ७१ ॥

प्रयाणकाले सगुणात्मनिष्ठविपश्चितो वाङ्मनसि [168] प्रलीना ।

प्राणे मनश्च [169] प्रविलीयते स प्राणश्च जीवे स च [170] भूतसूक्ष्मे ॥ ७२ ॥

नाडीप्रवेशो विदुषोधिकोस्ति तत्पूर्वमेकैव [171] गतिर्द्वयोश्च ।

सप्राणजीवस्य लयः परस्मिन् सुषुप्तिकाले च यथा [172] तथाऽत्र ॥ ७३ ॥

विशुद्धविज्ञानपरात्मनिष्ठः नोत्क्रान्तिमाप्नोति [173] परात्मभूतः ।

परात्मवित्प्राणगणः [174] परस्मिन् संलीयते सोऽप्यविभाग [175] एव ॥ ७४ ॥

गुण्यात्मानिष्ठस्य च हार्द एव प्रकाशयत्यत्र च [176] मूर्धनाडीम् ।

उत्क्रान्तविद्वानपि रश्मिसृत्या प्रयाति रात्रावपि [177] रश्मिसत्त्वात् ॥ ७५ ॥

परेऽयनेऽपि प्रसृतो विपश्चित् तां देवयानाख्यसृतिं [178] समेति ।

उपासकस्यार्चिरहर्मुखोऽध्वा [179] तत्रापि चाब्दात् परमेव [180] वायुः ॥ ७६ ॥

विद्युत्परं [181] तीर्थपतिर्निविष्टः वोढार एतेऽर्चिरहर्मुखाश्च [182] ।

कार्याह्वयं ब्रह्म च ये स्मरन्ति तानेव ते ब्रह्म नयन्ति [183] नान्यम् ॥ ७७ ॥

परं तु यद्ब्रह्म च ये स्मरन्ति तानेव तद्ब्रह्म नयन्ति [183] नान्यम् ।

केचित् प्रतीकव्यतिरिक्तमन्यत् ब्रह्मेति तानेव नयन्ति [184] देवाः ॥ ७८ ॥

स्वेनैव रूपेण परात्मभावः स्वकण्ठचामीकरलाभवत् [185] सः ।

मुक्तः परात्माऽपृथगेव भूतः यत्तत्त्वमस्यादि [186] विशेषविज्ञः ॥ ७९ ॥

ब्राह्मेण रूपेण च केवलेन चैतन्यरूपेण विमुक्त [187] आस्ते ।

मुक्तस्स्वसंकल्पत एव सृष्ट्वा भुङ्क्ते च [188] भोगानखिलान् विमुक्तौ ॥ ८० ॥

मुक्तस्य देहेन्द्रियवर्ग आस्ते स एकधेत्यादि च [189] वेदवाक्यात् ।
अनेक देहाश्रयणेऽपि चात्मा प्रदीपवत्तत्र [190] च तत्र भाति ॥ ८१ ॥
मुक्तौ गुणिब्रह्मविचिन्तकस्य सृष्ट्यादिवर्जं [191] परमात्मसाम्यम् ।
चतुर्थकाध्यायगतेषु पत्सु चतुर्षु चार्था इह संगृहीताः ॥ ८२ ॥
व्यासोदिताध्याय चतुष्टयेषु श्रीशंकराचार्यगुरूपदिष्टाः ।
ये सूत्रभाष्ये प्रतिभान्ति तेऽर्थाः रङ्गार्यनाम्ना विदुषा गृहीताः ॥ ८३ ॥

सगुणब्रह्मनिष्ठस्य सृष्टिवर्जं स्वसाम्यता ।
शुद्धब्रह्मणि निष्ठस्य स्वेनैक्यं फलमच्युते ॥ ८४ ॥
भाष्येऽधिकरणानां च संख्यैकनवतिश्शतम् ।
सूत्रसंख्या पञ्चपञ्चाशच्चपञ्चशतानि ॥ ८५ ॥

(अधिकरणानि १९१ सूत्राणि ५५५)

इति काळि. वञ्जीपुरं, मतत्रयनिरूपक-रङ्गाचार्याणां कृतिषु
श्रीशङ्कर-सूत्रभाष्याधिकरणार्थसंग्रहः ॥
शुभं भूयात् ॥

---

(श्लोकमध्यगता संख्या अधिकरणसंख्याज्ञापिका)

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# मतत्रय सारसंग्रहे
# श्रीभाष्याधिकरणार्थ संग्रहः

---

## विशिष्टाद्वैतं ॥

---

श्रीनृसिंहपदांभोजसमाराधनतत्परम् ।
श्रीरङ्गशठकोपाख्ययतिराजगुरुम् भजे ॥

अहोबिलमठाधीश श्रीनिवासयतीश्वरम् ।
नत्वाऽण्णावाजपेयादीन् संग्रहो लिख्यतेऽधुना ॥ १ ॥

श्रीभाष्यस्याधिकरणनिर्णीतार्थप्रकाशकः ।
अपर्याप्तामृतब्रह्मस्तवोयं लिख्यते मया ॥ २ ॥

सूत्रसंख्या पञ्चचत्वारिंशत्पञ्चशतानि च ।
संख्याधिकरणानां तु षट्पञ्चाशच्छतं तथा ॥ ३ ॥

सूत्राणि ५४५; अधिकरणानि—१५६

## प्रथमाध्यायः ।

---

गुरूपसत्तिं प्रविधाय भक्त्या ब्रह्मोपदिष्टं गुरुणा [1] शृणोतु ।
सर्गादिकर्ता [2] जगतस्त्वमेव [3] शास्त्रैकमानं [4] पुरुषार्थरूपी ॥ ४ ॥
[5] त्वं न प्रधानं [6] श्रुतिवागतीतानन्दस्वरूपीति च कथ्यतेऽस्मिन् ।
आदित्यमध्ये [7] च हिरण्मयोसि [8] ह्याकाशवाच्योस्य[9]सुशब्दवाच्यः ॥ ५ ॥

---

(श्लोकमध्यगता संख्या अधिकरणसंख्या ज्ञापिका)

10 11
ज्योतिः परं भासि दिवः परं च शचीपतिप्राणपदाभिधेयः ।
12 13 14
ब्रह्मेति सर्वं वदति श्रुतिस्सा चराचराताऽक्षिणि पूरुषश्च ॥ ६ ॥
15 16
भूरादि सर्वेषु वितिष्ठसेऽन्तर्यामी ह्यदृश्यादि गुणार्णवश्च ।
17 18 19
वैश्वानरात्मा द्युरसान्तरिक्षप्राणादि वेश्मापि चक्राधि भूमा ॥ ७ ॥
20 21 22
किञ्चाक्षराख्यः परपूरुषश्च दह्रान्तराकाशपदाभिधेयः ।
23 24 25
अङ्गुष्ठमात्रः पुरुषः परात्मा देवाद्युपास्योष्टवसुस्ततोसि ॥ ८ ॥
26 23 a
शूद्रानुपास्योऽग्निमुखाऽमराश्च त्वत्तस्तु बिभ्यत्यनिशं च सर्वे ।
27
त्वं रूपनाम्नोर्जगतः प्रवोढा ह्याकाशशब्देन च विश्रुतोसि ॥ ९ ॥
28
अव्यक्तशब्दप्रतिपादितोसि न सांख्यनिष्ठस्य विमुक्तिदश्च ।
29
त्वदात्मिकाजां च न वेत्ति सांख्यः आपाततो वेदविचारवादी ॥ १० ॥
30
पञ्चेति संख्याश्रयणेपि 'यस्मिन् पञ्चे'तिवाक्ये च भवान् विभाति ।
31
सृष्ट्यादिवाक्ये बहुधापि भिन्ने त्वत्कारणत्वे न विवाद एव ॥ ११ ॥
32
अजातशत्रुश्च भवन्तमाह ब्रह्मेतिवेद्यं जगतो निदानम् ।
33
'न वा अरे पत्युरि'ति श्रुतौ यः आत्मेतिशब्दस्त्वयि मुख्यवृत्तः ॥ १२ ॥
34
सर्वप्रपञ्चस्य भवन्तमेव निमित्तमाहुः प्रकृतिं च वेदाः ।
35
सर्वागमान्ताश्च भवन्तमेव व्याख्यान्ति शिष्टा अपि पूर्वरीत्या ॥ १३ ॥
उपक्रमाध्यायगतेषु पत्सु चतुर्षु भाष्यार्थविचार एषः ।

## अथ द्वितीयाध्यायः ।

36 37 38
मन्वादि साधुस्मृतिदृष्टरूपः योगोक्त्यगम्यश्च विलक्षणस्त्वम् ॥ १४ ॥

[39] बाह्यैरदृष्टश्च [40] परात्मजीवविभागवान् [41] कारणकार्यरूपः ।
[42] हितादिकार्याकरणादिदोषशून्यश्च [43] सामग्र्यनपेक्षसृष्टिः ॥ १५ ॥
[44] कृत्स्नप्रसक्त्यादि समस्तदोषहीनश्च [45] लीलाफलसृष्टिकर्ता ।
सामर्थ्यवान त्वं [46] रचनाविशेषे पराणुहेत्वादि [47] निरासकोसि ॥ १६ ॥
क्षित्यम्बुतेजोऽनिलसंहती द्वे जगन्निदानं त्विति [48] वादिभेत्ता ।
ज्ञानातिरिक्तार्थपदार्थसत्ता नास्तीति [49] दुर्वादिमताद्रिवज्रः ॥ १७ ॥
[50] शून्यादिवादप्रतिषेधकस्त्वं [51] विरुद्धधर्माश्रयवादिविद्विट् ।
[52] शैवागमोक्तार्थनिरासदक्षः त्वं [53] पञ्चरात्रागममानवादी ॥ १८ ॥
[54] वियत्समीरप्रभवस्त्वमेव तेजोऽप्पृथिव्यादि [55] पिता त्वमेव ।
[56] जीवात्मनित्यत्वविबोधकस्त्वं [57] ज्ञानाणुधर्मोऽयमिति ब्रवीषि ॥ १९ ॥
[58] कर्ताऽयमात्मेति च संब्रवीषि [59] त्वद्दत्तकर्तृत्ववहीति जीवः ।
[60] जीवाश्च सर्वे भवदंशभूताः त्वमिन्द्रियाणां [61] जनकोखिलानाम् ॥ २० ॥
एकादशानामपि [62] चेन्द्रियाणां प्राणानणूनेव [63] करोषि सर्वान् ।
[64] वायुर्व्यवस्थान्तरवान् पृथक् च तं [65] वायुमेवाणुमिह ब्रवीषि ॥ २१ ॥
भवद्धृतं [66] ज्योतिरधिष्ठितृत्वं श्रेष्ठातिरिक्तानि त [67] इन्द्रियाणि ।
त्वयैव सृष्टे अपि नामरूपे त्रिवृत्कृतापः [68] पृथिवीं च तेजः ।
द्वितीयकाध्यायगतार्थ एषः सुखेन बोधाय मया गृहीतः ॥ २२ ॥

## अथ तृतीयाध्यायः ॥

---

देहान्तराप्तौ च [69] सुसूक्ष्मदेही कृतात्यये [70] कर्मसहाय एति ।
यागाद्यकर्ता न च [71] चन्द्रगामी खादेस्तुलामाप्य भुवं [72] समेति ॥ २३ ॥

तिष्ठन् स खादौ [73] चिरकालमेति व्रीह्यादि [74] संश्लिष्ठ इहावरोहेत् ।

स्वप्ने पदार्था [75] भगवद्भिसृष्टाः जीवस्य सुप्तिः [76] परमात्मनीति ॥ २४ ॥

सुप्तप्रबुद्धः स हि जीवएव [77] मूर्च्छा मृतेरर्धदशा [78] समाना ।

सदा च सर्वत्रगतः परात्मा [79] निर्दोषकल्याणगुणाकरस्सः ॥ २५ ॥

ब्रह्मस्वरूपं त्वचिदित्यवोचत् ब्रह्मापृथग्भावत [80] एव तद्धि ।

सेत्वर्थकश्चापि परस्स आत्मा [81] फलप्रदस्तत्तनुरेव [82] विष्णुः ॥ २६ ॥

कृत्स्नागमान्तोत्थमुपासनं तत् एकं ततस्तत्र [83] गुणानुषङ्गः ।

उद्गीथविद्ये स्वविभेदहेतुसत्वाद्विभिन्ने इति [84] निश्चिते द्वे ॥ २७ ॥

ये प्राणविद्ये च [35] तयोरभेदः आनन्दसत्त्वादि [86] गुणीति चिन्त्यः ।

प्राणस्य [87] वासस्त्वविधानमप्सु [88] शाण्डिल्यविद्यैक्यमभेददृष्टेः ॥ २८ ॥

स्थानादिभेदात् रवि-[89] नेत्रविद्ये भिन्ने च [90] भृत्यादि च यत्र तत्र ।

'तस्यैवमि'त्यादि यजुर्गता या छान्दोग्यगायाः पृथगेव [91] विद्या ॥ २९ ॥

'विध्यादि'[92] मन्त्राद्यभिचारशेषाः [93] उपायनार्थाघविहानिरत्र ।

देहादपक्रान्ति समानकालं निश्शेषकर्मक्षय [94] उच्यतेऽत्र ॥ ३० ॥

ये ब्रह्मविद्याविकृतास्तु तेषां [95] तुल्यार्चिरादिर्गतिरित्यधीता ।

अस्थूलताद्यैश्च गुणैर्विशिष्टं ब्रह्मानुचिन्त्यं [96] त्विति चोक्तमत्र ॥ ३१ ॥

उषस्तविद्या च कहोलविद्या [97] तुल्यैव विद्ये दहराख्यके [98] द्वे ।

उद्गीथचिन्तानियमो [99] न चात्र दहरस्य चिन्ता [100] गुणचिन्तनार्था ॥ ३२ ॥

सर्वत्र नारायण एव चिन्त्यः[101] विद्यामया एव नर्मक्रियाद्याः[102] ।
जीवस्वरूपं च विमुक्तिकाले तत्प्राप्यरूपं तदिहैव[103] चिन्त्यम् ॥ ३३ ॥
अङ्गावबद्धाश्च समस्तचिन्ताः सर्वत्रसक्ता इति चाविरोधात्[104] ।
वैश्वानरस्सर्वविशिष्ट[105] एव ध्येयश्च विद्या विविधाश्च[106] भेदात् ॥ ३४ ॥
विद्याविकल्पो न समुच्चयोस्य ध्यातुर्विमुक्ताविह साधकन्तु[107] ।
अङ्गावबद्धासु यथेच्छमेव ह्युपासनं[108] चाह तृतीयपादे ॥ ३५ ॥

विद्यैव युक्ता[109] पुरुषार्थदेति चोद्गीथविद्यासु[110] रसादिदृष्टिः ।
श्रुत्यन्तविज्ञातकथा च सर्वा विद्याविधात्री[111] न नृपार्थिकेति ॥ ३६ ॥
विद्योर्ध्वरेतस्सु च केवलस्वकर्माद्यपेक्ष्यैव[112] सुसिद्ध्यतीति ।
गृहस्थनिष्ठस्य तु सर्वकर्मसापेक्षया[113] सिद्ध्यति चात्मविद्या ॥ ३७ ॥
शमादि चाङ्गं[114] गृहिणश्च सिद्धं आपत्सु सर्वान्नभुजां[115] न दोषः ।
मोक्षाभिलाषारहितेन कर्मानुष्ठेयमन्येन* सहायतोक्तिः[116] ॥ ३८ ॥

विद्याधिकारश्च भवेत् प्रमीतदारस्य चापत्सु[117] कथंचिदुक्तः ।
अष्टाश्रमाणामधिकार एव विद्यासु नास्त्यत्र बहिष्कृतास्ते[118] ॥ ३९ ॥
अङ्गाश्रयोपास्तिरपीह[119] ऋत्विक्कार्येति मौनं सहकारिहेतु[120] ।
स्वगौरवाच्छादनमैहिकादि[121] सिद्ध्येन्निरोधेऽसति[122] दर्शनात्तत् ॥ ४० ॥

विमुक्तिरूपं फलमत्र विद्या सिद्धौ सुसिद्ध्येदिति तुर्यपादे[123] ।
चतुर्षु पादेषु तृतीयगेषु विचारितार्था इह संगृहीताः ॥ ४१ ॥

---

(*अन्येन=मुमुक्षुणा)

## अथ चतुर्थाध्यायः ॥

[124] आवृत्तविज्ञानमिहात्मलाभे [125] स्वात्मान्तरात्मेति च तस्य चिन्ता ।
नामाद्युपास्तौ न [126] परात्मलाभः उद्गीथकेऽर्कादि [127] विचिन्तनीयम् ॥ ४२ ॥
उपासना चासननिष्ठितस्य मनोनुकूले [128] भवतीह देशे ।
आवृत्तविज्ञानमपीह यावत् शरीरपातं [129] करणीयमेव ॥ ४३ ॥
उपासनोपक्रम एव [130] पापप्रहाणमुक्तं सुधियामिहेति ।
[131] शरीरपातेऽखिलपुण्यनाशोऽप्रारब्धकार्ये तु [132] विनश्यतो द्वे ॥ ४४ ॥
नित्याग्निहोत्रादि तु कार्यमेव विद्यासमाप्त्यै [133] विदुषां स्वकर्म ।
आरब्धकार्यं सुकृतं च पापं फलानुभूत्यैव [134] निरस्यमत्र ॥ ४५ ॥
वागिन्द्रियं चेतसि [135] युज्यतेऽत्र प्राणे [136] मनस्सोपि [137] च जीव एव ।
जीवेन युक्तस्य च [138] भूतसूक्ष्मे ह्युत्क्रान्तिरेषा [139] सदसत्समाना ॥ ४६ ॥
सप्राणजीवस्य परात्मसङ्गः स्वविश्रमायेति [140] निगद्यतेऽत्र ।
परात्मसङ्गो [141] ह्यविभागरूपः मूर्धन्यनाड्योत्क्रमणं [142] बुधानाम् ॥ ४७ ॥
निष्क्रान्तविद्वानपि सूर्यरश्मिद्वारैव चाप्नोति [143] परात्मलोकम् ।
रात्रावपीनस्य च [144] रश्मिसत्ता मृतस्सुधीरि[145]त्ययने परे *तत् ॥ ४८ ॥
एकाध्वना[146]र्चिर्दिवसादिनैति विद्वानथाब्दात् [147] परमेति वायुम् ।
जलाधिनाथं तटितः [148] परं च वोढार एतेऽर्चिर[149]हर्मुखास्ते ॥ ४९ ॥

*(तत्=ब्रह्मैव)

ब्रह्मात्मकं स्वं प्रकृतेर्वियुक्तं ब्रह्माप्युपास्ते च नयन्ति ते तम् ।
150
योसावुपास्ते परमेव कार्यं न तान्नयन्तीति वदत्यमुष्मिन् ॥ ५० ॥

151
तिरोहितं यन्निजरूपमस्ति तदेव चाविर्भवतीह मुक्तौ ।
152
सर्वांश्च कामानविभक्त एव समश्नुते मोक्ष इति प्रक्लृप्तम् ॥ ५१ ॥
153
श्रुतौ य आत्मेति गुणाष्टकं तत् तद्युक्त आत्मा प्रतिभाति मुक्तौ ।
154
परात्मसंकल्पविमिश्रनैजसंकल्पतस्सृष्टपदार्थभोगः ॥ ५२ ॥
155
मुक्तस्य तन्वादिकमस्ति तच्च त्रिधा चतुर्धा नवधेत्यनेकम् ।
156
जगत्पतित्वादि विसृज्य साम्यं परात्मभोगे प्रतिपाद्यतेऽत्र ।
चतुर्षु पादेषु तुरीयगेषु विचारितार्था इह संगृहीताः ॥ ५३ ॥
श्रीभाष्यतात्पर्यसुसंग्रहोऽयं सुखेन बोधाय सुपण्डितानां ।
रङ्गार्यनाम्ना लिखितो बुधेन जयत्वसौ संसदि पण्डितानाम् ॥ ५४ ॥
इत्थं चतुर्भिरध्यायैः व्याससूत्रार्थबोधकैः ।
श्रीभाष्योक्तार्थसहितैः स्तुतश्शार्ङ्गिन् प्रसीद मे ॥ ५५ ॥
वेदव्यासमहर्षिणा विरचितं यद्ब्रह्मसूत्रात्मकम्
तद्व्याख्यां लिलिखुश्च पूर्वगुरवः तात्पर्यविज्ञाश्च षट् ।
तेऽमी यादवभास्करौ प्रथमजौ श्रीशंकराचार्यकः
मध्वार्यो यतिराजलक्ष्मणमुनिः श्रीनीलकण्ठाह्वसन् ॥ ५६ ॥
तद्ग्रन्थाभ्याससंप्राप्तस्वल्पज्ञानोप्यहं मुदा ।
भाष्यलयार्थं संगृह्य प्रालिखं सुधियां मुदे ॥ ५७ ॥

इति काळि, वङ्गीपुरं, रङ्गाचार्याणां कृतिषु
श्रीभाष्याधिकरणार्थसंग्रहः संपूर्णः ॥

शुभं भूयात्

---

॥ श्रीः ॥

# मतत्रय सारसंग्रहे
# द्वैतभाष्याधिकरणार्थ संग्रहः

---

## द्वैतम्
### प्रथमाध्यायः ॥

---

लक्ष्म्याऽऽश्लिष्टं *क्षाभिमानिदेवं मध्वार्यसद्गुरुम् ।

नत्वा भाष्याधिकरणसंग्रहोयं विलिख्यते ॥ १ ॥

ओं

विष्णुर्जिज्ञास्य [1]उक्तः सच सकलपिता [2]सोपि [3]शास्त्रैकगम्यः

[4]तस्मिन् वेदान्वयात् सः श्रुतिगतपदवाच्यस्स [5]एवेक्षणीयः ।

अभ्यासा[6]द्विष्णुरानन्दमय [7]उदधिशायीति [8]चाकाशवाच्यः

लीङ्गात् प्राणश्च [9]विष्णुः विचरणकथनात् ज्योतिरप्याह [10]विष्णुम् ॥ २ ॥

छन्दस्स्वरूपोयमिति [11]ब्रवीति ज्योतिर्हरिः [12]प्राणपदाभिधेयः ।

ब्रह्मेति सर्वत्र [13]परात्मरूढः चराचरात्ता च स एव [14]विष्णुः ॥ ३ ॥

गुहां प्रविष्टौ हरिरेव रूपद्वयेन [15]तस्थौ [16]नयनान्तरश्च ।

भ्वाद्यन्तरस्थोपि स [17]विष्णुरेव ह्यदृश्यधर्मादिगुणोपि [18]विष्णुः ॥ ४ ॥

---

*लक्ष्मीनृसिंह इत्यर्थः ।

श्लोकमध्यगता संख्या अधिकरणसंख्याज्ञापिका

वैश्वानरात्मापि च विष्णुरेव[19] द्युभ्वादि वेश्मापि स विष्णुरेव[20] ।
भूमापि विष्णुस्सुसुखस्वरूपः[21] खान्तस्य धृत्याऽक्षरवाच्य एषः[22] ॥ ५ ॥
सच्छब्दवाच्यो हरिरैक्षतेति कर्माभिधानात्[23] दहरोऽपि विष्णुः[24] ।
ज्ञानार्थिना प्रार्थितवस्तु विष्णुः तस्यानुकृत्या हि विभाति सर्वम्[25] ॥ ६ ॥
ईशानशब्दप्रमितोपि विष्णुः अनन्तरं वामनशब्दसत्त्वात्[26] ।
विद्याधिकारोस्ति हि देवतानां मध्वादिविद्यास्वधिकारभावः[27] ॥ ७ ॥
पैलायणः क्षत्रिय एव तस्मात् शूद्रस्य विद्याधिकृतिर्न चात्र[28] ।
यस्माज्जगच्चेजति येन वज्रं समुद्धृतं सोपि च विष्णुरेव[29] ॥ ८ ॥
हृद्यन्तरज्योतिरपीह विष्णुः[30] आकाशवाच्यस्स भिदोपदेशात्[31] ।
स्वप्नादि कर्ता स च विष्णुरेव प्राज्ञेन सङ्गाच्च भिदोपदेशात्[32] ॥ ९ ॥
श्रुतिश्रुतब्राह्मणशब्दवाच्यः पत्यादिशब्दात् स च विष्णुरेव[33] ।
योऽव्यक्तशब्दादिरिह श्रुतिस्थः तदन्तरात्मानममुं[34] ब्रवीति ॥ १० ॥
ज्योतिःपदं कर्मविधायकं तत् उपक्रमाद्विष्णुमिह[35] ब्रवीति ।
पञ्चेऽपि संख्याश्रयणेऽपि पञ्चजनाश्श्रुतिस्था हरिमाहुरेवम्[36] ॥ ११ ॥
यःकारणं कार्यमपीह दृष्टं आकाशशब्दादिषु विष्णुरेव[37] ।
लोकस्थवेदस्थसमस्तशब्दाः विष्णुं समाहुः प्रथमं परत्र[38] ॥ १२ ॥
आकृष्य योगेन च तत्तदर्थबोधे सुशक्ता इति युक्तमत्र[38] ।
प्रकृत्यदित्यादिपदाभिधेयः[39] विष्णुः प्रतिज्ञाद्यनुकूललिङ्गात् ॥ १३ ॥
श्रुतिस्थशून्यादि पदानि योगात् विष्णुं ब्रुवन्त्येव तथेतरेऽपि[40] ।
व्याख्यातरीत्यैव सुवेदितव्याः विष्ण्वर्थका एव सुनिर्णयोत्र[40] ॥ १४ ॥

## अथ द्वितीयाध्यायः ॥

विष्णवादिनोक्तास्स्मृतयः प्रमाणं रुद्रादिनोक्ता न [41] फलाद्यदृष्टेः ।
वेदास्तथा भारतपञ्चरात्र-मूलाख्यरामायण[41]मुख्यशास्त्रम् ॥ १५ ॥
न तेषु दोषाः परिकल्पनीयाः नित्यास्स्वतो मानमिति [42] प्रसिद्धम् ।
विष्णुप्रदत्ताखिलशक्तयस्ताः मृदादिवस्तु[43]ष्वभिमानिदेवाः ॥ १६ ॥
असज्जगद्बीजमिति श्रुतिश्च ब्रह्मैव [44] चासत्पदमित्यवेहि ।
जले जलं सिक्तमपीह वृद्धिः यथा पराप्तावपि [45] जीवभेदः ॥ १७ ॥
विष्णुस्स्वतन्त्रो न परानपेक्ष्य सृजत्यसौ 'किं स्विदि'ति [46] श्रुतेश्च ।
जीवस्य कर्तृत्वमयुक्तमेव सर्वत्र शक्तस्स हि [47] विष्णुरेव ॥ १८ ॥
स्वतन्त्रविष्णौ श्रुतिसिद्धशक्तौ न लोकयुक्त्यादि [48] विवक्तुमर्हम् ।
प्रयोजनार्थी न च सृष्टिरस्य मत्तस्य नृत्यादिरिवेह [49] लीला ॥ १९ ॥
वैषम्यनैर्घृण्यवियुक्त एषः कर्माद्यपेक्ष्यैव [50] फलप्रदाता ।
श्रुतौ च लोके च विरुद्धरूपा धर्मा हरौ युक्ततया [51] विभान्ति ॥ २० ॥
प्रधानमेतज्जगतो न कर्तृ विष्णुं विना कस्य च नास्ति [52] शक्तिः ।
ब्रह्मस्थितं ब्रह्मविलीनमेतत् नान्यत्र तत्सेश्वरको [53] निरस्तः ॥ २१ ॥
धर्मादिको नास्ति च यन्मते सः चार्वाकपक्षस्सुनिरस्त [54] एव ।
देहस्य चाश्मा नयनादिकं तु विष्णुं विना नेति च [55] पूर्वमुक्तम् ॥ २२ ॥
शरीरसङ्घात पुरुषप्रवृत्तिः स्वशक्त्यभावेन न युक्त [56] एव ।
कार्यं महत्वादिति युक्तिवादी स तार्किको दूरतरं [57] निरस्तः ॥ २३ ॥

पराणुपुञ्जो जगतो निदानमित्येषवादोपि निरस्त[58] एव ।

न शून्यवादश्च कदापि सिद्धयेदसच्च शब्दो हरिमेव[59] वक्ति ॥ २४ ॥

विज्ञानमात्रं क्षणिकं य आह सर्वप्रकारेण[60] बहिष्कृतस्सः ।

सत् स्यादसत् स्यात् सदसच्च न स्यादित्यादि वादी च निरस्त[61] एषः ॥ २५ ॥

पत्युर्मतं सर्वविरुद्धमेतत्[62] उग्रश्च रुद्रः परतन्त्र एव ।

शक्तिश्च काचित् जगति प्रसिद्धा सा देवता विष्णुमृते[63] न शक्ता ॥ २६ ॥

वियच्च[64] जन्मादिवदेव वायुस्तथैव[65] नो जन्म सतस्तु शास्त्रे[66] ।

तेजः परसात् जनिमश्नुते[67] तत् आपः परस्माज्जनिमाप्नुवन्ति[68] ॥ २७ ॥

'ता अन्नमि'त्यत्र[69] च भूमिरुक्ता हर्ता न रुद्रस्स[70] च विष्णुरेव ।

खादेर्जनिर्या तु विपर्ययेण लयक्रमस्तस्य[71] विवक्षितोत्र ॥ २८ ॥

विज्ञानतत्वात् मनसश्च सृष्टिः[72] विष्णुर्न कुत्रापि विलीयते[73] सः ।

जीवाश्च विष्णोर्जनिमाप्नुवन्ति श्रुतेश्च युक्तेरुपपत्तिसत्त्वात्[74] ॥ २९ ॥

उत्क्रान्तिगत्यागतिमानणुस्सः[75] ह्यंशश्च विष्णोस्सुमगन्धवच्च[76] ।

जीवः परश्चापि विभिन्न एव तत्त्वं श्रुतिर्ब्रह्मसमार्थिकेति[77] ॥ ३० ॥

आद्यन्तशून्यो हि यथा परात्मा जीवास्तथैवेति न दोषलेशः[78] ।

आनन्दरूपोपि च जीव एषः पुंस्त्वादिवत् व्यज्यतएव काले[79] ॥ ३१ ॥

शास्त्रार्थवत्वाय विहारतादेः जीवोपि कर्ता हरिनिघ्न[80] एव ।

विष्णोश्च जीवा पृथगंशभूताः बन्धादियुक्ता इति शास्त्रमाह[81] ॥ ३२ ॥

अनादिकर्मादिविचित्रभावात् परस्परं जीवसुखादि चित्रम्[82] ।

प्राणाश्च जन्मादि भजन्त एव[83] मनस्तथा[84] वाक् च मनः प्रजाताः[85] ॥ ३३ ॥

प्राणस्तथा [86]द्वादश [87]चाणवश्च श्रेष्ठस्तथा विष्णुज [88]एव मुख्यः ।

प्राणश्च मुख्यो हरिनिघ्न एव नेत्रादिवत् [89]स्रष्टिरपीह गीता ॥ ३४ ॥

यथा मनोवृत्तिवशाद्विभिन्नं प्राणोऽप्ययं पञ्चविधो [90]विभिन्नः ।

अणुश्च मुख्यः करणानि जीवसहायभूतानि हरौ [91]स्थितानि ॥ ३५ ॥

श्रेष्ठातिरिक्तानि त इन्द्रियाणि ते द्वादशैवेति [92]विनिश्चितानि ।

नामानि रूपाणि च विष्णुरेव त्रिवृत्कृतानीह सृजत्यजो [93]न ॥ ३६ ॥

मांसादि भौमं न तु सर्वमङ्गं [94]अप्तेजसोरंशमवेहि तत्र ।

त्रिवृत्कृतं सर्वमथापि विद्यात् भू-तोय-तेजांसि [95]विशेषहेतु

द्वितीयकाध्यायगतेषु पत्सु चतुर्षु चार्था इह संगृहीताः ॥ ३७ ॥

## अथ तृतीयाध्यायः ॥

जीवोन्यदेहंप्रति याति भूतैः सूक्ष्मैः परिष्वक्त इति [96]ब्रवीति ।

त्रिवृत्कृतेप्यत्र जलाधिकत्वात् स चाद्भिरेतीति [97]निगद्यतेऽस्मिन् ॥ ३८ ॥

प्राणैश्च साकं स हि [98]गच्छतीति वातं स भागेन च [99]जीवमेति ।

श्रद्धाख्यहोमो जलहोम [100]एव यागादिकृत् गच्छति [101]भूतसूक्ष्मैः ॥ ३९ ॥

‘अपामसोमं’त्विति वेदवाक् च नात्मज्ञमाहेति च [102]भाक्तसूत्रम् ।

कर्मक्षये सत्यपि भुक्तशिष्टकर्मी पुनर्जीव [103]इहेत्यवादीत् ॥ ४० ॥

यथा प्रयातः पुनरेति भूमिं तथाऽन्यथा चापि [104]पथेति वक्ति ।

पुनर्जनिप्राप्तिनिदानकर्माऽचारश्रुतिस्तत्प्रतिबोधनाय [105] ॥ ४१ ॥

यज्ञाद्यकर्तुः गतिरागतिस्स्यात् कृतान्तवश्यस्य च [106]सोपपन्ना ।

यमाज्ञया सप्त च रौरवादीन् यागाद्यकर्ता [107]लभते च दुःखम् ॥ ४२ ॥

सतोपि सर्वत्र हरेर्न दोषः नियन्तृशक्त्या स हि [108]तिष्ठतीति ।

विद्या च कर्मात्र निदानमस्य लोकान्तरे [109]सञ्चरणादिकस्य ॥ ४३ ॥

विद्यापथं कर्मपथं विसृज्य तृतीयनिष्ठस्य [110]सदैव दुःखम् ।

अन्यस्वभावाप्तिरपीह तस्य स्थितौ स्थितिः खादिषु [111]नेतरार्थी ॥ ४४ ॥

आकाशभावादि च कर्मिणस्स्यात् संवत्सरान्तं न [112]ततःपरं तत् ।

व्रीह्यादि भावेऽपि न भोग इष्टः यज्ञादि कर्तुः [113]सुविशुद्धतोक्तेः ॥ ४५ ॥

जीवोवरोहन् प्रथमं नरं [114]सः विशत्यतो मातरमेति [115]देही ।

हरीच्छया सृष्ट रथादि वस्तु शुभाशुभद्योतकमस्य [116]भाति ॥ ४६ ॥

स्वप्नादिकर्ता स निरोधकर्ता मोक्षश्च बन्धश्च [117]हरीच्छयैव ।

जाग्रद्दशायां च स एव [118]कर्ता सुप्तिश्च [119]नाडीस्थपरात्मनीति ॥ ४७ ॥

प्रबोधयत्येव [120]हरिस्स्वसुप्तं तं कारयत्येष हि [121]कर्मजातम् ।

मोहात्मिका या च दशा प्रसिद्धा विष्णवर्थसंप्राप्तिरतः [122]प्रबोधः ॥ ४८ ॥

स्थानादिनाप्यत्र हरिर्न भिन्नः सर्वत्र विष्णुः [123]परिपूर्ण एव ।

प्रवर्तकत्वेप्यखिलस्य विष्णुः नीरूपवानेव [124]विलक्षणस्सः ॥ ४९ ॥

तत्साम्य तन्निघ्नविभिन्नताद्यैः हरेरभिन्नाः [125]प्रतिबिम्बभूताः ।

भक्तिं विना तत्सदृशादि [126]नास्ति भक्तिश्च वृद्ध्यादिमती फलं [127]च ॥ ५० ॥

सृष्टेस्स्थितेस्संहरणादिकस्य [128]कर्ता हरिर्भक्तित [129]एष दृश्यः ।

आनन्दरूपोपि हरिश्श्रुतौ सः आनन्दवान् कुण्डलि [130]कालभावत् ॥ ५१ ॥

सर्वोत्तमानन्दगुणी स विष्णुः [131]सेत्वादिशब्दैर्व्यपदिश्यतेऽत्र ।

रवेःप्रकाशो मुकुरे यथावाऽऽनन्दो [132]हरेर्जीवगता विभान्ति ॥ ५२ ॥

यत् ध्यानकाले प्रतिभातमात्मरूपं ततोन्यत् प्रतिभाति चान्ते[133] ।

सर्वत्र काले हरिरेव कर्ता[134] देशे च विष्णोरितरो न कर्ता ॥ ५३ ॥

न केवलं कर्मफलप्रदं तत् फलप्रदोविष्णुरिति[135] ब्रवीति ।

सर्वैश्च वेदैर्हरिरेव गम्यः स्वाध्यायविध्यादिविनिश्चितोर्थः[136] ॥ ५४ ॥

सर्वेषु वेदेषु हरेर्गुणा ये तैर्युक्तएवैष[137] विचिन्तनीयः ।

चतुर्मुखे सर्वगुणान्वितात्मध्यानं सुयुक्तं न तु तत्परेषाम्[138] ॥ ५५ ॥

महाफलोपास्त्यधिकारिणस्ते विरिञ्चिमुख्या[139] इति निर्णयोत्र ।

आनन्द आत्मा च तथैव सच्च ज्ञानं[140] त्वितिध्येयमथेह सर्वैः ॥ ५६ ॥

प्रियादयो ये च गुणा[141] न सर्वैरुपासनीया इतरे[142] विचिन्त्याः ।

सर्वैर्गुणैर्ध्यानमिहोक्तमेतत् ज्ञानस्य सिद्ध्यै[143] न फलान्तराय ॥ ५७ ॥

आत्मेति चिन्त्येऽपि हरौ प्रधानाऽनन्दादिका आत्मपदेन[144] वाच्याः ।

आत्मेति शब्देन चतुर्गुणानां ज्ञानं विरिञ्चस्य हि सिद्ध्यतीति[145] ॥ ५८ ॥

श्रुत्यन्तदृष्टात्मगुणा उपास्याः त एव मोक्षाख्यफलप्रदाश्च[146] ।

त्रिविक्रमत्वादिगुणा न चिन्त्याः चतुर्मुखस्यैव[147] विचिन्तनीयाः ॥ ५९ ॥

य आत्मशब्देन गुणा गृहीताः चतुर्मुखस्यैव न चेतरेषाम्[148] ।

द्युव्याप्तिभृत्यादिगुणास्तु देवैरुपासितव्या न परैश्च[149] सर्वैः ॥ ६० ॥

गुणाश्च ये पूरुषविद्ययाऽऽत्ताः सर्वैरुपास्या इति निर्णयोत्र[150] ।

ये भिन्धिविध्यादि[124] गुणाः प्रतीताः यत्याद्ययोग्या[151] न विचिन्तनीयाः ॥ ६१ ॥

मोक्षेप्युपासा भवतीच्छयैव [152] कर्मापि कुर्वन्ति निजेच्छयैव [153] ।

ये ब्रह्मनिष्ठा त इमे विमुक्ता [154] आनन्दभाजोपि यथाधिकारम् [155] ॥ ६२ ॥

प्राणाह्वयाऽजात् पर उत्तमो हि विष्णुः प्रसिद्धश्श्रुतिषूपदिष्टः [156] ।

य उत्तमो मानवदेवसंघात् प्राणो विमुक्तौ हरिरेव [157] तस्मात् ॥ ६३ ॥

ये भूमविद्यागतसत्यमुख्याः ब्रह्मस्वरूपान्तरगा [158] गुणास्ते ।

लक्ष्म्याः कदाचिन्न जनिर्भवाब्धौ स्वेच्छावशातभूमिगतास्तुवन्ती [159] ॥ ६४ ॥

यद्ब्रह्मविज्ञानमिहोपदिष्टं [160] तद्वेदतात्पर्यबहिर्गतं तु ।

प्रसादपूर्वं गुरुदत्तमेव ज्ञानं फलि स्यादिति निर्णयोत्र [161] ॥ ६५ ॥

स्वीयप्रयत्नाच्च गुरुप्रसादः श्रुतौ बलीयानिति सम्यगुक्तम् [162] ।

श्रोतव्य आत्मा गुरुवर्यपादशुश्रूषया [163] चासकृदित्यतश्च ॥ ६६ ॥

विद्यैव हेतुः परमात्मलाभे किञ्चापरोक्षाधिषणा च [164] गीता ।

ज्ञानं परं मोक्षनिदानमत्र तमेवमित्यागमशास्त्रयुक्तेः [165] ॥ ६७ ॥

गुरुप्रसादश्श्रवणादि यद्वत् भक्तिश्शमाद्याश्च [166] निदानभूताः ।

उपासनाभेदवदेव विष्णोः दृष्टिप्रभेदोपि विमुक्तिहेतुः [167] ॥ ६८ ॥

सामान्यदृष्ट्या न विमुक्तिसिद्धिः योग्यात्मदृष्ट्या भवतीतिसूक्ता [168] ।

विशेषभक्त्याऽस्य स विष्णुरेव ज्ञानं प्रदायाथ ददाति [169] मुक्तिम् ॥ ६९ ॥

ज्ञानादि भेदेऽपि न भेद इष्टः अंशांशिनोरिन्द्रकिरीटिवत् [170] सः ।

ब्रह्मादि देवैस्सहितास्ति विद्या तत्राप्युपासाकरणे [171] न दोषः ॥ ७० ॥

172
सर्वाङ्गजुष्टः क्रतुरेव *चोत्वः तथा हरिर्भूमगुणो विचिन्त्यः ।
173
भूमापि नानैव वचिन्त्य इष्टः शब्दानुमाक्षादिविभेदहष्टेः ॥ ७१ ॥
*उद्घः=श्रेष्ठः

174
स्वयोग्यमुक्त्यर्थमुपासनायां पापादिनाशाय तदन्यचिन्ता ।
175
फलान्तरार्थी च हरिं विचिन्त्यादकामएवात्र मुमुक्षुरुक्तः ॥ ७२ ॥
176
ये चाङ्गदेवा रविवह्निमुख्याः ते चाप्युपास्या इह मुक्तिकामैः ।
177
विमुक्त्युपासासहभावशून्यात् न ते* विचिन्त्या इति वक्तिसूत्रम् ॥ ७३ ॥
177
आनन्द आत्मा स च सत्यरूपः ज्ञानस्वरूपस्स इतीह चिन्त्यः ।

तृतीयपादेऽत्र मया गृहीताः एते बुधानां हृदि भान्तु नित्यम् ॥ ७४ ॥
178
यद्ब्रह्मविज्ञानमदस्तु सर्वं फलप्रदं कर्म ततोधिकं तु ।
179
वेदेषु निष्णातमतिर्गुरौ च सुभक्तियुक्तो हरिचिन्तकोसौ ॥ ७५ ॥
180
नरर्षिदेवेषु च तारतम्यज्ञानाधिकारस्तेष्वधिकारिभेदः ।
181
ये ब्रह्मनिष्ठा विविधेषु तेषु मौनं शमाद्याचरणं क्रियायाः ॥ ७६ ॥
182
ब्रह्माप्त्यपेक्षा सकलेषु विद्यात् तदर्हजीवेषु तु तस्य सिद्धिः
183
ब्रह्माप्तिकामोपि कदापि विष्णोरैश्वर्यकामी न भवेदिहेति ।
183
देवर्षिगन्धर्वपदातिरिक्तफलाभिलाषी न पतेदिहेति ॥ ॥ ७७ ॥
184
कर्मादि कुर्वन्ति च ये तु विप्राः तेभ्यःफलं ज्ञानिसुरा दिशन्ति ।
185
मुक्तिर्गृहस्थस्य भवेदिहेति ब्रवीति देवान् गृहिणो नरान्न ॥ ७८ ॥

---

* ते=अङ्गदेवताः ।

अवैष्णवेभ्यः [186] प्रदिशेन्न विद्यां विरोध्यभावे [187] हरिदर्शनं स्यात् ।
प्रारब्धकर्मक्षय एव मुक्तिः जन्मान्तरे [188] वाऽद्यशरीरनाशे
तृतीयकाध्यायगतेषु पत्सु चतर्षु चार्थी इहसंगृहीताः ॥ ७९ ॥

## अथ चतुर्थाध्यायः ॥

श्रोतव्य इत्याद्यसकृत्कृतं तु फलप्रदं *श्वेत[189]निदर्शितं तत् ।
आत्मेत्युपासैव [190] मुमुक्षुकार्या प्रतीकनिष्ठस्तु [191] हरिर्विचिन्त्यः ॥ ८० ॥
*श्वेत=श्वेतकेतु ।

ब्रह्मेत्युपास्यो [192] हरिरेव सर्वैः सूर्यादिदेवा [193] विबुधैरुपास्याः ।
चिन्त्याद्धरिं [194] स्वासनसन्निविष्टः स्वदेहपातावधि [195] चिन्त्य एषः ॥ ८१ ॥
विष्णौ सुदृष्टे सति पाप्मनाशः प्रारब्धभुक् [196] ब्रह्मसमेति विद्वान् ।
बाग्देवतोमा मनसीह [197] रुद्रे वायौ [198] स रुद्रः स हरौ [199] विलीनः ॥ ८२ ॥
भूतेषु देवाः प्रविशन्ति [200] काले तेचापि देवाः पृथगेव [201] भूते ।
मुक्ता च नित्या च रमा हरेस्तु सूक्ष्मत्वमेवाधिक[202]मुच्यतेऽत्र ॥ ८३ ॥
सर्वे च देवाः [203] परमात्मलीनाः ते सत्यकामा [204] हरिमाविशन्ति ।
मूर्धन्यनाड्योत्क्रमणं [205] बुधस्य ज्ञोऽज्ञो हरिं चन्द्रमसं [206] प्रयाति ॥ ८४ ॥
मृतस्सुधीरर्चिषमेव [207] याति ह्यर्चिश्च [208] वायुं तटितो [209] जलेशम् ।
पूर्वोक्तवायुस्त्वतिवाहकस्सः [210] विद्युत्पतिर्ब्रह्म नयेत् [211] स वायुः ॥ ८५ ॥
एषोर्चिरादिश्च नयेत् प्रतीकध्यानातिरिक्तान् [212] परमेव भक्तान् ।
ज्योतिश्च सम्पद्य [213] समस्तकामानाप्नोति मुक्तस्स च [214] मोदतेऽत्र ॥ ८६ ॥

ज्योतिःपरं यच्छ्रुतमत्र तद्धि हरिः परात्मेत्यवदन्महर्षिः[215] ।

मुक्तःपरं प्राप्य बहिष्ठभोगान् परात्मना साकमथैष[216] भुंक्ते ॥ ८७ ॥

मुक्तौ हरेर्देहमनुप्रविश्य प्रभुञ्जतेऽन्तर्बहिरेव[217] भोगान् ।

यन्नानपेक्षाः परिभुञ्जते[218] तं मुक्तोह्यनन्याधिपतिर्भवेत्[219] सः ॥ ८८ ॥

मुक्तस्य देहोस्ति स निश्शरीरः चिन्मात्रदेहश्च वितीर्णशोकः[220] ।

सृष्ट्यादिवर्जं परसाम्यगामी पुनर्जनिं नैव विमुक्त[221] एति ॥ ८९ ॥

मुक्तस्सदानन्दविशिष्ट एव हरेस्समीपेऽनुभवत्यभीष्टम्[222] ।

नावर्तते प्राप्य हरिं विमुक्तः स्वानन्दभुग्विष्णुसमीप[223] आस्ते ।

चतुर्थकाध्यायगतेषु पत्सु चतुर्षुचार्था इह संगृहीताः ॥ ९० ॥

सूत्रसंख्या चतुष्षष्टिः तथा पञ्चशतानि च ।

संख्याधिकरणानां च त्रयोविंशतिरेव च ॥ ९१ ॥

शतद्वयेन सहिता मध्वभाष्ये समीरिता ।

आनन्दाधिक्यतर्षाच्च संग्रहोयं मयोदितः ॥ ९२ ॥

(सूत्राणि ५६४ अधिकरणानि २२३)

श्रीमध्वभाष्यार्थसुसंग्रहोयं रङ्गार्यनाम्ना विदुषा गृहीतः ।

विपश्चितोमुं कृपया मुदा च गृह्णन्तु चित्ते शरणं हरिर्नः ॥ ९३ ॥

कुत्तालं वासुदेवार्यं द्वैतवेदान्तपण्डितम् ।

स्मरामि यस्मात् प्रावेदं शास्त्रार्थं सत्क्रियावतः ॥ ९४ ॥

मीमांसाख्यं पाणिनीयं च तन्त्रं श्रीमद्वेदो याजुषः कारिजाद्यैः ।

गीतागाथाव्याससूत्रत्रिभाष्यं येनाधीतं ज्यौतिषं सद्गुरुभ्यः ॥ ९५ ॥

नूत्नसालाख्यदेशेशसभादानाधिकारिणा ।

रङ्गाचार्येण तेनायं कृतो विजयतां भुवि ॥ ९६ ॥ ओं

इति काळि, वञ्जीपुरं, मतत्रयनिरूपक रङ्गाचार्याणां कृतिषु

द्वैतभाष्याधिकरणार्थसंग्रहः संपूर्णः ॥

---

# अधिकरणनामधेयसूचिका
## ( अद्वैतम् )

**द्वितीयाध्याये द्वितीयः पादः ॥**



**तृतीयः पादः ॥**

---

श्रीः

# श्रीभाष्याधिकरण संख्यासूचकपत्रिका ॥

## प्रथमाध्याय ॥

---

श्रीः

# द्वैतभाष्याधिकरण संख्यासूचकपत्रिका ॥

## प्रथमाध्याय ॥

## अथ द्वितीयाध्यायः

---

॥ श्रीः ॥

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# ॥ मतत्रयसारसंग्रहः ॥

(शास्त्रावतारः)

(अद्वैतमतम्)

॥ श्रीशङ्करार्याय जगद्गुरवे नमः ॥

शर्वादिशेषपवना गुरवः पुराऽभुः
श्रीशंकरार्य रघुरामकनिष्ठ मध्वाः ।
तान् संप्रणम्य तदनुग्रहवाञ्छयैव
तद्भाष्यसंग्रहमिमं विलिखामि पद्यैः ॥ १ ॥

श्री अण्णावाजपेयाभिधगुरुमनघं सर्वशास्त्रार्थविज्ञम्
श्रीयज्ञस्वामिसंज्ञं मखिकुलतिलकं श्रीवटारण्यवासम् ।
सेवे श्रीरामचन्द्रं क्रमपदकजटावर्णचर्चाविशेष-
प्राज्ञं श्रीकेरळेशार्चितपदकमलं वेदवेदाङ्गदक्षम् ॥ २ ॥

यस्मिन् वेदव्यास इति पदं सार्थं न चेतरे ।
नमामि पाराशर्यं तं ब्रह्मसूत्रप्रकाशकम् ॥ ३ ॥

केवला चितिराभाति जगद्रूपेण मायया ।
वन्देऽहं नरसिंहं तं ब्रह्मेशहरिरूपिणम् ॥ ४ ॥

बृहद्यदारण्यकमस्ति लोके तदर्थनिष्ठो जगदार्य एषः ।
तदन्यवेदान्तविभागपूगः तदर्थवादीत्यवदत् स्वभाष्ये ॥ ५ ॥

ब्रह्मायमात्मेत्यहमस्मि ब्रह्म त्वं वाऽहमस्मीत्यखिलागमोक्तेः ।
द्रष्टव्य आत्मेति च वेदवाक्यात् आत्मैव जिज्ञास्य इति स्म वक्ति ॥

नश्यत्स्वभावं विकृतिस्वरूपं विचित्रभेदं च जगत्सुदृष्टम् ।
नित्यैकरूपं परिशुद्धतेजः पुञ्जस्समं ब्रह्मचिदेकमाभात् ॥ ७ ॥

ब्रह्मैव सर्वं न तु किञ्चनेह मायाविचित्रं पुरुरूप इन्द्रः ।
इत्यादि वेदान्तरहस्यवाचां अर्थं बभाषे स हि शङ्करार्यः ॥ ८ ॥

ब्रह्मैव सर्वं जगदेव मिथ्या जपाप्रसूनं स्फटिके यथा वा ।
अज्ञानरूपं विविधं विभाति ज्ञाने ह्यविद्याविनिवर्तनीया ॥ ९ ॥

अनाद्यविद्याविहतिः प्रासाध्या यद्रज्जुसर्पादिविशेषबोधात् ।
निवर्तते तत्त्वमसीति बोधात् जगद्विशुद्धाचितिरवशेषा ॥ १० ॥

इत्थं विनिश्चित्य हि सर्ववेत्ता श्रीशङ्करार्यो निखिलागमानाम् ।
अभूतभावं निजसूत्रभाष्ये ब्रह्मैव जीवो विनिवृत्तबन्धः ॥ ११ ॥

रज्जौ यथा सर्पमतिः स्वभाते ज्ञाने जगद्धीः नतु तथ्यमेतत् ।
जगत्तु नाश्यादिगुणोपपन्नं ज्ञानं तु शुद्धं ह्यविकारि नित्यम् ॥ १२ ॥

तत्तादृशज्ञानमनाद्यविद्याऽऽदर्शे विचित्रं प्रतिभाति नाना ।
साध्याह्यविद्याविनिवृत्तिरेव ज्ञानं न साध्यं स्वयमेव भातम् ॥ १३ ॥

अज्ञानानृततुच्छकैश्च बहुभिः नीहारमायातमः
पात्राद्यैः पिहितं च गूढमिति च ज्ञानं श्रुतौ श्रूयते ।
तच्चिन्ता बहुधा विभाति जगति ज्ञानस्वरूपं च तत्
ज्ञातृज्ञेयविभागवत्तदखिलं रूप्यादिवत् बाध्यते ॥ १४ ॥

चिच्छायासङ्गशक्त्या बहुविध चिदचित्भोक्तृभोग्यादिभिन्नम्
भ्रान्तं ज्ञानस्वरूपं भवति च वितमो मानजज्ञानमात्रात् ।
भ्रान्तात्मा मुक्तिकामः शमसुखकरणज्ञानवान् श्रोतुकामः
ब्रह्मात्मज्ञानमेवं गुरुपदकमलोपासनं संप्रतीच्छेत् ॥ १५ ॥

एको विभुः सर्वगतश्चिदात्माऽविद्यावशान्नैकविधात्मरूपी ।
भ्रान्तेर्निवृत्या निजरूपभाक् स्यात् भावात्मकाज्ञानबलाच्च युक्तम्

**संख्याऽधिकरणानां च यत्रैकनवतिश्शतम् ।**
**सूत्रसंख्या पञ्चपञ्चाशच्च पञ्चशतानि च ॥ १७ ॥**

**समन्वयाविरोधौ च साधनं च फलं तथा ।**
**भगवत्पादभाष्येऽत्र वर्णितानीति बुध्यताम् ॥ १८ ॥**

अधिकरणानि १९१
सूत्राणि ५५५

# ॐ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

**मोक्षेऽभिलाषा च फले विरक्तिः नित्यादिधीश्शान्तिरितीह शास्त्रे।**
**इमानि चत्वारि तु पूर्ववृत्तान्यपेक्षते ब्रह्मविचार एषः ॥ १९ ॥**

अत्र केचित आश्रयानुपपत्ति-तिरोधानानुपपत्ति-स्वरूपानुपपत्ति-अनिर्वचनीयानुपपत्ति-प्रमाणानुपपत्ति-निवर्तकानुपपत्ति-निवृत्यनुपपत्तिभिः, सप्तविधाभिः ब्रह्मणः अविद्याश्रयत्वादिकं न संभवतीति अद्वैतब्रह्मणः जिज्ञास्यत्वं नेत्यवोचन्। अत्र केचित् प्रत्यवोचन् सप्तविधयुक्तियुक्तश्लोकेन ।

'यस्मिन्नध्यस्तमेतत्त्रिभुवनमखिलं यच्च पश्यत्यविद्या
मुग्धं स्वाध्यस्तमेतद्यदपि निजवपुर्वीक्षणे मुच्यते यत् ।
ज्ञानं ज्ञेयादिहीनं, भवति यदपदं संविदां निर्विशेषं
सत्यं तद्ब्रह्म मिथ्या तदितरदखिलं कोऽन्यथा वक्तुमीशः ॥'

"मानात्सिध्यतु सर्वमेव भुवनं मानं तु सिध्येत् कुतः
किं स्वेनैव तथाऽस्तु तर्हि भुवनं मानेऽपि मानं यदि ।
हन्तस्यादनवस्थितिः विरमतो मेयं च न स्यादिति
क्वेदं सिध्यति विश्वमेतदखिलं सत्यं प्रमेयं च भोः ॥" इति ॥

**न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत्**
**किन्त्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम् ।**
**अप्राप्ते खलु शास्त्रमर्थवदिति द्वैतप्रयासो वृथा**
**ह्यद्वैतं परमार्थतः प्रभवति द्वैती मृषा पश्यति ॥ २० ॥**

सदा विशुद्धं स्वयमेव भातं चिन्मात्रमात्मेति वदन्ति वेदाः ।
एकं सदेवाद्वितयं द्वितीयात् भयं निगूढं तमसाऽनृतेन ॥ २१ ॥
भावाज्ञानेनानृतं स्वप्रकाशं ज्ञानं ब्रह्माज्ञाननाशाच्चकास्ति ।
स्वर्भान्वाख्यो ध्वान्तपुञ्जेन सूर्यं प्राविध्यत्तं सुप्रसिद्धं हि वेदे ॥
मूढोऽहमज्ञोहमिति प्रवादः ज्ञानस्य सत्वेऽपि यथाऽविरोधः ।
तथाऽयमात्मा तमसा सहापि स्थित्वा जगद्रूप इहापि भाति ॥
यथा तमश्शब्दविचारकाले प्रकाशशब्दार्थमपेक्षते न ।
भावात्मकाज्ञानविचारकाले ज्ञानात्मनः ज्ञानमपेक्षते न ॥ २४ ॥
अप्राकृतं शुद्धमिहेति सत्वमाश्रित्य वैकुण्ठमुखं यथा ते ।
आविद्यकं सर्वमिहापि युक्तं ह्यप्राकृतं कर्म च ते प्रकल्प्ये ॥२५॥
नित्यो विभुस्सर्वगतोह्यणीयान् अजःपुराणो बहुधा विजातः ।
विरुद्धवाचो न परस्परं ताः भावात्मकाज्ञानसहे परस्मिन् ॥२६॥
न स्त्रीपुमान् नापि नपुंसकं च ब्रह्मात्मनो रूपमतो विमुक्तिः ।
यज्जोतिषा ज्योतिष ऐक्यमाहुः स्वराट् पदस्य श्रवणाद्विमुक्तौ ॥

इति सिद्धान्तात् प्रमेयमेव न किंचित्सत्यमस्त्यस्मिन् मते इति प्रमेयत्वापादनं न युक्तम् । अत्र प्रमाणं अयं भागवत श्लोकः —

"स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्डो न पुमान्न जन्तुः ।
नायं गुणः कर्म न सन्नचासत् निषेधशेषो जयतादशेषः ॥" इति
"स एष नेति नेति" इत्यादि श्रुतिश्च ।

अत्र सिद्धान्ते चिन्मात्रब्रह्मैव सत्यं; अन्यत् मिथ्या; भावरूपाज्ञानेन आच्छादितं ब्रह्म जगदिव, रज्जौ सर्प इव, भासते । चिन्मात्रं ब्रह्म च निर्गुणमेव । वेदान्तजन्यज्ञानेन भावरूपाज्ञाननाशे सति ब्रह्म स्वयंप्रकाशमेव वर्तते । अविद्याश्रित ब्रह्मणि जगदध्यासे द्वैतप्रतिभानं । सर्वे वेदान्ताः अद्वैतमेव प्रतिपादयन्ति । द्वैतस्य प्रत्यक्षसिद्धत्वात् तत्र न वेदान्तापेक्षा ।

अज्ञानेन ज्ञानस्याऽच्छादनं कथं संभवतीति चेत्, "सुवर्भानुरासुरस्सूर्यं तमसाऽविध्यत्; तस्मै देवाः प्रायश्चित्तिमैच्छन्" इत्यादि यजुस्संहिताद्वितीयकाण्ड द्वितीयप्रश्नद्वितीयानुवाके तमःपुञ्जरूपः सुवर्भानुरासुरः (सुवर्भानुः=स्वर्गस्य भां नुदति—छादयति इति - सुवर्भानुरिति व्युत्पत्तिः) स्वकीयतमसा सूर्यं छादयामास । ततो जगदान्ध्यमभवत् । ततः सूर्यप्रभाच्छादकस्य तमसः प्रायश्चित्तं देवाः विचार्य नानाविधैः प्रकाशरूपैः मण्यादिद्रव्यैः चतुर्भिःपर्यायैः तमोऽपाघ्नन्; इति कथा वर्तते । तद्रीत्या चिद्रूपब्रह्मणः भावरूपाज्ञानेन छादनं युक्तमेव ॥

अपिच भूलोकेऽपि सूर्यं राहुः उपरागकाले छादयतीति सुप्रसिद्धमेव । अतः अविद्याश्रयत्वेऽपि न दोषः ॥

किञ्च यथा परमते ब्रह्मणः सूक्ष्मचिदचिद्विशिष्टावस्था एका, स्थूलचिदचिद्विशिष्टावस्था अन्या; जगत्सृष्टिकाले स्थूलचिदचिद्विशिष्टावस्था अङ्गीक्रियते; प्रलयकाले सूक्ष्मचिदचिद्विशिष्टावस्था इति अवस्थाद्वयं अंगीकृत्य सर्वश्रुत्युपपत्तिः वर्ण्यते, तथा अस्मन्मतेऽपि अविद्यातिरोहितावस्था एका; अविद्याराहित्यावस्था अन्या; तथा च निर्गुणत्वादिप्रतिपादकानां श्रुतिवाक्यानां अविद्याराहित्यकाले शुद्धब्रह्मणि समन्वयः; सत्यकामत्वादिप्रतिपादकवाक्यानां अविद्याविशिष्टब्रह्मणि समन्वय इति स्वरसत एव श्रुत्यर्थो भवति । परमते तु अप्राकृतं शुद्धसत्वमित्यन्यत् परिकल्प्य वैकुण्ठादिवर्णनमधिकम् । अतश्च 'अनृतेन प्रत्यूढाः' इत्यादिबहुश्रुतयः तत्त्वमसीति वाक्यार्थान्यथानुपपत्तिः, लौकिकप्रतीतिः, युक्तयश्च इत्येवमादिप्रमाणबाहुल्यात् अविद्यातदाश्रयत्वाद्यङ्गीकृतौ न कोऽपि दोष इति सिद्धं इति मतप्रक्रिया संग्रहः ।

अत्र किंचित् विविच्य उच्यते । तत्र प्रथमं अविद्याश्रयत्वं ब्रह्मणः संभवतीति इदानीं उच्यते ।

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तकः ॥"
"ज्ञानं ब्रह्मेति चेत् ज्ञानं अज्ञानस्य निवर्तकम् ।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥"

इति कैश्चित् प्रकाशरूप ब्रह्मणः तमोरूपाविद्याश्रयत्वं न संभवतीत्युक्तम् । ब्रह्म ज्ञानस्वरूपमिति आचार्योपदेशजन्यं ज्ञानं अविद्यायाः निवर्तकं भवेत् इत्युक्ते ब्रह्मणः प्रमेयत्वं अननुभूतित्वं च स्यादिति दूषणं अविद्याश्रयत्वे उक्तम् । तन्नयुक्तम् ।

तथाहि "ज्ञानं ब्रह्मेति" आचार्योपदिष्टप्रमाणजन्यज्ञानस्य, ब्रह्मस्वरूपभूत ज्ञानस्य च भिन्नत्वात् प्रमेयत्वादि दोषाः न संभवन्ति । मलिनदर्पणे प्रतिबिम्बभूत एव मुखे मलिनत्वादि दोषाः यथा वा संभवन्ति; न तु बिम्बमुखे; तद्वत् अविद्याश्रयत्वे संभाविता दोषाः जीवगता एवेति न कश्चिद्विरोधः ब्रह्मणः अविद्याश्रयत्वे ॥

"आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।"

इति प्रमाणात् शुद्धचिदाश्रितमेव अज्ञानं अंगीकर्तव्यम् । अविद्याश्रयत्वं च ब्रह्मणः लोके स्त्रीपुरुषसंसर्गात् पुत्राद्युत्पत्तिरिव नेह ब्रह्मणि संभवति । किन्तु ज्ञानस्वरूपब्रह्मणि अनाद्यविद्यासान्निध्यात् स्फटिके रक्तिमेव अध्यस्यते । आचार्योपदिष्ट प्रमाणजन्यज्ञानस्य "ब्रह्मवत् तत्प्रकाशत्वात्" इति तैरुक्तं स्वयंप्रकाशत्वं न भवत्येव; ब्रह्मस्वरूपज्ञानस्य अजन्यत्वात्; शास्त्रज्ञानस्य च जन्यत्वात् । "ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकं" इति तदुक्तिः, "न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति" तद्भाष्योक्तिश्च न संगच्छेते । ज्ञानत्वावच्छेदेन उभयज्ञानस्य एकत्वसंभावना न युक्ता, स्वयंप्रकाशत्वजन्यत्वरूपविशेषसद्भावात् ।

किञ्च महावाक्यचतुष्टयात् तत्त्वमसीति जीवैक्योपदेशानुपपत्त्या च (1) "अनृतेन हि प्रत्यूढाः" (2) "नीहारेण प्रावृता" (संहितायां

तुरीये काण्डे) (3) "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" (4) 'आनीद्-वातं स्वधया तदेकं' (स्वधया=अविद्यया) (5) 'तस्माद्धान्यं न परः किंचनास' (6) "तमसा गूढमग्रे प्रकेतं" (7) "तम आसीत्" (8) "तुच्छेना-भ्वपिहितं यदासीत्" (२—८—९ शाखा) (9) "इन्द्रो मायाभिः पुरुरूप ईयते" (10) "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं" (11) "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" (12) "अनादि मायया सुप्तो यदा जीवः प्रबुध्यते" इत्यादिभिः प्रमाणशतैः अविद्यामंगी-कृत्य अविद्याश्रयत्वं ब्रह्मणः वाच्यम् ।

किञ्च अविद्यानिष्ठस्य शिष्यस्य अविद्यानिष्ठगुरुणा अविद्याश्रयं ब्रह्म अविद्यारहितत्वेन उपदिश्यते । न तु शुद्धब्रह्म इति शुद्धब्रह्मणः प्रमेयत्वं न स्यादेव ।

"सच्चिद्ब्रह्म न संवेद्यं संवेद्यमनृतं जडम्" इति सिद्धान्तात, शुद्धब्रह्मणः, "अवचनेन प्रोवाच" इति शास्त्रात, उपदेश्यत्वं न संभवेदेव ।

अपिच

"तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥"

इति सांख्यमते यथा वा प्रकृतेरेव सर्वं नतु पुरुषस्य इत्युच्यते तद्वत् अविद्याश्रयमेव सर्वं सुखदुःखभाक्त्वादिकं च वर्तत इति न कोपि दोषो ब्रह्मणः ।

अविद्याविषयभूत ब्रह्मण एव जिज्ञास्यत्वं इति आचार्याभिप्रेतेति भामत्यां "तदेवमनौपाधिकं ब्रह्मणो रूपं दर्शयित्वा अविद्योपाधिकं रूपमाह" ।—(भाष्यम् "सर्वज्ञं सर्वशक्तिसमन्वितम्") "जगत्कारणत्वं अस्य दर्शितं, शक्तिज्ञानभावाभा-वानुविधानात् कारणत्वभावाभावयोः" इति । "अविद्योपाधिकमिति— अविद्याविषयीकृतं इत्यर्थः" । इति कल्पतरुः ।

तथा च जगत्कारणभूत ब्रह्मण एव जिज्ञास्यतोक्तेः, अविद्याविषयीकृतं ब्रह्मैव जगत्कारणं, न तु शुद्धब्रह्म इति हि स्थापितम् ।

'किञ्च ज्ञानरूपं ब्रह्म' इत्युपदिष्टज्ञानस्य ब्रह्मस्वरूपभूतज्ञानस्य च ज्ञानत्वावच्छेदेन अभेदं गृहीत्वा दोषवर्णने "रुद्रः पशूनामधिपतिः; पशवः पाशिताः पूर्वं" इत्यादि प्रमाणात् जीववर्गस्य पशुत्वात् पशुत्वावच्छेदेन सर्वस्यापि तुल्यत्वाङ्गीकृतौ पशुरित्युक्ते व्यासादीनामपि बोधः स्यात् । इष्टापत्तौ आब्रह्मस्तम्बपर्यन्तेषु प्राणिषु सत्स्वपि, ज्ञानतारतम्यस्य सत्त्वादिति 'देवताधिकरणभाष्योक्तिः' विरुद्ध्येत ।

किञ्च गुरूपदेशजन्यज्ञानं अविद्याविनाशकं इत्युक्तिं दूषयता परेण "ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकं" इति ब्रह्मस्वरूपज्ञानस्य, उपदेशजन्यज्ञानस्य च विशेषाभाव इत्युक्तम् । तन्मते आत्मनः ज्ञानस्वरूपमङ्गीकृत्य तद्गुणत्वेन अन्यद्धर्मभूतज्ञानमभ्युपगम्य प्रभायाः संकोचविकासाविव धर्मभूतज्ञानस्यैव संकोचविकासौ भवत इत्यभ्युपगच्छन्ति । तत्र आत्मस्वरूपज्ञानस्य, धर्मभूतज्ञानस्य च ज्ञानत्वावच्छेदेन अविशेषात् स्वरूपभूतज्ञानस्यापि संकोचविकासौ भवेतां इत्युक्ते किं प्रतिब्रूयुः । इति ॥

तत्त्वमसीति ऐक्योपदेशान्यथानुपपत्त्या प्रपञ्चस्य अविद्याकल्पितत्वं, ब्रह्मणः अविद्याश्रयत्वं च आश्रयणीयमित्युक्तं, न युक्तमिति रामसुब्रह्मण्याख्य विद्वद्वराः—'तत्त्वं' इति एकमेव समस्तं पदम् । न तु व्यस्तम् ; व्यस्ताश्रयणे पूर्वत्र "स आत्मेति" निर्देशात्, त्वं शब्दस्य तद्विशेषणत्वेन "सत्वं" इति निर्देष्टव्यं स्यात् । अतः 'तत्त्वं' इति एकमेव पदम् । तस्य त्वं—तत्त्वं इति षष्ठीतत्पुरुषमाश्रित्य तत्संबन्धी पुरुषः त्वं इत्यर्थः । संबन्धश्च राजपुरुषवत् शेषशेषिभावः (स्वस्वामिभावस्संबन्धः) तस्य दासः त्वं इति तत्त्वं पदस्य जीवब्रह्मभेद एव अर्थ इति ऐक्योपदेशाभावात् अन्यथानुपपत्तिरेव नेति अवोचन् ।

केचित् "तत् सत्यं स आत्मा तत्त्वमसि" इत्यत्र यजुर्वेदे त्रिकमस्थले "माऽऽस्थात् प्रियधाऽविशत" इत्यादिष्विव "अघोराऽऽपापकाशिनी" इत्यत्रेव इह च अतत्त्वमसीति प्रश्लिष्य, "द्वा सुपर्णा सयुजा सखायौ" इत्यादि श्रुत्यनुरोधेन अब्रह्म त्वमसि इत्यर्थमाश्रित्य जीवब्रह्मभेद एव सिध्यति; इत्यब्रुवन् ।

किञ्च तत्त्वमसीति पदच्छेदेऽपि, एकपदाश्रयणेन तेन त्वं; तस्मै त्वम्; तस्मात् त्वम्; तस्य त्वं; तस्मिन् त्वं=तत्त्वं इति विग्रहमाश्रित्य तदीयस्त्वं असि इत्येव अर्थः । "कर्तृकरणे कृता बहुलं" इति बहुलग्रहणात्, 'चतुर्थी तदर्थार्थ' इति सूत्रे चतुर्थी इति योगविभागात्, "पञ्चमी भयेन" इति सूत्रे पञ्चमी इति योगविभागात्, 'षष्टि' इति सूत्रेण, "सप्तमी शौण्डैः" इति सूत्रे सप्तमीति योगविभागात् यथाक्रमं तत्त्वं पदस्य समासोपि भवति । अतश्च भेद एव सिध्यतीति नैक्योपदेशान्यथानुपपत्तिरिति मध्वार्याः वदन्ति ।

प्रथमपक्षे विशेषणं विशेष्यानुगुणं लिङ्गं भवितुमर्हति इत्यत्र न नियमः । "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इत्यादि प्रयोगात् 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य'' इति महाभाष्यकारवचनात् "व्यत्ययो बहुलं" इति सूत्रे

" सुप्तिङुपग्रह लिङ्गनराणां काल हलच्स्वर कर्तृयङाञ्च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन " ॥ इति

वार्तिककारोक्त्या च नपुंसकलिङ्गस्यापि पुल्लिङ्गार्थबोधकत्वे न दोष इति 'तत् त्वम्' इति व्यस्तं पदमेव ।

समस्तपदाभ्युपगमे तृतीयादि समासाश्रयणे च योगविभागादिक्लिष्टगत्याश्रयणं संभवति । पृथक्पदत्व पक्षे तु 'त्वं' शब्दस्य नपुंसकलिङ्गत्वेपि त्रिषु लिंगेषु युष्मदस्मदोः सरूपत्वात् 'अलिंगे युष्मदस्मदी' इति वैय्याकरणाभ्युपगमाच्च सामानाधिकरण्यं युक्तमेव । पदद्वयस्यापि चैतन्यमेव अर्थ इति न नपुंसकलिङ्गतच्छब्देन सामानाधिकरण्यविरोधः ।

किञ्च 'तत्त्वं' इति समस्तपदाश्रयणेपि तदेव त्वं =तत्त्वं, तदभिन्नस्त्वं—तत्त्वं इति " अप्भक्षो " " वायुभक्षः " इतिवत् 'सर्वं वाक्यं सावधारणं' इति न्यायेन शाकपार्थिवादिवत् (शाकप्रियः पार्थिवः = शाकपार्थिवः इतिवत्) समासाश्रयणेन, 'मयूरव्यंसकादयश्च' इति सूत्रे आकृतिग्रहणाद्वा समासाश्रयणेन मध्यमपदलोपे सति अभेद एव अर्थो गृह्यते; न तु भेदः ।

अपिच तत्त्वमसीति समस्तपदेऽपि ' सचासौ त्वं च ', ' तच्च त्वं च ' इति वा कर्मधारयाश्रयणेन ' एतया निषादस्थपतिं याजयेत् ' इति श्रुत्यर्थविचारे निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा, निषादानां स्थपतिरिति षष्ठीतत्पुरुषो वेति विचार्य, षष्ठीतत्पुरुषपक्षे निषादस्थपतिरित्यत्र निषाद-शब्दस्य निषादसंबन्धिपर्यन्तार्थः अभ्युपेयः । ' ऋद्धस्य राजपुरुषः ' इति प्रयोगवारणाय तत्पुरुषसमासे उत्तरपदार्थस्यापि पूर्वपदार्थे सद्भाव इति एकार्थीभावरूपलक्षणया आश्रितः । कर्मधारये तु तादृशदोषो नास्तीति कृत्वा स्थपतिर्निषादस्स्यादित्यधिकरणे निषाद एव स्थपतिरित्याश्रयणे निषादस्य उपनयनाध्ययनाद्यभावात् कथं यजनमिति न भ्रमितव्यम् । वेदविहितत्वात् तद्यागमात्रकरण उपयोगितया उपनयनाध्ययनादिकं तस्य कारयितव्यं इति, फलमुखगौरवस्य अदोषत्वात् इत्युक्तम् । तद्वत् अत्र ' तत् त्वं ' पदयोः ऐक्य-मेव अर्थो भवति इति । नन्वेवं सति प्रकृतयोः ' तत त्वं ' पदयोः चैतन्य-रूपयोः ऐक्यरूपे अर्थे विवक्षिते, विशेषणभूतयोः सर्वज्ञत्वादि श्वेतकेतुसंज्ञिक-पिण्डत्वादि विशेषणयोः अर्थान्वयाभावात् विशेषणार्थं त्यक्त्वा विशेष्यरूपयोः चैतन्ययोः ऐक्यं इति उभयत्र लक्षणैव दोष इति चेत्; मीमांसकमते अपूर्वसंज्ञिक कार्यरूप एव अर्थे लिङादेः प्रथमं शक्तिमभ्युपगम्य क्रियाकार्यरूपार्थेपि अन्विताभिधायित्वेन लिङादेः तदन्वितपदानां च अर्थः लक्षणया अंगीकृतः । तद्वत् अस्मन्मतेऽपि उभयत्र लक्षणा न दोषाय भवति । तात्पर्यानुपपत्तिरेव लक्षणा बीजमस्त्यत्र । बीजं विना लक्षणया अर्थवर्णनं न युक्तमित्येव तन्मतम् ।

किंच ' सोऽयं देवदत्तः ' इत्यत्र यथा उभयत्र देशकालौ हित्वा यथा देव-दत्तैक्यप्रत्यभिज्ञा जायते तद्वत् तत्त्वमसीत्यत्रापि उभयत्र विशेषणं त्यक्त्वा

विशेष्यमात्रस्य अर्थबोधो भवत्येव। विषं भुंक्ष्व महाराज इत्यादौ विषमित्यस्य विरोधिगृहान्न, भुंक्ष्वेत्यस्य मा भुङ्क्थाः इतिवत् उभयत्र लक्षणा न दोषायैव। अत एव पूर्वाचार्यैः इयं शुकरहस्यश्रुतिः प्रमाणतया उपन्यस्ता।

वाच्यं लक्ष्यमिति द्विधार्थसरणी वाच्यस्य हि त्वं पदे
वाच्यं भौतिकमिन्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः।
वाच्यं तत्पदमीशता कृतमतिर्लक्ष्यं तु सच्चित्सुखा-
ऽऽनन्दब्रह्म तदर्थ एष च तयोः ऐक्यं त्वसीदं पदम् ॥

'त्वमिति तदिति कार्ये कारणे सत्युपाधौ
द्वितयमितरथैकं सच्चिदानन्दरूपम्।
उभयवचनहेतू देशकालौ च हित्वा
जगति भवति सोयं देवदत्तो यथैकः।' ' इति ॥

त्वं श्वेतकेतुं वदतीह तच्च ब्रह्माह सार्वात्म्यगुणादिजुष्टम्।
तयोस्समानाधिकृतिर्नयुक्ता तस्माच्चितोर्लक्षणमैक्यमेव ॥ २८ ॥

ऐतदात्म्यमिति पूर्वदर्शनात् तत् पदादपि तदात्मबोधः।
भासि सोम्य परात्मवपुस्त्वं लक्षणा न भवतीति परे तु ॥२९॥

भो 'स आत्मा' सन्निधस्थ 'तत्'पदं सर्वजुष्टपरमात्मबोधकम्।
त्वं पदं भवति केतुवाचकं तर्हि वृत्तिरनघा पदद्वये ॥

मतद्वयेऽप्यापततीह दोषः पदद्वये ते पद एव मे तु।
दोषो हि तुल्येन न परोऽनुयोज्यः एकं द्वयं वा सममेवचाऽगः ॥

पदं विभज्याततु इत्यथात्न ब्रह्मासि न त्वं तु विभिन्न एव।
मैवं विभेदो विदितो हि सर्वैः ब्रह्मेतरत्सर्वमतथ्यमेव ॥३२॥

द्वयोर्बहूनामपि लक्षणादेः श्रुत्यन्ततात्पर्यमिदं वदन्ति।
अपूर्वरूपे च लिङ्गादिशक्तिः क्रियात्मके लक्षणयैव बोधः ॥३३॥

आश्रित्यचापर्यवसानवृत्तिं गौणीं विना साध्विति केचिदाहुः ।
साप्याकृतिन्यायत एव वाच्या तत्रापि शक्तिद्वयमेव दृष्टम् ॥३४॥

अज्ञानाद्धि विवर्तते परमिदं ब्रह्मैव विश्वात्मना
नानात्वेन च भासमानमखिलं तथ्यं न लोके ततः ।
ब्रह्माज्ञाननिवृत्तिरेव विबुधैः मुक्तिश्च पापठ्यते
ब्रह्मैवाहमिति प्रसिद्धविशदज्ञानात् स्वयं मुक्तिभाक् ॥ ३५ ।

॥ इति सिद्धान्तसंग्रहः ॥

**अधिकरणार्थः** । पूर्वमीमांसायाः उत्तरमीमांसायाश्च बहुभिः कारणैः भिन्नशास्त्रस्य सिद्धत्वात् साधनसंपन्नस्यैव ब्रह्मजिज्ञासा संभवति इति ॥

---

( विशिष्टाद्वैतम् )

॥ श्रीमते भाष्यकाराय नमः ॥

**जिज्ञासाधिकरणम्** ॥१॥

**ॐ अथातो ब्रह्मजिज्ञासा ॥ १॥**

श्रीमद्ब्रह्मशब्दवाच्याय श्रीनृकेसरिणे नमः ।
भाष्य त्रितयतत्वार्थो यत्कटाक्षादजायत ॥ ३६ ॥

श्रीवण्शठारिश्रीवासशठाकोप यतीश्वरः ।
हृदि भातु सदा भक्तरङ्गाचार्यस्य मे गुरुः ॥ ३७ ॥

श्रीमान्नारायणो देवः चिदचिद्देहवान् प्रभुः ।
अत्रत्य ब्रह्मशब्दार्थः तद्विचारे यतेत सन् ॥ ३८ ॥

भोक्ता भोग्यं प्रेरितेति श्रुतेश्च सर्वस्यैवं विष्णुदेहश्रुतेश्च ।
ज्ञेयं ब्रह्माचिच्चितां च स्वरूपं तत्पूजाद्यं मोक्षरूपं च शास्त्रे ॥

मीमांसा पूर्वभागस्य विचारानन्तरंत्विह ।
जिज्ञासा ब्रह्मणः प्रोक्ता शास्त्रैकत्वसमर्थनात् ॥ ४० ॥

मीमांसाह्वयमेकमेव कथितं काण्डत्रयालंकृतम्
तत्कर्मात्मक देवतात्मक परब्रह्मात्मकत्वात् त्रिधा ।
कर्तारः खलु जैमिनिः प्रथमतः श्रीकाशकृत्स्नः परः
वेदव्यास महर्षिरेव चरमः कादंबरीवात्र तत् ॥ ४१ ॥

इह तावत् वेदान्तशास्त्रे श्रीमन्नारायणाख्यः पुरुषोत्तमः चेतनाचेतन-प्रपञ्चनियन्ता सर्वज्ञः सर्वशक्तिः सर्वान्तर्यामी सदा नित्यसूरिसंस्तुतः स्वाश्रित-विरोधिवर्गनिरसनरतः निखिलहेयप्रत्यनीक कल्याणैकतानः वैकुण्ठाख्यपरमपद-वासी कश्चन अस्तीति "एको ह वै नारायण आसीत्" "अनीदवातं स्वधया तदेकं" (स्वधया लक्ष्म्या इत्यर्थः) "नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्", "प्रधानक्षेत्रज्ञपतिर्गुणेशः", "सकारणं करणाधिपाधिपः" "स त आत्मा अन्तर्याम्यमृतः", "यस्सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते", "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः", "ज्ञाज्ञौ द्वावजावीशनीशौ" 'भोक्ता भोग्यं प्रेरितारं च मत्वा', 'पृथगात्मानं प्रेरितारं च मत्वा', 'यथा प्रयोग्यः आचरणे नियुक्तः', 'अथ य इह आत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्', 'सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'एतमानन्दमयमात्मानं उपसंक्रामति' "अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः" 'ओं नमोनारायणायेति मन्त्रोपासकः वैकुण्ठभुवनं गमिष्यति,' 'श्रीरुपबर्हणम्', तस्मिन्ब्रह्मास्ते, 'तमित्थं वित् पादेनैवाग्र आरोहति' 'स तत्र पर्येति' 'ब्रह्म-विदाप्नोति परं' 'ध्यात्वा देवं मुच्यते सर्वपाशैः', 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', "तमेवं विद्वान् अमृत इह भवति" इत्यादि श्रुतिभिः दरीदृश्यते।

जीवः प्रकृतिः परमात्मा चेति तत्वत्रयं । परमात्मा सकलकल्याणगुणो-पेतः; हेयप्रतिभटः सर्वनियन्ता, सर्वफलप्रदश्च, सर्वप्राप्यश्च । जीवाः अनन्ताः; नित्याः, मुक्ताः, बद्धाश्चेति त्रिविधाः । बद्धाः संसृतिस्थाः । भगवत्प्रपत्या निश्शेषसंसारनिवृत्या चरमशरीरवियोगानन्तरं श्रीवैकुण्ठलोकं प्राप्ताः मुक्ताः । नित्याः अनन्तगरुडविष्वक्सेनादयः; नित्यसूरिशब्देन

व्यवहृताः; भगवत्समीप एव स्थिताः । प्रकृतिश्च सत्वरजस्तमोगुणसाम्यावस्था । जीवतत्वं प्रकृतितत्वं च परमात्मशरीरं । प्रकृतिः यदा परमात्मेच्छया सृष्ट्युन्मुखी भवति तदा मूलप्रकृतिरविकृतिरित्याद्युक्त तत्वान्तरभेदभिन्ना भवति । प्रकृतिजीवयोः परमात्मशरीरत्वाभ्युपगमे सुखदुःखादिकं शरीरगतं शरीरिणि परमात्मनि न संबध्यते । कर्मकृतशरीरस्यैव तत् । भोगायतनं शरीरमित्यादि परोक्तशरीरलक्षणस्य अव्याप्त्यतिव्याप्त्यसंभवादि दोषदुष्टत्वेन यस्य चेतनस्य यद्द्रव्यं नियमेन धार्यं शेषभूतं तत्तस्य शरीरमिति लक्षणाश्रयणेन शरीरभूत-जीवप्रकृतिनिष्ठसुखदुःखपञ्चीकरणादिकं बालत्वयुवत्वादिकं च शरीरिणि परमात्मनि न प्रवर्तते । चित्रपटदृष्टान्ताच्चावगम्यते ।

अत एव

चेतश्चक्रति चेतनासिरमतिः तत्संवृतिर्मालिका
भूतानि स्वगुणैरहंकृतियुगं शंखेन शार्ङ्गायते ।
बाणाः खानि दशाऽपि कौस्तुभमणिः जीवः प्रधानं पुनः
श्रीवत्सः कमलापते तव गदामाहुर्महान्तं बुधाः ॥

इत्यभियुक्तैः भगवतः जीवतत्वं प्रकृतितत्वं च शरीरत्वेन उपकरणत्वेन च वर्णितम् ।

अनादि जीवकर्मानुसृत्या सृष्ट्यादिकं कृत्वा विहरति भगवान् चक्रवर्तीव । जीवाः स्वाभाविकधर्मभूतज्ञानगुणवन्तः परमात्माधीनाः स्वातन्त्र्याभावेऽपि परमात्मदत्तस्वातन्त्र्याश्रयणेन कर्म कृत्वा तदनुगुणं फलं भगवतादत्तमनुभवन्ति । विषमसृष्ट्यादिदोषपरिहारश्च ।

"आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं
तत्तद्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्तते ।
तत्रोपेक्ष्य ततोऽनुमित्य विदधत्तन्निग्रहानुग्रहौ
तत्तत्कर्मफलं प्रयच्छति पुनः सर्वस्य पुंसो हरिः ॥"

" दुष्कर्मस्वनिवर्तनानुमनने पुंसः करोत्यच्युतः
स्वातन्त्र्येण निरंकुशेन सगुणश्रुत्या न दोषो हरेः ।
दृष्टश्चारिषु निग्रहो गुणतया लोके न दोषात्मना
न स्यादाश्रयसिद्धिरौपनिषदं नोचेत् प्रमाणं वचः ॥ "

" दुष्कर्मव्यवसायतस्तु विरतो यस्तस्य पुंसः पुरा
भूयो जन्मसमार्जितान्यगणितान्यागांस्यनादृत्य यत् ।
तस्यानन्तसुखाप्तये च यतते लक्ष्मीसहायस्स्वयम्
तत्कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते ॥ "

इति श्लोकत्रयेण अभियुक्तैरुक्ताः ॥

जीवाः ज्ञानस्वरूपा अपि धर्मभूतज्ञानगुणकाश्च कर्मणा धर्मभूतज्ञान-संकोचविकासभाववन्तश्च वर्तन्ते । "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्रुत्या "तस्य च वशीकरणं तच्छरणागतिरेवे"ति भाष्याच्च भगवत्प्राप्तिनिदान-भूत प्रपत्तिरूपोपायवन्तश्च । प्रपत्तिश्च ज्ञानविकास विशेष इति ' तमेवं विद्वा-नमृत इह भवति; नान्यः पन्था अयनाय विद्यते ' इति श्रुतेरपि न विरोधः । एतादृश परमात्मैव ब्रह्मशब्दवाच्यः । तादृश परब्रह्मैव ' अथातो ब्रह्मजिज्ञासा ' इत्यादिना विचार्यते इति मतप्रक्रियासंग्रहः । एषो अर्थश्च

' श्रीमद्रामानुजमुनिमते श्रीनिवासाभिधानं
तत्वं नारायण इति जगौ साधनं तत्प्रपत्तिः ।
वैकुण्ठाख्ये परमनिलये दास्यकर्मैव मोक्षः
जीवा मूलप्रकृतिरुदिता विष्णुमूर्तिश्च सत्या ॥ "

इति श्रीविष्णगराधीशस्तवे अस्माभिरुक्तः । (श्लोकः ९८)

अतः पूर्वोक्त सकलश्रुत्यर्थविशिष्टः नारायण एव ' बृहत्वात् ब्रह्मणत्वाच्च ब्रह्मेति परिपठ्यते ' इति श्रुत्या संग्रहेण निर्दिश्यत इति तादृश ब्रह्मविषयक जिज्ञासा कर्तव्येति प्रतीयते ।

" अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥
पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना ।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम् ॥
विषयो निशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं च पञ्चाङ्गं प्राञ्चोधिकरणं विदुः ॥ "

इति सूत्रभाष्यव्याख्यानाधिकरणलक्षणानां बहुत्वात् संग्रहेण सुखबोधाय प्रायः पद्यैः अधिकरणार्थो लिख्यते ।

केचित् संजगदुः प्रपञ्चमखिलं मिथ्येत्यविद्याश्रयात्
तस्याद्याश्रयणं तिरोधिमथ च स्वीयं स्वरूपं प्रमाम् ।
किंचानिर्वचनीयतामथ तथा तन्नाशतन्नाशकौ
वक्तुं कर्कशतर्कशास्त्रविरहात् सत्यं जगत् ब्रह्मजम् ॥ ४२ ॥

दृश्यत्वात् सकलं मृषेति विमतं निर्भर्त्स्य शास्त्रादिभिः
सत्यं सर्वमिति प्रसाध्य वचनैः जीवान् बहून् ज्ञानिनः ।
शेषित्वेन रमापतिं च सगुणं तत्प्राप्त्युपायान् बहून्
लप्यन्ता बहुधा वदन्ति विविधा विद्या च *बह्वी श्रुतौ ॥ ४३ ॥

ब्रह्म श्रीपतिरेव हेतुरखिलस्यास्येति जोघुष्यते
जीवाश्च प्रकृतिश्च तस्य तनुरित्युक्तं हि सत्यं तथा ।
ब्रह्मानुग्रह निग्रहौ च जगतो मोक्षस्य बन्धस्य भोः
हेतू लक्ष्मणयोगिराडभिमताद्वैतानुसारिह्यसौ ॥ ४४ ॥

---

* बह्वीविद्या=द्वात्रिंशद्विद्या ।

सूत्रसंख्या पञ्चचत्वारिंशत्पञ्चशतानि च ।
संख्याधिकरणानां तु षट्पञ्चाशच्छतं तथा ॥४५॥

कारणत्वमबाध्यत्वमुपायत्वमुपेयता ।
श्रीभाष्ये चतुरध्याये व्याख्यातानि क्रमादिह ॥४६॥

सूत्राणि ५४५

अधिकरणानि १५६

सूत्रार्थः ॥ "परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्, नास्त्यकृतः कृतेन; स गुरुमेवाभिगच्छेत्........प्रोवाच तां तत्वतो ब्रह्मविद्यां" इति विषयवाक्यम् । अथ=कर्मविचारानन्तरं; अतः=तत एव हेतोः; ब्रह्मजिज्ञासा=ब्रह्मस्वरूप तद्गुणादिविचारः कर्तव्य इत्यर्थः ॥

---

## द्वैतम्

॥ श्रीमध्वार्यगुरवे नमः ॥

### जिज्ञासाधिकरणम् ॥ १ ॥

ओं अथातो ब्रह्मजिज्ञासा ॥ १ ॥

विष्णुं सकलकल्याणगुणपूर्णं भजे सदा ।
यत् ध्यानात् स्वस्वरूपाप्तिः हित्वान्यापघनं भवेत् ॥ ४७ ॥

सत्यंभिदेति श्रुतिवाक्यनिघ्नाः भेदाश्च पञ्चेति समर्थयन्ते ।
विभिन्नजात्याकृतितारतम्यसंयुक्तजीवा बहवश्च सन्ति ॥ ४८ ॥

ब्रह्मात मङ्गलगुणैः परिपूर्णं हि कथ्यते ।
विष्णुभक्तिपरैर्ज्ञेयः उत्तमाधममध्यमैः ॥ ४९ ॥

यस्य भक्तिः परा विष्णौ सोऽधिकारीह कथ्यते ।
विष्णुभक्तिर्यदा जाता तदा विष्णुं विचारयेत् ॥ ५० ॥

सूत्रसंख्या चतुष्षष्टिः तथा पञ्चशतानि च ।
संख्याधिकरणानां च त्रयोविंशतिरेव च ॥ ५१ ॥

शतद्वयेन सहिता मध्वभाष्ये समीरिता ।
शास्त्रादिसंगतिश्चात्र ज्ञातव्या युक्तिभिस्तथा ॥ ५२ ॥

शाखामूला स्मृतय इति हि प्रोच्यते पूर्वतन्त्रे
दृष्टाश्शाखा गुरुभिरखिलाः मध्वभाष्यार्यवर्यैः ।
तस्माद्भाष्ये गुरुभिरसकृत् भाल्लवेयादि वेदान्
स्वोक्तार्थादीन् दृढयितुमिहोदाहृियन्ते पुराणैः ॥ ५३ ॥

प्रत्यक्षदृष्टद्वितयादि सर्वं मतद्वयात् सर्वविलक्षणं तत् ।
सिद्धान्तसूत्राणि तदीयभाष्ये सर्वाणि तानीति विचित्रमेतत् ॥५४॥

सूत्राणि (५६४)

अधिकरणानि (२२३)

द्वैतमतसिद्धान्तसंग्रहः :—

श्रीविष्णुरेव परतत्वं । जगत्सर्वं सत्यं । देवतिर्यङ्मनुष्यस्थावरभेद-भिन्नाः जीवगणाः अनन्ताः । सर्वे च ते हरेर्दासा एव; स्वत एव उत्तममध्यमाधमाश्च । स्वत एव नीचोच्चभावं गताः । अनादिकर्मबद्धाश्च; स्वाभाविक नैजजातिसुखदुःखादिकात् कर्मणा परिभ्रष्टाः । श्रीविष्णुभक्त्या संसारबन्धाद्विमुक्ताः स्वाभाविकीं नैजसुखानुभूतिरूपां मुक्तिमनुभवन्ति । प्रत्यक्षमनुमानमागम इति त्रितयं प्रमाणम् । 'सत्यं भिदा, सत्यं भिदा, सत्यं भिदा' इत्युपनिषदा भेदपञ्चकं । भेदपञ्चकश्च ।

"जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥"

" मिथश्च जडभेदोयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ॥ "
" न च नाशं प्रयात्येषः न चासौ भ्रान्तिकल्पितः ।
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ॥ "
" द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥ "

इति विष्णुतत्वनिर्णये उक्तप्रकारेण ज्ञातव्यम् ॥

" ब्रह्मशेषसुपर्णेश शुक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः ॥ " इति

श्रीतत्त्वं अक्षरत्वेन आश्रित्य तस्मात्परं च विष्णुरिति ॥

स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते ।
स्वतन्त्रो भगवान्विष्णुः भावाभावौ द्विधेतरत् ॥
प्राक्प्रध्वंस सदात्वेन त्रिविधोऽभाव इष्यते ।
चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥
दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ।
नित्यादुःखा रमान्येतु स्पृष्टदुःखास्समस्तशः ॥
स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ।
दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥
देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ।
एवं विमुक्तियोग्याश्च तमोगास्सृतिसंस्थिताः ॥
इति द्विधा मुक्त्ययोग्याः दैत्यरक्षः पिशाचकाः ।
मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ॥
ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ।
नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥
नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च ।
नित्यानित्यं त्रिधा प्रोक्तं अनित्यं द्विविधं मतम् ॥

असंसृष्टं च संसृष्टं असंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्राभूतानि पञ्च च ॥
संसृष्टमण्डं तद्वं च समस्तं संप्रकीर्तितम् ।
सृष्टिस्थितिस्संहृतिश्च नियमोऽज्ञान बोधने ॥
बन्धोमोक्षस्सुखं दुःखं आवृतिर्ज्योतिरेव च ।
"विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥

इत्यादिना चेतनाचेतनविभागादिप्रपञ्चः संग्रहेण ज्ञातव्यः । एतदर्थं एव 'अथातो ब्रह्मजिज्ञासा ' इत्यादिना विचार्यते; इति ॥

**सूत्रार्थः** ॥ अथ शब्दः मङ्गलार्थस्सन् अधिकारार्थबोधकोपि भवति । अथ=विष्णुभक्तिरूपाधिकारसिद्ध्यनन्तरं; अतः=हेतोः; ब्रह्मजिज्ञासा=विष्णु-तद्गुणविभूत्यादि चिन्ता कर्तव्येत्यर्थः ॥

---

अद्वैतम्

जन्माद्यधिकरणम् ॥ २ ॥

## जन्माद्यस्य यतः ॥ २ ॥

**यस्माज्जगत्सर्गलयादि सर्वं संजायते ब्रह्म तदेव लक्ष्म ।**
**सर्वज्ञशक्त्यादिगुणोपपन्नं प्रधानसंसारिविलक्षणं तत् । ५५ ॥**

**अधिकरणार्थः** ॥ " यतो वा इमानि भूतानि जायन्ते " ( तै-३-१ ) इत्यादि विषयवाक्यम् ।

" शाखाग्रे चन्द्र " इतिवत् तटस्थलक्षणमेव । अथापि शाखाग्रे प्रकृष्ट-चन्द्र इत्युक्ते यथा वा चन्द्रेतरसर्वनक्षत्रान् व्यावृत्य केवलचन्द्रस्य सत्त्वबोधकं तथा जन्मस्थितिभङ्गयोग्यप्रपञ्चं व्यावृत्य शुद्धब्रह्मणोपि बोधकं भवतीति स्वरूप-लक्षणमपि भवतीति सिद्धान्तः ।

परमते तु विशेषणेन, उपलक्षणतया वा द्वेधापि लक्षणं अनेन सूत्रेण उच्यत इत्युक्तम् । तत्र विशेषणतया लक्षणत्वपक्षे विशेषणभेदात्

विशेष्यभेद इति खण्डो मुण्डः पूर्णशृङ्गो गौः इतिवत् ब्रह्मबहुत्वं स्यादिति; उपलक्षणपक्षे च यत्रायं सारसः स देवदत्तकेदारः इत्यत्रेव आकारत्रयस्य अवगतिः अत्र नास्ति। अत्र उपलक्ष्यरूपाकारस्य ज्ञातत्वाभावात् पुरुषसूक्त प्रतिपाद्यपुरुषविशेषः केदारस्थानीय उपलक्ष्याकार इति तदुक्तिर्न युक्ता। पुरुषसूक्तस्य दहरविद्याशेषत्वं अभ्युपगच्छन्ति केचित्; केचित् सर्वविद्याशेषत्वं; केचित् पुरुषशब्दवाच्यः शिवः; केचित् नारायण एवेति, बहुविवादग्रस्तत्वात् पुरुषशब्दस्य, तदिह पुरुषशब्दवाच्यः उपलक्ष्याकार इति वक्तुं न शक्यते। "लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि" इत्यधिकरण एव पुरुषसूक्तविचारस्य करिष्यमाणत्वात् शास्त्रारंभे ब्रह्मलक्षणस्य विचारसमये तत्रत्य पुरुषशब्दप्रतिपादनासंभवात् इति उभयपक्षेपि दोषः प्रतिभाति।

किञ्च यथाक्रतुन्यायेन सत्यं ज्ञानं अनन्तं ब्रह्मेति लक्षणयुक्तस्य ब्रह्मणः प्राप्यत्वात् तल्लक्षणमेव सूत्रकारेण तन्मते वक्तव्यम्। 'जन्माद्यस्य यतः' इत्येव सूत्रकारः प्राह। श्रीभाष्यकारोपि तल्लक्षणमेव व्याख्यत्। तथा च सूत्रकारतात्पर्यं अद्वैतब्रह्मण्येवेति ज्ञायते। तटस्थलक्षणस्यैव उक्तत्वात्। यत्प्राप्यं तज्जिज्ञास्यम्। जिज्ञास्यब्रह्मलक्षणप्रकरणे सत्यत्व ज्ञानत्व अनन्तत्व अमलत्व शेषित्वरूप स्वरूपलक्षणस्य प्रतिपादकानि वक्तव्यानि। तान्यनुक्त्वा तटस्थ लक्षणस्यैव सूत्रकारेण उदाहृतत्वात् ॥

ननु शाखाचन्द्रदृष्टान्तेन तटस्थलक्षणाभ्युपगमेऽपि शाखाया इव जन्मस्थितिभङ्गभाजः प्रपञ्चस्य सत्यत्वमायाति। निर्गुणज्ञानमात्रं ब्रह्म, इतरन्मिथ्येति न ज्ञायते। अतश्च तटस्थलक्षणमपि इदं, ब्रह्मस्वरूपलक्षण ज्ञापकमपि भवेत् इति भवदुक्तिः कथं जाघटीति इति चेत्; मैवम्, लक्षणस्य व्यावर्तकत्वस्वभावात् इतरव्यावर्तकत्वमात्रे अनेन सिद्धेपि, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'नेति नेति', 'नेह नानास्ति किञ्चन', 'अद्वैतं परमार्थतः' इत्यादि प्रमाणान्तरेण प्रपञ्चस्य उपलक्षणभूत शाखादिकस्य च मिथ्यात्वसिद्धेः इति न कश्चिद्दोषः।

यस्माज्जगतः जन्मस्थितिभङ्गं तद्ब्रह्मेति सूत्रार्थः।

---

## जन्माद्यधिकरणम् ॥ २ ॥

### जन्माद्यस्य यतः ॥ २ ॥

चराचराणां नित्यानामखिलानां यतो जनिः ।
स्थित्यन्तान्तःप्रवेशादि नित्यमुक्तातिरेकि तत् ॥ ५६ ॥

सन्तः केचन जन्मसूत्रमपि ये काकोक्ति तुल्यं जगुः
मैवं तत्र विसृष्टिरक्षणलया नित्याश्रया विश्रुताः ।
सत्यादावुदिते हि लक्ष्मणि तदाऽभावस्वरूपात्मके
शाखाचन्द्रनयादि जातु चिदिह स्यान्नात्रसूत्रे तथा ॥५७॥

तल्लक्षणं ज्ञानमनन्तसत्यं
सर्वाभ्युपेयं गतसंशयं च ।
विसृज्य जन्मादि विवादभूतं
लक्ष्माह सूत्रे स कथं महर्षिः ॥ ५८ ॥

यस्यैव जिज्ञास्यतयोक्तिरस्ति
प्राप्यत्वमस्येति हि शास्त्रगीतिः ।
भूतैर्विशिष्टं समुपासितव्यं
प्राप्यं विशिष्टं त्विति लक्ष्म युक्तम् ॥ ५९ ॥

विशेष्यभूतस्य तु सत्यतादि
विशिष्टरूपस्य तु तद्धिलक्ष्म ।
चैतन्यमात्राभ्युपगन्तुरिष्टम्
न वक्ति लक्ष्मापि च सूत्रकारः ॥ ६० ॥

**अधिकरणार्थः** ॥ अस्य=प्रपञ्चस्य; यतः=ब्रह्मणः; जन्मादि=जन्मस्थिति भङ्गादि जायते—तद्ब्रह्म । 'यतो वा इमानि भूतानि जायन्ते' (तै-३-१) इत्यादि

श्रुतिप्रमाणात् जन्मादिकमुपलक्षणं विशेषणं च सत् ब्रह्मणः लक्षणबोधकं भवति। जन्मादिषु प्रत्येकं ब्रह्मलक्षणत्वोक्तौ सत्यामपि सिद्धमिष्टं। तथापि 'प्रत्येकं लक्षणत्वं सुवचमिह बहुदाहृतिर्धीमहिम्ने' इति मानात् स्पष्टार्थं त्रितयमपि लक्षणत्वेनाश्रितम्। अत्र सूत्रे सामानाधिकरण्यलक्षणं द्वेधा वर्तते। 'सत्यं ज्ञानमनन्तं ब्रह्म इत्यादि वाक्यात् सत्यत्वादि सकलविशिष्टं ब्रह्मेति देवदत्तः पीवा युवा दण्डी कुण्डली इतिवत् सकलगुणविशिष्टदेवदत्त इव प्रतीयत इति एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति समानाधिकरणमाश्रितम्। परमते तु 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यादौ समानविभक्तिकत्वेऽपि सामानाधिकरण्याभावात् यथा भिन्नप्रतीतिः तद्वत् 'स एष नेति नेति' 'निर्गुणं निरञ्जनम्' इत्यादि श्रुतिबलात् निर्विशेषं ब्रह्मेत्याश्रित्य सत्यज्ञानादि वाक्ये इतरव्यावृत्तिरूप सम्मानाधिकरण्यपदार्थमङ्गीकृत्य उपलक्षणपक्ष एव आश्रित इति भिदा ॥

'त्वमेवोपादानं भवसि च निमित्तं त्रिजगतां
यदुक्तं तत् सर्वं त्विह न चलयितुं प्रभवति।
त्वमेवोपास्यः स्वैः निखिलफलकामैः भवसि भो
फलं त्वद्व्याप्तिः फलद इति सूत्राणि जगदुः ॥'

इति मदीय श्रीशार्ङ्गपाणिस्तवे (श्लो १२२) उक्तम् ॥

---

## द्वैतम्

### जन्माद्यधिकरणम् ॥ २ ॥

### जन्माद्यस्य यतः ॥ २ ॥

**चतुर्नवति देवानां अन्येषां च यतो जनिः।**
**बन्धमोक्षादिसंयुक्ता ब्रह्मलक्षणमेव तत् ॥ ६१ ॥**

**आदित्या वसवो रुद्राः मरुतश्चाश्विनावपि।**
**बृहस्पतिश्चकामश्च मनुर्दक्षो विनायकः ॥ ६२ ॥**

**भृगुश्चैवानिरुद्धश्च धर्मोनिर्ऋतिरेव च ।**
***कुबेरसहिता देवाः नवतिस्संप्रकीर्तिताः ॥ ६३ ॥**

**अनन्तो गरुडो वायुः चत्वारो ब्रह्मणा सह ।**
**चतुर्नवति देवानां संख्या चोक्ता खिलश्रुतौ ॥ ६४ ॥**

**अधिकरणार्थः** । यतः=विष्णोः, अस्य-जगतः, जन्मादि-जन्माष्टकं भवति; तद्ब्रह्म—विष्णुरेव । "उत्पत्तिस्थितिसंहारा नियतिज्ञानमावृतिः । बन्धमोक्षौ च पुरुषात् यस्मात् स हरिरेकराट् ॥" इति स्कान्दवचनात् । परभाष्ये तु जन्मादीति 'आदि' शब्देन स्थितिभङ्गौ उच्येते । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति वाक्य त्रयेण जन्मस्थितिभङ्गमेव ज्ञायते । आदिशब्दार्थः स्थितिभङ्गरूप एवेति वर्णितम् । अत्र तु आदिशब्देन सप्त गृहीतानि ॥

---

## अद्वैतम्

### शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

# शास्त्रयोनित्वात् ॥ ३ ॥

**तत्कारणं ब्रह्म ऋगादि शास्त्रं तातं प्रवक्ति ह्यथवेतरार्थः ।**
**जगन्निदानेऽस्य ऋगादि शास्त्रं प्रमाणमन्याऽनुमितिर्न योग्या ॥**

शास्त्रस्य योनिः; शास्त्रयोनिः । तस्य भावः शास्त्रयोनित्वं । शास्त्रं च— 'अस्य महतो भूतस्य निश्वसितं एतदृग्वेदः' इत्यादि बृहदारण्यकोक्तेः, चत्वारो वेदाः, साङ्गाः सरहस्याः, बहुधा भिन्नाः; एकशतं अध्वर्यु शाखाः;

---

* विष्णुव्यतिरिक्त एकादशादित्याः; कुबेरसहिता देवाः पञ्चाशत् ; आहत्य इतर संख्यया साकं चतुर्नवतिः ॥

सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधा अथर्वणो वेदः, वाकोवाक्यं, इतिहासः, पुराणम्, वैद्यकम्, इत्येतावान् शब्दस्य विषय इति महाभाष्योक्त्या एतावतः शास्त्रस्य योनिरित्यर्थः । 'विविक्तःश्रुतिसागरः' इति श्रीविष्णुसहस्रनामस्तोत्रे, श्रुतयः सागर इव अत्र निधीयन्त इति श्रुतिसागरः परमात्मा इति महाभारतमपि शास्त्रस्य योनिरित्यर्थ एव संगच्छते । उत्पादकत्वं ब्रह्मणः संभवतीति ॥

न च वेदस्य अनित्यत्वं, पौरुषेयत्वं स्यादिति वाच्यम् ।

"शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वं एकेन परमात्मना ॥" 'तथर्ग्वेदादयो वेदाः प्रोक्ता येऽपि पृथक् पृथक् । भोग्यत्वेनात्मना तेऽपि चैतन्यानुगतास्सदा ॥' इति मीमांसकैरेव चैतन्यरूप परमात्मानुगतत्वं वेदानां उक्तत्वात्, न पौरुषेयत्वं नानित्यत्वं च भवति ।

किञ्च 'हिमवतो गंगा प्रभवति' इत्युक्ते तत्र प्रकाशते न तु उत्पद्यते इत्यर्थवत् स्वरवर्णानुपूर्वीविशिष्टवेदप्रकाशनमेवेति तात्पर्यम् ।

न च, वेदार्थविज्ञानात् ब्रह्मणः सर्वज्ञत्वं सर्वशक्तित्वादिकं अङ्गीकरणीयम्; सर्वज्ञसर्वशक्त्यादिविशिष्टात् ब्रह्मणः वेदस्य उत्पत्तिरिति, अन्योन्याश्रयरूप दोष इति वाच्यम् । वेदोत्पादकशक्तियुक्तं ब्रह्मेति शास्त्रान्तरात् युक्तेश्च सिद्धेरिति तात्पर्यात् । अत्र प्रमाणम् ।

शब्दोपादानभावध्वनिगतविषयद्योतनाशक्तयोन्तः
ब्रह्मण्येव स्युरग्नेः विषयविषयिणी दीपशक्तिः खलूच्चैः ।
दृष्टश्च ज्ञानशक्तेर्न तु करणगता किंतु दीपप्रभावत्
संयुक्तद्योतनैवेत्यपरमिह पुनस्साध्यते सर्ववित्त्वम् ॥

अस्य अर्थः—

घटादि विषयप्रकाशकप्रभायुक्तदीपात् दीपोत्पादकाग्नेः यथा वा अधिक-प्रकाशशक्तिमत्त्वं, तथा सर्वविषयप्रकाशकसर्वज्ञवेदात् तदुत्पादकब्रह्मणः सर्वज्ञतमत्वं अवगम्यत इति ।

न च, ब्रह्मणः सर्वज्ञत्व-सर्वशक्तिमत्वादिकं यद्यभ्युपगम्येत, तर्हि विषम-सृष्ट्यादौ दोष इति वाच्यम् । सृष्ट्यादिविषयक सर्वकार्येष्वपि अविद्योपादान-लब्ध सर्वज्ञसर्वशक्तियुक्तस्यापि ब्रह्मणः विषमसृष्ट्यादौ स्वातन्त्र्यं न । पूर्वपूर्व-सर्गानुसारेणैव सृष्ट्याद्युपपत्तेः । 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति सूत्रार्थस्याप्यविरोधः ॥

---

## विशिष्टाद्वैतम् ॥

## शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

### शास्त्रयोनित्वात् ॥ ३ ॥

**शास्त्रैकमानं तदिति ब्रवीति न चाक्षजं नानुमितिश्च तत्र ।**
**अज्ञातमर्थं खलु शास्त्रवेद्यं प्राहुर्बुधा ब्रह्म तु शास्त्रवेद्यम् ॥ ६६ ॥**

**अधिकरणार्थः** । शास्त्रं यस्य योनिः प्रमाणं इति यावत् तच्छास्त्र-योनि—ब्रह्म । प्रत्यक्षाद्यविषयके ब्रह्मणि 'यतो वा' इत्यादि वाक्यमेव प्रमाण-मित्यर्थः । आनुमानिकं न ब्रह्म साधयति । अतः शास्त्रैकवेद्यत्वं ब्रह्मणः ॥

अतएव—

"शास्त्रैकयोनिस्त्वमिहेत्यनूच्य शास्त्राणि सर्वाणि मृषेति चोचुः ।
मृषापदार्थाद्यदिदं प्रजातं मृषैव तत्स्यादिति जानते न ॥"

इति श्रीशार्ङ्गपाणिस्तवे (श्लो-१४७) एतत् सूत्रं इतरेषां अननुगुण-मित्युक्तम् ॥

---

द्वैतम् ॥

शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

ओं शास्त्रयोनित्वात् ॥ ३ ॥

नावेदविन्मनुते बृहन्तं इत्यादि शास्त्राणि बहूनि विष्णौ ।
मानानि सन्त्यत्र न चानुमानं तच्छास्त्रयुक्तं क्वचिदेव मानम् ॥

अधिकरणार्थः । विष्णोः जन्माद्यष्टकं लक्षणमुक्तम् । तच्च शास्त्रैकवेद्यं । न तु अनुमानादिना

" ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ "

' यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्योग्रन्थविस्तारः नैवशास्त्रं कुवर्त्म तत् ॥ '

इति स्कान्दवचनात् एतच्छ्लोकोक्तमेव शास्त्रं विष्णौ प्रमाणमित्यर्थः ॥

---

अद्वैतम् ॥

समन्वयाधिकरणम् ॥ ४ ॥

तत्तु समन्वयात् ॥ ४ ॥

सर्वं हि शास्त्रं कृतिसाध्यकार्यं ब्रवीति न ब्रह्मणि पूर्वसिद्धे ।
ब्रह्माऽत्म-सत्-ज्ञानघनाभिधेये समन्वयाद्वेदगिरां तदाह ॥ ६८ ॥

शास्त्रप्रमाणं परिनिष्ठितेऽत्र भवत्यथो यानि विधायकानि ।
ब्रह्मात्मबोधाय शमादि सिध्यै युक्तान्यथोर्ध्वं विसृजन्ति सन्तः ॥

न बोधयत्यागमवाक्यमेतत् हेयेन च ग्राह्यतया विहीनम् ।
सिद्धं न नित्यामृतसर्वगात्मफलावबोधे प्रभुरेव वेदः ॥ ७० ॥

**अधिकरणार्थः** ।। सर्वा उपनिषदः अत्र विषयवाक्यम् । तत्—शास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव; वेदान्तानां ब्रह्मणि पुरुषार्थरूपे समन्वयात् ।

जन्मादिलक्षणलक्षित ब्रह्मणः शास्त्रप्रमाणकत्वं न युक्तम् । हेयोपादेयरहिते ब्रह्मणि पुरुषार्थाभावात् । इदं कुरु इदं मा कुरु इति लोके, "यजते स्वर्गकामः", "नानृतं वदेत्" इति वेदे च प्रवृत्तिनिवृत्तिपरवाक्यस्यैव अर्थवत्त्वं दृष्टम् । प्रकृते सिद्धरूपे ब्रह्मणि तदभावात्; इत्याक्षेपे प्राप्ते समाधानं; हेयोपादेयरहितज्ञाने सत्येव शान्तः शुद्धो भवति । शुद्धिरेव पुरुषार्थः । सामान्यशास्त्रं तु नश्वरपुरुषार्थसाधकं सत् हेयोपादेयमिश्रमेव । अनन्यशेषवेदान्तभागस्तु 'स एष नेति नेत्यात्मा' इत्यात्मशब्दादिना पुरुषार्थभूयस्त्वं बोधयति । हेयोपादानाभाव एव अस्माकं पुरुषार्थः; "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् ॥";

"एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ "

इत्यादिभिः निर्णीयते; इति पूर्वोक्त शास्त्रप्रमाणकत्वं साध्वेव ॥

---

**विशिष्टाद्वैतम् ॥**

**समन्वयाधिकरणम् ॥ ४ ॥**

**तत्तु समन्वयात् ॥ ४ ॥**

**श्रुत्यन्तवाचां पुरुषार्थभूतब्रह्मावबोधान्वयसंभवाद्धि ।**
**आनन्दसद्भावविनिश्चयाच्च सिद्धे परात्मन्यपिमानमेतत् ॥ ७१ ॥**

**तत्त्वमस्यादि वाक्यार्थज्ञानमेव विमुक्तिदम् ।**
**यथा त्वं दशमोसीति वाक्याज्ज्ञानं तथा श्रुतेः ॥ ७२ ॥**

इति पूर्वपक्षे समाधानम्—

ज्ञानं बन्धविनाशकं न च भवेत् यत्तत्त्वमस्यादिजम्
शब्दात् या सुमतिर्विभाति जगति प्रत्यक्षहेत्वेव तत् ।
कर्मज्ञानमुपासनादि सहितं द्वे मुक्तिहेतू श्रुतौ
तद्वैदेहनृपादयश्च सततं कर्मादि कुर्वन्त्यमी ॥ (श्रीशार्ङ्ग – 115)

**अधिकरणार्थः** ॥ सिद्धरूपे ब्रह्मणि वेदान्तवाक्यानां समन्वयो न भवति। पुरुषार्थप्रतिपादकाभावात् इति पूर्वपक्षः । स्ववेश्मनि निधिरस्ति, पुत्रस्ते जातः इत्यादाविव सिद्धरूपेऽपि ब्रह्मणि "आनन्दं ब्रह्म" इत्यादिना पुरुषार्थभूयस्त्वातिशयबोधनात् समन्वयो भवत्येव ।

तत्—शास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव; समन्वयात् परमपुरुषार्थतया ब्रह्मणः अभिधेयत्वेनान्वयात् ।

अत्र "तत्त्वमसि" इति वाक्यजन्यज्ञानादेव जीवस्य मुक्तिर्भवति । "दशमस्त्वमसि" इत्यादौ तथा दृष्टत्वात् । 'तत्त्वमसि' इत्यत्र 'सेयं गौः' इतिवत् श्वेतकेतोः ब्रह्मणश्च ऐक्यदर्शनात् । ब्रह्म च निर्गुणमित्यादि श्रुत्या सगुणश्रुतिबाधः अपच्छेदन्यायेन युक्त इति ।

**यस्सदेवो मया दृष्टः दशमस्त्वमसीतिवत् ।**
**तत्त्वमस्यादि वाक्येन परजीवैक्यमस्ति हि ॥ ७३ ॥**

इति पूर्वपक्षे एतत्समाधानम्—

"एतेह्यपच्छेदनयेन शार्ङ्गिन् त्वां निर्गुणं प्राहुरहो नयाज्ञाः ।
उपक्रमोत्सर्गनयादिनाऽत्र शान्ते विरोधेऽन्यनयेन किं नु ॥
( श्रीशार्ङ्गपाणिस्तवे-१२९ )

"पूर्वापरच्छेदनयो हि नात्र तन्न्यायचारोऽनियतस्थलेषु ।
पूर्वं गुणोक्तिः परतो निषेधः तस्मात् भवान् दिव्यगुणैर्विशिष्टः ॥"
( श्रीशा-१३० )

"उपक्रमोत्सर्गनयौ भवेयुः सामान्यवैशेष्यनयेन साकम् ।
युक्त्यन्तराण्यप्यवदन् यतीशाः भवद्गुणौघस्य विचारणायाम् ॥" (श्रीशा-१३१)

"अतः परं ब्रह्म गुणैर्विशिष्टं त्वामेव नित्यं वदति त्वयीह ।
सर्वासु शाखास्वमृतः श्रुतस्त्वं ज्योतिस्सदात्मादिपदाभिधेयः ॥" ( श्रीशा-१३२ )

" सेयं गौरित्यभेदो भवति*व नृहरे तत्त्वमस्यादिवाक्ये
गौण्या वृत्त्या भवन्तं कतिचन विबुधाः जीवमाहुर्विदोषम् ।
देशौ कालौ च युक्तौ न भवत इह तु प्रज्ञयोरैक्यमेव
संबन्धो देशयोश्च प्रभवति हि सदैकस्य विष्णुक्रमादेः ॥ "
( श्रीलक्ष्मीनृसिंहस्तवे पूर्वभागे २०८ )

" एकस्य कालयोर्योगो नेतिचेत् क्षणिको भवान् ।
तीर्थाटनादि विधिभिः संयोगो देशयोर्भवेत् ॥ (श्रील-स्तव २०९)

" अतश्च लक्षणां हित्वा ज्ञानसंबन्धमात्रतः ।
सेयं गौरीत्यभेदार्थः प्रत्यभिज्ञानसंभवः ॥ " (श्रील-स्तव २१०)

**सेयं गौरीत्यभेदो भवति च भुवने देशकालौ विहाय**
**तद्वत् 'तत्त्वं' पदेऽपि प्रविदितनिखिलज्ञाज्ञतादीन् विहाय ।**
**प्रत्यक्षे तत् तथात्वेप्यविदितविषये ज्ञातवैशिष्ट्यमेव**
**सर्वज्ञश्वेतकेत्वोः सममधिकरणं तच्छरीरादि हेतोः ॥ ७४ ॥**

" उपासते नेदमिति श्रुतिस्तु दृष्टेन रूपेण च केवलं न ।
ध्येयस्तु सर्वात्मक एव विष्णुः अन्यत्र ‡ 'सर्वं खलु' वेदवाक्यात् ॥ "
(श्रील-स्तव २१८)

" ज्ञानं बन्धविनाशकं न च भवेत् यत्तत्त्वमस्यादिजम्
ब्रह्माद्या विबुधास्तथैव ऋषयः श्रीनारदाद्या हरे ।
अन्येभ्योपि दिशन्ति ते गुणगणान् कर्मानुरूपं फलम्
भुञ्जानास्तत एव बन्धहतये भक्त्यादिरेव श्रुता ॥ " (श्रीशा-स्तव ११५)

**सत्यादिशास्त्रं सगुणं ब्रवीति निरञ्जनाद्यं विगुणं तथापि ।**
**रजस्तमोरूपगुणाद्यभावात् शुभैर्गुणैर्ब्रह्म विशिष्टमेव ॥ ७५ ॥**

इत्यादिना उक्तत्वान्नेह तन्यते ॥

---

* व=इव ॥ ‡ अन्यत्र " सर्वं खल्विदं ब्रह्म तज्जलान् " इत्यादौ ॥

द्वैतम् ॥

## समन्वयाधिकरणम् ॥ ४ ॥

### ओं तत्तु समन्वयात् ॥ ४ ॥

तच्छास्त्रयोनित्वमथेश्वरादौ न चास्ति विष्णौ सकलश्रुतीनाम् ।
समन्वयाद्ब्रह्म स विष्णुरेव जिज्ञास्य एवेति च शास्त्रमाह ॥७६॥
उपक्रमादि षल्लिङ्गात् विष्णुश्शास्त्रप्रमाणकः ।
§"मां विधत्तेऽभिधत्ते मां" इत्याद्या विष्णुशंसिनः ॥ ७७ ॥

अधिकरणार्थः ॥ पूर्वोक्तशास्त्रयोनित्वं विष्णावेव युज्यते । उपक्रमादि षड्विधतात्पर्यनिर्णायकलिङ्गवत्वात् वेदान्तवाक्यानाम् । रुद्रादीनां क्वचित् शास्त्रयोनित्वसंभवेऽपि विष्णावेव सर्वश्रुतीनां तात्पर्यवत्त्वनिर्णयात् न रुद्रादीनां शास्त्रयोनित्वम् ॥

---

§"मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहं । इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ॥" इति भागवत श्लोकः । अस्यार्थः मां विधत्ते='यजेत' इत्यादि श्रुतिः मामुद्दिश्य मत्पूजात्वेन यागादि विधत्ते । अभिधत्ते मां=अपरिच्छिन्नगुणवत्त्वेन इन्द्रादिपदाभिधात्रि श्रुतिश्च अभिधत्ते । इत्यस्याः हृदयं श्रुतेरर्थं; अहमेव वेद मदन्यः न कोपि वेदेत्यर्थः ।

"चत्वारिवाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।"

अस्यार्थः—वाक्—हरेः ; चत्वारि परिमितापदानि=चतुस्संख्याकत्वेन परिच्छिन्नानि वासुदेवादिरूपाणि ब्राह्मणाः विदुः ।

वाचः=हरेः; गुहा=हृदयगुहायां; निहिता=निहितानि; त्रीणि=वासुदेवादि रूपाणि; मनुष्याः=साधारणाः; नेङ्गयन्ति=न जानन्ति; तुरीयं=अनिरुद्धाख्यपदं, वदन्ति—जानन्तीत्यर्थः ॥

यद्यपीयं श्रुतिः वाग्विषया महाभाष्ये पस्पशाह्निके व्याख्याता । तथापि एषोऽऽर्थोपि पूर्वाचार्यैःवर्णितः ।

अद्वैतम् ॥

ईक्षत्यधिकरणम् ॥ ५ ॥

# ईक्षतेर्नाशब्दम् ॥ ५ ॥

गौणश्चेन्नात्मशब्दात् (६)

तन्निष्ठस्य मोक्षोपदेशात् (७)

हेयत्वावचनाच्च (८)

स्वाप्ययात् (९)

गतिसामान्यात् (१०)

श्रुतत्वाच्च (११)

सर्वागमान्तस्त्रिगुणं प्रधानं प्रत्यक्षतर्कादियुतं निदानम् ।
वदन्ति नैवं तदशब्दमेव 'तदैक्षते'त्यादि सकर्तृकत्वात् ॥ ७८ ॥

अप्तेजसोरीक्षति दर्शनाच्च 'कूलस्य वाञ्छा पतने' प्रसिद्धा ।
गौणेक्षणं तन्नहि देवतात्मसदादिशब्देक्षणदर्शनादेः ॥ ७९ ॥

प्रधानहेयत्वनिरूपणाच्च शरीरिणो मोक्षविबोधनाच्च ।
न तार्किकानामिव भिन्नहेतुः सर्वज्ञ ईशो हि जगन्निदानम् ॥८०॥

**अधिकरणार्थः** ॥ "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा. ६-२-१) "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" (छा. ६-२-३) इत्यादि विषयवाक्यम्। [तदर्थश्च; सत्=अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतं एकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते उपनिषद्भ्यः । एवशब्दः अवधारणार्थः सदेवेत्यर्थः । इदं जगत् तत् सदेवासीत् । अग्रे=जगदुत्पत्तेः प्राक्, इदानीमपि सदेवेत्यर्थः । एकमेव=स्वकार्यपतितं, अन्यन्नास्तीति एकमेवेत्युच्यते । अद्वितीयं=मृद्व्यतिरेकेण कुलालादि निमित्तकारणं घटादेरिव सहकारिकारण।भाववदित्यर्थः । द्वितीयं वस्त्वन्तरं न विद्यत इति तात्पर्यम् ।

सजातीयविजातीयस्वगतभेदरहितमित्यर्थः। तदैक्षत=तत् ऐक्षत; तत्=सत्; ऐक्षत=ईक्षां— दर्शनं कृतवदित्यर्थः। इदं तु सत् चेतनं। प्रधानं तु अचेतनं; तस्य दर्शनाभावादित्यर्थः ॥]

जगतः प्रधानं न कारणम्। अशब्दं हि तत्। श्रुतिप्रतिपाद्यं नेत्यर्थः। कुतः? ईक्षितृत्वश्रवणात् कारणस्य ॥

---

## विशिष्टाद्वैतम् ॥

### ईक्षत्यधिकरणम् ॥ ५ ॥

**ईक्षतेर्नाशब्दम् (५)**
**गौणश्चेन्नात्मशब्दात् (६)**
**तन्निष्ठस्य मोक्षोपदेशात् (७)**
**हेयत्वावचनाच्च (८)**
**प्रतिज्ञाविरोधात् (९)**
**स्वाप्ययात् (१०)**
**गतिसामान्यात् (११)**
**श्रुतत्वाच्च (१२)**

कार्यानुरूपं जगतो निदानं वक्तव्यमेतत् प्रकृतेर्विकारम्।
युक्तं ह्यशब्दं जगतः प्रधानं न युज्यते चेतनकर्तृकत्वात् ॥ ८१ ॥

विलक्षणेप्यास्ति च हेतुभावः प्रधानहेयत्वनिरूपणं च।
संकल्पपूर्वश्च जगद्विसर्गः तस्मात् परंब्रह्म जगन्निदानम् ॥ ८२ ॥

'आदेशमप्राक्ष्य' इति श्रुतेस्तु प्रशासितारं श्रुतवानिति त्वम्।
आदेशएवार्थ इति ब्रवीषि तदाऽनु मे शाधि गिरा स एव ॥ ८३ ॥

सच्छब्दार्थो विष्णुरेव ह्येकार्थो निस्समाधिकः ।
ज्ञानं कारणवाक्यस्थं नित्यज्ञानिनमाह तत् ॥ ८४ ॥

"तत्त्वं" पदार्थश्च तदन्तरात्मा "चराचरव्य"ेति महर्षिसूत्रात् ।
सर्वोऽपि शब्दश्चिदचित्परात्मविशिष्टबोधात् स इति प्रभाति ॥ ८५॥

तत्त्वं तत्सदृशश्चेति तदधीनो भवानिति ।
तच्छरीरं भवान् वेति तत्त्वमस्यर्थ ईरितः ॥ ८६ ॥

ब्रह्मैवसन् ब्रह्मणि लीयतेऽसौ इत्यादयो ब्रह्मसमानरूपाः ।
एवेति शब्दश्च समार्थकोसौ यथा च 'विष्णुक्रमणे' तथाऽत्र ॥ ८७ ॥

एकं च तत्त्वं पदमत्र विद्मः षष्ठीसमासाश्रयणादिना च ।
तद्दास तात्स्थ्यादि विशेषमर्थं दिशन्ति केचित् यतिराजशिष्याः ॥

मृल्लोह-कार्ष्णाय-सत्यवाक् तु नान्यस्य सत्त्वादि रुणद्धि किन्तु ।
ज्ञाते मृदादौ सति तद्विकाराः ज्ञाता भवन्तीति तदेव सत्यम् ॥

'इत्येव' शब्दाच्च तथा तदर्थः मृत्स्नैव सत्यं त्विति वेदवाक् न ।
द्रव्यं च मृल्लोहमुखं च नित्यं अनित्यमन्यच्च विकारजातम् ॥९०॥

ब्रह्मात्मसदहंशब्दाः भवन्ति ज्ञानिवाचिनः ।
ईक्षां चक्रे बिभेतीति चिन्मात्रस्य कथं भवेत् ॥ ९१ ॥

**अधिकरणार्थः** ॥ "सदेव सोम्ये"त्यारभ्य "तदैक्षत बहुस्यां प्रजायेयेति" इत्यादि (छा ६-२-१) विषयवाक्यम् ।

एतदर्थः—इदं—विभक्तनामरूपं जगत, अग्रे=सृष्टेः प्राक्; एकमेव= अविभक्तनामरूपतया एकत्वावस्थापन्नमेव । अद्वितीयं—अधिष्ठात्रन्तरशून्यं, सदेवासीदित्यर्थः । सच्छब्दः प्रमाणसंबन्धार्हलक्षणोपि अत्र परमात्मार्थबोधको भवति । तदैक्षत—संकल्पमकरोदित्यर्थः । एतेन चेतनस्य कर्तृत्वं अचेतनस्य नेति च लभ्यत इति ।

प्रधानं न जगत्कारणम् । अशब्दं=आनुमानिकं प्रधानं, कारणं न । ईक्षति धातोः श्रवणात् । 'इक् श्तिपौ धातुनिर्देशे' इति शब्दशास्त्रात् । अन्यथा धात्वर्थस्यापि ग्रहणे 'ईक्षितेः' इति निर्देष्टव्यं स्यात् इति श्रुतप्रकाशिकाचार्याः । अत्र 'प्रतिज्ञाविरोधात्' इत्येकं सूत्रमधिकम् ॥

एतदर्थश्च–

केचित् प्रधानं जगतो निदानं त्रैगुण्यरूपस्य सरूपमाहुः ।
"तदैक्षतेति श्रुतिराह सृष्टिं सङ्कल्पपूर्वां तदचेतनं न ॥"

इति श्रीशार्ङ्गपाणिस्तवे ( श्लो १३९ )

---

## द्वैतम् ॥

### ईक्षत्यधिकरणम् ॥ ५ ॥

ओं ईक्षतेर्नाशब्दम् (५)
ओं गौणश्चेन्नात्मशब्दात् (६)
ओं तन्निष्ठस्य मोक्षोपदेशात् (७)
ओं हेयत्वावचनाच्च (८)
ओं स्वाप्ययात् (९)
ओं गतिसामान्यात् (१०)
ओं श्रुतत्वाच्च (११)

**"वेदैश्च सर्वैरहमेव वेद्यः" पश्येत्सदात्मानमथेक्षते च ।**
**इत्यादि शास्त्राच्च समस्तशब्दवाच्यो हरिस्सोऽपि च मुख्य आत्मा ॥**

**मुख्यात्मनिष्ठस्य हि मोक्ष उक्तः आत्मान्यवाचो विसृजेति चोक्तं ।**
**एवं विधैवाखिलवेदवाचां मतिश्च दृष्टेति स शब्दवाच्यः ॥ ९३ ॥**

**अधिकरणार्थः** ।। " स एतस्मात् जीवघनात् परात्परं पुरिशयं पुरुष-मीक्षते " इत्यादि विषयवाक्यम् ।

" यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ", " अशब्दमस्पर्शं ", ' अवचनेन प्रोवाच ' [अवचनेन--वचनवृत्तिं विना लक्षणया ब्रह्मस्वरूपं गुरुरुपदिदेश इति पूर्वपक्षे अर्थः । साकल्येन प्रतिपादनं विना उपदिदेशेति सिद्धान्त्यर्थः ।] इत्यादिना विष्णोः वाच्यत्वादि निषेधो न । ईक्षणीयत्वादि श्रवणात् । शब्दवाच्यत्वाभावोपि न । अशब्दत्वादि श्रुतिस्तु पश्यन्तोपि न पश्यन्ति इतिवत् दुर्निरूपत्वे तात्पर्यम् । विष्णोः ' अवचनेन प्रोवाच ' " यद्वाचाऽनभ्युदितं " ' यतो वाचो निवर्तन्ते ' इत्यादि श्रुतिभिः अवाच्यत्व अग्राह्यत्वादिकं पूर्वपक्षीकृत्य ' वेदैश्च सर्वैरहमेव वेद्यः ' इत्यादिना वाच्यत्व-ग्राह्यत्व-ईक्षत्यादिकं सिद्धान्तितम् ।

" न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोपि न पश्यन्ति मेरोरूपं विपश्चितः ।। "

इति प्रमाणं उपन्यस्य विष्णोः दुर्निरूपत्वे पूर्वपक्षश्रुतेः तात्पर्यमिति वर्णितम् ।

अत्र सदेवेत्यादि श्रुत्यर्थस्तु—

" एकमेवाद्वितीयं यत् समाभ्यधिकवर्णनात् ।
स्वगतानां च भेदानामभावात् ब्रह्म शाश्वतम् ।।
भेदाभेदनिवृत्त्यर्थं एवशब्दोवधारकः ।
समाधिकनिवृत्त्यर्थं अद्वितीयपदं तथा ।।
भेदाभेदेप्येकशब्दो यतोवयविनि स्थितः ।
एकमेवेत्यतः प्राह नारायणमियं श्रुतिः ।।

इति प्रमाणाद्विष्णुरेव जगन्निदानम् । तत्सदृशो अन्यो नास्तीत्यर्थः । विजातीयभेदवर्जनं नाम कुत्रचित् न प्रसिद्धम् । प्रमाणाभावात् इति ।।

---

अद्वैतम् ॥

आनन्दमयाधिकरणम् ॥ ६ ॥

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् (१३)
तद्धेतुव्यपदेशाच्च (१४)
मान्त्रवर्णिकमेव च गीयते (१५)
नेतरोऽनुपपत्तेः (१६)
भेदव्यपदेशाच्च (१७)
कामाच्च नानुमानापेक्षा (१८)
अस्मिन्नस्य च तद्योगं शास्ति (१९)

आत्मानन्दमयश्शरीरसहितः संसारि जीवोऽथवा
सत्यं ज्ञानमिति प्रकृत्य कथितं ब्रह्मेति चिन्तास्थितौ ।
आनन्दाभ्यसनादयं हि परमं ब्रह्मेति निर्णीयते
प्राचुर्ये मयडत्र वक्तुमुचितं नायं विकारार्थकः ॥ ९४ ॥

मुदावृत्त्या मुत्प्रचुरात् मुद्धेतुव्यपदेशतः ।
संसारिजीवादपरः आत्मानन्दमयाभिधः ॥ ९५ ॥

न युक्तमेतत् सगुणात्मबोधात् ब्रह्मात्र पुच्छं भवतीति युक्तम् ।
सूत्रे प्रकृत्यभ्यसनात् यथा ते ब्रह्मेति शब्दाभ्यसनं ममापि ॥ ९६ ॥

किंचैवमानन्दमयोथ आत्मा दुःखाल्पभागेव न मुक्त आत्मा ।
विकारबाहुल्यमयट्प्रवाहे प्राचुर्यबुद्धिर्न हि युज्यतेऽत्र ॥ ९७ ॥

अधिकरणार्थः ॥ "तस्माद्वा एतस्माद्विज्ञानमयात् अन्यो अन्तर आत्माऽऽनन्दमयः" (तै २-५) इति विषयवाक्यम् ।

विशिष्टाद्वैतम् ॥

## आनन्दमयाधिकरणम् ॥ ६ ॥

आनन्दमयोभ्यासात् (१३)
विकारशब्दान्नेतिचेन्न प्राचुर्यात् (१४)
तद्धेतुव्यपदेशाच्च (१५)
मान्त्रवर्णिकमेव च गीयते (१६)
नेतरोनुपपत्तेः (१७)
भेदव्यपदेशाच्च (१८)
कामाच्च नानुमानापेक्षा (१९)
अस्मिन्नस्य च तद्योगं शास्ति (२०)

ब्रह्मानन्दमयोथवाऽयमखिलाविद्याविमुक्तः परं
ब्रह्मैव प्रचुरप्रकाशरविवत् प्राचुर्यरूपे मयट् ।
त्यक्तेयं विकृतिर्मनोमयपदे सर्वत्रचात्मान्तरः
जीवस्यानुपपन्नमेव जगतो बीजं विपश्चित् श्रुतेः ॥ ९८ ॥

ब्रह्मानन्दमयं जगाद स मुनिः "ते ये शतं" त्वादिना
ह्यानन्दाभ्यसनान्निरूपकगुणान् आनन्दमुख्यान् बहून् ।
आनन्दप्रचुरे तदल्पवसतिर्नेत्येव दुःखाल्पता
नेत्येवं प्रचुरप्रकाशरविवत् प्राचुर्यमत्राश्रितम् ॥ ९९ ॥

**अधिकरणार्थः** ॥ "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्माऽऽनन्दमयः" ( तै आन ५-२ ) इत्यादि विषयवाक्यम् ।

आनन्दमयशब्देन सूत्रे आनन्दपदस्यैव ग्रहणम् ॥ श्रुतिषु आनन्दमयशब्दस्य आनन्दशब्दस्य च अभेदेन ग्रहणात् । तथा च आनन्दशब्दवाच्यः परमात्मा । आनन्दपदाभ्यासात् ।

"त्वां शार्ङ्गपाणिः कवची किरीटी हारीति चोक्तौ त्वयि भाति सर्वम् ।
तथैव सत्यादि विशेषणानि ब्रह्मान्वयार्हाणि न ते विदन्ति ॥"

"सत्यादिशब्दाः स्वविरोध्यसत्यव्यावृत्तिवाच्या इति ते ब्रुवन्ति ।
खण्डश्च मुण्डश्च भवेत् किमेको विरुद्धदृष्टान्तमुदाहरन्ति ॥"

(श्रीशार्ङ्गपाणिस्तवे १५०-१५१)

इत्यादिना आनन्दगुणविशिष्टमेव ब्रह्मेति ॥

---

## द्वैतम् ॥

### आनन्दमयाधिकरणम् ॥ ६ ॥

ओं आनन्दमयोऽभ्यासात् (१२)
ओं विकारशब्दान्नेतिचेन्न प्राचुर्यात् (१३)
ओं तद्धेतुव्यपदेशाच्च (१४)
ओं मान्त्रवर्णिकमेव च गीयते (१५)
ओं नेतरोनुपपत्तेः (१६)
ओं भेदव्यपदेशाच्च (१७)
ओं कामाच्च नानुमानापेक्षा (१८)
ओं अस्मिन्नस्य च तद्योगं शास्ति (१९)

अन्यप्रसिद्धशब्दानां विष्णावन्वयमुच्यते ।
पादेऽस्मिन् ब्रह्मपुच्छादिशब्दो ह्यत्र विचार्यते ॥ १०० ॥

श्रुतिश्रुतानन्दमयो हि विष्णुं ब्रह्माणमीशं प्रकृतिं च वक्ति ।
'नैवं कवीनां परमं तदेव ब्रह्मे'व शाखा वदतीह विष्णुम् ॥

**पुच्छस्तु संकर्षणमेव वक्ति 'तमेवमि'त्यादि न चेतरेशम् ।
प्राचुर्यरूपार्थमयट्प्रयोगात् अन्नादि तुल्यान्न विकार इष्टः॥ १०२॥**

**अधिकरणार्थः** । " तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः " (तै आन ५-२) इत्यादि विषयवाक्यम् ।

आनन्दमयः ब्रह्मा वा रुद्रो वा प्रकृतिर्वा इति विशये विष्णुरेव । " तदेव ब्रह्म परमं कवीनां " इत्यादि श्रुतिवाक्यैः अन्यत्र प्रसिद्धार्थकानामपि इह विष्णुवाचकत्वमेव । प्रसिद्धब्रह्मशब्दाभ्यासात् । अन्नमये प्राचुर्यमेव अर्थः । "अद्यते अत्ति चेति व्याख्यानात् तत्प्राचुर्यं युज्यत" इति भाष्यात् यथा मत्तमयो ब्रह्म तद्वत् आनन्दमयोपि ब्रह्मेत्यर्थः । " पुच्छं संकर्षणः प्रोक्तः एक एव तु पञ्चधा " इत्युक्तेः पुच्छशब्दवाच्यः संकर्षण इत्यर्थः ।

आनन्दमयः लक्षणया, अन्नमय-प्राणमय-मनोमय विज्ञानमय बोधक इति आनन्दमयशब्दवाच्यः विष्णुरेव विष्णौ आवर्तितब्रह्मशब्दादेरभ्यासादि त्यर्थः ॥

---

अद्वैतम् ॥

अन्तरधिकरणम् ॥ ७ ॥

## अन्तस्तध्दर्मोपदेशात् ॥ २० ॥

**भेदव्यपदेशाच्चान्यः (२१)**

**अत्यल्पविज्ञानवतां च मोक्षं वक्तुं श्रुतिः ब्रह्म गुणैस्सुपूर्णम् ।
उपास्यमाहेति महर्षिरेवं निर्वक्ति कारुण्यवशात् बहुत्र ॥ १०३ ॥**

**रव्यक्षिमध्यश्रुतपूरुषोऽथ संसारिजीवस्स हिरण्यकेशः ।
मैवं स 'उत्' 'भूतपति'स्स 'सेतुः' इत्यादि वाग्भिस्सविमुक्त
(आत्मा ॥**

अधिकरणार्थः ॥ "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" (छा १-६-६, ७ ८) इत्यादि विषयवाक्यम् ।

"अथ य एषो अन्तरक्षिणी पुरुषो दृश्यते" (छा १-७ १-५) इत्यादि च । अक्ष्यादित्यान्तरस्थः परमेश्वर एव । संसारिजीवो न; परमात्मधर्मोपदेशात् । अत्र पुण्डरीकमित्यस्य रक्ताम्भोजमित्यर्थः । "पौण्डरीकाणि बर्हींषि भवन्ति" इत्यस्य विचारे पूर्वमीमांसायां सितांभोजार्थक "पुण्डरीकं सिताम्भोजं" इति कोशः त्याज्य एवेति निर्णीतम् । कप्यासं इति पदं अत्र पुण्डरीकपदस्य विशेषणम् । तथा सति कप्याससदृशपुण्डरीमित्यर्थः । अथवा यथा कप्यासं सूर्यमण्डलं, यथा पुण्डरीकं हृदयपुण्डरीकं (भगवतः उपासनस्थानत्वेन विहिते) तथा एवं अक्षिणीत्यर्थः । पूर्वत्र सितांभोजार्थवारणाय कप्यासं इति विशेषणतया उक्तः । अत्र "कपयोर्कैभ वानराः" इति कोशात् रथकाराधिकरणन्यायेन कपिरत्र मर्कटः; तस्य आसः पश्चात् भागः—रक्तवर्णः—तत्सदृशमित्यर्थः । रूढेर्बलवत्वात् ।

अत्र हीनोपमारूपवर्णनं कैश्चिदुद्भावितम् । तन्न दोषायेति भगवत्पादानां अभिप्रायः । तथा हि

"महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषस्सविष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चैः अचूचुरच्चन्द्रमसोभिरूपताम् ॥"

"अर्धन्दानववैरिणा गिरिजाप्यर्धं शिवस्याहृतम्
देवेत्थं धरणीतले स्मरहराभावे समुन्मीलति ।
गंगासागरमंबरं शशिकला नागाधिपः क्ष्मातरुम्
सर्वज्ञत्वमधीश्वरत्वमगमत् त्वां मां च भिक्षाटनम् ॥"

"अलङ्कारश्शंकाकरनरकपालं परिजनो
विशीर्णाङ्गोभृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोः
विधौवक्रे मूर्ध्निस्थितवति वयं के पुनरमी ॥"

"स्वयं महेशः श्वशुरो नगेशः सखा धनेशः तनयो गणेशः ।
तथापि भिक्षाटनमेव शंभोः बलीयसी केवलमीश्वरेच्छा ॥"

"भिक्षार्थी स क्व यातः सुतनु स बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये बृन्दावनान्ते क्वनु स मृगशिशुः नैवजाने वराहम् ।
बाले कच्चिन्न दृष्टो जरठवृषपतिः गोप एवास्य वेत्ता
लीलासल्लाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥"

"श्येनपक्षपरिधूसरालकाः सान्ध्यमेव रुधिरार्द्रवाससः ।
अङ्गना इव रजस्वलादिशः नो बभूवुरवलोकन क्षमाः ॥"

"राजमाषनिभैर्दन्तैः कटि विन्यस्तपाणयः ।
द्वारे तिष्ठन्ति राजेन्द्र छान्दसाश्श्लोकशत्रवः ॥"

"इन्दो इत्याह रेतो वा इन्दुः" इत्यादि यजुर्वेदे षष्टकाण्डे चन्द्रस्य रेतस्त्वेन वर्णनम्; "ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमेकितावाः" इति ब्रह्मणः कैवर्तदासद्यूतकृतादि जन्तूदाहरणवर्णनं श्रीकृष्णमहेश्वरोमालक्ष्म्यादीनां हीनवर्णनं यथा न दोषाय भवति तद्वत् ।

किंच

"विड्वराहं च षण्डं च यूपं दैवलकं शवम् ।
भुञ्जानो नेक्षयेद्विप्रः दृष्ट्वा चान्द्रायणं चरेत् ॥"

इति शास्त्रे लोके च नपुंसकस्य दर्शनस्पर्शनादिकं वैदिककर्मानर्हत्वं च सुप्रसिद्धम् । तथापि उपनिषत्सु नपुंसकत्वेनैव ब्रह्मशब्दः निर्दिष्टः । तदर्थविचारायैव निखिलं शास्त्रं प्रवर्तते । तादृश ब्रह्मणः हीनोपमेति न काचिदस्ति दोषभूता । बद्धजीवेषु तादृशवर्णनं दोषायैव । न तु हेयोपदेयशून्ये ब्रह्मणि । ऋग्वेदे द्वितीयारण्यके "नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्रीपुमान् ब्रुवन् । पुमांसं न ब्रुवन्नेनं

वदन् वदति कश्चन ॥ " "त्वं स्त्री त्वं पुमानसि, त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वंचसि " इत्यादि ।

अत एव श्रीभागवते गजेन्द्रकृतस्तवे—

"स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्डो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन्नचासत् निषेधशेषो जयतादशेषः ॥ "

इति ब्रह्मणः निषेधशेषवर्णनं यथा न दोषाय तद्वत् अत्र हीनोपमा न दोषाय । अत्र केश्चित्—

" कश्चिज्जल्पति मर्कटस्य जघनं कप्यासमक्ष्णोरयं
दृष्टान्तः कथमिष्यते भगवतस्सत्येव गत्यन्तरे ।
सामानाधिकरण्यमत्र पदयोः प्राप्तं कुतस्त्यज्यते
पद्मं चेद्विशिनिष्टि तत्सदृशी तच्छब्दस्तु गौणस्तव ॥ "

इत्येतच्छ्लोकेन अयमर्थो दूषितः । एतत् समाधानं "पुण्डरीक सितांभोजं" इति कोशप्राप्तसिताम्भोजरूपार्थवारणाय मर्कटजघनसदृशार्थकं कप्यासपदं विशेषणतया दत्तमित्युक्तमेव । गत्यन्तरं तु रथकाराधिकरण-न्यायविरोधात् त्याज्यमित्युक्तमेव ।

गत्यन्तरप्रकारश्च एवं—

(१) कं—जलं पिबति किरणैः इति कपिः; तेन अस्यत इति सूर्यविकसितमित्यर्थः । (२) कं पिबति इति—पद्मनालं; तत्र आस्त इति कप्यासं—नालस्थं पद्ममित्यर्थः ।(३) के प्यास्त इति कप्यासम् । "वष्टि भागुरि-रल्लोपं अवाप्योरुपसर्गयोः " इति शब्दशास्त्रविहित अपिपदाकार लोपः । जलनिष्ठं पद्ममित्यर्थः । (४) कपेः—सूर्यस्य; आसः—आसनं—सूर्यमण्डलम् । पुण्डरीकं—हृदयपुण्डरीकमित्यर्थः । उभयमपि उपासनस्थानतया श्रुत्यन्तरे दृष्टम् । तद्वत् आदित्ये अक्षिणी च उपासनस्थाने इत्यर्थः । (५) कप्यासम्—ईषद्विकसित पुण्डरीकसदृशमित्यर्थः । एतेषु मध्ये मर्कटासन सदृशार्थवर्णनमेव युक्तमिति

भगवत्पादानां मतम्। अन्यार्थाङ्गीकारे बहुविधक्लेशो वर्तत इति नेह तन्यते।

अत एव—

"षट्स्वर्थेषु समीरितेषु चतुरः कप्यासवाचस्त्रयः
गम्भीराम्भ इति प्रकृत्य भगवद्रामानुजाङ्गीकृताः।
तत्स्वीकार बहिष्कृताः तदितरे हेयास्त्रयस्तद्विदा
श्लोकैष्षड्भिरमीभिरित्थमुदितः सोयं विभागो मया॥"

इति श्लोकोक्तगम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलाम्लायतेक्षण इति कप्यासपदार्थः श्रीभाष्यकारसंमतः। मर्कटासनसदृशार्थ वर्णनं श्रीभाष्यकारेण अन्यकृतमनूद्य न दूषितम्। अर्वाचीनपण्डितैरेव क्लिष्टगत्याश्रयणेन अर्थो वर्णितः।

किं च "यो रेतसि तिष्ठन् यस्य रेतश्शरीरं" "सच्चत्यच्चाभवत्" इत्यादि श्रुतिभिः सर्वं भगवतः शरीरमित्यङ्गीकर्तृवते मर्कटासनसदृशवर्णनं दोषाय भवेत् किमिति पृष्टव्यम्।

अपि च सोमयागे सुब्रह्मण्याह्वानसमये "इन्द्र आगच्छ हरिव आगच्छ मेधातिथे; मेषवृषणश्वस्वस्यमेने, गौरावस्कन्दिन्नहल्यायैजारा, कौशिकब्राह्मणगौतम ब्रुवाण" इति इन्द्रस्याह्वानं श्रुतम्। तत्र इतिहासपुराणादिषु स्पष्टार्थस्य मेषाण्डस्य गौतमजायाचोरपुरुषस्य प्रतीतिर्भवतीति आह्वानं महासदसि न कृतं वा? तद्वत्।

अपि च "लोकवत्तु लीला कैवल्यं" इति सूत्रे मध्वचार्यभाष्ये"

"कुरुते केवलानन्दात् यथा मत्तस्य नर्तनम्।
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः॥"

इति प्रमाणं संगृह्य यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादि लीला, न तु प्रयोजनापेक्षया एवमेव ईश्वरस्य इत्युक्तम्। पूर्णानन्दरूपविष्णौ मत्तस्येति हीनोपमावर्णनं कृतम्। तद्वदेव श्रुत्यर्थविचारे प्रसिद्धार्थ एव ग्राह्यः, नाप्रसिद्धार्थ इति॥

---

अन्तरधिकरणम् ॥ ७ ॥

अन्तस्तद्धर्मोपदेशात् (२१)
भेदव्यपदेशाच्चान्यः (२२)

आदित्याक्षिगतं तु पूरुषपदं जीवं ब्रवीतीति चेत्
नैवं पाप्मनिवर्तकत्वकथनात् संकल्पसर्गादितः ।
किञ्चाप्राकृतरूपिणो भगवतो धर्मस्य निर्देशनात्
अक्ष्यादित्यगपूरुषस्तु परमात्मैवेति निश्चीयते ॥ १०५ ॥

त्रिपाद्विभूतौ श्रुति मानमस्ति दिवःपरो ज्योतिरपीति किञ्च ।
दिवि त्रिपादित्यपि नित्यमुक्तस्थानादि सत्त्वे *नरसूक्तमन्यत् ॥

सुबालकौषीतकि मर्त्यसूक्त छान्दोग्यमुख्याः कठवल्लिकाश्च ।
अप्राकृतस्थानपुरादि सत्त्वे जाग्रत्यमूः वेदशिरस्सु वाचः॥ १०७ ॥

**अधिकरणार्थः** ॥ "य एषो अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" (छा २-६-६-७, ८) "अथ य एषो अन्तरक्षिणि पुरुषो दृश्यते" (छा २-७-५) इत्यादि विषयवाक्यम् ॥

अत्र अक्ष्यन्तर्वर्ती परमात्मैव । परमात्मधर्मोपदेशात् । अत्र अपहत-पाप्मशब्दः कर्मवश्यतागन्धराहित्यपरः । पाप्मशब्दस्य कर्मोपदेशलक्षकत्वात् । अन्यथा—

"सर्वपाप्मोदितत्वं हि प्राकृतदाच्छादिते भवेत् ।
कदाचिदपि न ब्रह्म पापाच्छादितमिष्यते ॥"

* नरसूक्तम्=पुरुषसूक्तम् ।

इति सिद्धान्तविरोधस्यात्। अतः "अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्" इति श्रुत्या इच्छाधीनाप्राकृतदिव्यमङ्गलविग्रहवतः कप्यासपुण्डरीकसदृशाक्षिवर्णनं संभवत्येवेति।

"परावरसुखग्राह्यं प्रेमबोधप्रसावकम्।
स्वरूपात् स्वामिनो रूपं उपादेयतमं विदुः॥"

इति निगमान्तदेशिकैरेवोक्तम्।

अत्र कप्यासपुण्रीकपदार्थः पूर्वाचार्यैः

"कपिस्त्वादित्यः कं पिबति किरणैरित्यपि कपिः
बभस्तीत्याम्नातः स कपिरमुनास्तं यदिह तत्।
प्रतीमः कप्यासं दिवसकरतेजो विकसितः
स पद्म श्रीनत्वादगणि भगवच्चक्षुरुपमा॥"

"नालं कपिर्भवति कं पिबतीति तस्मिन्
यस्याऽस आसनमुशन्ति मनीषिणस्तत्।
कप्यासमुज्वलमुदारमिदं सरोजं
चक्षुर्निदर्शनमुदीरितमीश्वरस्य॥"

"कमुदकमिहप्यासो यस्यासनं यदिहोद्भवः
कविभिरुदितं कप्यासं तद्गभीरजलोदयात्।
शिशिरमधुरं श्रीमद्दामोदराक्षि निदर्शनं
भवति नलिनं लुप्ताकारस्त्वपिः पिहितादिवत्॥"

इति श्लोकत्रयेण संगृहीतः।

त्वामेव भान्तं ह्यनुभान्ति देवाः वह्नीन्दुसूर्यादय आत एमि।
सुदर्शनाद्यायुधपञ्चशाखं पङ्केरुहाक्षं श्रितमन्दहासम्॥

(श्री शार्ङ्गपाणिस्तवे१७८)

जलस्थ पङ्केरुहतुल्यमक्षि कीशस्य पृष्ठेन समं वदन्ति।
तेषां हृदिस्थोपि भवान् तदा किं न प्रारुणन्नीरज*चक्रपाणे॥ १७९॥

*नीरज=शंख

श्रुतिस्थकप्यासपदस्य नालस्थितारविन्देन समं तवाक्षि ।
आदित्यरश्मिस्फुटिताम्बुजेन सदृक्षमस्तीत्यपि वेति युक्तम् ॥ श्रीशा १८० ॥

त्रयीषु लोकेषु न दृष्टपूर्वा हीनोपमा सद्भिरवर्णितैव ।
तवोत्तमे दिव्यशुभे शरीरे हीनोपमायुक्तिरतीव गर्ह्या ॥ श्रीशा १८१ ॥

प्रियाप्रिये न स्पृशतोऽशरीरमित्यादिना मुक्ततनुर्न दूष्या ।
अप्राकृताकारशरीरसत्त्वे बहुप्रमाणानि भवन्ति शास्त्रे ॥ (श्री-शा १३६ )
विशुद्धसत्त्वाश्रयगोपुरादि लोकाश्च विष्णोस्सततं विभान्ति ।
यत् यस्य शेषं तदु तस्य वर्ष्म शरीरलक्ष्मेति मते न दोषः ॥श्री-शा१३७

सायुज्यसाधर्म्यसमानधर्मसाम्यादिशब्दाः परमं च साम्यम् ।
तादृक् तु स स्यादिति चास्ति मुक्तौ नैक्यं श्रुतावस्ति तथा स्मृतौ वा ॥

भवत्समाप्राकृतदेहभाजः सशंखचक्रा नम उक्तिनिष्ठाः ।
विपश्चिताऽऽनन्दभुजस्त्वया ते मुक्ता भवद्दास्यरता भवन्ति ॥ श्रीशा १४६ ॥
अश्वत्थतिल्याख्यसदेशमेत्य भवत्समीपार्हशरीरभूषाः ।
प्राप्याप्सरोभी रचिताःकदा नु द्राक्ष्याम्यहं वेत्रवतीसरश्च च ॥
(श्रीलक्ष्मीनृसिंहस्तवे पूर्वभागे २४४)

अनन्तसिंहासनमध्यभागे श्रीभूमिनीलाभिरुपाश्रितं त्वाम् ।
पुरस्त्रयी देहखगादिराजं कदा नु पश्येयमहं नृसिंह ॥ (श्रील-स्तव२४५)इति॥

---

## द्वैतम्

### अन्तस्थत्वाधिकरणम् ॥ ७ ॥

ओं अन्तस्तद्धर्मोपदेशात् (२०)
ओं भेदव्यपदेशाच्चान्यः (२१)

**समुद्रमध्ये पठितस्तु विष्णुः क्षीराब्धिशायी हरिरेव नान्यः ।**
**'य आण्डकोशे' पठितश्च विष्णुः तद्धर्मतोक्तेः न परादिशङ्का ॥**
**आत्मेन्द्रवाय्वोरपि विष्णुरात्मा षष्ट्यन्तशब्दैश्च भिदोपदेशात् ।**
**गुणैस्सुपूर्णं श्रुतिराह विष्णुं जगन्निदानं प्रकृतिर्न रुद्रः ॥ १०९ ॥**

**अधिकरणार्थः ॥** "अन्तस्समुद्रे मनसा चरन्तं" । (तै ३-११-२०) "यस्याण्डकोशे शुष्ममाहुः", (तै ३-११-२३) "इन्द्रस्यात्मानिहितः पञ्चहोता" (तै ३-११-२२) वायोरात्मानं कवयो निचिक्युः" (तै३-११-२३) इति विषयवाक्यम् ॥

यस्याण्डकोशेति— अण्डकोशं=ब्रह्माण्डाख्यस्थानं; शुष्मं=विष्णोर्वीर्यमाहुः सर्वं विष्णुशक्त्युपादानकमित्यर्थः । इन्द्रस्यात्मेति— इन्द्रस्यात्मा = इन्द्रान्तर्यामी; पञ्चहोता=चक्षुरादिपञ्चेन्द्रियेषु विषयहोता सन्; निहितः=सर्वहृदयसन्निहित इत्यर्थः । वायोरिति—वायोरन्तर्यामिणं ज्ञानिनः ददृशुरित्यर्थः ॥

अन्तश्श्रूयमाणो विष्णुरेव । विष्णुधर्मोपदेशात् । इन्द्रवाय्वादीनामात्मेति भेदनिर्देशात् । भेदः तात्विक इति नतु राहोश्शिर इतिवत् औपचारिकभेद इत्यर्थः ॥

---

अद्वैतम् ॥

आकाशाधिकरणम् ॥ ८ ॥

## आकाशस्तल्लिङ्गात् (२२)

**भूते परस्मिन्नपि च प्रसिद्धा वाय्वादि बीजात् जगतश्च बीजम् ।**
**तथापि सर्वस्य निदानमात्मा परायणत्वादि परात्मलिङ्गात् ॥**
**अग्निह्यधीतेऽत्र यथाग्निशब्दः बालं ब्रवीत्यत्र खशब्द आत्मा ।**
**उपक्रमार्थे यदि संशयस्स्यात् नियामकं लिङ्गबहुत्वमेव ॥ १११ ॥**

**अधिकरणार्थः ॥** "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं

यन्ति आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम् । (छा १·९·१) इति विषयवाक्यम् ॥

तत्र आकाशशब्दवाच्यः भूताकाशः, परंब्रह्म वेति विशये "पुंस्याकाशविहायसि" इत्यमरकोशात्, लोके रूढ्या भूताकाश एव प्रसिद्ध्या, वायोरग्निरित्यादि श्रुत्या, वेदे च वाय्वादीनां उत्पादकत्वश्रवणेन भूताकाश एव जगत्कारणमिति प्राप्ते, परायणत्वादि परमात्म-लिङ्गबाहुल्यस्य वाक्यशेषे सत्त्वात्, "अग्निरधीतेऽनुवाकं" इति लोकेऽपि प्रथमश्रुताग्निशब्दस्य चरमश्रुतानुवाकार्थाश्रयणेन माणवकपरत्वस्य दृष्टत्वात् परमात्मैवेति सिद्धम् ।

उपक्रमाधिकरणविरोधस्तु वाक्यशेषाधिकरणन्यायेन–

"बहूनामप्यसाराणां समवायो हि दुर्जयः ।
तृणैरावेष्टयते रज्जुः तया नागोपि बध्यते ॥"

अत्यन्तबलवन्तोपि पौरजानपदाजनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥

इत्यादि प्रमाणाच्च बाध्यते इति ॥

---

## विशिष्टाद्वैतम् ॥

### आकाशाधिकरणम् (८)

### आकाशस्तल्लिङ्गात् (२३)

**अकाश एवेह जगन्निदानं क्वचिच्छ्रुतस्सोपि च योगरूढ्या ।**
**आकाशते काशयतीति सर्वं परायणत्वाच्च परात्मकार्थः ॥**

**श्रुत्यैव लिङ्गस्य हि बाध इष्टः आकाशब्दः श्रुतिरेव चात्र ।**
**नावद्यतीत्यादिषु याज्ञिकोक्तौ लिङ्गाच्छ्रुतिस्सङ्कुचितैव दृष्टा ॥**

**रूढ्या महाभूतनभःखमाहेत्युपक्रमाकाशपदार्थसिद्धौ ।**
**तदानुगुण्येन तदन्यसिद्धौ नैवं 'यदेष'श्रुतिरत्र मानम् ॥ ११४॥**
**उपक्रमार्थस्य च संशये हि तच्चोपसंहारमपेक्षते च ।**
**परायणत्वादि तु वाक्यशेषगतं परंब्रह्म वदत्यदः खम् ॥ ११५॥**

**अधिकरणार्थः** ॥ "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्यकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति अकाशो ह वैभ्यो ज्यायानाकाशः परायणम्" (छा-१-९-१) इत्यत्र आकाशशब्दवाच्यः परमात्मा । परायणत्वादिपरमात्मलिङ्गबाहुल्यात् ।

उपक्रमाधिकरणन्यायेन रूढ्या, श्रुतिलिङ्गन्यायेन श्रुत्या च, भूताकाशपरत्वं संशय्य "अक्ताश्शर्कराः—तेजो वै घृतं" इत्यत्र वाक्यशेषस्थ घृतशब्देन, उपक्रमस्थ अञ्जनसाधनद्रव्यं घृतमिति यथा निर्णीयते; तद्वत् आ समन्तात् काशते, आ समन्तात् काशयति वेति योगरूढ्या "यदेष आकाश आनन्दो न स्यात्" इति आकाशशब्दार्थकानन्दपदश्रुत्यापि वाक्यशेषगतपरमात्मलिङ्गैः, अकाशशब्दार्थः परब्रह्मेति निर्णीयते । हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनावद्यति इत्यादौ हस्तादिसामर्थ्यरूप लिङ्गबलेन पुरोडाशग्रहणे हस्तस्य, आज्यग्रहणे स्रुवस्य, मांसग्रहणे स्वधितेरिव संकोचस्याश्रितत्वात्, "गंगायां घोषः प्रतिवसति" इत्यत्र चरमश्रुत निवासबलेन प्रथमश्रुतस्य गंगापदस्य तीरार्थकस्येव च आकाशपदार्थस्य परमात्मार्थकरूपसंकोचाश्रयणे न दोष इति ॥

---

## द्वैतम् ॥

### आकाशाधिकरणम् ॥ ८ ॥

### ओं आकाशस्तल्लिङ्गात् (२२)

**आकाश एवास्य गतिश्श्रुतौ यः स भूतखं वक्ति न युज्यते तत् ।**
**'परोवरीया'निति वाक्यशेषात् आकाशशब्दो हरिमेव वक्ति ॥**

अधिकरणार्थः ॥ आकाश शब्दवाच्यः विष्णुरेव । "परोमात्रया तन्वा वृधान स एष परोवरीयान् " (ऋ ७ ९९-१) इत्यादि श्रुतेः ।

परोवरीयानिति—उत्तमभूत रुद्रादिभारत्यन्तापेक्षया उत्तमो वायुः; तद पेक्षया उत्तमा लक्ष्मी; तदपेक्षया उत्तमः विष्णुरित्यर्थः । छान्दसप्रक्रियया शब्दव्युत्पत्तिः द्रष्टव्य इति ॥

---

## अद्वैतम् ॥

## प्राणाधिकरणम् ॥ ९ ॥

# अतएव प्राणः (२३)

प्राणं हि सर्वाण्यपि संविशन्तीत्यत्र स्ववाक्यस्थविशेषलिङ्गात् ।
सर्वेन्द्रियप्राणनियामकत्वात् प्राणः परात्मेति नियम्यतेऽत्र ॥

अधिकरणार्थः ॥ "कतमा सा देवतेति प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति " (छा-१-११-४'५) इत्यादि विषय-वाक्यम् ।

अत्रापि प्राणशब्दवाच्यः परमात्मेति स्ववाक्यस्थसर्वभूतकारणत्वदि विशेषलिङ्गात् । इदं अतिदेशसूत्रं ।

"शास्त्ररूपनिमित्तार्थकार्यतादात्म्यशब्दिताः ।
व्यपदेशश्च सप्तैतान् अतिदेशान् प्रचक्षते ॥ "

इति वैयाकरणोक्तरीत्या पूर्वाधिकरणोक्तसंशयपूर्वपक्षसिद्धान्ता एव 'अतएव' इति पदेन अतितिश्यन्ते ।

पूर्वत्र वाक्यशेषएव सिद्धान्तसाधकः । अत्र भूतसंवेशनोद्गमनरूप-वाक्यशेषस्य मुख्यप्राणेऽपि स्वापादिकाले संभवति इत्यधिकाशंका । उत्तरत्र अन्ना-दित्ययोः प्रतिहारोद्गीथयोः, प्रस्तावदेवतयोः निर्देशात् तत्साहचर्याच्च प्राणस्य अब्रह्मत्वाशङ्का । उपक्रमस्थस्ववाक्यगतसर्वभूतसंवेशनादिब्रह्मलिङ्गबाहुल्यं सिद्धान्-तसाधकं इति ॥

## विशिष्टाद्वैतम्

### प्राणाधिकरणम् ॥ ९ ॥

**अतएव प्राणः ॥ २४ ॥**

**प्राणं जगत्कारणमाह वेदः पूर्वोक्तलिङ्गेन परस्स आत्मा ।**
**काष्ठाशिलदौ तदभावतश्च वायुर्नबीजं जगतोऽप्रसिद्धेः ॥ ११८ ॥**

**अधिकरणार्थः** ॥ प्राणशब्दवाच्यः परमात्मा। निखिलजगत्प्रवेशनादि लिङ्गात । शिलाकाष्टादिषु वायुसंवेशनाद्यभावाच्च न प्रसिद्धवायुरित्यर्थः ।

---

## द्वैतम्

### प्राणाधिकरणम् ( ९ )

**ओं अत एव प्राणः ॥ २३ ॥**

**'त्वं प्राण' इत्यत्र च भोगशब्दात् प्रसिद्धवायुर्जगदीशितेति ।**
**रमापतित्वादि विशेषलिङ्गात् विशेषभोगस्य हरौ प्रसिद्धेः ॥ ११९ ॥**

**अधिकरणार्थः** ॥ "तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः भुजः करिष्यमाणः, यद्देवान् प्राणयो नव" (तै-आ-३-१४-४५) इति विषयवाक्यम् ।

अत्र प्राणशब्दवाच्यः विष्णुरेव । महानन्दार्थक महाभोगश्रवणात् । अत एव "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यादि तल्लिङ्गादेव विष्णुरित्यर्थः । तद्वै इति–हे विष्णो ! चतुर्मुखादि सर्वजीवात्मनां प्राणो अभवः=प्राणभूतस्सन् अन्तर्यामि सन्नित्यर्थः; भुजः=आनन्दान ; करिष्यमाणः=कृतवांश्च करीष्यमाणश्चेत्यर्थः; प्रजापतेः=हिररण्यगर्भस्य; महान् भोगः=महाभोगः-महानन्ददायीत्यर्थः; माहान् भोग इत्यत्र 'आन् महत' इति नकारस्य आकारादेशाभावः छान्दसः ।

यद्देवानिति— त्वं—हे विष्णो; नवदेवान्=नवेन्द्रियान् पायूपस्थयोः ऐक्याभिप्रायेण नवत्वोक्तिः । प्राणयः त्रैकालिकेपि अचेष्टय इत्यर्थः; तस्मात् प्राणवाच्योसीत्यर्थः ॥

---

## अद्वैतम्

### ज्योतिरधिकरणम् ॥ १० ॥

## ज्योतिश्चरणाभिधानात् (२४)

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम् (२५)**

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् (२६)**

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् (२७)**

**'परोदिवो ज्योति 'रिति श्रुतोयं त्रिवृत्कृतं तेज इहास्तु नैवम् ।**
**दिवि त्रिपात्त्वश्रवणात् स आत्मा सर्वाणि भूतानि पदित्यतश्च ॥**

**चतुष्पदा ऋक्समता ह्युपासा दृष्टा परत्रापि विराट्पदे सा ।**
**दिवो दिवीति ह्युपदेशभेदः वृक्षाग्र पक्षीव न वा विरोधः ॥१२१॥**

**अधिकरणार्थः ॥** "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादि विषयवाक्यम् (छा ३-१३-७)

अत्र दिवः परत्वेन श्रूयमाणः ज्योतिश्शब्दवाच्यः अग्न्यादित्यादिकं वा, उत परमात्मेति संशयः । ज्योतिश्शब्दस्य सर्वत्र प्रयोगसत्वात । "दिवि ज्योतिः" इत्युक्तत्वात् सूर्यादिकमिति पूर्वपक्षः ।

सिद्धान्तस्तु सैषा चतुष्पदा षड्विधा गायत्री, तदेतदृक्चाभ्यनूक्तम् । तावानस्य महिमा ततो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि; त्रिपादस्यामृतं

दिवि " (छां ३-१२-६) इति श्रुत्या गायत्र्याख्यचतुष्पदः ब्रह्मणः त्रिपादमृतं दिवि इति निर्दिष्टं प्रत्यभिज्ञायमानं चरणं अग्न्यादिकं निवार्य ब्रह्मेत्याह । दिवि इति सप्तम्यन्तं दिवः पर इति पञ्चम्यन्तं च वृक्षाग्रे श्येनः; वृक्षाग्रात् परतः श्येनः इत्यत्रेव न दोषापादकम् । गायत्री सादृश्यं च ब्रह्मणः— चतस्रः पादाः यस्यास्सा चतुष्पदा । षडक्षरैः चतुर्भिः पादैः सहिता गायत्री चतुष्पात्ब्रह्मेति । चतुर्विंशत्यक्षराणि गायत्र्यां वर्तन्त इति । षण्णां षण्णां अक्षराणां एकैकपादत्वेन प्रकल्प्य चतुष्पदा षड्विधा गायत्रीति तत्सादृश्यमुक्तं कैश्चित् । ' गायत्री वा इदं सर्वमि'ति चतुर्विंशत्यक्षरात्मिक गायत्र्याः सर्वात्मकत्वासंभवात्, गायत्र्याख्य विकारे अनुवर्तमानं जगत्कारणं ब्रह्म इह 'सर्व' शब्देन उच्यते । 'सर्वं खल्विदं ब्रह्म' इतिवत् कार्यकारणात्मक ब्रह्मैव गायत्री शब्देन उच्यत इति भगवत्पादानां अभिप्रायः ।

प्रसिद्धगायत्र्याः चतुष्पात्त्वं, पादानां षडक्षरत्वं च नास्ति । समुदाये विद्यमानानि चतुर्विंशत्यक्षराणि चत्वारि चतुरः पादान्, प्रतिपादं षडक्षराणि विभज्य चतुष्पात्त्वं गायत्र्याः प्रकल्प्य तत्सादृश्यवर्णनं न श्लिष्टतरं इति मत्वा 'इन्द्रश्शचीपतिः बलेन पीडितः दुश्च्यवनोवृषा, समित्सुसासहिः' इति कुत्रचित् दृश्यत इति तत्सादृश्यमुक्तं श्रीभाष्ये ।

अतः तदीयैरुक्तम्—

" गायत्रीनाम सामश्रुतिशिरसि परंज्योतिरध्यायि सिध्यत्
चातुष्पद्यन्तु भूतक्षितितनुहृदयैः षड्विधं तद्विधाभिः ।
गानत्रणादिकाभिः श्रुतिगतवचनव्यक्तिभेदात्तु सिद्धा
वाक् प्राणोक्तिः परार्थो स्वरसनिगमनं श्रुत्यधीनं तदेत् ॥

अयं अभिप्रायः । 'गायत्री वा इदं सर्वमि'ति चतुष्पात्त्वषाड्विध्याभ्यां ' इन्द्रः शचीपतिः ' इत्यादि षडक्षरत्वेन षाड्विध्येन च चतुष्पदा गायत्री क्वचिद्वर्तत इति तत्सादृश्यं ब्रह्मणः, भूतं एकः पादः, पृथिवी एकः पादः, शरीरं एकः पादः, हृदयं एकः पादः, इति चतुष्पात्त्वं ब्रह्मणः । श्रुतौ वाक्प्राणोक्तिरधिकतया श्रूयमाणा अन्यार्थेति श्रुतिस्वारस्यमत्रैव वर्तत इति ।

अत्र केचित् श्रुतौ छन्दश्शास्त्रे च चतुर्विंशत्यक्षरात्मकगायत्री, गायत्रीछन्दस्येव प्रसिद्धा। 'बृहत्साम तथा साम्नां गायत्री छन्दसामहं' इति गीतायामपि छन्दश्शब्दमुख्यार्थः गायत्रीछन्दस्येव प्रसिद्धः। प्रकृते 'तत्सवितुर्वरेण्यं' इत्यस्यां प्रसिद्धगायत्र्यां पादत्रयत्वसत्त्वेपि चतुर्विंशत्यक्षरसत्त्वात् तदानुगुण्येन अक्षराणि विभज्य पादचतुष्टयवत्त्वं प्रसाध्य भूत-पृथिवी-शरीर हृदय-वाक्-प्राणानां श्रूयमाणत्वात् षड्विधं प्रकल्प्य चतुष्पात्सादृश्यवर्णनमेव ब्रह्मणः युक्तम्।

अन्यथा पूर्वमीमांसायां 'तेष्वदर्शनादविरोधस्य समाविप्रतिपत्ति स्यात्' (जै १—३....८) इति सूत्रे पूर्वपक्षं कृत्वा 'शास्त्रस्थावा तन्निमित्तत्वात् (जै १—३—९) इति सूत्रेण सिद्धान्तवर्णनस्य विरोधापत्तेः। तथा हि 'वारा हि उपानहावुपमुञ्चते' (तै) इत्यत्र वराहपदस्य वायस-सूकरयोः प्रयोगदर्शनात् अत्र कथं उपानहौ धार्येते इत्याशंक्य 'वराहं गावोनुधावन्ति' इति गवानुधावनसमभिव्याहृतवराहशब्दस्य सूकर एव प्रसिद्धिरिति शास्त्रप्रसिद्धसूकरचर्मणा कृते उपानहौ गृह्येते इति सिद्धान्तितम्। शास्त्रीयानुमतप्रयोगस्यैव साधुत्वमङ्गीकृत्य देशान्तरीयप्रयोगाणां शास्त्रीयार्थवत्त्वे प्रमाणाभाव एवेति।

'अभियुक्तनरा ये ये बहुशास्त्रार्थवेदिनः।
ते ते यत्र प्रयुञ्जीरन् स सोर्थस्तत्त्वतो भवेत्॥'

इति शाबरभाष्यात् 'शवतिः गतिःकर्मा कांभोजेष्वेव भाषितो भवति; विकारे एनं आर्या भाषन्ते शव इति' इति महाभाष्याच्च क्वाचित्कान्यदेशीयखिलश्रुतिस्थ 'इन्द्रश्शचीपतिः' इत्यादिगायत्र्या सादृश्यवर्णनं माध्वभाष्यस्थ माठरायणादिश्रुतिवत् न शास्त्रीयं। पूर्वमीमांसायामपि बहुत्र ऊहाध्याये सामवेदाक्षराणामेव गणनायां ऊहो दृश्यत इति। किंच भूत-पृथिवी-शरीर-हृदय वाक्-प्राणषट्कं षडक्षरपादवत्त्वेन गणनायां साधकं अस्मिन् मते वर्तते। अन्यमते तु वाक्प्राणद्वितयं परार्थमिति परिकल्प्यत इति गौणम्। किंच दशार्हं

द्वादशाहं इति पदयोः यागे प्रसिद्धिः शास्त्रीया। आशौचिनां दशमेऽहनि सपिण्डीकरणदिने च प्रयोगो दृश्यते। अनेन दशाहमनुष्ठितं द्वादशाहमनुष्ठितं इति केनचिदुक्ते, यागकर्तुरेव अभिधानं प्रसिद्धम्। न तु दशरात्राशौचानुष्ठानं सपिण्डीकरणं च कृतं वेति यथा न गृह्यते तद्वत्; इति वदन्ति॥

किञ्च 'गायत्री वा इदं सर्वं' इति गायत्रीशब्देन ब्रह्मैकप्रतिपादक-तैत्तिरीयक-गत-'अम्भस्य पार' इति प्रश्नमध्यगत 'ओमित्येकाक्षरं ब्रह्म' इत्यारभ्य 'ब्रह्मभूर्भुवस्सुवरों' इत्यन्तं पठितगायत्र्येवात्र ग्राह्या। तस्यामेव ब्रह्मनिष्ठधर्मरूप-गुणसादृश्यं वर्तत इति तत्सादृश्यवर्णनं युक्तम्। किञ्च श्रीमद्रामायणगतचतुर्विंशति-सहस्रश्लोकमध्ये प्रत्येकसहस्रारम्भश्लोकसूचक

'तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरं।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥
"स हत्वा राक्षसान् सर्वान्" इत्यारभ्य
'यामेव रात्रीं शत्रुघ्नः पर्णशालां समाविशत्।
तामेव रात्रिं सीतापि प्रसूता दारकद्वयम॥'

इत्यन्तं चतुर्विंशतिश्लोकान् पठित्वा

'इदं रामायणं कृत्स्नं गायत्रीबीजसंयुतम्।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते॥'

इत्यन्तं गायत्र्यर्थप्रतिपादकगायत्रीरामायणमिति सर्वाभ्युपगतत्वेन प्रसिद्धत्वात् तादृशरामायणार्थबोधक-प्रसिद्धगायत्रीसादृश्यवर्णनमेव युक्ततरम्।

किञ्च 'इन्द्रश्शचीपतिरि'ति गायत्र्याः ब्रह्मनिष्ठगुणलेशस्याप्यप्रतिपादक-त्वात् केवलचतुष्पादवत्वं ब्रह्मणः 'त्रिपादस्यामृतं दिवि' इति 'ममैवांशो जीव-लोक' इति च दृश्यत इति तादृश चतुष्पादवत्वं 'इन्द्रश्शचीपति'रित्यत्र वर्तत इति तादृशसादृश्यस्वीकारे मृगपश्वादीनामपि चतुष्पादवत्वं वर्तत इति हीनोपमा-वर्णनमेव सम्भवेदिति तदपेशलमेव इति॥

---

## ज्योतिरधिकरणम् (१०)

ज्योतिश्चरणाभिधानात् (२५)

छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम् (२६)

भूतादिपादव्यपदेशोपपत्तेश्चैवम् (२७)

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् (२८)

ज्योतिर्जगत्कारणमित्यतश्च सूर्योनलो जाठरवीतिहोत्रः ।
मैवं त्रिपादस्य दिवीति सूक्त्या पादोस्य सर्वेत्यनया परः सः॥१२२॥

चतुष्पदा क्वचिदप्रसिद्धा गायत्र्यमिरव्येति न वक्तुमर्हा ।
'इन्द्रश्शची'त्यादि चतुष्पदा सा तत्साम्यचेतोर्पणमत्रशास्ति १२३॥

**अधिकरणार्थः**॥ ज्योतिश्शब्दवाच्यः परमात्मैव । सर्वभूतानां पादत्वेन अभिधानात् । चतुष्पदा गायत्री "इन्द्रश्शचीपतिः; बलेन पीडितः; दुश्च्यवनो वृषा; समित्सुसासहिः"; इति चतुर्विंशत्यक्षरा षडक्षरात्मिकपादवती क्वचिद्दृश्यते पाञ्चालशाखासु । तत्सादृश्यं ब्रह्मणः "दशाक्षरा विराट्" इति श्रुत्युक्तस्य 'ते वा एते पञ्चान्ये पञ्चान्ये दश संपद्यन्ते' (छा ४-३-८)इति "सैषा विराडन्नात" इत्यस्य दशत्वसंख्यासाम्याच्च अभेदेन चतुरङ्काये द्यूतविहारे कृतशब्दस्येव सादृश्यमित्यर्थः । अयं पक्षः अर्वाचीनैः गायत्रीसादृश्येन गौणार्थोपपादनापेक्षया लक्षणापक्ष एव उचितेति वर्णितम् । तथा हि "गायत्री वा इदं सर्वं" (छा ३-१२-१) इत्यत्र गायत्रीशब्दस्य गायत्र्याख्य-विकारे गौण इति भगवत्पादभाष्ये । श्रीभाष्ये तु गायत्रीशब्दस्य गायत्रीसदृशे गौण इति ।

अयमर्थः पूर्वाचार्यैरनेन श्लोकेन प्रदर्शितः —
'गायत्रीनामसामश्रुतिशिरसि परंज्योतिरध्यायि सिद्ध्यत्
चातुष्पद्यन्तु भूतक्षितितनुहृदयैः षड्विधं तद्विधाभिः ।

गानत्राणादिकाभिः श्रुतिगतवचनव्यक्तिभेदात्तु सिद्धा
वाक्प्राणोक्तिःपरार्था स्वरसनिगमनं श्रुत्यधीनं तदेतत् ॥'

अत्र कैश्चित् तत्सवितुरिति प्रसिद्धगायत्र्या सादृश्यवर्णनं ब्रह्मणः कृत्वा 'इन्द्रश्शचीपति'रिति अप्रसिद्धगायत्र्या वर्णनं न युक्तम्; अर्थप्रतीत्यभावादित्यादिना दूषितम् । तत्रेदमाचक्ष्महे—

इन्द्रश्शचीपतिरिति गायत्र्यां पादचतुष्टयं प्रतिपादं षडक्षराणि च दृश्यन्ते । अर्थश्च 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति न्यायात् इन्द्रपदस्य प्रसिद्धदेवेन्द्रबोधकत्वेऽपि 'साक्षादप्यविरोधं जैमिनिरि'ति सूत्रोक्तप्रकारेण 'इदि परमैश्वर्ये' इति धातुनिष्पन्नत्वेन इन्द्रशब्दस्य परमैश्वर्यरूपार्थकस्य ब्रह्मण्येव सम्भावितत्वात् तदानुगुण्येन शचीपतिरित्यस्य लक्ष्मीपतिरित्यर्थाङ्गीकारेण तदनुगुणतया अवशिष्टपदानामपि अर्थवर्णनस्य, यथा वा अन्यमते 'आनन्दमयोऽभ्यासात्' इत्यधिकरणार्थविचारे 'ब्रह्मपुच्छं प्रतिष्ठे'ति विषयवाक्यं कृत्वा अर्थवर्णने 'विकारशब्दान्नेति चेत्' इत्यादि सूत्राणां अर्थोपपत्तिः तदनुगुणतया वर्णनीया इत्युक्तिरिव अत्रापि सुलभत्वात् ब्रह्मनिष्ठगुणरूपधर्ममादाय लीलाविभूति त्रिपाद्विभूतिरूपपादचतुष्टयरूपार्थस्याप्यत्र सत्त्वेन इन्द्रश्शचीपतिरिति गायत्र्या सदृशवर्णनमेव ब्रह्मणः युक्ततरमिति ।

किंच, प्रसिद्धगायत्र्यां पादत्रय एव चतुर्विंशत्यक्षराणि सन्ति तत्राक्षरगणनया पादचतुष्टयवत्वं, प्रतिपादं 'तत्सवितुर्व रे–णीयं भर्गोदेव–स्यधीमहि । धियो–योनःप्रचोदयात्–इति पदविभागापत्त्या निरर्थकसमुदायरूपचत्वारः पादाः सम्भवन्तीति प्रसिद्धगायत्र्याः अर्थवत्वमेव हीयेतेति प्रसिद्धगायत्रीसादृश्यवर्णनमेवासमञ्जसमिति । एतादृशानामर्थवत्वाभावश्च 'अर्थवदधातुरप्रत्ययः प्रातिपादिकं' इति पाणिनीसूत्रमहाभाष्ये अर्थवत्ग्रहणस्य 'दशदाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डं अधोरुकं एतत्कुमार्याः स्फैय्यकृतस्य पिता प्रति शीनः' इत्यन्तसमुदायरूपस्य निरर्थकत्वेनार्थवत्वाभावात् प्रातिपदिकसंज्ञाभावरूप प्रयोजनवर्णनेन स्पष्टं ज्ञायते ।

किञ्च इन्द्रपदस्य ऐतरेयश्रुतौ 'स एतमेव पुरुषं ब्रह्म ततममपश्यदिद-मदर्शमिति तस्मादिन्द्रो नाम इदन्द्रो ह वै नाम, तस्मादिदन्द्रं सन्तं इन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः' इति परमात्मपरत्त्वदर्शनाच्च इन्द्रश्शचीपतिरिति गायत्रीवर्णनमेव युक्तमिति ॥

अपिच "समर्थः पदविधि"रिति पाणिनीसूत्रे महाभाष्ये "असम्भवः खल्वर्थादेशनस्य को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानां अर्थाना-देष्टुं; अनेकार्थत्वात् धात्वादीनां" इति 'भू सत्तायां' इति सत्ताद्यर्थनिर्देशश्च "उपलक्षणमन्यार्थानां" इत्यादिवर्णनात् प्रकृते इन्द्रश्शचीपतिरित्यादौ परब्रह्मार्थ-प्रतिपादनस्य सुसम्भवात् तत्सवितुरिति गायत्रीवर्णनमेव न युक्तमिति ॥

ननु पूर्वमीमांसायां सामगानप्रकरणे प्रगाथस्थले 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयं' इत्यादिसामोहगानेषु निरर्थकाक्षरगानस्य श्रुतत्वेपि 'ऋच्य-ध्यूढं सामे'ति वचनात् सामप्रकृतिभूतऋक्समुदायार्थवत्त्वमादाय यागीयकर्म यथा सार्थं भवति तद्वत् प्रकृते 'तत्सवितुर्वरे' इत्यादि विभागे अक्षराणां निरर्थक-त्वेऽपि समुदायार्थवत्त्वस्याश्रयणेन न दोष इति चेन्न। तत्र शास्त्रे विहितत्त्वात् तथानुष्ठाने न दोषः । सार्थं च कर्मभवेदित्युक्तं। प्रकृते तु एतद्गायत्र्यां ब्रह्मानु-सन्धानं कुर्यादिति विध्यभावात् ।

किञ्च 'तस्माद्गायन्तँ स्त्रियः कामयन्ते कामुका एनं स्त्रियो भवन्ति' इति यजुर्वेदषष्टकाण्ड-प्रथमप्रश्नषष्ठानुवाके 'तस्माद्गायते न देयं गाथा हि तद्-वृङ्क्ते' इति पञ्चमकाण्डप्रथमप्रश्न-पञ्चमानुवाकादिषु च 'तस्माद्गायतस्य मत्तस्य च न प्रतिगृह्यं, यत्प्रतिगृह्णीयात् शमलं प्रतिगृह्णीयात्' इति प्रथमाष्ठकतृतीयप्रश्नद्विती-यानुवाके च निषिद्धस्य गायकदानस्य श्रूयमाणत्वेपि "वाजिनां साम गायते" इति प्रथमाष्टक-तृतीयप्रश्नषष्ठानुवाके आपस्तम्बश्रौतसूत्रे सोमप्रश्ने (सूत्रं) 'तान् वृणीते सर्वान् वा एकैकशः' इत्यारभ्य 'उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यं इत्युद्गातॄन्' इत्यन्तेन सामवेदिनां सामगानविधानऋत्विग्वरणविधानाभ्यां 'ऋत्विग्भ्यो दक्षिणां ददाती'ति दक्षिणाविधानाच्च गायतां वरणदानादिकं

विशेषविधिना अङ्गीकृत्य तत्र यागसार्थक्यमित्र प्रकृते एतद्गायत्र्यां ब्रह्मदृष्टिः कर्तव्येति विधिर्नास्ति । तस्मात् पूर्वमीमांसादृष्टान्तवर्णनं न युक्तमिति ॥

ब्रह्मणि, इन्द्रश्शचीपतिरिति गायत्र्या च चतष्पात्त्वं तुल्यतया वर्तत इति तत्सादृश्यवर्णनाङ्गीकारे मृगपश्वादीनामपि तत्सम्भवात् हीनोपमा स्यादिति परोक्तदूषणं तु कप्यासपदविचारे हीनोपमाया अङ्गीकारे न दोष इति तैरेवोक्तत्वात् अत्र तद्दूषणोक्तिः न संगच्छत इति 'इन्द्रश्शचीपतिरित्'यादि गायत्रीवर्णनमेव श्लिष्टतरमिति ॥

गायत्रीरामायणप्रसिद्धिस्तु रामायणग्रन्थस्य स्तुतिरूपार्थे एवेति प्रकृतोपयुक्तता नेति ॥

एतदधिकरणतात्पर्यं च श्रीशार्ङ्गपाणिस्तवेप्यस्माभिरुक्तम्—
''आदित्यमध्यस्थहिरण्मयाभं शुभाश्रयत्वाय निजाश्रितानाम् ।
भजस्व दिव्यं पुरुषस्वरूपमित्युक्तिरस्त्यत्र तव स्वरूपे ॥ श्रीशा १०२ ॥
दिवः परो ज्योतिरपीति किंचित् ज्योतिस्स्वरूपं च विभात्यनन्ते ।
तस्मात् भवद्रूपमनेकधाऽभात् चैतन्यमात्रं ब्रुवतां गतिर्न (श्रीशा ॥१०३॥''

---

## द्वैतम्

### ज्योतिरधिकरणम् ॥ १० ॥

### ओं ज्योतिश्चरणाभिधानात् (२४)

**हृद्याहितं ज्योतिरिति श्रुतिस्तु प्रसिद्धमग्निं वदतीति तन्न ।**
**विकर्णचक्षुर्हि हरिः प्रसिद्धः कर्णादियोगो ज्वलने प्रसिद्धः ॥१२४॥**

**अधिकरणार्थः** ॥ "यो वेद निहितं गुहायां" (तै-३-२-२) विमे-कर्णापतयोविचक्षुर्वीदं ज्योतिर्हृदय आहितं' (ऋ-६-९-६) इति ज्योतिश्शब्दस्य अग्निसूक्तत्वात् अग्निरेवार्थ इति प्राप्ते ज्योतिश्शब्दवाच्यः विष्णुरेव । चरणाभिधानात् — कर्णादीनां विचरणाभिधानात्— । ज्योतिस्सकासात्

कर्णादीन्द्रियाणां विरुद्धचरणाभिधानात्; विरुद्धचरणं च साकल्येन तदविषय-त्वम्। सूत्रे चरणशब्देन विरुद्धचरणमेवोच्यते। धातोरेव विचरणमर्थः। उपसर्गाणां द्योतकत्वमेवेति वैय्यकरणसिद्धान्तात्। "सहि परोमात्रया तन्वा-वृधान" इत्यादिना कर्णादिविदूरः 'इति भाष्यात्। मे कर्णा=कर्णौ; विपतयतः-=विरुद्धं पततः, विचक्षुर्वीदं=विरुद्धं पतति; हृदये आहितं=आसमन्तात् स्थितं-यत् ज्योतिः तदपि अत्यन्तं कर्णादिविरुद्धमस्तीति ज्योतिश्शब्दवाच्यः विष्णुरेवेत्यर्थः॥

परोमात्रया इत्यादि—मात्रया=इन्द्रियगणापेक्षया; परः= दूरः विष्णुरित्यर्थः॥

---

## द्वैतम्

### गायत्र्यधिकरणम् ॥११॥

**ओं छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात् तथा हि दर्शनम्**
**भूतादि पादव्यपदेशोपपत्तेश्चैवम् (२६)**
**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्। २७।**

**दिवःपरो ज्योतिरपीह विष्णुः अग्न्याद्युपासाधिषणार्पणाय।**
**छन्दोभिरेतैर्हरिरेववाच्यः गायत्यसौ त्रायति गायतीति ॥१२५॥**
**सर्वाणि भूतानि च विष्णुपादः 'ज्यायान् ततश्चेति च पूरुषस्सः।**
**लोकत्रयं केचन सप्तलोकान् तद्वद्दिवो ज्योतिरथो दिवीति ॥१२६॥**

**अधिकरणार्थः॥** 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा ३-१३-७) तावानस्य महिमा अतो ज्यायाँश्च पूरुषः पादोस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि' इत्यत्र ज्योतिश्शब्दवाच्यः विष्णुः। 'गयत्री वा इदं सर्वं' इति समारम्भेऽपि 'सर्वछन्धाभिधो ह्येषः सर्वदेवाभिधोह्यसौ सर्वलोकाभिधो ह्येषः तेषां तदुपचारतः' इति प्रमाणात् अग्निगायत्र्यादिशब्दार्थरूपोसौ इति चेतोर्पणार्थं निगद्यते; सर्वभूतादिपादवत्वाच्च।

'दिवि' इति 'दिवः परेति' एकस्मिन् वस्तुनि कथमुपपद्यत इति चेत्; त्रिसप्तलोकापेक्षया उभयस्मिन्नप्यविरोधात्। भूर्भुवस्सुवरिति त्रिलोक्यभिप्रायेण 'दिवि' इति निर्देशः। महरादिलोकापेक्षया 'दिवः पर' इति॥

---

अद्वैतम्

इन्द्रप्राणाधिकरणम् (११)

प्राणस्तथानुगमात् ॥ २८ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् (२९)

शास्त्रदृष्टया तूपदेशो वामदेववत् (३०)

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

'प्राणोऽस्मि तं मामि'ति वाक्यदृष्टप्राणः परात्माऽनुगमात्तथैव ।
नेन्द्रो न वायुर्न च जीव एष ह्यध्यात्मसंबन्धबहुत्वसत्वात् ॥
वक्ता हि जीवोपि यथैव वामदेवो ऋषिस्सूर्य इति ब्रवीति ।
उपासनानां त्रिविधं च युक्तं ब्रह्मैववाक्यान्वयदर्शनात्तत् ॥१२८॥
यो बुध्यतासौ स स एव चाभूदित्यागमान्तार्थविशेषविज्ञः ।
प्रज्ञात्मशब्दाद्यभिधेयमर्थं मामित्युपादिक्षदभेददृष्टया ॥ १२९ ॥

(पाठान्तरम्)

प्रज्ञात्मशब्दाद्यभिधेयमर्थं 'प्राणोस्मिमामि'त्यमुपादिशत् सः

**अधिकरणार्थः** ॥ "सहोवाच, प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" (कौ ३. १)इत्यत्र प्रतर्दनः इन्द्रं गत्वा मह्यं हिततममुपदिशतु भवान् इति पप्रच्छ। सोपि 'प्राणोस्मि प्रज्ञात्मा; तं मामायुरमृतमित्युपास्व इति जगाद। तत्र 'माम्' इति 'प्राण' इति केवल इन्द्र एवोपास्यः, उत वायुमात्रं, उत जीवः, उत परमात्मेति संशयः। तत्र प्राणशब्दवाच्यः परमात्मा; वाक्यनिष्ठानां पदार्थानां ब्रह्मप्रतिपादने समन्वयात्। 'मां' इत्युक्तिः 'तद्यो यो देवानां प्रत्यबुध्यत, स एव तदभवत् अहं मनुरभवं सूर्यश्च''इति वामदेववत् शास्त्रदृष्टया उक्तिरितियुक्तेः।

ननु, प्राणस्य ब्रह्मपरत्वेऽपि जीवमुख्यप्राणलिङ्गदर्शनस्य कथमुपपत्तिरितिचेत्, प्राणधर्मेण ब्रह्मोपासनं, प्रज्ञाधर्मेण ब्रह्मोपासनं, ब्रह्मधर्मेण ब्रह्मोपासनं इति उपासात्रैविध्यप्रदर्शनायेत्यत्रत्यैः 'आयुरमृतं' 'प्रज्ञायै सर्वाणि भूतानि'' 'स एष प्राण एव प्रज्ञात्मा' इति श्रुतिवाक्यैरवगम्यत इति ॥

---

## इन्द्रप्राणाधिकरणम् (११)

प्राणस्तथानुगमात् (२९)

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् (३०)

शास्त्रदृष्ट्या तूपदेशो वामदेववत् (३१)

जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात् ३२

प्राणोऽहमायुस्त्वममुपास्व तातेत्यवोचदिन्द्रो जगतो निदानम् ।
मैवं जरामृत्युसुखेतरादि मे नेति सूक्तेः परमात्मबोधात् ॥ १३० ॥

प्राणस्य मुख्यस्य सजीवकस्य दृष्टानि लिङ्गानि न तत्पराणि ।
तत्तच्छरीरं तदुपासितव्यं ब्रह्मेति वेदान्तगिरो वदन्ति ॥ १३१ ॥

नाभावरा एवमिहैव सर्वं प्रतिष्ठितं प्राण इतीन्द्रवाचा ।
श्रीवामदेवोक्तिवदिन्द्र आह 'प्राणोऽस्मि'शब्दं न तु जीवमत्र ॥ १३२ ॥

चिदात्मकं ब्रह्मशरीरभूतं सर्वान्तरञ्चेति विविच्य विधात् ।
उपास्तिभेदत्रितयं प्रवक्तुं 'तम्मामि'ति प्राह सुराधिराजः ॥१३३॥

अधिकरणार्थः ॥ इन्द्रप्राणनिर्दिष्टः परमात्मा । आनन्दाद्यन्वयात् । नाभावरावर्पिताः एतमेवैता भूतमालाः प्रज्ञामात्रास्वर्पिताः (कौ-३-९) इत्यादिना ब्रह्मणि सर्वेषां प्रतिष्ठितत्वोक्तेश्च ।

ब्रह्मणः स्वरूपेणानुसन्धानं, भोक्तृवर्गशरीरकत्वेनानुसन्धानं, भोग्य-भोगोपकरणशरीरकत्वेनानुसन्धानं चेति त्रिविधोपासनविधानाच्च ।

'सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तस्सर्वमिदं सर्वं मयि सर्वं सनातने ॥' इति

प्रह्लादवत्'अहं मनुरभवं सूर्यश्चाहं' इति वामदेववच्च इन्द्रोक्तेश्च ।

श्रीशार्ङ्गपाणिकृपया प्रथमेऽग्रपादः
भाष्यत्रयार्थविवृतौ लभतेस्म पूर्तिम् ।
अस्पष्टजीवगतलिङ्गकवाक्यशुद्धिं
अत्यन्तमाह निगमान्तवचस्त्वमुत्र ॥ १३४ ॥

---

## द्वैतम्

### अन्तिमप्राणाधिकरणम् ॥(१२)

ओं प्राणस्तथानुगमात् (२८)

ओं न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमाह्यस्मिन् (२९)

ओं शास्त्रदृष्ट्यातूपदेशो वामदेववत् (३०)

ओं जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह-तद्योगात् (३१)

'एषोसुरि'त्यागमवागपीयं 'प्राणोहमस्मी'ति च विष्णुमाह ।
अध्यात्मसंबन्धबहुत्वसत्त्वात् नेन्द्रो न वायुर्जगतो निदानम् ॥१३५॥
* जीवासुकज्ञापकवेदवाक्यं उपासनायास्त्रिविधं प्रवक्ति ।
अन्तर्बहिस्सर्वगतत्ववाचा ध्यानं च विष्णोस्त्रिविधं प्रसिद्धम् ॥१३६॥

**अधिकरणार्थः** ॥ 'तं देवाः प्राणयन्तः स एषोसुः स एष प्राणः प्राणऋच इत्येव विद्यात् तदयं प्राणोधितिष्ठतीति' (ऐ-आ-२-९-५) अत्र 'एषोसुः स एष प्राणः' इति प्राणशब्दवाच्यः विष्णुरेव 'विष्णुमेवानयन्देवा विष्णुं भूतिमुपासते । स एव सर्वत्रेदोक्तः तद्रथो देह उच्यते ॥' इत्युक्तत्वात् । अत्रापि 'प्राणोधितिष्टति' इत्युक्तेः प्राणो विष्णुरेव। 'प्राणस्त्वं प्राणः सर्वाणि भूतानी'ति बह्वध्यात्मसंबन्धस्य अत्र वाक्ये सत्त्वात्। 'प्राणो वा अहमस्मिऋषे' इति वक्तुरात्मव्यपदेशो न।

स्वप्नो माया गृहश्शय्या जाग्रदाभास आत्मनः ।
नामरूपक्रियावृत्तिः संविच्छास्त्रं परं पदम् ॥

---

* जीवासुकः=जीवमुख्यप्राण इत्यर्थः ।

इति भागवतात्, शास्त्रं = अन्तर्यामीत्यर्थः; शास्त्रदृष्ट्या=विष्णुदृष्ट्या इत्यर्थः ।

'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्त्रत्वहेतुतः ।
न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम् ॥'

इति पुराणवाक्यात् अहं मनुरभवं सूर्यश्चेति वामदेववत् इन्द्रस्योपदेशः ।

ननु 'तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति; तावन्ति शतसंवत्सरस्य अह्नां सहस्राणि भवन्ति' इति बृहतीसहस्रगताक्षरवाच्य-षट्त्रिंशत्सहस्रसंख्याकानि अह्नां रूपाणि शतायुषः पुरुषस्य भवन्तीत्यर्थकात् जीवलिङ्गात् 'प्राणं विना न च ब्रह्म तं विना प्राण एव च' इति प्राणसंवादादिमुख्यप्राणलिङ्गाच्च प्राणशब्दवाच्यः न विष्णुरितिचेन्न । अन्तर्बहिस्सर्वगतत्वेनेति उपासात्रैविध्यस्य विष्णोराश्रितत्वाच्च प्राणः विष्णुरेव ।

'केषांचित् सर्वगत्वेन केषांचिद्धृदये हरिः ।
केषांचिद्बहिरेवासौ उपास्यः पुरुषोत्तमः ॥'
'अग्नौ क्रियावतां विष्णुः योगिनां हृदये हरिः ।
प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम् ॥'

इत्युपासात्रैविध्यस्योक्तेः । अत्र प्राणशब्दवाच्यः प्राणान्तर्यामी विष्णुरेवेत्यर्थः । जीवदेहे विष्णोः शतवर्षाणि नियामकतया स्थितिरित्यभ्युपगमात् तदन्तर्यामित्वं युक्तमित्यर्थः ॥

ननु, देवादिभिः विष्णुः सर्वगतत्वेन उपास्यः ऋष्यादिभिः स्वस्वहृदये उपास्यः मनुष्योत्तमैः बहिरेवोपास्य इति अन्तर्बहिस्सर्वगतत्वेन उपासात्रैविध्यं विष्णोरुक्त्वा तत्र प्रमाणं केषांचित् सर्वगत्वेनेति श्लोक उपन्यस्तः । अनन्तरं उपासाचातुर्विध्यप्रतिपादक "अग्नौ क्रियावतामिति' श्लोको उपन्यस्तः भाष्ये । सः कथं सङ्गच्छत इति चेत् प्रतिमोपासनं अग्न्युपासनं चेति द्वयमपि एकमेव बहिरुपासनं इति कृत्वा उपासात्रैविध्यवर्णनं युक्तमिति भाष्याभिप्राय इति न दोष इति ॥

प्राणस्तथानुगमात्——"ता वा एता' इत्यादिश्रुतौ प्राण एव प्राणऋच इति श्रूयते । तत्र प्राणशब्दवाच्यः; तथा='तद्वै त्वं प्राणोऽभव' इत्यादाविव विष्णुरेव । 'तं देवाः प्राणयन्त' इत्यनुगमात् । तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं (ऐ-आ-२-१-४) इत्यादौ ब्रह्मशब्दाभ्यासाच्च नारायणं वायुं च देवाःशिष्यादिभ्य उपदिदिशुः ॥

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाऽध्यक्षाणां
मतत्रयनिरूपकाणां काळि वङ्गीपुरं
रङ्गाचार्याणां कृतिषु मतत्रयसारसंग्रहे
प्रथमाध्याये प्रथमः पादः ॥

---



# प्रथमाध्याये द्वितीयः पादः ॥

श्रीकोमलाम्बा भर्तारमपर्याप्तामृताह्वयम् ।
कुम्भपुर्यां शेषतल्पे शयानं शार्ङ्गिणं भजे ॥ (१३७)

## अद्वैतम्

### (1) सर्वत्र प्रसिद्ध्यधिकरणम् । (१२)

१ सर्वत्रप्रसिद्धोपदेशात् । (३२)
२ विवक्षितगुणोपपत्तेश्च । (३३)
३ अनुपपत्तेस्तु न शारीरः । (३४)
४ कर्मकर्तृव्यपदेशाच्च । (३५)
५ शब्दविशेषात् । (३६)
६ स्मृतेश्च । (३७)
७ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च ।
८ संभोगप्राप्तिरिति चेन्न वैशेष्यात् (३९)

मनोमयत्वादिगुणैर्विशिष्टः ब्रह्मोतजीवः क्रतुगोचरः स्यात् ।
शारीरधर्मश्रवणाद्धि जीवः नोपक्रमब्रह्मपदान्वयात्तत् ॥ १३८ ॥
संसारिभोगाप्तिरहो परस्य स्यात्तर्हिवैशेष्यमिहेतरत्र ।
आविद्यकस्यात्मन एव भोगः न शुद्धरूपस्य परेश्वरस्य ॥ १३९ ॥

पूर्वपादे स्पष्टब्रह्मलिङ्गकानि उपनिषद्वाक्यानि व्याख्यातानि । द्वितीय-तृतीयपादयोः अस्पष्टब्रह्मलिङ्गकानि वेदान्तवाक्यानि व्याख्यास्यन्ते ॥

**अधिकरणार्थः**—‘सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत; अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति सक्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः’ इत्यारभ्य “एतद्ब्रह्म एतमितःप्रेत्य

अभिसंभवितास्मि इति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः। (छा ३·१४) इत्यन्तं विषयवाक्यम्।

अत्र मनोमयादिशब्दवाच्यः ब्रह्म वा जीवो वेति विशये जीव इति पूर्वपक्षः। स्थलान्तरे मनोमयत्वादीनां जीवविषयत्वस्य प्रसिद्धत्वात्। तज्जलानिति शब्दव्युत्पत्तिस्तु—तस्माज्जातं तस्मिन् लीनं तस्मिन्ननिति (चेष्टत इति); तज्जं च तल्लं च तदनं च तत् तज्जलान्; अवयवघटकतच्छब्दलोपः छान्दसः। बहुलं छान्दसीति पाणिनीसूत्रात् (७ ३-९७)

राद्धान्तस्तु सर्वासूपनिषत्सु ब्रह्मणः जगत्कारणत्वं प्रसिद्धम्। तादृशोपक्रमस्थब्रह्मपदानुषङ्गेन मनोमयादीनामाश्रयतया ब्रह्म वक्तुं शक्यते। उपसंहारेऽपि एतद्ब्रह्मेति श्रुतत्वात् सन्दंशन्यायेन ब्रह्मप्रकरणावगमाच्च ब्रह्मशब्दयोर्मध्ये पठितमनोमयादीनां ब्रह्मण्येवान्वय इति सिद्धम्।

सन्दंशो नाम एकानुवादेन विधीयमानयोः अङ्गयोरन्तराले विहितत्वं यथा "अभिक्रामं जुहोति" इति अभिक्रमणं, प्रयाजाङ्गमध्यपठितत्वेन प्रयाजाङ्गं भवति, तद्वत् उपक्रमोपसंहारमध्यपठित-ब्रह्मशब्दमध्यपठितानां मनोमयादीनां ब्रह्मण्येव तात्पर्यमिति॥

---

## विशिष्टाद्वैतम्

### (१) सर्वत्रप्रसिद्ध्यधिकरणम्। (१२)

१ सर्वत्रप्रसिद्धोपदेशात्। (३३)

२ विवक्षितगुणोपपत्तेश्च। (३४)

३ अनुपपत्तेस्तु न शारीरः। (३५)

४ कर्मकर्तृव्यपदेशाच्च। (३६)

५ शब्दविशेषात्। (३७)

६ स्मृतेश्च। (३८)

७ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च। (३९)

८ संभोगप्राप्तिरिति चेन्न वैशेष्यात् । (४०)

"मनोमयः प्राणशरीर" इत्थं श्रुतौ मयड्प्रत्ययतः स जीवः
मनोमयाद्याश्च गुणाः परस्मिन् दृष्टास्ततो ब्रह्मसमाश्रितास्ते ॥ १४०
"सर्वं खलु ब्रह्म" च 'तज्जलानि'त्यत्र श्रुतं ब्रह्म न जीवमाह ।
'सर्वात्मता संसृतिनिष्ठितस्य न संभवत्येव ततः परात्मा ॥ १४१ ॥
कृत्स्ने जगत्यत्र तदात्मकत्वं विधीयमानं परमेव वक्ति ।
विवक्षितास्सर्वगुणाः परस्मिन् ब्रह्मण्यतो जीवपरं न चेदम् ॥ १४२ ॥
समस्तकल्याणगुणाकरं तत् जगन्निदानं न तु निर्विशेषम् ।
तेनैव रक्ष्यं तत एव जातं तस्मिन् प्रलीनं निखिलं जगद्धि ॥ १४३ ॥

अस्पष्टजीवलिङ्गकानि उपनिषद्वाक्यानि व्याख्यास्यन्ते द्वितीये पादे । "अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च । जीवप्रधानयोरादौ वाक्यजातं विचिन्तितम् ॥" इति सेनेश्वराचार्योक्तेः ।

अधिकरणार्थः 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिल्लोके पुरुषो भवति' इत्यारभ्य 'इति ह स्माह शाण्डिल्यश्शाण्डिल्यः' इत्यन्तं (छा-३-१४) विषयवाक्यम् ।

मनोमयत्वादिगुणकः जीवो वा परमात्मा वेति विशये मनोविकार प्राणशरीरत्वादि लिङ्गात् जीव इति पूर्वपक्षः । राद्धान्तस्तु विद्यान्तरे मनोमयत्वादिकं परमात्मान एव दृश्यत इति तदानुगुण्येन अत्रापि तद्गुणकः परमात्मेति ।

अत्र मनोमयत्वादिकं विचार्य 'अथवा' इत्यारभ्य 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा ३-१४-१) इति विषयवाक्ये ब्रह्मशब्दवाच्यः जीवो वा परमात्मा वेति सन्दिह्य उपक्रमे उपसंहारे च ब्रह्मशब्दप्रयोगात् मध्यवर्तिनां सत्यकामत्वादीनां गुणानां परब्रह्मण्येव समन्वयात् ब्रह्मशब्दवाच्यः परमात्मैवेति सिद्धान्तितम् । वेदान्तसारे वेदान्तदीपे च 'सर्वं खल्विदं ब्रह्म' इत्यादि वाक्यमेव विचारितम् । अतः श्रीभाष्यकृतामत्रैव तात्पर्यमिति ज्ञायते । योजनान्तरे

तु 'धातोस्तन्निमित्तस्यैव' इत्यादि व्याकरणसूत्रेषु प्रेत्युदाहरणतया दत्ते 'ओयते' 'औयत' इत्यादौ पूर्वस्मिन्नस्वारस्यं प्रकल्प्य परस्मिन्नेव तात्पर्यमिति वर्णनमिव अत्रापि मनोमयादिवाक्यविचारे अध्याहारादि क्लेशरूपास्वारस्यमस्तीति वर्णनमपि युज्यत एव।

अत्र कैश्चित् मनोमयत्वादिवाक्यविचारे अस्वारस्यमाशंक्य "सर्वं खल्विदं" इति वाक्यं परिगृह्य व्याख्यातमित्युक्तं। तन्नस्वरसं। तथाहि तद्भाष्यकृतां भगवत्पादपक्षनिरासाभिप्रायो यदि स्यात् तदा अधिकरणान्तरादाविव अत्रापि स्वयमेव निरासं कुर्युः। तथात्र न कृतं। उदाहरणद्वयं त्रितयं च यत्र श्रुतं तत्र

" सर्वव्याख्या विकल्पस्य द्वयमेव प्रयोजनम्।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा॥ "

इति मीमांसकोक्तेः विषयव्याप्त्यर्थं तथा वर्णितमिति वक्तुं शक्यते। अस्वारस्य-तात्पर्यवर्णनं न युक्तमिति प्रतिभाति। तथा हि 'विशेषाभावात् विपरीतं कस्मान्न भवति' इति न्यायात् 'सर्वं खल्विदं ब्रह्म' इति वाक्यविचार एव अस्वारस्यं वक्तुमपि शक्यते। आरम्भे ब्रह्मशब्दश्रवणमिव उपसंहारेऽपि 'एतद्ब्रह्म' इति श्रवणात् प्रकरणं सर्वं संदंशन्यायेन ब्रह्मपरमेवेति उपक्रमाधि-करणन्यायादिना अवगम्यत इति ब्रह्मोपासनप्रकरणमेवेति जीवपरत्वाशंका नोदेति इति।

मनोमयादिवाक्यविचारे तु प्रकरणान्तरात्, मनोमयादौ जीवाशङ्का युक्ता। 'सर्वं खल्विदं ब्रह्म शान्त उपासीत' इत्येकं प्रकरणम्। वाक्यार्थस्य समाप्तत्वात्। 'अथ खलु' इति प्रकरणान्तरारम्भद्योतक 'अथ' शब्द सत्त्वाच्च। दहराधिकरणे छान्दोग्ये 'एवमेषसंप्रसादोस्माच्छरीरात् समुत्थाय परं ज्योति-रुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति' इत्यत्र जीवप्रकरणमध्ये 'स उत्तमः पुरुषः' इत्यत्र प्रकरणान्तरद्योतकाथशब्दाद्य-भावेऽपि उत्तमपुरुषपदं परब्रह्मपरं इति भवद्भिरङ्गीकृतम्। प्रकृते अथशब्द-सत्त्वे प्रकरणान्तरमित्यस्य किं बाधकम्।

मनोमयादिवाक्ये अध्याहारादिक्लेशवर्णनं कैश्चिदुद्भावितम्। तदपि न युक्तं। सन्निहितपूर्वस्थित 'सर्वं खल्विदं' इति वाक्यस्थपदानुषङ्ग-पदार्थानुषङ्गादिभिः सिद्धेऽर्थे अध्याहारक्लेशो न संभवेदेव।

'अन्यार्थं प्रकृतमन्यार्थमपि भवति', 'शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते; उपस्पृश्यते च, शाल्यश्च भाव्यन्ते' इति महाभाष्यात्। पुरोडाशकपालेन तुषानुपवपति; अनुषङ्गाधिकरणं, प्रसङ्गादुपकारकं इत्यादि मीमांसान्यायादिसत्त्वाच्च। किञ्च 'न ह्येकमुदाहरणं योगारंभं प्रयोजयति' इति महाभाष्यात्' 'अचः परस्मिन् पूर्वविधौ' इति सूत्रे

'स्तोष्याम्यहं पादिकमौदवाहिं ततश्वोभूते शातनीं पातनीं च।
नेतारावागच्छतं धारणिं रावणिं च ततः पश्चात् स्रंस्यते ध्वंस्यते च ॥'

इति उदाहरणबाहुल्यदर्शनाच्च प्रकृतेऽपि उदाहरणबाहुल्यप्रदर्शन एव तात्पर्यं श्रीभाष्यकृतामपीति सिद्धम् ॥

---

## द्वैतम्

### (१) सर्वगत्वाधिकरणम्। (१३)

१ ओं सर्वत्र प्रसिद्धोपदेशात्। (३२)

२ ओं विवक्षितगुणोपपत्तेश्च। (३३)

३ ओं अनुपपत्तेस्तु न शारीरः। (३४)

४ ओं कर्मकर्तृव्यपदेशाच्च। (३५)

५ ओं शब्दविशेषात्। (३६)

६ ओं स्मृतेश्च। (३७)

७ ओं अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न
निचाय्यत्वादेवं व्योमवच्च। (३८)

८ ओं संभोगप्राप्तिरिति चेन्नवैशेष्यात्। (३९)

पादे द्वितीये सर्वत्र विश्रुतानां त्रयीषु च।
लिङ्गात्मकानां शब्दानां विष्णौ वृत्तिर्निगद्यते ॥ (१४४)
विष्णुं कवीनां परमं तदेव ब्रह्मेति शब्दोपि तमेव वक्ति।
"स योत" इत्थं सविता स वायुः स इन्द्र इत्यादि गुणोपपत्तेः ॥१४५॥
आत्मानमस्मै वदतीति वेदात् सकर्मकर्तृश्रवणान्नजीवः।
ब्रह्मैतमाचक्षत इत्यतोहमात्मा गुडाकेश इति स्मृतेश्च ॥ १४६॥
नारायणस्सर्वगतोपि वीर्यात् न दोषभाक् व्योमवदल्पतोपि।
समानदेहावपि विष्णुजीवौ सर्वज्ञतादेर्नहि तुल्यभोगः ॥१४७॥

अधिकरणार्थः— "स यश्चायमशरीरः प्रज्ञात्मा" इत्यादिना सर्वत्र उच्यमानः नारायण एव। "सयोतोश्रुतोगतोमतोनतोदुष्टोविज्ञातो............ आत्मेति विद्यात्।" अतः= व्याप्त इत्यर्थः। "स हि न ते विष्णो जायमानः" इत्यादिना अश्रुतत्वादि गुणस्यापि विष्णावेवोपपत्तेः। चक्षुर्मयत्वादिगुणयुक्तं परमात्मानं, परस्मै=अयोग्याय, शंसति=उपदिशति चेत् अस्य वेदाः दुग्धदोहाभवन्ति ॥ "आत्मानं परस्मै शंसति" (ऐ-३-२-३) इति श्रुतेः। 'दुग्धदोहा अस्य वेदा भवन्ति एतमेव ब्रह्मेत्याचक्षते'। इति हतोः। दुग्धदोहा भवन्ति=व्यार्था भवन्ति ॥

"सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः।
सर्वज्ञाल्पज्ञता भेदात् सर्वशक्त्यल्पशक्तितः।
स्वातन्त्र्यपारतन्त्र्याभ्यां संभोगो नेशजीवयोः ॥"

इत्यादिना जीवपरयोः एकशरीरस्थसत्त्वेपि न समानभोगप्राप्तिः।

सर्वत्र="एतं ह्येव बह्वृचाः महत्युक्थे मीमांसन्ते" इत्यादिश्रुतौ श्रूयमाणं ब्रह्म बिष्णुरेव; प्रसिद्धोपदेशात्= "एतमेव ब्रह्मेत्याचक्षते" इति ब्रह्मोपदेशादित्यर्थः

---

## अद्वैतम्

### (२) अत्त्रधिकरणम् (१३)

(९) अत्ता चराचरग्रहणात् (४०)
(१०) प्रकरणाच्च । (४१)

यस्यौदनो ब्रह्म-नृपादिसर्वं अग्निस्सजीवः परमेश्वरो वा ।
स्वादत्ति जीवोपि च वह्निरन्नात् अन्योह्यनश्नन्नभि-
चाकशीति ॥ राजतेऽत्र ॥ १४८ ॥
कृत्स्नात्तृता ब्रह्मण एव सिद्धा "न जायते वा म्रियते" परात्मा ।
तस्मादिहात्ता परमेश्वरस्सः चराचरात्ता न च वह्निजीवौ ॥ १४९ ॥

**अधिकरणार्थः** "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः । (कठ-१-२-२५) ॥ इत्यत्र अग्निजीवपरमात्मनां साधारणधर्मश्रवणात् संशयः । चराचरत्ता परमात्मेति सिद्धान्तः । अग्निजीवयोः सर्वात्तृत्वासंभवात् ।

---

## अद्वैतम्

### (३) गुहाधिकरणम् (१४)

(११) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् (४२)
(१२) विशेषणाच्च । (४३)

"ऋतं पिबन्तौ" च "गुहां प्रविष्टौ" 'छायातपाव'त्र हि
बुद्धिजीवौ ।
जीवेश्वरौ वेति च संशयेऽस्मिन् जीवेश्वरावागमसुप्रसिद्धौ ॥ १५० ॥
पिबत्त्यृतं यद्यपि बुद्धियुक्तः जीवः परात्मा ह्यपिपास एव ।
तथापि पाने परमात्मनश्च प्रयोजकत्वादिह कर्तृतापि ॥ १५१ ॥

**अधिकरणार्थः** "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" ।

(काठ–१—३—१) इत्यत्र बुद्धिजीवौ, जीवेश्वरौ वा पिबन्ताविति विशये कर्मफलादनात् एकः बुद्धियुक्त जीवः; कर्मफलानदनेन प्रकाशमानत्वात् परः परमात्मा। पिबन्ताविति उभयोरपि जीवेश्वरयोः कर्तृता साम्येऽपि एकस्य प्रयोजककर्तृत्वं, श्रुत्यन्तरे कर्मफलानदनस्य परमात्मन उक्तत्वात्। "छात्रिणो गच्छन्ति' इतिवत् एकेनापि छात्रिणा बहूनां छत्रित्वोपचारवत् पिबतां पाययतश्चात्र एकशेषेण निर्देशः। अथवा पक्तेत्युच्यमाने पाचयितुरपि प्रयोजककर्तुः यथा वा बोधः तथा कश्चित् पिबति, कश्चित् पाययति इति। अत्र अन्तर्भावित-णिजित्यर्थः। अत्र श्रीभाष्ये अत्तेत्यारभ्य "विशेषणाच्च इत्यन्तं सूत्रचतुष्टयं एकाधिकरणत्वेन वार्णितम्। अत्र तु अधिकरणद्वयेन।

कैश्चित् अत्र एक प्रकरणस्थानां विशेषतः संशयपूर्वपक्षानुदयादिति हेतोः अधिकरणद्वयवर्णनं न घटत इत्युक्तम्।

अत्र केचित्, श्रीभाष्यकारैरेव द्युभ्वाद्यधिकरणे "प्रकरणात्" इति सूत्रे "प्रकरणं चेदं परस्य ब्रह्मण" इति 'अदृश्यत्वादि गुणको धर्मोक्तेरि'त्यत्रैव प्रदर्शितम्। कैश्चन धर्मैः"प्रकरणविच्छेदाशङ्कामात्रं पर्यहार्ष्म" इत्युक्तेः एकोनसहस्राधिकरणन्यायेन वर्णकान्तरेण वा कृत्वाचिन्तया च वा अधिकरणबहुत्वस्य बहुधा पूर्वमीमांसायां दृष्टत्वाच्च अधिकरणान्तरवर्णनं युक्तमेव। एकप्रकरणस्थवाक्येष्वपि अर्थविशेषसंशयपूर्वपक्षोदयसंभवात् अर्थविशेषरूप बुद्धिजीवपरमात्मनां संशयसन्दर्शनात् पूर्वपक्षोत्थितेस्संभवात्, वर्णकान्तरस्य वा कृत्वाचिन्तायाश्च वा संभावनया अधिकरणद्वयवर्णनदोषोक्तिः न घटते। किंच आकाशशब्दार्थनिर्णये "आकाशस्तल्लिङ्गात्" इत्यधिकरणेन सिद्धेऽपि "दहर उत्तरेभ्यः" "आकाशो अर्थान्तरत्वादि व्यपदेशात्" इत्यधिकरणेऽपि किंचित् आशङ्कान्तरं कृत्वा समाधानवचनं ब्रह्मसूत्रेष्वपि दृश्यते।

मध्व भाष्येऽपि अधिकरणान्तरेणैव विचारितं। किञ्च "प्रकरणाच्च" "जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्", "विकरणत्वान्नेति चेत्तदुक्तम्"

"तथा प्राणः" "अत एव प्राणः" इत्यादि सूत्राण्यपि पुनरुक्तिशङ्काजनकान्यपि सूत्रकारोपि प्रणिनाय । अतः एतादृशार्थेषु दोषवर्णनं न युक्तियुक्तं इति वदन्ति ॥

---

## विशिष्टाद्वैतम्

### (२) अत्त्रधिकरणम् । (१३)

(९) अत्ता चराचरग्रहणात् । (४१)

(१०) प्रकरणाच्च । (४२)

(११) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । (४३)

(१२) विशेषणाच्च । (४४)

**यस्य ब्रह्म च राट् च भक्तमभवत् मृत्युश्च यद्व्यञ्जनम्**
**जीवब्रह्म किमत्रचेति विशये भोक्तैव सर्वादनात् ।**
**मैवं स्थावरजङ्गमौ हि विघसः पापठ्यते ब्रह्मणः**
**किंच ब्रह्मजजीवमत्र परमात्मानं विदित्वेत्यतः ॥१५२ ॥**

**अधिकरणार्थः** "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः । (कठ-१-२-२५) इत्यत्र

ब्रह्मणः क्षत्र्याद्यन्नादनात जीव इति पूर्वः पक्षः । अन्नभोजने यथा वा व्यञ्जनमुपकारकमपि अन्ततः व्यञ्जनस्यापि भक्षणं, तद्वत् यमेन जगत्संहारं कारयित्वा अन्ततः प्रलयकाले यमस्यापि भक्षणं भवतीति श्रुत्या चराचरादनस्यैव अत्र भानात् अत्ता ब्रह्मैवेत्यर्थः ।

अपि च गुहां प्रविष्टौ ऋतपानकर्तारौ "पिबन्ताविति" अत्र प्रकरणे श्रूयेते । तयोर्मध्ये एकः कर्मफलं पिबति । अन्यः जीवं पिबेति प्रेरयति । उभयोरपि कर्तृत्वं न्याय्यमेव । पिबंश्च पिबंश्च "पिबन्तौ" इत्येकशेषः । एकत्र पिबतेः अन्तर्भावितणिजित्यर्थः । तथा च जीवपरमात्मानावेव उपास्योपासक-भावेन श्रूयेते इति ।

---

## द्वैतम्

### (२) अत्तृत्वाधिकरणम् । (१४)

(९) ओं अत्ता चराचरग्रहणात् (४०)

(१०) ओं प्रकरणाच्च (४१)

अत्तीति सर्वं ह्यदितेर्न युक्तं चराचरात्तृत्वमिदं हि विष्णौ ।
स्रष्टा च पाता च तथैव चात्ता स्वसृष्टसंवत्सरमात्ति तस्मात् ॥ १५६॥

**अधिकरणार्थः** "स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं" (बृ-३-२-५) इति श्रुत्या अदितिदेवताया अत्तृत्वं प्रतीयत इति पूर्वपक्षः। अत्ता विष्णुः; चराचरात्तृत्वस्य प्रतीयमानत्वात्। न हि चराचरस्य सर्वस्य अत्तृत्वं अदितेः भवति ।

"स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।
वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा ॥"

'एकः पुरस्तात् य इदं बभूव यतो बभूव भुवनस्य गोपाः। यमप्येति भुवनं संपराये स नो हरिः घृतमिहायुषेत्तु देवः। ' इत्यादि श्रुतेः।

स यद्यदिति—सः संवत्सरनामकश्चतुर्मुखो यद्यदेवासृजत तत्तदत्तुं स मृत्युनामा जनार्दनः;-अध्रियत-मनश्चकार-आदच्च सर्वं वा अत्तीति यत् तदेव अदितेः-जनार्दननामकब्रह्मणः, अदितित्वं अदितिशब्दवाच्यत्वे प्रवृत्तिनिमित्तमिति ॥,

"यद्यद्ब्रह्मासृजत्पूर्वं तत्तदत्ति जनार्दनः ।
अदितिर्नाम तेनासौ भगवान् पुरुषोत्तमः ॥
उपास्तेयः परं देवं एवमत्तीति सर्वदा ।
स योग्यतानुसारेण सर्वात्तासौ भवत्युत ॥"

इति भाष्यम् ॥

## द्वैतम्

### (३) गुहाधिकरणम् । (१५)

(११) ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । (४२)

(१२) ओं विशेषणाच्च । (४३)

'गुहां प्रविष्टावि'ति यौ पिबन्तौ आत्मान्तरात्मा हरिरेक एव ।
शुभं पिबत्यन्यमसौ न चात्ति जीवेश भेदस्य च सत्यतोक्तेः ॥ १५४॥

अधिकरणार्थः "ऋतं पिबन्तौ सुकृतस्य लोके" इत्यादि श्रुतौ पिबन्तौ प्रतीयेते । तौ हरिरेव आत्मा अन्तरात्मेति च उभयथा वर्तत इति पिबन्तौ शब्देन हरिरेवोच्यते । "आत्मान्तरात्मेति हरिः एक एव द्विधास्थितः ।" "शुभं बिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ॥" इत्यादि प्रमाणात् । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे=पुण्यनिमित्ते शरीरे हृदयगुहाप्रविष्टौ, परार्धे=रुद्रादिभ्य अति पूर्णे, परमे=सर्वजीवोत्तमे वायौ; प्रविष्टौ=ऋतं सुकृतफलं भुञ्जानौ, आत्मान्तरात्मेति रूपविशेषौ वर्तते इति स हरिरेव । इति ॥

---

## अद्वैतम्

### (४) अन्तराधिकरणम् । (१५)

(१३) अन्तर उपपत्तेः । (४४)

(१४) स्थानादिव्यपदेशाच्च । (४५)

(१५) सुखविशीष्टाभिधानादेव च । (४६)

(१६) श्रुतोपनिषत्कगत्यभिधानाच्च । (४७)

(१७) अनवस्थितेरसंभवाच्चनेतरः । (४८)

विज्ञनात्मा देवतात्मा परो वा छायात्मा वेत्यक्षिगः पूरुषश्च ।
मुख्यात्माऽयं नावरेऽत्रामृतत्वं संयद्वामत्वादिकं युक्तमीशे ॥ १५५॥

उपास्यरूपं सकलैर्गुणैश्च स्थानैश्च सर्वैरभियुक्तमेव ।
सर्वासु विद्यासु च विश्रुतं यत् न संभवत्यतदतो परत्र ॥ १५६॥

यद्देवयानेन पथोत्तरेण नावर्तते मानवमत्र गच्छन् ।
प्रतीयमाने च क-खे सुखार्थे ब्रूतः परात्मानमिहाक्षिनिष्ठम् ॥ १५७ ॥

**अधिकरणर्थः** "य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" (छा ४-१५-१) इति विषयवाक्यम् ।

अत्र अक्षिपुरुषः प्रतिबिंबात्मा, विज्ञानात्मा, देवतात्मा, उत परमात्मा, इति विशये, अक्ष्यन्तरवर्ती परमात्मैव । अमृतत्वाभयत्व-संयद्वामत्व-भामनित्वादि गुणान्वयोपपत्तेः । पुनरावर्तनाभावप्रद-देवयानगमनाच्च । "यदेव कं तदेव खं" इति परस्परविशेषणेन आनन्दार्थबोधाच्च परमात्मैव ।

"अत्र अत एव च स ब्रह्म" इत्यन्यत् सूत्रमधिकं श्रीभाष्ये ।

---

## विशिष्टाद्वैतम्

### (३) अन्तराधिकरणम् (१४)

(१३) अन्तर उपपत्तेः । (४५)
(१४) **स्थानादिव्यपदेशाच्च ।** (४६)
(१५) **सुखविशिष्टाभिधानादेव च ।** (४७)
(१६) **अत एव च स ब्रह्म ।** (४८)
(१७) **श्रुतोपनिषत्कगत्यभिधानाच्च ।** (४९)
(१८) **अनवस्थितेरसंभवाच्च नेतरः ।** (५०)

**'य एष' इत्यक्षिगपूरुषस्तु ब्रह्मात्मदेवप्रतिबिम्बमध्ये ।**
**आत्मामृतं ब्रह्म च भामनिश्च 'कं ब्रह्म खं'चेति परं ब्रवीति ॥ १५८॥**
**ब्रह्माक्षिगं ये समुपासतेऽत्र भुञ्जन्ति मोक्षानुगुणं फलं ते ।**
**किंचार्चिरादिर्गतिरत्र दृष्टा सैवाक्षिगंब्रह्म विनिश्चिनोति ॥ १५९ ॥**

"य एषोऽक्षिणि पुरुषो दृश्यते" (छा ४-१५-१) इत्यादि विषयवाक्यम्।

अत्र अक्षिपुरुषः प्रतिबिम्बात्मा, चक्षुरिन्द्रियाभिमानिदेवता, जीवात्मा, अथ परमात्मेति संशयः। अक्ष्यन्तरः परमात्मा; अमृताभयादिगुणान्वयोपपत्तेः। कं खमिति सुखविशिष्टबोधात "चक्षुषि तिष्ठन्नि"ति चक्षुस्थितिनियमनादिबोधात्; एतदक्षिपुरुषविदः मोक्षानुगुणफलादिश्रवणात्; अर्चिरादिगतिश्रवणाच्च। एतेषां अन्यत्रासंभवाच्च। अत्र "अत एव च स ब्रह्म" इति चतुर्थं सूत्रमधिकं।

---

## द्वैतम्

### (४) अन्तराधिकरणम्। (१६)

१३ ओं अन्तर उपपत्तेः। —४४

१४ ओं स्थानादिव्यपदेशाच्च। ४५

१५ ओं सुखविशिष्टभिधानदेव च। ४६

१६ ओं श्रुतोपनिषत्कगत्यभिधानाच्च। ४७

१७ ओं अनवस्थितेरसंभवाच्च नेतरः। ४८

**आदित्यान्तरवर्तिवह्निपुरुषज्ञानादपापो भवेत्**
**इत्युक्तं तदिहाक्षिपूरुपपदं वह्निं ब्रवीतीति न।**
**विष्णुस्सर्वमिति त्रिपात्तदमृतं ब्रह्मेतिसंशब्दनात्**
**वामन्यादिगुणाच्च विष्णुगमनादर्केऽन्यभावादितः॥ १६०॥**

**अधिकरणार्थः**। "य एष आदित्ये पुरुषः * सोहमस्मि" इत्यादौ अग्नीनामेव आदित्यादिस्थत्वं उच्यते। अक्ष्यादित्ययोः ऐक्यात 'य एषो अन्तरक्षिणि पुरुषो दृश्यते' इत्यत्रापि अग्निरेवोच्यत इति पूर्वपक्षे प्राप्ते 'अन्तरः— अक्ष्यन्तर्वर्ती पुरुषः—विष्णुरेव; अमृतत्व—ब्रह्मशब्दाद्युपपत्तेः

* सोहमस्मि=मदन्तर्यामीत्यर्थः॥

वामन्यादिगुणान्वयात् 'कं ब्रह्म खं ब्रह्म' इति सुखविशिष्टाभिधानात् 'स एनान् ब्रह्म गमयति' इति विष्णुगमनश्रवणात्; जीवस्य जीवान्तर नियामकत्वे अनवस्थितिप्राप्तेः; आदित्यजीवे अग्निजीवस्थित्यभावाच्च।

श्रीभाष्ये 'अत एव च स ब्रह्म' इत्येकं सूत्रमधिकम्।

---

## अद्वैतम्

### (५) अन्तर्याम्यधिकरणम्। (१६)

१८ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्। (४९)
१९ न च स्मार्तमतद्धर्माभिलापात्। (५०)
२० शारीरश्चोभयेपि हि भेदेनैनमधीयते। (५१)

**य एष आत्मा त इहान्तरस्थः योगी परात्मा परमेव किञ्चित्।**
**शाखाद्वयाध्यायिन एतमन्तर्यामी परात्मेति वदन्त्युपाधेः॥**

**अधिकरणार्थः।** 'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति'। इत्यारभ्य 'एष त आत्मा अन्तर्याम्यमृतः' (बृह ३-७-१२)

इत्यत्र श्रूयमाणान्तर्यामी, योगी, परात्मा, अधिदैवाद्यभिमानी देवतात्मा किं वा अर्थान्तर इति संशये अधिदैवादिभेदभिन्नसमस्त–विकारजातान्तस्थस्सन् यमयतीत्युक्तेः परमात्मैव। अन्येषां एतदसंभवात्।

कार्यकारणरहितस्य परमात्मनः कथं यमयितृत्वं इति चेत्, आत्मभेदाभावेन अचिन्त्यशक्तिमायाविशिष्टः यान् जीवान्नियच्छति तत्कार्यकारणैरेव परमात्मनः कार्यकारणत्वोपपत्तेः। अत एव नियन्त्रन्तरानवस्था दोषश्च न संभवति। इति॥

---

## विशिष्टाद्वैतम्

### (४) अन्तर्याम्यधिकरणम् (१५)

१९ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् (५१)
२० न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च । (५२)
२१ उभयेऽपि हि भेदेनैनमधीयते । (५३)

अन्तर्याम्यमृतश्श्रुतिद्वयगतो जीवः परंब्रह्म किं
द्रष्टृत्वेन च जीव एव भविता नैवं नियन्त्रादितः ।
सर्वेषामपि चात्मनां अकरणायत्तं च संदृश्यते
द्रष्टृत्वादिकमित्यतोपि परमं ब्रह्मैव यन्ताऽन्तरः ॥ १६२ ॥
ज्योतिस्स्वरूपं करपन्मुखादि-दिव्याङ्गजुष्टं बहुधा शरीरम् ।
अनन्तरूपं विभवादिलीला शरीरमप्राकृतमाह वेदः ॥ १६३ ॥
प्रियाप्रिये न स्पृशतोऽशरीरं इत्यादिना मुक्ततनुः न दूष्या ।
अप्राकृताकारशरीरसत्वे बहुप्रमाणानि भवन्ति शास्त्रे ॥१६४॥
विशुद्धसत्त्वाश्रयगोपुरादि लोकाश्च विष्णोस्सततं विभान्ति ।
यद्यस्य शेषं तदु तस्य वर्ष्मा शरीरलक्ष्मेति मते न दोषः ॥

**अधिकरणार्थः** "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथियामन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः । इति (बृ ५-७-१) विषयवाक्यम् ।

अत्र अन्तर्यामी प्रत्यगात्मा, परमात्मा वेति संशये द्रष्टा श्रोता मन्ता इति चक्षुश्रवणादि करणायत्तज्ञानवत्वप्रतीतेः प्रत्यगात्मेति प्राप्ते, अन्तर्यामी परमात्मैव । परमात्मधर्मोपदेशात् । "य आत्मनि तिष्ठन् यो विज्ञाने तिष्ठन्" इति श्रूयमाणं आत्मान्तर्यामित्वं परमात्मन एव संभवति । 'पश्यत्यचक्षुः' इति चक्षुराद्यनधीनज्ञानवत्वं च परमात्मन एव धर्म इत्युक्तत्वाच्च ।

अत्र बृहदारण्यके यस्तमसि तिष्ठन् तमसो अन्तरः यं तमो न वेद, यस्य तमश्शरीरम्, यस्तमोन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः । यस्तेजसि तिष्ठन् तेजसोन्तरः यं तेजो न वेद, यस्य तेजः शरीरम्, यस्तेजसोन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः ।'' 'तमस्ससर्ज भगवान् । 'नासीत्तमोज्योतिरभून्नचान्यत्'' इत्यादि श्रुतिस्मृतिभिः तेजस इव तमसोपि-सृष्टिलयभगवच्छरीरत्वाद्यभिधानात् तमसः द्रव्यत्वं सिद्धम् । आलोकाभाव एव तम इति तार्किकोक्तं न युक्तं । अत एव यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयतुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरं'' इति भाष्यं संगच्छते । अत एवोक्तं पूर्वाचार्यैः ।

''आधेयत्वप्रभृतिनियमैः आदिकर्तुश्शरीरं
सत्तास्थेमप्रयतनफलेष्वेतदायत्तमेतत् ।
विश्वं पश्यन्निति भगवति व्यापकाऽदर्शिदृष्टे
गम्भीराणामकृतकगिरां गाहते चित्तवृत्तिम् ।''

इति शरीरलक्षणं । तमसः द्रव्यत्वे वादिविप्रतिपत्तिनिरसार्थकःश्लोकोपि पूर्वाचार्यैरुक्तः ।

''तमोनामद्रव्यं बहुलविरलं मेचकचलं ।
प्रतीमः केनापि क्वचिदपि न बाधश्च दृशोः ।
अतः कल्प्यो हेतुः प्रमितिरपि शब्दी विजयते
निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात् ॥ इति ॥''

अत एव श्रीशार्ङ्गपाणिस्तवे अस्माभिरुक्त एतदधिकरणार्थः—

''एकस्त्वामदौ बहुधा च सृष्ट्वा तेषु प्रवेश्यैव सदा स्थितोसि ।
प्रवेशदोषस्त्वयि नानुषक्तः यथा च रक्तेषु पटेषु रागः ॥''

(श्री-शा-२०८)

---

## द्वैतम्

### (५) अन्तर्याम्यधिकरणं। (१७)

१८ ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् (६९)
१९ ओं न च स्मार्तमतद्धर्माभिलापात् (५०)
२० ओं शारीरश्चोभयेपि हि भेदेनैनमधीयते (५१)

अन्तर्यामी प्रकृतिरथवा जीव इत्यस्ति शंका
ह्यन्तर्यामी हरिरिह भवेत्तस्य सर्वान्तरोक्तेः।
तिष्ठन्नात्मन्निति वचनतः जीवविष्ण्वोश्च भेदात्
स्मार्तस्यापि ग्रहणमपि न ब्रह्मविष्णो प्रसिद्धः ॥ (१६६)

**अधिकरणार्थः** "यः पृथिव्यां तिष्ठन्" इत्यादि विषयवाक्यम्। अन्तर्यामी विष्णुः। "स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुषः" इत्यादि श्रुत्या अविदितान्तर्यामी च विष्णुरेव। "विज्ञाने तिष्ठन्", "आत्मानि तिष्ठन्' इति विष्णोर्भेदेन जीवस्य उपदेशाच्च न जीवः अन्तर्यामी।

आत्मविज्ञानशब्दौ जीवसामान्यपरौ। सर्वजीवाभिमानियोगिविशेष-चतुर्मुखात् विष्णोः भेदोपदेशात् अन्तर्यामी विष्णुरेवेत्यर्थः; "आत्मा विज्ञानमिति तु सर्वजीवाभिमानवान्। ब्रह्मैवोक्तस्त्विमे सर्वेष्वनुक्तायाश्च देवताः ॥ ये च जीवाः परे सर्वे नियन्ता विष्णुरेव हि" ॥ 'यो विज्ञाने तिष्ठन् य आत्मनि तिष्ठन्' इति श्रुत्यर्थवर्णनभाष्यात् ॥

यः पृथिव्यामित्यादि—"पृथुं नारायणं वाति समादायैव पक्षिराट् अतस्स पृथिवीत्युक्तस्त्वन्तरिक्षं हरस्स्मृतः॥" इति भाष्यात् पृथिव्याभिमानिभूत गरुडे तिष्ठन्नित्यर्थः। ननु-अस्मत्सिद्धान्ते विशिष्टाद्वैतिभिरिव जीवप्रकृत्योः विष्णु-शरीरत्वानभ्युपगमात् कथं तच्छरीरान्तस्य विष्णोः तत्तदन्तर्यामित्वं सम्भवति इति चेन्न।

"पृथिव्याद्या देवतास्तु देहवद्यद्वशत्वतः ।
शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः ॥"
अन्तस्थो देवतानां च न विदुर्यं च देवताः ।
प्रविष्टत्वात् देवतास्थः सोन्तरस्ववशत्वतः ॥
बाह्यापेक्षां विना यस्तु रमते सोन्तरस्मृतः ॥"

इत्युपनिषद्भाष्यप्रमाणात् तदधीनत्वं तच्छरीरत्वमिति गौणतया उक्तिरिति भाष्यतात्पर्यमित्यदोषात् ॥

---

## अद्वैतम्

### ६ अदृश्यत्वाधिकरणम् (१७)

**२१ अदृश्यत्वादिगुणको धर्मोक्तेः । (५२)**
**२२ विशेषणभेदव्यपदेशाभ्यां च नेतरौ । (५३)**
**२३ रूपोपन्यासाच्च । (५४)**

**अद्रेश्यमग्राह्यमिति श्रुतो यः जीवः प्रधानं परमेश्वरो वा ।**
**विद्या पराऽथेतिविविच्य सर्वज्ञत्वाद्यनेकेश्वरधर्मयोगात् ॥ १६७ ॥**
**स भूतयोन्यक्षरशब्दवाच्यः सर्वान्तरात्मा श्रुतिषु प्रसिद्धः ।**
**भूतान्तरात्मन्यपि रूपमुक्तं मूर्धाग्निरित्यादि ततः परात्मा ॥ १६८**

**अधिकरणार्थः** । "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यं अगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । (मु-१-१-५,६) इति ।

अत्र भूतयोनिशब्दवाच्यः प्रधानं, जीवो वा परमेश्वरो वेति विशये भूतयोनिः परमात्मा; अदृश्यत्वादि धर्मोक्तेः । "अक्षरात् परतः परः" इति 'पर' शब्देन भूतयोनिरेवोच्यते । अक्षर-भूतयोनिशब्दयोः 'अक्षरात् परतः पर' इति 'पर' इति निर्दिश्यमानपरशब्दस्य च तुल्योर्थ

परमात्मैव । 'अक्षरात् संभवतीह विश्वं'' (मु १-१-७) ''येनाक्षरं पुरुषं वेद (मु-१-१३) ''यद्भूतयोनिं परिपश्यन्ति धीराः'' इत्यादिना भूतयोन्यक्षरयोरर्थः परमात्मैव इति निश्चीयते। ''अक्षरात् परतः परः'; (मु-२-१-२) इत्यत्र तु अक्षरं--अव्याकृतं; भूतसूक्ष्म-ईश्वराश्रयं । सर्वस्माद्विकारात् परं यद्भूत-सूक्ष्मं अविकारावस्थापन्नं; तस्मात् परः परमात्मेत्यर्थः । अत्र अक्षरशब्द-वाच्यं भूतसूक्ष्ममित्यर्थः ।

---

## विशिष्टाद्वैतम्

### ५ अदृश्यत्वाधिकरणम् (१६)

२२ अदृश्यत्वादिगुणको धर्मोक्तेः । (५४)
२३ विशेषणभेदव्यपदेशाभ्यां च नेतरौ । (५५)
२४ रूपोपन्यासाच्च । (५६)

**'अद्रेश्यमाग्राह्यमपाणिपादं यद्भूतयोनिं' तिवाति वाक्यमध्ये ।**
**यदक्षरं तत् परतः परश्चश्रुतस्तदर्थः त्रिगुणं प्रधानम् ॥ १६९ ॥**
**जीवोथवा ब्रह्मविनिर्णयस्तु पधान-जीवेश्वरवाचकोपि ।**
**''यया तदि''त्यादि बलात् प्रधानं जीवश्च न ब्रह्मपरोक्षरोयम् १७०॥**

**अधिकरणर्थः** ''अथ परा याया तदक्षरमधिगम्यते'' इत्यारभ्य ''यद्भूतयोनिं परिपश्यन्ति धीराः'' (मु १-१-५, ६) इत्यादिकं ''अक्षरात् परतः परः (मु २-१-२) इति च विषयवाक्यम् ।

अत्र अदृश्यत्वादिगुणकं अक्षरं ''अक्षरात् परतः परः'' इत्यत्र ''पर'' शब्दवाच्यश्च प्रकृतिपुरुषौ उत उभयत्र परमात्मैवेति संशयः । अक्षरशब्दस्य प्रकृतिपुरुष-परमात्मसु प्रयोगो दृष्टः। अदृश्यत्वादिगुणकं अक्षरशब्दवाच्यं प्रधानं। ''अक्षरात परतः परः'' इत्यत्र परशब्दवाच्यः

जीवः । "अक्षरात परतः" इत्यत्र "परतः" इति अक्षरशब्दस्य विशेषणम् । महदाद्यपेक्षया परस्मात् अक्षरात् अव्यक्तात् परत्वेन उच्यमानः जीव एव भवितुमर्हति इति पूर्वपक्षः ।

सिद्धान्तस्तु "अथ परा यया तदक्षरमधिगम्यते" इति परब्रह्मार्थकस्य अक्षरस्य अदृश्यत्वादिगुणकत्वोक्तेः परंब्रह्मैवार्थः । "अक्षरात् परतः परः" इत्यत्र तु "अक्षरात् परतः" इति व्यधिकरणमेव । अक्षरात्--मूलप्रकृतेः, परतः-परस्मात् जीवात्; परः--परमपुरुष एव ॥ 'तं षड्विंशकमित्याहुः सप्तविंशमथापरे ॥' इति प्रमाणात् ॥

---

## द्वैतम्

### ६ अदृश्यत्वाधिकरणम् (१८)

२१ ओं अदृश्यत्वादिगुणको धर्मोक्तेः । (५२)
२२ ओं विशेषणभेदव्यपदेशाभ्यां च नेतरौ । (५३)
२३ ओं रूपोपन्यासाच्च । (५४)

योसावदृश्यस्स हि निर्गुणस्सः परः परात्मेति स विष्णुरेव ।
यदक्षरात् संभवतीति वाक्ये धातुः प्रधानस्य च संशयस्स्यात् ॥ १७१
क्वचित् प्रधाने क्वचिदत्र विष्णौ क्वचिद्रमायां क्वचिदब्जजेऽपि ।
अतस्त्रयाणामपि चाक्षराणां समाश्रयो विष्णुरिहेति सिद्धः ॥ १७२ ॥
क्वचिच्च कृष्णं क्वचिदेव रौक्मं क्वचिच्च रक्तं क्वचिदेव शुक्लम् ।
चत्वारि रूपाणि हरेश्च तस्मात् ईशो न रुद्रोऽपि तु विष्णुरेव ॥ १७३॥

**अधिकरणार्थः** "अक्षरात् संभवतीह विश्वं" इति विषयवाक्यं । अतः परं, तत्परतः पराभिधानात्, "कूटस्थोक्षर उच्यते" इति स्मृतेश्च अक्षर-शब्द वाच्या प्रकृतिः । अक्षरं ब्रह्मेति सामानाधिकरण्यनिर्देशात् अक्षरशब्द-वाच्यः हिरण्यगर्भः, परमात्मेति वा संशयः । अदृश्यत्वादिगुणकः अक्षर शब्दवाच्यः विष्णुरेव । परविद्याप्रकरणात् ।

'जुष्टं यदा पश्यत्यन्यमीशं अस्यमहिमानमिति वीतशोकः' । यदा पश्यः पश्यते रुक्मवर्णं कर्तामीशं पुरुषं ब्रह्मयोनिं' इति श्रुत्या रौक्मवर्णनिर्देशात् ईशपदप्राप्तोपि रुद्रः नाक्षरशब्दवाच्यः, अपि तु विष्णुरेवेत्यर्थः ।

"अपरंत्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणं अक्षरत्रयमीरितम् ॥

इति प्रामाणात्- अक्षरात्-प्रकृतेः; परतः—लक्ष्म्याः परः—विष्णुरित्युक्तः ।

"तस्मादेतत ब्रह्म नामरूपमन्नं च जायते'' इति चतुर्मुखस्य भेदेन निर्देशात "यस्सर्वज्ञस्सर्ववित'' इत्यक्षरशब्दस्य सर्वज्ञत्वादिविशेषणात न प्रकृतिः नापि चतुर्मुखः । "अक्षरात् परतः परः'' इत्यस्य परत्वेन श्रूयमाणायाः लक्ष्म्याः परः विष्णुरित्यर्थो वा। अक्षरात् परतः पर इति—अक्षरात=जडाकृतेः, परतः=श्रेष्ठात श्रीतत्वात, परः=उत्तमः, विष्णुरित्यर्थो वा ॥

---

## अद्वैतम्

### (७) वैश्वानराधिकरणम् । (१८)

(२४) वैश्वानरस्साधारणशब्दविशेषात् । (५५)
(२५) स्मर्यमाणमनुमानं स्यादिति । (५६)
(२६) शब्दादिभ्योन्तः प्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते । (५७)
(२७) अत एव न देवता भूतं च । (५८)
(२८) साक्षादप्यविरोधं जैमिनिः । (५९)
(२९) अभिव्यक्तेरित्याश्मरथ्यः । (६०)
(३०) अनुस्मृतेर्बादरिः । (६१)

(३१) सम्पत्तेरितिजैमिनिस्तथा हि दर्शयति । (६२)

(३२) आमनन्ति चैनमस्मिन् । (६३)

वैश्वानरात्मन्यपि संशयोत्र कुक्ष्यग्नि भूताग्न्यभिमानि जीवाः ।
सर्वेश्वरो वेति परेश्वरः सः विशेषशब्दश्रवणादिहेतोः ॥ १७४ ॥
'मूर्धा सुतेजा' इति लक्षणोक्तेः एतद्विदः पापनिवृत्तितोक्तेः ।
चतुर्षु चान्येषु न वक्तुमर्हाः गुणाश्श्रुताः किन्तु परात्मनीति ॥
वैश्वानरात्माऽवयवार्थयोगात् साक्षात् परात्मानमपि ब्रवीति ।
यथाग्रणीत्वादिकमग्निशब्दे तथैव चात्रेति महर्षिराह ॥ १७६॥

**अधिकरणार्थः**। षड्ऋषयः अश्वपतिं केकयं गत्वा वैश्वानरात्मजिज्ञासया पप्रच्छुः । स च "यस्तु एतमेवं प्रादेशमात्रं अभिविमानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति; तस्य ह वा एतस्य आत्मनो वैश्वानरस्य मूर्धैव सुतेजाः (छा ५-१८-२) इत्यत्र जठराग्नि भूताग्नि अभिमानिदेवता शारीरपरमेश्वरवाचकोपि अयं वैश्वानरशब्दवाच्यः परमात्मा । साधारणशब्दयोः आत्मवैश्वानरशब्दयोः विशेषनिर्देशात् । "तस्य ह वा एतस्य आत्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इति विशेषदर्शनात् ।

विश्वश्चायं नरश्चेति; विश्वेषां वा अयं नर इति, विश्वे वा नरा अस्य इति विग्रहे "नरे संज्ञायां" इति व्याकरणसूत्रेण विश्वशब्द-अकारस्य दीर्घे विश्वानर इति रूपं। विश्वानर एव वैश्वानरः। "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे" इति अण् प्रत्यये रक्ष एव राक्षस इतिवत् विश्वानर एव वैश्वानर इति रूपम् । अग्रणीत्वादि व्युत्पत्या अग्निशब्दवत् योगरूढ्या पङ्कजादिपदवत् वैश्वानरः परमात्मा। नर इत्यस्य नेता—कारणमिति नरः—जीवो वा अर्थः। नच, वैश्वानरशब्दस्य योगाश्रयणे रूढिप्राबल्यप्रतिपादक-रथकाराधिकरण-विरोधः। वैश्वनर इत्येव शब्दस्वरूपप्रतिपत्तिरूपदोषश्च; असंज्ञात्वेन नरे संज्ञायामिति दीर्घाभावात्,-इति वाच्यम् ।

"प्रोक्षणीष्वर्थसंयोगात्" इत्यधिकरणन्यायेन प्रोक्षणीशब्दे यथा योगरूढिः पङ्कजादिवदाश्रीयते तथैवात्र च योगरूढिः। "केशाकेशि" मुष्टीमुष्टि" इत्यादौ 'अन्येषामपि दृश्यते' इति पाणिनिसूत्रेण यथा वा दीर्घः तद्वत् निरुक्तिबलात् असंज्ञात्वेऽपि' अन्येषामपि दृश्यते' इति सूत्रेणैव दीर्घे कृते वैश्वानर इति शब्दस्वरूपं सिद्ध्यत्येवेति न कश्चिद्विरोधः। इति॥

---

## विशिष्टाद्वैतं

### (६) वैश्वानराधिकरणम् (१७)

(२५) वैश्वानरस्साधारणशब्दविशेषात् (५७)
(२६) स्मर्यमाणमनुमानं स्यादिति। (५८)
(२७) शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न
तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते। (५९)
(२८) अत एव न देवता भूतश्च। (६०)
(२९) साक्षादप्यविरोधञ्जैमिनिः। (६१)
(३०) अभिव्यक्तेरित्याश्मरथ्यः। (६२)
(३१) अनुस्मृतेर्बादरिः। (६३)
(३२) संपत्तेरिति जैमिनिस्तथा हि दर्शयति। (६४)
(३३) आमनन्ति चैनमस्मिन्। (६५)

वैश्वानरात्मा क उपासितव्यः शब्दश्च वह्न्यात्मपरात्मशक्तः।
यदश्वपत्याह्वय केकयस्सन् षड्भ्योह्युपादिक्षदतः परात्मा॥ १७७
यज्जैमिनिर्योगत एव वैश्वानरः परात्माग्निवदेव वक्ति।
परात्मनो रूपमिदं प्रसिद्धं भूरादिकाङ्गं स हि विश्वरूपः॥ १७८

अधिकरणार्थः– "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि" (छा ५-११-६) इति षड्भिः ऋषिभिः पृष्टेन केकयेन "यस्त्वेतमेवं

प्रादेशमात्रं अभिविमानमात्मानं वैश्वानरमुपास्ते" (छा ५-१८-१) इति प्रत्युक्तम्।

अत्र वैश्वानरः परमात्मा। साधारणशब्दविशेषात्। चतुरर्थसाधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणधर्मैः विशेष्यमाणत्वात्। "द्यां मूर्धानं यस्य विप्रा वदन्ति" इत्यादिना वैश्वानरात्मासाधारण—विश्वरूपत्वोक्तेश्च। योगरूढ्याऽपि अग्न्यादिशब्दवत् वैश्वानरशब्दः परमात्मबोधक इत्युक्तेश्च।

अस्मिन् मतत्रितयसारपदि द्वितीये
ह्यस्पष्टजीवगतलिङ्गकवाक्यमस्ति।
तस्यार्थ एष घटनामपुरीशशर्ङ्गी
दृष्ट्वा यमेवममृतं विबुधावदन्ति॥ १७९॥

---

द्वैतम्॥

(९) वैश्वानराधिकरणम् (१९)

(२४) ओं वैश्वानरस्साधारणशब्दविशेषात्। (५५)
(२५) ओं स्मर्यमाणमनुमानं स्यादिति। (५६)
(२६) ओं शब्दादिभ्योन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषविधमपि चैनमधीयते।
(२७) ओं अत एव न देवता भूतं च। (५८)
(२८) ओं साक्षादप्यविरोधं जैमिनिः। (५९)
(२९) ओं अभिव्यक्तेरित्याश्मरथ्यः। (६०)
(३०) ओं अनुस्मृतेर्बादरिः। (६१)
(३१) ओं संपत्तेरिति जैमिनिस्तथा हि दर्शयति। (६२)
(३२) ओं आमनन्ति चैनमस्मिन्। (६३)

वैश्वानरेत्यत्मविशेषणेन वैश्वानरात्माऽत्र च विष्णुरेव।
क्वाचित् प्रतीतेऽपि च जाठराग्नौ तद्दृष्ट्युपासाविधितत्परस्सः॥ १८०

**अग्न्यादिशब्दादिवदत्र योगी ह्यनन्ययोगेन हरौ युयोज।
सर्वोऽपिशब्दो हरिमेव साक्षात् ब्रवीति चान्यत्र नभोवदेव ॥ (१८१)**

**अधिकरणार्थः** "आत्मानं वैश्वानरमुपास्ते" इत्यत्र अग्नौ च विष्णौ च प्रयुक्तः साधारणवैश्वानरशब्दः अत्र विष्णुरेव; विष्णावेव प्रसिद्धस्य आत्मशब्दस्य साधारणवैश्वानरशब्देन विशेषणात्। "अग्नौ तिष्ठन्नि"ति जाठराग्न्यादौ विष्णोः स्थितिः तद्दृष्ट्युपदेशाय।

विश्वगुणपूर्णत्वाद्वैश्वानरः; न रीयते न नश्यतीति नरः; विश्वश्चासौ नरश्च वैश्वानर इति व्युत्पत्तिः। "अन्येषामपि दृश्यते" इति पाणिनीसूत्रात् वैश्वानरस्य दीर्घः। तादृशगुणपूर्णः विष्णुरेव ॥

अग्न्यादिशब्दाः साक्षात् विष्णुवाचका अपि तदितरार्थकैश्च अग्न्यादिभि व्यवहारे न विरोध इति जैमिनिः। तर्हि ऋषीणां परस्परविरोधाभिप्रायः कथं संगच्छत इति चेत्।

"व्यासचित्तस्थिताकाशात् अवच्छिन्नानि कानिचित्।
अन्ये व्यवहरन्त्येतान्यूरिकृत्य गृहादिवत् ॥"

इति स्कान्दवचनात् व्यासचित्तानुवर्तनमेव सर्वर्षीणां इति न परस्पर विरोधः ॥

इति मतत्रयसारसंग्रहे वैश्वानाराधिकरणम् ॥

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां दानाधिकारिणां मतत्रयनिरूपकाणां काञ्चि वङ्गिपुरं **रङ्गाचार्याणां** कृतिषु मतत्रयसारसंग्रहे प्रथमाध्याये द्वितीयः पादः ॥

---

श्रीः

# ॥ प्रथमाध्याये तृतीयः पादः ॥

वैकुण्ठनगरारामकल्पकुम्भपुरीश्वरम् ।
हेमाब्जानायिकाऽऽश्लिष्टं शार्ङ्गपाणिं सदा भजे ॥ (१८२)

## अद्वैतम्

### (१) द्युभ्वाद्यधिकरणम् । (१९)

१ द्युभ्वाद्यायतनं स्वशब्दात् (६४)
२ मुक्तोपसृप्यव्यपदेशात् (६५)
३ नानुमानमतच्छब्दात् । (६६)
४ प्राणभृच्च । (६७)
५ भेदव्यपदेशाच्च । (६८)
३ प्रकरणात् । (६९)
७ स्थित्यदनाभ्यां च (७०)

स्वर्गः क्षितिः खं मन आदि सर्वं प्रोतं च जानीत विमुञ्चथान्यः ।
मोक्षस्य सेतुः परिपठ्यतेऽत्र वायुः प्रधानात्मपरात्मतुल्यम् ॥ १८३
द्युभ्वादिगेहं न समस्तधृत्या सेत्वात्मशब्दादिसमन्वयादेः ।
परात्मबोधे भवतीह वाक्यं मुक्तोपसृप्यत्वगुणान्वयादेः ॥ १८४

**अधिकरणार्थः** "यस्मिन् द्यौः पृथिवी चान्तरिक्षं ओतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानं अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ।" (मु २-२-५) इत्यत्र द्युप्रभृतीनां ओतप्रोतत्ववचनादवगतं आयतनं परब्रह्म-बोधकं, उत अर्थान्तरमिति विशये अत्र आयतनशब्दवाच्यं परं ब्रह्म । वाक्यशेषे आत्मशब्दश्रवणात् । द्युभ्वादि सर्वाधारत्वाच्च । "तथा विद्वान् नामरूपाद्विमुक्त

परात्परं पुरुषमुपैति दिव्यम्" (मु ३-२-८)। इत्यस्मिन् प्रकरणे मुक्तप्राप्यत्वदर्शनाच्च यथा प्रधानप्रतिपादकशब्दाभावात् प्रधानं न गृह्यते, तथा उपाधिपरिच्छिन्नज्ञानस्य जीवस्य द्युभ्वाद्यायतनत्वासंभावात् जीवोपि न। इदमधिकरणं अदृश्यत्वाधिकरणेन गतार्थमपि, प्रपञ्चार्थं पुनरारब्धं कृत्वाचिन्तया वा।

---

## विशिष्टाद्वैतम्

(१) द्युभ्वाद्यधिकरणम्। (१८)

१ द्युभ्वाद्यायतनं स्वशब्दात्। (६६)
२ मुक्तोपसृप्यव्यपदेशाच्च। (६७)
३ नानुमानमतच्छब्दात् प्राणभृच्च। (६८)
४ भेदव्यपदेशात्। (६९)
५ प्रकरणात्। (७०)
६ स्थित्यदनाभ्याञ्च। (७१)

**"यस्मिन् द्यौः पृथिवी", नभो मन इति प्रोक्तोत्र जीवोथवा**
**त्रैगुण्यं पर एव वेति विशये स्वीयामृतत्वादिभिः।**
**ब्रह्मैवेति विनिश्चितः त्रिगुणमप्यस्वीयशब्दादिना**
**नो जीवोपघनस्थितेरदनतः पुण्यस्य पापस्य च॥ १८५**

**अधिकरणार्थः** "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः। तमेवैकं जानथात्मानं अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" (मु-२-२-५,६) इत्यत्र द्युपृथिव्यादीनां आयतनं परं ब्रह्म। "अमृतस्यैष सेतुः" इति परब्रह्मासाधारण-अमृतसेत्वादिशब्दात्। "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"(मु-३-१-३) इत्यादि श्रुत्या मुक्तप्राप्यत्वकथनात्। प्रधान-जीव-भेदनिर्देशाच्च।

सेतुं भवन्तं ह्यमृतस्य चेति प्राह श्रुतिस्त्वत्पर ईश्वरोऽन्यः ।
अस्तीति, तन्नास्ति तदर्थ एवं प्राप्यो भवानेव भवस्युपायः ॥
इति श्रीविष्णगराधीशस्तवे अस्माभिरुक्तः (श्लो—९०)

---

## द्वैतम्

### (१) द्युभ्वाद्यधिकरणम् २०

१ ओं द्युभ्वाद्यायतनं स्वशब्दात् । (६४)
२ ओं मुक्तोपसृप्यव्यपदेशात् । (६५)
३ ओं नानुमानमतच्छब्दात् । (६६)
४ ओं प्राणभृच्च । (६७)
५ ओं भेदव्यपदेशात् । (६८)
६ ओं प्रकरणात् । (६९)
७ ओं स्थित्यदनाभ्यां च (७०)

अत्रान्यत्र प्रसिद्धानां विष्णावन्वय उच्यते ।
यस्मिन्द्यौः पृथिवी खं च प्राणैरोतं मनस्सह ॥ १८६
'प्राणानां ग्रन्थिरि'त्यत्र रुद्रजीवावुपस्थितौ ।
'आत्मानं जानथे'त्यात्मशब्दाद्विष्णुरिहोच्यते ॥ १८७
उग्रभस्मधरादीनां तच्छब्दानामभावतः।
अनुमानागमप्राप्तरुद्रो न प्रतिपाद्यते ॥ १८८

**अधिकरणार्थः** "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः"(मु-२-२-५)इत्यादौ प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः ।(मह-ना-३५) 'प्राणेश्वरः कृत्तिवासाः पिनाकी"। (आयु-४) "स एषो अन्तश्चरते बहुधा जायमानः"(आ-४-६) इत्यादौ च श्रुतः द्युभ्वद्याश्रयः विष्णुरेव । आत्मब्रह्मादि-शब्दसमभिव्याहारात । प्राणाधारादिलिङ्गात रुद्रजीवयोः यद्यपि प्राप्तिरस्ति ;

तथापि 'अमृस्यैष सेतुरि'ति "एतमानन्दमयं आत्मानमुपसंक्रामति" (तै-३-२-२१) "मुक्तानां परमागतिः" (सहस्रनामा) इत्यादिना मुक्तप्राप्यत्व-वचनात् न रुद्रजीवौ ।

"आत्मब्रह्मादयश्शब्दाः तमृते विष्णुमव्ययम् ।
न संभवन्ति[1] तस्मात्तैः[2] नैवात्मा गुणपूर्णता" ॥
"रुजं[3] द्रावयते[4] यस्मात् रुद्रस्तस्माज्जनार्दनः ॥"
पिबन्ति ये नरा नाकं मुक्ताःसंसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततस्स्मृतः ॥
"कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् ।
कृत्तिवासास्ततो देवः विरिञ्चश्च विरेचनात्[5] ॥"

इत्यादिप्रमाणात् ।

अत्र श्रुत रुद्रवाचकाश्शब्दाः सर्वेऽपि व्युत्पत्त्या विष्णुमेव वदन्तीति ।

---

## (२) भूमाधिकरणम् (२०)—अद्वैतम्

८ भूमा संप्रसादादध्युपदेशात् । (७१)
९ धर्मोपपत्तेश्च । (७२)

**सनत्कुमारोदितभूमशब्दः प्राणोथवाऽऽत्मा पर एव वेति ।**
**भूमा परात्मैव हि संप्रसादप्राणोपरिष्टात् पठनादवेहि ॥ १८९**
**सत्यातिवादीति च नारदं प्रत्युक्तेश्च यद्दर्शनतोन्यदल्पम् ।**
**इत्यादिना शोकनिरासनार्थं भूमेतिचात्मानमुपादिशद्यत् ॥१९०**

---

[1] न संभवन्ति=मुख्यतोवाचकत्वेनेत्यर्थः ।
[2] तैः=चतुर्मुखादिभिः ।
[3] रुजं=जन्मादिकं । [4]द्रावयते=निवर्तयतीति विष्णुः ॥
[5] विरेचनात्=जगत्सर्जनात् ॥

**अधिकरणार्थः** छान्दोग्ये अष्टमाध्याये नारद—सनत्कुमारसंवादे आत्मज्ञानसंपादनायागत नारदाय सनत्कुमारोपदिष्टवाक्यमध्ये "भूमात्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञासइति' इत्युक्त्वा "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" (छा ७-२३,२४) इत्युक्तम् । तत्र जिज्ञास्यभूमशब्दवाच्यः प्राणः उत परमात्मेति संशयः । प्राणात्परं भूयः इति प्रश्नप्रतिवचनाभावात् प्राण एव आत्मविज्ञानं समाप्तमिति गम्यमानत्वात् प्राण एव प्राप्ते, 'सम्यक् प्रसीदति अस्मिन्' इति व्युत्पत्तेः' सुषुप्तं स्थानं संप्रसादशब्देनोच्यते । तस्मिन् जागर्ति प्राण इत्यत्र प्राणः संप्रसादशब्दार्थः अभिप्रेयते ; "तात्स्थ्यात् ताच्छब्द्यं" इति न्यायात् । तस्मादुपरि उपदिष्टः भूमशब्दः परमात्मा । "एष तु वा अतिवदति यस्सत्येनातिवदति" (छा ७-१६-१) "सोऽहं भगवस्सत्येनातिवदानि" (छा ७-१६)इति सत्यातिवादत्वकथनात् ; यद्दर्शनादिना अन्यदर्शनाद्यभावोक्तेश्च ; "यो वै भूमा तदमृतमि"ति (छा ७-२४-१) भूमैवसुखमिति च सत्यसुखामृतत्वधर्माणां भूम्न्येवोपपत्तेश्च । शोकतारकत्वेन भूमोपदेशाच्च ।

---

२ **भूमाधिकरणम् । (१९)—विशिष्टाद्वैतम् ।**

७ **भूमा संप्रसादादध्युपदेशात् ।** (७२)
८ धर्मोपपत्तेश्च । (७३)

**दृष्टे च यस्मिन्न परश्च पश्येत् भूमा स इत्यत्र विचार एषः ।**
**जीवः परात्मेति च संशयेऽस्मिन् जीवार्थकप्राणपदोर्ध्वपाठात् ॥ १९१ ॥**
**बहुत्व संलक्षितसद्गुणेन जुष्टः परात्मैव हि भूमवाच्यः ।**
**यदल्पशब्देन च साहचर्यात् धर्म्यर्थको धर्मपरोपि भूमा ॥ १९२ ॥**
**अनन्तकल्याणगुणाकरत्वे भूमेति सूत्रं प्रथमं प्रमाणम् ।**
**यस्मिंस्तु दृष्टे न दिदृक्षतेऽन्यत् तादृग्गुणं भूमपदार्थमाह ॥ १९३ ॥**

**अधिकरणार्थः ।** "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति

स भूमा। अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यत् विजानाति तदल्पम्।" (छा-७-२४-१) इति विषयवाक्यम्।

अत्र भूमशब्दवाच्यः जीवात्मा वा परमात्मावेति संशयः। भूमशब्दश्च व्याकरणव्युत्पत्त्या वैपुल्यवाची। बहुत्वमित्यर्थः। बहुत्वं च कस्येत्यपेक्षते। अर्थात् गुणबहुत्वमित्यर्थः। तथा च बहुगुणविशिष्टः भूमा क इति। तत्र प्राणादुपरिनिर्देशात् जीव इति प्राप्ते, संप्रसादाज्जीवादुपरिनिर्देशात्, "एष संप्रसादो अस्माच्छरीरात् समुत्थाय" (छा ८-१२-२) इत्यत्र संप्रसादशब्दः प्रत्यगात्मपर इति निर्विवादः। अत्रापि प्रत्यगात्मवाचकात्, प्राणशब्दादुपरि पठ्यमानः भूमशब्दः परमात्मबोधक एव।

"तं षड्विंशकमित्याहुः" इत्यादिना जीवादनन्तरवर्ती परमात्मा एवेति गम्यते। "सत्यं ज्ञानमनन्तं ब्रह्मे"ति सत्यातिवादित्वकथनाच्च।

यद्यपि भूमशब्दस्य बहुत्वमेव अर्थः शब्दशास्त्रव्युत्पत्त्या लभ्यते। तथापि यदल्पमिति अनन्तरवाक्यश्रवणात् "सहचरिताऽसहचरितयोस्सहचरितस्यैव ग्रहणम्" इति न्यायात् भूमशब्दोपि भूमगुणविशिष्टधर्मिपर एवेति निश्चीयते।

"भूमाख्यः पुरुषोत्तमो यदधिकं ब्रह्मेह सत्याह्वयं
प्राणाख्यादवरात्मानस्तु बलतः तज्ज्ञाधिकस्सत्यवित्।
यस्सत्यं वदतीति वाग्गणयितुं न ह्यग्निहोत्र्यन्तरं
शक्नोति प्रकृताग्निहोत्र्यवगमात् भङ्गस्तु शब्दाश्रियः॥"

इति अत्र पूर्वाचार्योक्ताधिकरणार्थसंग्रहश्लोकः।

---

## भूमाधिकरणम्—द्वैतम्

ओं भूमा संप्रसादादध्युपदेशात् । (७१)

ओं धर्मोपपत्तेश्च । (७२)

यो भूमेति सुखं च तच्च भवति प्राणात्परं श्रूयते
ह्याशाया अधिकश्च यो निगदितः प्राणस्स वायुर्भवेत् ।
पूर्णानन्दघनात् परत्वकथनात् सर्वोत्तमत्वादितः
विष्णुं भूमपदं ब्रवीति मरुतं नोत्क्रान्तिमत्वादिति ॥ १९४ ॥

**अधिकरणार्थः।** 'प्राणो वा आशाया भूयान्'' इत्युक्त्वा "यो वै भूमा तत् सुखं" इत्युक्तम् । तत्र भूमशब्दनिर्दिष्टः वायुर्वा विष्णुर्वेति विशये भूमा विष्णुरेव। संप्रसादात्—पूर्णसुखस्वरूपत्वात् । अध्युपदेशाच्च-सर्वेषामुपरि उपदेशादित्यर्थः। "विश्वतः परमां नित्यं" इत्यादि श्रुतेः ; सर्वेभ्यः परममित्यर्थः। वायोरुत्क्रन्ति कथनात् न वायुरपि। विश्वतः परममित्यपि पाठः ॥ विश्वतः परमामिति पाठे परमश्चासौ अश्चेति विग्रहः । सर्वस्मादुत्तम-अकार-वाच्य इत्यर्थः । प्राणो वेत्यादि—आशायाः=सरस्वत्याः, प्राणः=मुख्यप्राणः, भूयान्=गुणादितश्श्रेष्ठ इत्यर्थः ।

'मुख्यवायुप्रिया तस्मात् परमैव सरस्वती ।
बन्धमुक्त्योस्सर्वगुणैः सर्वदाऽऽशास्वरूपिणी ॥
शमित्यानन्द उद्दिष्टः आशा पूर्णसुखत्वतः ।
तस्याश्श्रेष्ठो मुख्यवायुः प्रकृष्टा ना च नायकः ॥
प्राणनामा 'ण' इत्येव ह्यानन्दस्समुदीरितः ।
आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः ॥
प्राण इत्युच्यते वायुः सर्वेत्वेते दशोत्तराः ॥'

इति छान्दोग्यभाष्यप्रमाणात् । भूम्नः विष्णुत्वे—

'प्रणात्तु भगवान् विष्णुः अनन्तगुणतोधिकः
नित्यमुक्तो नित्यशक्तिः नित्योद्रिक्तगुणः प्रभुः ॥' इति तत्रत्यं भाष्यमेव ॥

---

## ३ अक्षराधिकरणम् (२१)—अद्वैतम्

११ अक्षरमंबरान्तधृतेः। (७३)
१२ सा च प्रशासनात्। (७४)
१३ अन्यभावव्यावृत्तेश्च। (७५)

**कस्मिन्नभःप्रोतमिदं महर्षे यदक्षरं स्थूलगुणादिशून्यम्।**
**इहाक्षरं वर्णविशेष आत्मा "ओंकार एवेदमि"हेति मैवं ॥१९५**
**अकाशपर्यन्तविकारधृत्या प्रकृष्टतराद्यस्य निषेधवाचा।**
**प्रशासनादर्कनिशाकरादिः स्वकीय कर्माणि करोत्यतस्सः॥१९६**

**अधिकरणार्थः** "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै तदक्षरं गार्गी ब्राह्मणा अभिवन्त्यस्थूलमनणु" (बृ·३·८·७,८) इत्यादि विषय-वाक्यम्। अत्राक्षरशब्दः—

"अक्षरं-न क्षरं विद्यात अश्नोतेर्वा सरोक्षरम्।
वर्णं बाहुः पूर्वसूत्रे किमर्थमुपदिश्यते ॥"
"वर्णजातं वाग्विषयो यत्र च ब्रह्म वर्तते।"

इति महाभाष्ये अक्षरशब्दवाच्यः वर्ण इत्युक्तम्। वर्णज्ञाने साति ब्रह्मज्ञानं च भवतीत्युक्तम्। तथा च "ओंकारेवेदं सर्वं" इति छान्दोग्यश्रुत्या अक्षरशब्दः वर्णे प्रसिद्धः। "अवयवप्रसिद्धेः समुदायप्रसिद्धिः बालीयसी" इति वैयाकरणपरिभाषया समुदायप्रसिद्धेरेव युक्तत्वात्, ओंकार एव अक्षरशब्दवाच्यः, न परमात्मा इति प्राप्ते अम्बरान्तधृतेः; पृथिव्यादेः आकाशान्तरस्य विकारजातस्य धारणात्, अक्षरशब्दवाच्यः परामात्मैव 'ओंकारेवेदं सर्वं इति तु अर्थवाद एव। ब्रह्मप्रतिपत्तिसाधनत्वाविशेषात्। अचेतनस्य प्रधानस्यापि अंबरान्तधृतेस्सत्त्वात् प्रधानमेवेति चेन्न;" एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" (बृ ३-८-९) इत्यादि परमात्मकर्मरूपप्रशासनानुपपत्तेः। अचेतनं प्रधानं इतरस्य प्रकाशकं न भवति।

न च, अस्मन् मते सर्वं कल्प्यमेव। प्रधाने प्रशासनमपि कल्प्यतामिति चेतन्न; कल्प्यमपि योग्यार्थ एव संभवितुमर्हति। रज्जौ सर्पभ्रान्तिरिव घटकुड्यादौ सर्प भ्रान्तिः न कल्प्यते। लोके च घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनं नसंभवति; अचेतनत्वात। तद्वत आरोपितमपि प्रशासितृत्वं ब्रह्मण्येव कल्प्यं; न अचेतने प्रधाने।

---

३ अक्षराधिकरणम् (२०)–विशिष्टाद्वैतम्

९ अक्षरमम्बरान्तधृतेः। (७४)
१० सा च प्रशासनात्। (७५)
११ अन्यभावव्यावृतेश्च। (७६)

**यदक्षरं गार्गि वदन्ति विप्राः प्रधानजीवेश्वरतुल्यमेतत्।**
**मैवं यदाज्ञावशगाः समस्ताः स्वकीयकर्माणि च कुर्वतेऽतः॥ १९७॥**
**'कस्मिन्नु खल्वोतम'नन्तमित्थं श्रुत्याऽम्बरान्तप्रकृतेर्विधृत्या।**
**एतद्विदो मोक्षगतिश्रुतेश्च जीवस्य शंका प्रकृतेऽक्षरे न॥ १९८॥**

**अधिकरणार्थः** सहोवाचैतद्वैतदक्षरं गार्गि'' (बृ ५-८-८) इत्यादि विषयवाक्यम्। अत्र अक्षरशब्दः प्रधानं, जीवः, परमात्मा वेति विशये अव्याकृतरूपस्य अम्बरान्तस्य धृतेः परमात्मा इति सिद्धान्तः। "अथ य एतदक्षरं गार्गि विदित्वा अस्माल्लोकात् प्रैति स ब्राह्मणः (बृ ५-८-१०)'' इति श्रुत्या एतद्विदः अमृतत्वप्राप्तेरुच्यमानत्वाच्च।

---

३ अक्षराधिकरणं। (२२)–द्वैतम्

१० ओं अक्षरमम्बरान्तधृतेः। (७३)
११ ओं सा च प्रशासनात्। (७४)
१२ ओं अन्यभावव्यावृत्तेश्च। (७५)

**आकाश ओतश्च यदक्षरेऽस्मिन् तदम्बरान्तस्य धृतेस्स विष्णुः**
**प्रशास्तिरूपार्थधृतेः परेषां स्थूलस्वभावस्य निषेधवाचा॥१९९**

**अधिकरणार्थः** "एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च" इत्यत्र अक्षरशब्दवाच्यः विष्णुरेव। अम्बरान्तस्य सर्वस्य धृतेः।

पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृतौ ॥"

इति प्रमाणात् विष्णोरेव सर्वधृतित्वश्रवणात्। "एकश्शास्ता न द्वितीयोऽस्ति शास्ता" इति प्रशासनरूप धृतिश्रवणाच्च ।

अस्थूलोऽनणुरूपोऽसौ अविश्वो विश्व एव च ।
विरुद्धधर्मरूपोऽसौ ऐश्वर्यात् पुरुषोत्तमः ॥

इत्यादिप्रमाणात् अन्यवस्तुस्वभावानां स्थूलत्वादीनां व्यावृत्युक्तेश्च ।

'प्रसिद्धस्थूल-सूक्ष्मादिवैलक्षण्याज्जनार्दनः ।
अस्थूलादिरिति प्रोक्तः नैव स्थौल्याद्यभावतः ॥
अनावृतेस्तमो नास्य स्वातन्त्र्यान्नाद्यते क्वचित् ।
द्यावापृथिव्यौ श्रीभूमिकौशौ सूर्यविधूमतौ ॥
दीप्तेः पृथुत्वाज्ज्ञनाच्च तथाह्लादविधेरपि ।
तदाधारो हरिर्नित्यं स्वातन्त्र्येण प्रशासकः ॥
आधारत्वं श्रियो यच्च तच्च विष्णोः प्रशासनात् ।
तद्वशान्न स्वातन्त्र्यं स स्वतन्त्रो हरिस्सदा ॥
न तस्य प्राकृतामूर्तिः मांसमेधोस्थिसंभवा ।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः

इति भाष्यात् विष्णोः प्रसिद्धस्थौल्याद्यभावेऽपि सर्वाधारत्वानुगुणाप्राकृतस्थौल्य-गुणसम्भवे न दोषः। सर्वत्र विष्णोरीश्वरत्वमेव नियामकं। इति ॥

---

## ५ इक्षतिकर्माधिकरणम् (२२)—अद्वैतम्

### १३ ईक्षतिकर्मव्यपदेशात् सः (७६)

**यस्सत्यकामंप्रतिचिन्तनीयः गुरूपदिष्टः परपूरुषोऽसौ ।
साक्षात् परंब्रह्म ततोवरं वा यद्ब्रह्मलोकाप्तिरुपासकस्य** ॥ २००

ततोवरं ब्रह्म न पूरुषेक्षाफलं च निध्यातुरतुल्यकं स्यात् ।
क्रमेण मुक्तयर्थमयं विचारः परब्रह्म नोपास्यमवेहि तद्धि ॥

**अधिकरणार्थः।** प्रश्नोपनिषदि सत्यकामप्रश्ने उत्तरत्वेन श्रूयमाणं "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः तस्माद्विद्वान् एतेनैवायतनेन एकतरमन्वेति" इत्यारभ्य "यः पुनरेतं त्रिमात्रेण ओमित्यनेन अक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये संपन्नः,स सामभिरुन्नीयते ब्रह्मलोकं; स एतस्मात् जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" (प्र ५-२-५) इति विषयवाक्यम् । अत्र वाक्ये परपुरुषशब्देननिर्दिश्यमानः परंब्रह्म वा अवरं ब्रह्म वेति विचारः । 'स सामभिरुन्नीयते ब्रह्मलोकं" इति परिच्छिन्नदेश-ब्रह्मलोकप्राप्तिकथनात् अवरं ब्रह्मेति प्राप्ते "परं पुरुषमभिध्यायीत, पुरिशयमीक्षते" इति उपासकस्य दर्शनकर्मत्वेन परपुरुषस्योक्तत्वात् परमपुरुष एव। यद्विषयकं ध्यानं तद्विषयकमेव दर्शनं फलतया वक्तव्यं।

नच, परमात्मोपासकस्य परिच्छिन्नदेशब्रह्मलोकप्राप्तिः युज्यत इति वाच्यं। त्रिमात्मक-ओंकाराश्रयणेन परमात्मानं ध्यायतः परिच्छिन्नब्रह्मलोकप्राप्तिः फलं। "ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" ॥

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदं ॥"

"ब्रह्मवेद ब्रह्मैव भवति" इत्यादिना क्रममुक्तेः प्रदर्शनात् । इति॥

---

४ सदधिकरणं (२३)—द्वैतम्

ओं ईक्षतिकर्मव्यपदेशात् सः। (७६)

विष्णोर्विकारिता नास्ति निर्विकारश्रुतेरिह ।
बहुस्यामिति सद्वाच्यविष्णोश्च परिणामिता ॥ २०१ ॥
जायतीति कथं चात्र जायमानोप्यजो यथा ।
अविकारेण विष्णुर्हि सर्वत्रास्तीति युज्यते ॥ २०२ ॥

**अधिकरणार्थः** अत्र विष्णोरविकारत्वं प्रसिद्धं । 'बहुस्यां प्रजायेय' इति तस्य परिणामप्रतीतिः कथमुपपद्यत इति पूर्वपक्षे सूत्रेण समाधीयते । 'सदेव सोम्य इदमग्र आसीत्' इत्यत्र स्रष्टा सच्छब्दवाच्य विष्णुरेव; 'तदैक्षतेति' ईक्षतिकर्मव्यपदेशात् । 'नान्योतोस्ति द्रष्टा' इत्यादिना अन्यस्य ईक्षतिकर्मव्यपदेशाभावाच्च । 'बहुस्यां प्रजायेये'ति बहुत्वं परिणामित्वं च कथं संगच्छत इति चेत् 'अजायमानो बहुधा विजायते' इतिवत् बहुत्वं च अविकारेण भवति इति ॥

सदेव सोम्येत्यादि—अग्रे—प्रलये; इदं=परिदृश्यमानं जगत्; सदेव= ब्रह्मैवावर्तत । एकमेव—स्वगतभेदाभेदवर्जितं च ।

'एकमेवाद्वितीयं तत् समाभ्यधिकवर्जनात् ।
स्वगतानां च भेदानामभवत् ब्रह्म शाश्वतम् ॥
भेदाभेदनिवृत्यर्थं एवशब्दोऽवधारकः ।
समाधिकनिवृत्यर्थं अद्वितीयपदं तथा ॥
भेदाभेदेप्येकशब्दो यतोऽवयिविनिश्चितः ।
एकमेवेत्यतः प्राह नारायणमियं श्रुतिः ॥
समे द्वितीयशब्दस्स्यात् अद्वितीयोऽसमत्वतः ॥'

इति प्रमाणात् । सः सच्छब्दवाच्यः विष्णुरेव; न जडप्रकृतिः प्रधानादि । ईक्षतिकर्मव्यपदेशात्=तदैक्षतेति ईक्षणरूपव्यापारस्यविष्णोरश्रवणत्वात् । इति ॥

---

### ४ ईक्षतिकर्माधिकरणम् (२१)—विशिष्टाद्वैतं

(१२) ईक्षातिकर्मव्यपदेशात् सः (७७)

**त्रिमात्रकोंकारसहायकेन ध्यातः परंब्रह्म चतुर्मुखो वा।**
**यदन्तरिक्षोपरि धातृलोकप्राप्त्या विधाता न च वक्तुमर्हः ॥**
**उपासकस्तं परमीक्षते यत् ब्रह्मैवलोकस्त्विति विग्रहाच्च ।**
**यथाक्रतुन्यायत एवमत्र ध्यानेक्षणैकाधिकरण्यतश्च ॥**

**अधिकरणार्थः** 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' इत्यत्र ध्यानेक्षणशब्दौ एकविषयावेव । न ह्यन्यध्यानात् अन्यत्फलं भवति; यथाक्रतुन्यायात् ध्यानविषयस्यैव प्राप्यत्वात् । तत्र परं पुरुषमिति चतुर्मुखो वा उत परमात्मा वेति विशये ओंकारं त्रिमात्रमुपासीनस्य ब्रह्मलोकप्राप्तिदर्शनात् चतुर्मुख इति प्राप्ते ब्रह्मैव लोकः ब्रह्मलोक इति निषादस्थपतिन्यायात् परब्रह्मप्राप्तिरेव फलमिति निर्णीयते ॥

---

(५) दहराधिकरणं (२३)—अद्वैतम्

१४ दहर उत्तरेभ्यः (७७)
१५ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च (७८)
१६ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । (७९)
१७ प्रसिद्धेश्च (८०)
१८ इतरपरामर्शात् स इति चेन्नासंभवात् । (८१)
१९ उत्तराच्चेदाविर्भूतस्वरूपस्तु (८२)
२० अन्यार्थश्च परामर्शः (८३)
२१ अल्पश्रुतेरिति चेत्तदुक्तम् । (८४)

**अस्मिन् ब्रह्मपुरे यदेषदहराकाशश्श्रुतौ श्रूयते**
**जीवाकाशपरात्मबोधकपरेष्वेतेषु नो जीवखे ।**
**कामाधारममुं विचिन्त्य सकलाभीष्टं समाप्नोति यत्**
**लोकं ब्रह्म च गच्छतीति वचनात् ब्रह्मैव दह्रं नभः ॥ २०४ ।**

**अधिकरणार्थः** "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" (छा–८–१–१) इति । अस्य अर्थः, ब्रह्मपुरे—शरीरे, यदिदं दहरं

पुण्डरिकं—यत्—सूक्ष्मतामरससदृशं, वेश्म—स्थानं, अस्मिन हृदयपुण्डरीक-वेश्मनि, अन्तः—अन्तर्वर्ति, दहराकाशः—दहरः आकाशः; तस्मिन्—यदन्त-स्तदन्वेष्टव्यम्—तस्मिन्=हृदयपुण्डरीके, अन्तः—अन्तर्वर्ती यः दहराकाशः; (व्यत्ययो बहुलमिति सूत्रात् नपुंसकलिङ्गं) तत्—सः दहराकाशः (पूर्ववत् नपुंस-कलिङ्गता) अन्वेष्य, इत्यर्थः ।

अत्र श्रुतः दहराकाशः भूताकाशो वा जीवो वा परमेश्वरो वेति संशये, भूताकाशस्य जीवस्य च वाक्यशेषस्थलिङ्गाभ्यासात् प्राप्तिसत्त्वेऽपि उत्तरत्र श्रूयमाणवाक्यशेषगतेभ्यो हेतुभ्यः परमात्मैवेति निश्चीयते । उत्तर-वाक्ये च अपहतपाप्मत्वादि गुणाष्टकादिश्रवणात् ।ब्रह्मैवलोकः ब्रह्मलोकः इति व्युत्पत्या सुषुप्तिकाले अहरहः ब्रह्मलोकगमनदर्शनाच्च। द्यावापृथिव्यादि-धारकत्वाच्च। 'स उत्तमः पुरुषः' इति मुक्तात्मोक्त्या च; इति ।

अत्र विषयवाक्ये दहारकाशः तदन्तवर्ति—गुणजातं च तच्छब्देन परिगृह्य दहारकाशोपासनं तन्निष्ठगुणानां पृथगुपासनं विधीयत इति कैश्चिदुक्तं। तथा च तैरुक्तम् ।

"अस्वारस्यचतुष्टयं परमते यच्छब्दलिङ्गव्यथ।
तस्मिन्नित्यनपेक्षया व्यवहिते हृत्पुण्डरीकेऽन्वयः ।
अप्याकाङ्क्षितकामवेदनविधिक्षेपस्त्वपक्षे द्वयं
यच्छब्दस्य यदैकशेष्यमपि या तत्रैकवद्भाविता ॥

इति । अस्य अर्थः विषयवाक्यं त्रेधाविभज्य व्याख्यातं । (१) यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म इत्येकं; (२) 'दहरोऽस्मिन्नन्तर आकाशः' इत्येकं (विभागं स्वयं परिकल्प्य,) (३) "तस्मिन्यदन्तस्तदन्वेष्टव्यं" इति 'तस्मिन्' इति पूर्वोक्तहृदयपुण्डरीके अन्तः—अन्तवर्ति, यत्—यो पूर्वोक्त-दहराकाशः; तत्—सः दहराकाशः, अन्वेष्टव्य इति भगवत्पादभाष्ये उक्तमित्यनूद्य, तत्र 'तस्मिन्नि'ति पदस्य प्रथमवाक्यश्रुतपुण्डरीकस्थानमित्यर्थाङ्गीकारे नैरपेक्ष्य-दोषःव्यवहितपदार्थान्वयश्च; यच्छब्दस्य पुल्लिङ्गतया विपरिणामः; सत्य

कामत्वादिगुणविध्युपासा निरसनं इति दोषचतुष्टयम् । श्रीभाष्ये तु तदन्वेष्टव्यमित्यत्र तच्छब्देन दहराकाशः तदन्तर्वर्तिगुणजातं च उभयमन्वेष्टव्यमित्युक्तम् । तत्र नपुंसकलिङ्गयच्छब्द-तच्छब्दयोः पुल्लिङ्गतया विपरिणामः एकदोषः ; परमात्मा च गुणाश्च उपास्या इति अर्थस्वीकारार्थं, स च ते च गुणाश्चेति वक्तव्ये, सच तच्चेति गुणजाताभिप्रायेण विगृह्य एकशेष-एकवद्भावरूपदोषः एक इति दोषद्वयं तत्र इति श्लोकार्थः । अत्र कैश्चिदुच्यते—

'यश्चोभयोस्समो दोषः परिहारोपि वा समः ।
नैकः पर्यनियोक्तव्यः तादृगर्थविचारणे ॥'

इति न्यायत दोषत्वाङ्गीकारे बहुसोपानयुक्त कूपे अवतीर्णौ जलाहरणसमये प्रथमसोपाने पतितः अन्त्यसोपाने पतितश्च तुल्यावेवेति न तत्र विचार्यमस्ति । अथापि उपक्रमाधिकरणन्यायबलात दहराकाशोपासनविधिरेव ज्यायान् न तु अन्यत्राश्रुत पृथग्गुणजातोपासनविधिः । इति ।

अपि च तच्छब्देन सः दहराकाशः ते च गुणाश्च इत्येव एकशेषः कर्तव्यः । 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान कामान्' इति गुणविवक्षायामपि पुल्लिङ्गबहुवचनस्यैव सत्त्वात' 'तत' इति नपुंसकएकशेषैकवद्भावरूपक्लेशप्रकारः शब्दसाधुत्वाश्रयणाय 'नपुंसकमनपुंसकेन एकवच्चान्यतरस्यां' इति सूत्रार्थवर्णनक्लेशप्रकारः श्लोकव्याख्यातॄणां बहूनां आचार्याणां स्वस्वग्रन्थेषु विप्रतिपत्तिश्च दृष्टेति नेह प्रपञ्चते । विषयवाक्ये नपुंसक 'यत' शब्द 'तत' शब्दयोः लिङ्गव्यत्यासः केवलं, 'सुप्तिमुपग्रहलिङ्गनराणां' इति व्यत्ययोबहुलं इति सूत्रस्थ महाभाष्यात 'मधोस्तृप्ता इवासते' इत्यत्र मधुन इत्यस्येवाश्रीयते । अत्र लिङ्गव्यत्ययरूपदोषोद्भावनमेव न घटते । व्यवहितान्वयदोषश्च न शब्दशास्त्रविरोधप्रयुक्तः । अपि तु आलंकारिककल्पित एव । सच

"चूडामणीकृतविधुः वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥"

इत्यत्र लीलाताण्ठवपण्डित इति प्रयोगस्य आलंकारिकपरिकल्पितसमाप्त

पुनरात्तरूपदोषसमाधानमिव अत्रापि व्यवहितान्वयरूपदोषोद्भावनं प्रतिविधेयं। तत्रापि 'निरङ्कुशाः कवयः' इत्येव समाधानं। अत्र तु श्रुत्यर्थानुपपत्तिः। अतश्च भगवत्पादमते न कोपि दोष इति ब्रुवन्ति। भगवत्पादपक्षेपि द्यावा-पृथिव्यादि सत्यकामत्वाद्याधारतया दहरोपासनमभिहितं इति। श्रीभाष्ये तु गुणानां पृथक् चिन्तनमित्येव विशेषः। एतावानेव विशेष इति भाष्य-द्वयेऽपि दोषबाहुल्य दोषाल्पत्ववर्णनं न समीचीनं। इति॥

किञ्च, तत्त्वमस्यादिवाक्यार्थविचारे तात्पर्यानुपपत्तिपरिहाराय एकपदस्य वा अनेकपदस्य वा लक्षणाश्रयणं न दोषावहं; रज्जौ सर्पभ्रम इव स्फटिके लौहित्यभ्रम इव चिद्रूपे ब्रह्मणि अनिर्वचनीयाविद्यया जगदध्यास इति च। दुर्घटत्वमविद्यायाः भूषणं न तु दूषणमिति चाभ्युपगच्छतां अस्माकं मते परैः लक्षणाश्रयणरूपदूषणवर्णनं, अविद्यायाः ब्रह्माश्रयत्वादिसप्तविधानुपपत्तिरूप-स्वमतिपरिकल्पितदूषणवर्णनमिव प्रकृते दहरवाक्ये चास्वास्थ्यचतुष्टयादि दूषणवर्णनं न कदापि युक्तमुत्पश्यन्ति सन्तः। किञ्च अस्माकं मते अनुभूतिर्नित्या। प्राग-भावाद्यभावात्। स्वतस्सिद्धा, सैव सच्छब्दवाच्या ब्रह्मैवेति। तदनूद्य विशिष्टा-द्वैतिभिः ज्ञानाश्रयं ज्ञानस्वरूपं चात्मानं परिकल्प्य प्रपञ्चस्य नित्यत्वमभ्युपगम्य तद्द्वयं ब्रह्मणो विभिन्नमपि ब्रह्मशरीरत्वेन अङ्गीकृत्य विशिष्टाद्वैतमिति स्वसि-द्धान्तनाम च परिकल्प्य स्वमतप्रक्रियया अनुभूतिप्रागभावादि दूषणं कृत्वा ज्ञानरूपं ब्रह्म स्वमतरीत्या धर्मभूतज्ञानमिति परिकल्प्य दूषितं। तत्पर्यालोचनया च वेदान्तसिद्धमतत्रये इतरमतं इतरमतयुक्तिभिः दूषयितुं न शक्यमिति प्रतीयते। 'आम्रान् पृष्टः कोविदारानाचष्टे' इति महाभाष्योक्तन्याय एव तत्रतत्र भासत इति प्रतीयते। अन्यमतवर्त्मा अन्य एव। एतन्मतवर्त्मा अन्य एव। तस्य तस्य तदुपयुक्त श्रुतिस्मृतिन्याययुक्त्यनुष्ठानादयः तत्तन्मतग्रन्थस्थाः विलक्षणा एव दृश्यन्त इति सर्वैः स्वस्वमतानुगुणवर्णनमेव स्वीयग्रन्थे कर्तव्यं; न त्वन्य-मतदूषणं। अन्यथा परस्परं दूषणे कृते वेदान्तिमतत्रयस्याप्यप्रामण्यप्रसक्तौ चार्वाकमतमेव लोके प्रबलं स्यात। तथा सति

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनां ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥"
इत्यादि गीताविरोधस्स्यादिति ॥ अलं विस्तरेण । इति ॥

---

## ५ दहराधिकरणम् । (२२)–विशिष्टाद्वैतम्

१३ दहर उत्तरेभ्यः । (७८)
१४ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च (७९)
१५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः (८०)
१६ प्रसिद्धेश्च (८१)
१७ इतरपरामर्शात् स इति चेन्नासम्भावात् । (८२)
१८ उत्तराच्चेदाविर्भूतस्वरूपस्तु । (८३)
१९ अन्यार्थश्च परामर्शः । (८४)
२० अल्पश्रुतेरितिचेत्तदुक्तम् । (८५)
२१ अनुकृतेस्तस्य च ॥ (८६)
२२ अपिस्मर्यते । (८७)

**जीवाकाशपरात्मगोचरतया दह्रं नभः पठ्यते**
**निर्धूताखिल पापजन्ममरणाभावादिवाक्यात् परः ।**
**यो जानाति गुणांश्च तं स सकलान् आप्नोति कामानिति**
**तस्मद्दह्र् नभः परात्मविषयं चिन्त्याः पृथक् तद्गुणाः ॥२०५॥**
**दह्रान्तरिक्षे पुरि सूक्ष्मरूपं तदन्तरस्थं गुणजातमन्यत् ।**
**उपासितव्यं च यदत्र भक्तैः इति श्रुतिस्तद्गुणमूर्तिमानम् ॥२०६**

**अधिकरणार्थः** अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरो अस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम् तद्वाव विजिज्ञासितव्यं" (छा ८-१-१) इत्यत्र दहराकाशः, भूताकाशः, जीवः, परंब्रह्म वेति संशये दहरः परमात्मा; उत्तरेभ्यो वाक्यगतहेतुभ्यः । 'एष आत्मा अपहतपाप्मा-

विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः सत्यकामस्सत्यसंकल्पः' इत्यादिभ्यः न जीवभूताकाशौ। 'एष सर्वेश्वरः एष सर्वभूताधिपतिः' इत्यादीनां गुणानां तयोरसंभवात् परमात्मासाधारणधर्मानुकृतिदर्शनाच्च। तस्मिन्यदन्तस्तदन्वेष्टव्यं इत्यत्र तच्छब्देन उपसंहारात् 'आत्मानं अनुविद्य व्रजन्ति एतांश्च सत्यान् कामान् इति श्रुत्या भगवद्गुणानामपि पृथक् चिन्त्यत्वेन सिद्धत्वात् उपक्रमेऽपि आत्मा च गुणजातं च उपास्यमित्येव तच्छब्देन गृहीत्वा दहराकाशः तदन्तर्वर्तिगुणजातं च अन्वेष्टव्यं इत्युक्तम्। अत्र तच्छब्दोपपत्त्यादिविचारः अन्यत्रकृतं इति नेह तन्यते।

इह केचित् दोषद्वय-दोषचतुष्टयवर्णनं न युक्तं; दोषवत्त्वे समाने दोषाल्पत्व दोषबहुत्ववर्णनमकिञ्चित्करं इत्यूचिरे। तन्नयुक्तं। वेदे यागादौ आपस्तम्बश्रौतसूत्रे पूर्वप्रायश्चित्तोत्तरप्रायश्चित्तविधायके "श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते" इत्यारभ्य दोषाल्पत्वबहुत्वानुगुणं विहितं प्रायश्चित्तं। लोके च मनुस्मृति हेमाद्रिप्रायश्चित्तग्रन्थादौ दोषाल्पत्वबहुत्वानुगुणं विहितं प्रायश्चित्तं सर्वैर्विदितमेव। तैश्च हेयोपादेयविभागं स्वीकृत्यैव शास्त्रार्थविचारवर्णनं क्रियते। भूयश्चान्ते विश्वमायानिवृत्तिरिति अन्त एव हेयोपादेयशून्यब्रह्मैक्यमिति वर्णयन्ति। अतः दोषाल्पत्व बहुत्वतारतम्यं तैरप्यङ्गीकरणीयमिति॥
'अनुकृतेस्तस्य च' 'अपिस्मर्यते' इति सूत्रद्वयमपि अधिकरणान्तरं।
एतदधिकरणार्थः श्रीशार्ङ्गपाणिस्तवे अस्माभिरुक्तः—

दहरान्तरिक्षे तव सूक्ष्मरूपं तदन्तरस्थं गुणजातमन्यत्।
उपासितव्यं च यदत्र भक्तैरिति श्रुतिस्ते गुणमूर्तिमानम्॥

(श्री शा-श्लो-१८९)

---

## ५ दहराधिकरणम् (२४)—द्वैतम्

**१४ ओं दहर उत्तरेभ्यः।** (७७)

**१५ ओं गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च।** (७८)

**१६ ओं धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः।** (७९)

१७ ओं प्रसिद्धेश्च । (८०)

१८ ओं इतरपरामर्शात् स इति चेन्नासंभवात् । (८१)

१९ ओं उत्तराच्चेदाविर्भूतस्वरूपस्तु । (८२)

२० ओं अन्यार्थश्च परामर्शः । (८३)

२१ ओं अल्पश्रुतेरिति चेत्तदुक्तम् । (८४)

**छान्दोग्यदृष्टो दहरश्च विष्णुः प्रतिष्ठितं सर्वममुत्र यस्मात् ।**
**यत्सेतुधृत्यादि गुणान् ब्रवीति श्रुतिः पुराणं च न जीवशङ्का ॥ २०७॥**

**अधिकरणार्थः** "अथ यदिदं दहरं पुण्डरीकं वेश्म दहरो अस्मिन्नन्तर आकाशः" "किं तदत्र विद्यते" विद्युन्नक्षत्राणि इत्यादि श्रुतेः आकाशस्य चन्द्राऽदित्याद्याधारत्वं श्रुतं । स आकाशः विष्णुरेव । 'य आत्मा अपहत पाप्मा' इत्यादि वाक्यादेव । 'एष सेतुर्विधृतिः एष भूपालः' इत्यस्य महिम्नश्च श्रुतेः । जीवस्य स्वतो अपहतपाप्मत्वाद्यसंभवात् भूताकाशस्य उत्तरवाक्योक्त परमात्मगुणानुपपत्तेश्च ।

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तः तदन्वेष्टव्यं "इत्यादि परिदृश्यमानदेहान्तरस्थित अल्पपरिमाणपुण्डरीकवेश्मनि वर्तमानः अल्पपरिमाणः दहराकाशः भूताकाशः तदन्तर्वर्ती विष्णुः अन्वेष्टव्य इत्यर्थः । सूत्रे दहरशब्देन हृदयकमलवर्ति भूताकाशापरनामस्थित विष्णुरेव ग्राह्यः । उत्तरत्र "यावान्वा अयमाकाशः तावानेषो अन्तर्हृदय आकाशः" इत्यादिना विष्णुनिष्ठा गुणाः सर्वेऽपि भूताकाशेऽपि स्थिता इति स्पष्टमुक्तः । एतत् प्रकरणस्थ सर्वश्रुत्यर्थस्वारस्याच्च अयमेवार्थो न्याय्यः । न च अल्पायतने हृदयकमले सर्वव्यापिनः विष्णोः कथं स्थितिरिति वाच्यं । विष्णोरचिन्त्यशक्तिमत्वात् सर्वमुपपद्यत एव । अत एव 'यस्मिन् विरुद्धगतयोप्यनिशंपतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या' इत्युक्तं संगच्छते । श्रीभाष्ये तावत् दहराकाशः परमात्मा, तस्मिन् यदन्तरिति तन्निष्ठगुणजातं उभयमपि तदन्वेष्टव्यमित्यादिना जिज्ञास्यं इत्युक्तम् । तच्छब्दे

"नपुंसकमनपुंसकेनैकवच्चान्यतरस्यां" इति पाणिनीसूत्रेण एकशेष इत्युक्तं । एतदानुगुण्येन तृतीयाध्याये "प्रदानवदेव तदुक्तं" 'कामादीतरत्र तत्र चायतनादिभ्यः" इत्यादि सूत्रेषु गुणिचिन्तनेऽपि गुणचिन्तनं पृथक्तया कर्तव्यं इत्युक्तं। तत्सर्वं न स्वरसमिति। तादृशार्थस्वीकारे श्रुत्यर्थसूत्रार्थयोः क्लेशवर्णनमिति मत्वैव भगवत्पादभाष्येऽपि तथा न वर्णितम्। तद्विस्तरः तदीयग्रन्थादावेव द्रष्टव्य इति।

तत्—पूर्वोक्तद्युभ्वाद्यायतनं विष्ण्वाख्यं ब्रह्म, दहरे—दहरपुण्डरीके वर्तते। उत्तरेभ्यः—अपहतपाप्मत्वादिगुणेभ्य इति सूत्रार्थः ॥

---

## (६) अनुकृत्यधिकरणम् (२४)—अद्वैतम्

२२ **अनुकृतेस्तस्य च।** (८५)

२३ अपि च स्मर्यते। (८६)

**विभान्ति सर्वाणि यदीय भासा भान्तं तमर्केन्दुधनञ्जयाद्याः।**
**यतोनुभान्त्यत्र न धातुरेषः ब्रह्मस्वरूपानुकृतेः परात्मा ॥ २०८॥**

**अधिकरणार्थः** 'न तत्र सूर्यो भाति न चन्द्रतारकं, नेमा विद्युतो भान्ति कुतोयमग्निः। तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति' (मु-२-२-१०) इत्यत्र किं तेजोधातुः, उत परमात्मेति। तेजो धातुरिति पूर्वपक्षः। सूर्यादीनां भाने चन्द्रतारकादि यथा न प्रकाशते तथा तेजोधातोर्भाने सूर्यादीनां भानाभाव उचित एवेति। तमेव भान्तमनुभाति सर्वं इत्यनुभानं परमात्मपरिग्रह एव संगच्छते। "भारूपः सत्यसंकल्पः" (छा ३--४-२) इति हि परमात्मस्वरूपं। न तु तेजोधातुं किंचित् सूर्यादयो अनुभान्ति इति परमात्मभानमनुसृत्य सूर्यादीनां भानात्।

"न तद्भासयते सूर्यः न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धामपरमं मम ॥"

'यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।' इति स्मृत्या च परमात्मानमनुसृत्यैव भानप्रतीतेः परमात्मैव। इति ॥

६ अनुकृत्यधिकरणं (२५)–द्वैतम्

२२ ओं अनुकृतेस्तस्य च। (८५)
२३ ओं अपिस्मर्यते। (८६)

विष्णोस्सुखमनिर्देश्यं तथैव ज्ञानिनामपि।
नो विष्णुभासा भासन्ते सर्वाणीति विभावय॥ २०९॥

**अधिकरणार्थः** "तमेव भान्तमनुभाति सर्वं 'इत्यनुकारेण' तस्य भासा सर्वमिदं विभाती'ति वचनाच्च परमात्मैव अनिर्देश्य सुखस्वरूपः। न जीवात्मा। "तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्' 'तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषां' इत्यादि मानात ज्ञानिसुखस्य अनिर्देश्यतोक्तेरपि ज्ञानिसुखं अनुभाति सर्वं इति श्रुत्यभावात् 'न तद्भासयते सूर्यः "कथं नु तद्विजानीयां" इत्यादि प्रमाणाच्च परमात्मैव अनिर्देश्यसुखस्वरूपः; न ज्ञानिन इति। अनुकृतेस्तस्य च—ज्ञानार्थं प्रार्थितं वस्तु; तत्तु—विष्णुरेव। अनुकृतेः=जगद्भानप्रयोजकभानाश्रयत्वश्रवणात्। तस्य च="तस्य भासा सर्वमिदं विभाती'ति तस्यैव श्रुतेश्च॥

अपि स्मर्यते— 'न तद्भासयते सूर्यः" इत्यादि स्मृतेश्च।

---

७ प्रमिताधिकरणम् (२५)–अद्वैतम्

२४ शब्दादेव प्रमितः (८७)
२५ हृद्यपेक्षया तु मनुष्याधिकारत्वात्। (८८)

योङ्गुष्ठमात्रः पुरुषश्श्रुतस्सः जीवः परो वा परिणामिजीवः।
नेशानशब्दात् पर एव भक्तनृहृद्यपेक्षोङ्गुळिगो दयार्द्रः॥२१०
उपाधिमत्त्वाच्च परात्मनस्तत् अंगुष्ठमात्रत्वमिहोपमञ्च।
जीवस्य लिङ्गादिकमत्र दृष्टं ईशानशब्दश्रुतिबाधितं तत्॥

**अधिकरणार्थः** 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' 'अङ्गुष्ठ-

मात्रः पुरुषः ज्योतिरिवाधूमकः'; ईशानो भूतभव्यस्य स एवाद्य स उश्व एतद्वैतत (का--२-४-१३)इति ।विषयवाक्यम् ।

अत्र अङ्गुष्ठपरिमाणः पुरुषः विज्ञानात्मा,परमात्मा वेति विशये अंगुष्ठमात्रशब्दे प्रमाणे 'द्वयसज्दघ्नञ्मात्रचः' इति व्याकरणसूत्रेण मात्रच् प्रत्ययान्ताङ्गुष्ठमात्रशब्देन परिमित्यवगमात् ब्रह्मणश्च तदभावात् अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति भारतोक्त्या जीवस्य 'अङ्गुष्ठमात्रप्रसिद्धेश्च विज्ञानात्मेति प्राप्ते परमात्मैवायं। शब्दादेव--'ईशानो भूतभव्यस्ये'ति ईशानशब्दश्रुतेरेव। सर्वगतस्यापि परमात्मनः मनुष्यहृदये उपासनार्थं दयया वर्तमानत्वात् तदपेक्षया अङ्गुष्ठमात्रत्वं। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यं अर्थविप्रकर्षात्" इति तार्तीयाधिकरणन्यायेन जीवलिङ्गापेक्षया परमात्मबोधकशब्दश्रुतेरेव बलीयस्त्वात्।

---

## (६) प्रमिताधिकरणं (२३)--(विशिष्टाद्वैतं

(२३) शब्दादेव प्रमितः। (८८)

(२४) हृद्यपेक्षया तु मनुष्याधिकरत्वात् (८९)

**अङ्गुष्ठमात्रः पुरुषोन्तरात्माजीवो भवेदुन्मिति दर्शनान्न ।**
*** स भूतभव्यस्य नियन्तृतोक्तेः ध्यातुस्सुखायैव मनस्थितेश्च ॥ २१२॥**

**अधिकरणार्थः** 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वैतत्' (कठ-२-४-१२) 'मुञ्जादिवैषीकां धैर्येण। तं विद्याच्छुकममृतं"। (कठ-२६-१७) इति विषयवाक्यम्।

अत्र अंगुष्ठमात्रः प्रमितः जीवात्मा, परमात्मा वेति संशये परिमितित्व श्रवणात् जीव इति प्राप्ते 'शब्दादेव प्रमितः' इति प्रमितः--अङ्गुष्ठप्रमितः परमात्मा। ईशानो भूतभव्येत्यत्रत्य 'ईशान' शब्दश्रुतेरेव।

---

* सः--परमात्मा।

मनुष्यहृद्यपेक्षया परमात्मन अंगुष्ठ प्रमितत्वं । 'अणोरणीयान् महतो महीयानि'ति तस्य महिमोक्तेः ।

---

### (७) वामनाधिकरणम् (२६)—द्वैतम्

(२४) ओं शब्दादेव प्रमितः । (८७)
(२५) ओं हृद्यपेक्षया तु मनुष्याधिकारत्वात् । (८८)

'ऊर्ध्वमुन्नयति प्राणं' इति लिङ्गात् सदागतिः ।
न वामनश्रुतेरेव विष्णुर्नरहृदि स्थितः ॥ २१३ ॥

अधिकरणार्थः । ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति । मध्ये-वामनमासीनं विश्वेदेवा उपासते" (का-२-२-३) इत्यत्र सर्वदेवोपास्यः प्राण इति विज्ञायते । अतः वायुरेवात्र उपास्य इति प्राप्ते 'शब्दादेव प्रमितः' । अत्र प्रमितः विष्णुरेव । मध्ये वामनमासीनमिति 'वामनशब्दश्रुतेरेव । प्राणलिङ्गं च विष्णोरेव' तद्वै त्वं प्राणोभवः;' इति श्रुतेः । मनुष्याणां विद्याधिकारत्वात् सर्वगतस्यापि विष्णोः मनुष्यहृदयापेक्षया इति प्रमितत्वं विष्णोः ।

सूत्रार्थः । शब्दोदेवेत्यादि— ईशानशब्दवाच्यः, तत्तु-विष्णुरेवेति, प्रमितः— निश्चितः ; शब्दादेव मध्ये वामनमासीनमिति वामनशब्दश्रुतेरेव । वामनशब्दः विष्णावेव प्रसिद्धः । न प्रधानवायुः ॥ हृद्यपेक्षयेत्यादि–तत्तु-व्यापकमपि ब्रह्म वेदविद्याधिकारि मनुष्यहृदयापेक्षया अंगुष्ठमात्रमपि भवति । उपासकानुग्रहाय । तिरश्चां अंगुष्ठमात्रहृदयाभावेऽपि न विरोधः । इति ॥

वामास्सुन्दर्यः–तासां नेतारं विष्णुमित्यर्थः । इदं प्रकरणं सर्वं जीवेभ्यः विष्णुः भिन्न इति बोधयति । 'अङ्गुष्ठमात्रो पुरुषोन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इत्यादि श्रुतेः । परोक्तः संसारिजीवाभेदः परमात्मनः न युक्त इति ॥

---

## ८ देवताधिकरणं । (२६)—अद्वैतम्

२६ तदुपर्यपि बादरायणः संभवात् (८९)
२७ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् । (९०)
२८ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् । (९१)
२९ अत एव च नित्यत्वम् । (९२)
३० समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च (९३)
३१ मध्वादिष्वसंभवादनधिकारं जैमिनिः । (९४)
३२ ज्योतिषि भावाच्च । ९५)
३३ भावन्तु बादरायणोऽस्ति हि । (९६)

**अर्थित्वसामर्थ्ये सुधीत्वयोगात् सद्ब्रह्मविद्याधिकृतिः सुराणां ।**
**बहुत्ववत्त्वाभ्युपपत्तिसत्त्वात् यज्ञादिदेशागमने न दोषः ।।२१४।।**
**'एतेन वाचः पदवीय'मादि श्रुत्या त्रयीनित्यविरोधिता न ।**
**अनादिसंसारकथादि दृष्ट्या कल्पान्तरेऽप्युद्भवसंभवाच्च ।।२१५।।**
**देवानां ब्रह्मविद्यास्वधिकृतिरिति चेत् यासु देवा उपास्याः**
**श्रूयन्ते तासु तेषां न भवति हि फलं प्राप्तवस्त्वादिकत्वात् ।**
**अन्यासु ब्रह्मविद्यास्वधिकृतिरपि च ब्रह्मणः प्राप्तिसत्त्वात्**
**तस्मान्मध्वादिविद्यास्वधिकृतिविरहः सिद्ध एवामराणाम् ।।२१६।।**

**अधिकरणार्थः ।** 'एकशतं ह वै वर्षाणि मघवान् प्रजापतौ **ब्रह्मचर्यमुवास,** (छा ८-११-३) भृगुर्वै वारुणिः' (तै ३-१) इति मनुष्याधिकारप्रसङ्गात् देवतानामपि ब्रह्मविद्यायामधिकारो अस्ति नवेति विचारः ।

"विग्रहो हविराधानां युगपत्कर्मसन्निधिः ।
प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥"

इति पूर्वमीमांसायां देवतानां विग्रहाद्यभावकथनात् अर्थित्वाद्यसंभवाच्च नाधिकार इति प्राप्ते, 'वज्रहस्तः पुरन्दरः' 'अग्निर्वा अकामयत', भृगुर्वै

वारुणिः वरुणं पितरमुपससार' एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास' इत्यादि मन्त्रार्थवादेतिहास पुराणश्लोकेभ्यः विग्रहवत्त्वाद्यवगमात् देवतानां विग्रहवत्त्वादिसिद्धेः अधिकार इति। 'इन्द्रो वै शिथिल इवाप्रतिष्ठित आसीत्' असौ वा आदित्यो न व्यरोचत। तस्मै देवाः प्रायश्चित्तिमैच्छन्'॥ 'देवाऽसुरास्संयत्त ऽऽसन्; तान् देवानसुरा अजयन्। ते देवाः पराजिग्यानाः'' इत्यादि सद्भावाच्च॥ 'देवा वै समासत' इत्यादिश्रुतिभ्य अर्थित्वादि सद्भावाच्च। शरीरवानप्येकः अनेकत्र युगपत् उपयोगभावं न गच्छति। यथा एको ब्राह्मणः युगपत् अनेकत्र भोजयद्भिः बहुभिः न भोज्यते। क्वचित् एकोपि विग्रहवान् अनेकत्र उपयुज्यते। यथा बहुभिर्नमस्कुर्वाणैः एको ब्राह्मणः युगपन्नमस्क्रियते। तद्वत् अनेकत्र यागेषु देवताबुद्धिश्च विग्रहवत्सु देवेषु युज्यते। सौभर्यादिवत् अनेकशरीरं गृहीत्वा अनेकयागेषु सन्निधानमप्युपपद्यते। तद्वत्। वेदानित्यत्वदोषश्च श्रुत्यैव परिहृत एव

श्री भाष्ये मध्वादिष्वित्यारभ्य सूत्रत्रयमेकाधिकरणं पृथक्॥

---

## ७ एतद्मते देवताधिकरणं (२४)—विशिष्टाद्वैतम्

२५ तदुपर्यपि बादरायणस्सम्भवात्। (९०)
२६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्। (९१)
२७ शब्द इति चेन्नातः प्रभावात् प्रत्यक्षानुमानाभ्यां। (९२)
२८ अत एव च नित्यत्वं (९३)
२९ समाननामरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात् स्मृतेश्च (९४)

देवादीनां शरीरादिकमपि न भवत्यात्मजिज्ञासबीजं
तत्सत्त्वेऽनेकयागे कथमिह घटते यौगपद्यागमादि।
तस्मात् सद्ब्रह्मविद्यास्वधिकृतिरपि नेत्यस्ति देवेषु विद्या
एषां तन्वादिमत्त्वात् बहुमखगमने ज्ञानशक्तयादिमत्वात्॥२१७॥

**अधिकरणार्थः।** ''कस्य वाह देव यज्ञमागच्छन्ति कस्य वा न बहूनां। यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाश्वो भूते यजते'

इति यजुर्वेदसंहितायां । अत्र प्रसङ्गात् देवानामपि ब्रह्मविद्यास्वधिकारः प्रस्तूयते। देवतानां शरीराद्यभावात् ब्रह्मविद्यायां नाधिकार इति प्राप्ते श्रुतीतिहासपुराणादिभ्यः देवानां विग्रहादिसद्भावबोधात् ब्रह्मविद्यासु अधिकारो अस्त्येव । इति ।

न च, ऐकशास्त्र्यसमर्थनात् पूर्वमीमांसोक्तार्थनिरासः कथमुपपद्यत इति वाच्यम्। जैमिनेः कर्मप्ररोचनार्थं तथावर्णनमित्यर्थात् । शरीरवत्त्वाद्यभ्युपगमे यागादौ गमनागमनादि फलप्रदानादिकं च ज्ञानशक्त्यादिमत्त्वादुपपद्यते । तथाऽभ्युपगमे वेदस्यानित्यसंयोगरूप दोषः कथं वार्यत इति चेत् "धाता यथापूर्वमकल्पयत्" (तै नास ६-१-३८) इति श्रुत्या प्रलयेऽपि भगवता सह वेदानां सत्त्वात्, कल्पान्तरे भगवत्सृष्टचतुर्मुखाय वेदस्य उपदेशाच्च वेदानां सदानित्यत्वं अपौरुषेयत्वं च घटत एवेति नानित्यत्वादि दोषः संभवति । अत्र पूर्वाचार्यैरेतदधिकरणार्थसंग्रहश्लोकः—

"पटुतरविग्रहादिवहतां भवतापवतां भगवदुपासनं दिविषदामपि संभवति ।
ननु शतमर्थवादवचसामपि मन्त्रगिरां विधिवदिहँ प्रमाणमपदोषममुं प्रभवम् ॥"

---

## ८ देवताधिकरणं (२७)—द्वैतम्

२६ ओं तदुर्यपि बादरायणस्संभवात् (८९)

२७ ओं विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् (९०)

२८ ओं शब्द इति चेन्नातः प्रभावात् प्रत्यक्षानुमानाभ्यां (९१)

२९ ओं अत एव च नित्यत्वं । (९२)

३० ओं समान नामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ।

३१ ओं मन्त्रादिष्वसंभवादनाधिकारं जैमिनिः (९४)

३२ ओं ज्योतिषि भावाच्च (९५)

३३ ओं भावन्तु बादरायणोस्ति हि । (९६)

नृभ्योऽधिकज्ञानवतां सुराणां विद्या तिरश्चामपि दृश्यतेऽतः ।
पूर्वं मितज्ञा मनुजास्स्वपुण्यात् ज्ञानाधिका निर्जरभावमापुः ॥
तदा कृतेकर्मणि देवहानेः उद्देश्यभावो घटते न चेति ।
देवत्वमापन्न नरा अनेके सन्तीति नैवास्ति विरोध एव ॥
मधुविद्यादि विद्यासु नाधिकारस्सुपर्वणाम् ।
प्रकाशाधिकसत्त्वाच्च भवतीति मुनेर्मतम् ॥ २२० ॥

**अधिकरणार्थः** । मनुष्याणामेव ब्रह्मविद्यायामधिकार इत्युक्तं पूर्वाधिकारणे । इदानीं मनुष्याणामुपरि देवादीनामपि अधिकबुध्यादिमत्त्वात् अधिकारः संभवति । अथापि तिरश्चां ज्ञानादि ब्रह्मोपासनादि निषेधाभावात् जरितार्यादीनां तिरश्चामपि ज्ञानवत्त्वदर्शनात् उपासनासंभवोस्ति । 'यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन् तेहनाकं महिमानस्सचन्ते यत्र पूर्वे साध्यास्सन्ति देवाः' इत्यादि श्रुतेः । अत एव वालि–जटायुप्रभृतीनां सन्ध्यावन्दनादिकं तदौर्ध्वदेहिककर्म च सुग्रीवरामप्रभृतिभिः कृतमुपपद्यते । 'वसूनामेव एको भूत्वा' इत्यादिना प्राप्यफलवोक्तेः मध्वादि विद्यासु वस्वादिपदं प्राप्तानां वस्वादीनां नाधिकार इति जैमिनिमतं । प्रकाशाधिक्यादिफलान्तरस्य ज्योतिरूपब्रह्मणि उपास्ति सत्त्वाच्च मध्वादिविद्यायां अधिकारो अस्त्येवेति बादरायणमतम् । न च ऋषीणां परस्पर विरोधः शङ्क्यः । उक्तफलानधिकारमात्रं जैमिनेर्मतं । व्यासचित्ताकाशस्यैव सर्वत्रास्थितत्वादिति पूर्वमेवोक्तम् । इति ॥

यज्ञेनेत्यादि–देवत्वयोग्या मनुष्याः ज्ञानकर्मात्मकेन यज्ञेन यज्ञनामानं विष्णुमपूजयन्; तानि देवाः, देवपदं प्राप्य, प्रथमानि—मुख्याः, धर्माणि=लोक साधका आसन् । ते देवाः—महात्मानः, स्वाधिकारान्ते, नाकं—मोक्षं, सचन्त=आप्नुवन् । यत्र—मोक्षे, पूर्वे=पूर्वकल्पीयमुक्ताः, साध्याः=साध्यनामकदेवाः सन्तीत्यर्थः ॥

---

## (८) एतद्गर्भे मध्वधिकरणम् । (२५)—विशिष्टाद्वैतम्

(३० मध्वादिष्वसंभवादनधिकारं जैमिनिः । (९५)
(३१) ज्योतिषि भावाच्च । (९६)
(३२) भावं तु बादरायणोऽस्ति हि । (९७)

वस्वादीनामुपास्तिः यदि भवति विसृज्याथ मध्वादि विद्याः
स्वोपास्तेस्तत्र सत्त्वादितिवदसि न च ब्रह्म लाभादिभावात् ।
"तं देवाज्योतिषामि"त्ययमपि च परब्रह्मरूपार्थ उक्तः
तादृङ्मोक्षार्थिसत्त्वात् भवति दिविषदां ब्रह्मविद्याधिकारः॥

अधिकरणार्थः "असौ वा आदित्यो देवमधु" इत्यारभ्य "अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता; एकल एव मध्ये स्थाता; तदेषश्लोकः" । "न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति, स एतमेव ब्रह्मोपनिषदं वेद" (छा-३) इत्यन्तं विषयवाक्यम् । अत्र मध्वादिविद्यासु देवतानां अधिकारो अस्ति न वेति विशये 'स य एतदेवममृतं वेद, वसूनामेव एको भूत्वा अग्निनैव मुखेन एतदेव अमृतं दृष्ट्वा तृप्यति' (छा-३-६-३) इति एतद्विद्यायाः वस्वादिप्राप्तिरेव फलमिति श्रूयते । 'तं देवा ज्योतिषां ज्योतिः आयुर्होपासतेऽमृतं' (बृ-६-४-१४)इति ज्योतिरूपब्रह्मण्येव देवानां उपासनमिति च श्रूयते । अतः नाधिकार इति प्राप्ते 'अथ तत ऊर्ध्व उदेता' इत्यादि वाक्यशेषात वस्वादिशरीरकपरब्रह्मप्राप्तिरूपफलस्य श्रवणात अस्ति देवानामपि मधुविद्यायामधिकारः ।

"कालावर्तान प्रकृतिविकृतीः कामभोगेषु दोषान
ज्वालागर्तप्रतिमदुरितोदर्कदुःखानुभूतिं ।
याथातथ्यं स्वपरनियतं यच्चदित्थं पदं तत
काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम ॥",

इत्याचार्योक्तेः वस्वादीनां सतां स्वाधिकारावसाने मधुविद्याफलं पुनः वस्वादित्वं कथं सङ्गच्छत इति चेत;

"मुमुक्षुत्वे तुल्ये सति च मधुविद्यासु च यथा
व्यवस्था संसिध्यत्यधिकृतिविशेषेण विदुषाम् ।
विकल्प्येत न्यासे स्थितिरितरविद्यासु च तथा
नियत्या वैय्यात्यं नियमयितुमेवं प्रभवति ॥"

इत्याचार्येणैव समाधानोक्तेः "भावन्तु बादरायणोऽस्ति हि' इति सूत्रान्यथानुपपत्या विलम्बेनापि मोक्षेच्छया मुमुक्षुत्वाङ्गीकर्तव्यत्वात् तत्र तत्पूर्वकर्मण एव निमित्तत्वात् ।

---

(९) अपशूद्राधिकरणम् (२७)—अद्वैतम्

(३४) शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि । (९७)
(३५) क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् । (९८)
(३६) संस्कारपरामर्शात्तदभावाभिलापाच्च । (९९)
(३७) तदभावनिर्धारणे च प्रवृत्तेः । (१००)
(३८) श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च । (१०१)

"शूद्रेति चामन्त्र्य" समादिशत्तत् ब्रह्म स्वशिष्याय महर्षिरैक्वः ।
विद्यासु शूद्राधिकृतिर्भवेन्न शोकार्थकद्योतक एव शूद्रः ॥ २२२ ॥
जानश्रुतिर्ब्राह्मणसाहचर्यात् ग्रामादिदानाच्च नृपाग्रणीः सः ।
विप्रं विनिश्चित्य जबालपुत्रं यद्गौतमोस्मा उपनेतुकामः ॥ २२३ ॥
सर्वत्रविद्यासु गुरुस्स्वशिष्यान् संस्कारपूर्वं च समादिदेश ।
स्वजातिसंस्कारविशुद्धशूद्रो ज्ञानी च विद्यां न समर्हतीति ॥ २२४ ॥
धर्मव्याध-तुलाधार-शबरी-विदुरादयः ।
अनुल्लङ्घ्यैव शास्त्रार्थं अब्रुवन्निति विश्रुतम् ॥ २२५ ॥

**अधिकरणार्थः** संवर्गविद्यायां ब्रह्मजिज्ञासया आगतं जानश्रुतिं शूद्रेत्यामन्त्र्य ब्रह्मोपदेशं कृतवानिति विज्ञायते । "अहहारे त्वा शूद्र तवैव सह गोभिरस्तु' 'वायुर्वाव संवर्गः, प्राणो वाव संवर्गः' इत्यारभ्य 'तौ वा एतौ द्वौ संवर्गौ; वायुरेव देवेषु प्राणः प्राणेष्वि'ति ' (छा-४-२)

अत्र शूद्रस्य ब्रह्मविद्याधिकारो अस्तीति प्रतिभाति। शूद्रशब्दस्य शुक् शोके इत्यस्मात् धातोः व्युत्पन्नत्वेन ब्रह्मज्ञानालाभनिमित्तशोक एव शूद्रशब्दार्थ इति, न शूद्रस्य अधिकार इति सिद्धान्तः। अस्य—जानश्रुतेः, शुक्—शोक एव द्योत्यते। नारदपर्वतोक्त ब्रह्मज्ञानाभावात् तदनादरश्रवणात् शोकेन सह रैक्वं प्रति गमनाच्च शोक एव सूच्यते। न तु जात्या आह्वानमिति।

ब्रह्मविद्याप्रकरणे उपनयनादि संस्कारपूर्वकोपदेश एव प्रसिद्धः। शूद्रस्य 'पद्यु हवा एतच्छ्मशानं यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येतव्यं तस्माच्छूद्रो यज्ञेऽनवकॢप्तः। 'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति।' इत्यादिना शूद्रस्य संस्काराभावश्रवणात्; सत्यकामं प्रति तस्य शूद्रत्वाभावनिश्चयादेव गौतमेन उपनयनादि संस्कारपूर्वशास्त्रोपदेशः प्रतीयत इत्यस्माद्धेतोश्च। 'न चास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत्। अनृतं चातिवादश्च पैशुन्यमतिलोभता। निकृतिश्चाभिमानश्च जन्मतश्शूद्रमाविशेत्॥' इत्यादिना शूद्रस्योपदेशाभावनियमात्।

---

## ९ एतद्धर्मे अपशूद्राधिकरणम् (२६)—विशिष्टाद्वैतम्

(३३) शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि (९८)

(३४) क्षत्रियत्वगतेश्च (९९)

(३५) उत्तरत्र चैत्ररथेन लिङ्गात् (१००)

(३६) संस्कारपरामर्शात्तदभावाभिलापाच्च (१०१)

(३७) तदभावनिर्धारणे च प्रवृत्तेः (१०२)

(३८) श्रवणाध्ययनार्थप्रतिषेधात् (१०३)

(३९) स्मृतेश्च (१०४)

**यज्ञाद्यनुष्ठानसमर्हता नेत्युक्तेऽपि विद्याधिकृतौ न दोषः।**
**ज्ञानात्मकत्वादथ शूद्र एहीत्युपादिशद्रैक्व इति श्रुतेश्च॥ २२६॥**
**शूद्रस्य संस्कारविनिन्दनाच्च जानश्रुतेः क्षत्रियतावगत्या।**
**शूद्रस्य दद्यान्न मतिं कदाचित् इत्यादिना नाधिकृतिश्च शूद्रे॥२२७॥**

**अधिकरणार्थः ।** 'आजहारेमाश्शूद्र अनेनैव मुखेनालापयिष्यथाः' (छा-४-२-५) इत्यत्र शूद्रशब्देनामन्त्र्य ब्रह्मोपदेशश्रवणात् शूद्रस्य ब्रह्म-विद्याधिकारोस्तीति प्राप्ते नाधिकार इति सिद्धान्तः।

अस्य—जानश्रुतेः ; शुक्—शोकत्वमेव लभ्यते । हंसोक्तानादरवाक्य-श्रवणात् । तादृश शोकापनोदनाय रैक्वं प्रति गमनाच्च । क्षत्रियब्राह्मणसाह-चर्याच्च जानश्रुतेः क्षत्रियत्वस्यैवावगतेः । शूद्रस्य उपनयनादिसंस्कारा भावात्, उपदेशनिषेधाच्च शूद्रस्य वेदोक्तकर्मसु विद्यासु च नाधिकारः ।

त्रैवर्णिकानां वदतीह विद्या न चान्त्यवर्णस्य कदाचनेति ।
किमर्थमेते च लपन्ति शास्त्रैः श्रुतेर्विरुद्धार्थकृते घटेश॥' श्री-शा १५२
मृषैव यस्याभिमता त्रयी च सर्वैर्विनापि न दोषभाक् स्यात् ।
वर्णाश्रमाद्याचरणेन किं नु चार्वाकपक्षस्तु बलो विभाति॥' श्री शा १५३
"वाक्यार्थज्ञा मोक्षभाजो यदिस्युः शूद्राद्या ये वेदबाह्यास्तथा स्युः ।
तर्ह्यन्नयाः शोचनीया भवेयुः ज्ञानं तस्मात् मोक्षहेतुर्विधेयम् ॥' (श्रीशा-२०४)
इत्येतदधिकरणार्थश्च अस्माभिरुक्तः श्रीशार्ङ्गपाणिस्तवे ॥

---

## ९ अपशूद्राधिकरणम् (२८)—द्वैतम्

**३४ ओं शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि (९७)**
३५ ओं क्षत्रियत्वावगतेश्चोत्तरत्रचैत्ररथेन लिङ्गात् । (९८)
३६ ओं संस्कारपरामर्शात्तदभावाभिलापाच्च । (९९)
३७ ओं तदभावनिर्धारणे च प्रवृत्तेः । (१००)
३८ ओं श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च । (१०१)

**पौत्रायणं 'शूद्र' इति ब्रुवन्तं छान्दोग्यवाक्यं प्रसमीक्ष्य शङ्का ।**
**शोकार्तजानश्रुतिमाह रैक्वः जानश्रुतिः क्षत्रिय एव दृष्टः ॥ २२८ ॥**
**शूद्रस्य नाग्निर्न च संस्कृतिस्सा तदन्त्यवर्णेषु भवेन्नविद्या ।**
**स्त्रीणां सतीनां त्वधिकारभावः मन्त्रादिलिङ्गात् घटते त्रयीषु ॥२२९॥**

**अधिकरणार्थः** । जानश्रुतेः पौत्रायणस्य शूद्रत्वशंकया शूद्रस्यापि ब्रविद्यायामधिकारोस्तीति प्राप्ते पौत्रायणस्य अश्वतरीयुक्तरथस्य 'चित्र' इति मधेयेन चित्रसंबन्धी जानश्रुतिः क्षत्रिय इत्यवगतेः "यत्र वेदो रथस्तत्र न दो यत्र नोरथः" इति प्रमाणात् जानश्रुतेः वेदवत्त्वदर्शनाच्च जानश्रुतिः न शूद्रः। पि तु क्षत्रिय एव ।

राजा पौत्रायणश्शोकात् शूद्रेति मुनिनोदितः ।
प्राणं विद्यामवाप्यास्मात् परं धर्ममवाप्तवान् ॥

ते पाद्मवचनाच्च । शूद्रस्य संस्काराद्यभावाच्च न शूद्रस्याधिकारः । पत्नीं मेपराधमा' इत्यादि मन्त्रलिङ्गात् उत्तमस्त्रीणां इन्द्राण्या-नामिव ब्रह्मविद्यास्वधिकारो अस्त्येव । शूद्रवत् निषेधाभावात् । विदुरादीनां जन्मन्युत्पन्न अपरोक्षज्ञानत्वेन इतरशूद्रादिभ्यो विशिष्टत्वात् वेदार्थावधारणादि निषिद्धमित्यर्थः ।

---

## १० कम्पनाधिकरणम् (२८)—अद्वैतम्

### २९ कम्पनात् (१०२)

**स्माज्जगत्सर्वमिदं बिभेति प्राणस्य आत्मा किमु वायुरेव ।**
**णः परात्मा भयहेतुदृष्टेः प्राणः परात्मेति मरुत्वदुक्तेः ॥ २३ ॥**

**अधिकरणार्थः** 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम् ।' द्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ।' (का-२-६-२) इति । त्र सर्वजगद्भयङ्करप्राणशब्दवाच्यः वायुर्वा परमात्मा वेति संशये णशब्दस्य रूढ्या पञ्चवृत्तिवायावेव प्रसिद्धेः वायुरिति प्राप्ते 'अमृतास्ते वन्ती'ति वाक्यशेषात् 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते (का-२-६-१) ते पूर्ववाक्याच्च' भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः (तै-८-१) इति त्यन्तराच्च परमात्मैव प्राणशब्दवाच्यः ।

---

## ११ ज्योतिर्धर्शनाधिकरणम् (२९)—अद्वैतम्

### ४० ज्योतिर्दर्शनात् (१०३)

**ज्योतिः परं प्राप्यनिजस्वरूपेणैक्यं समाप्नोति यदुच्यते तत् ।**
**ज्योतिः परब्रह्म यदेष आत्मा विधूत पापो भवतीति वाक्यात् ॥**

**अधिकरणार्थः** 'एष संप्रसादो अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते' (छा ८-१२-३) इत्यत्र ज्योतिश्शब्दः चक्षुर्विषयतमोपहं तेजः किं वा परंब्रह्मेति विशये तमोपहं ज्योतिरिति पूर्वपक्षः । प्रकरणात् 'एष आत्मा अपहतपाप्मा' इत्यादि पूर्ववाक्यदृष्टात्मानुवृत्या परमात्मैव ज्योतिश्शब्दवाच्यः । 'परं ज्योतिः', 'स उत्तमः पुरुषः (छा८-१२-३) इत्यादि विशेषणाच्च परमात्मैवेति सिद्धं । ननु, ज्योतिश्चरणाभिधानात्' इत्यधिकरणेन ज्योतिश्शब्दवाच्यः परमात्मैवेति सिद्धे, कथं पुनराशंकेति चेत् तत्र ब्रह्मप्रकरणात् ज्योतिश्शब्दः परमात्मानं वक्ति । अत्र तथा नेति । 'अथ यत्रैतस्माच्छरीरादुत्क्रामति; अथ एतैरेव रश्मिभिः ऊर्ध्वमाक्रमते' (छा-८-६-५) इति मुमुक्षोः आदित्यप्राप्तिः फलत्वे अभिहित इति पूर्वपक्षोत्थितेः निदानमिति भावः ।

सिद्धान्ते तु मुमुक्षोः आदित्यप्राप्तिः न मोक्षः । गत्युत्क्रान्ति संबन्धात् । 'अत्र ब्रह्म समश्नुते' इति 'न तस्मात्प्राणा उत्क्रामन्ति; अत्रैव समवलीयन्ते' इत्यादिना मुमुक्षोः गत्युत्क्रान्त्यभावदर्शनात् । 'यो भित्वा सूर्यमण्डलं' इति प्रमाणात् सूर्यसंबन्धस्यैव तत्र प्रतीतेः ।

---

## प्रमिताधिकरणशेषः (२७)—विशिष्टाद्वैतम्

४० कम्पनात् । (१०५)
४१ ज्योतिदर्शनात् । (१०६)

**प्राणेस्थितं निस्सृतिसेतदस्मात् बिभेति वज्रादिव चेति वाक्ये ।**
**प्राणः परात्मेति विनिश्चितोयं तस्यैव भासैव जगद्विभाति ॥ २३२ ॥**

अधिकरणार्थ 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति (कठ-२-६-३,२) इत्यादि विषयवाक्यम् । अत्र प्राणशब्दनिर्दिष्टः परमात्मैव । 'भयादस्याग्निस्तपति' इत्यादि श्रुत्या 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति। (कठ २-५-१५) 'परं ज्योतिरुपसंपद्य' 'अथ यदतः परो दिवो ज्योतिर्दीप्यते ; (छा ३-१३ ७) इत्यादौ परमात्मशासनात्तिवृतिनिमित्तं सूर्यादीनां भयमिति दर्शनात् परमात्मन्येव ज्योतिश्शब्दप्रयोगस्य दर्शनाच्च परमात्मैव ।

"त्वामेव भान्तं ह्यनुभान्ति देवाः वह्नीन्दुसूर्यादय आत एमि ।
सुदर्शनाद्यायुधपञ्चशाखं पङ्केरुहाक्षं श्रितमन्दहासम् ॥' (श्री शा-स्तव-१७८)

इत्येतदधिकरणार्थश्चास्माभिरुक्तः श्रीशार्ङ्गपाणिस्तवे ।

---

## १० कम्पनाधिकरणम् । (२९)–द्वैतम्

### ३९ ओं कम्पनात्—(१०२)

**प्राणं दृष्ट्वा जागत्सर्वं कम्पतेऽतस्सदागतिः ।**
**प्राणवाच्य इति प्राप्ते विष्णुः कोन्यादिति श्रुतेः ॥ २३३ ॥**

**अधिकरणार्थः** । 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतं ।' इति वाक्ये श्रुतः प्राणशब्दवाच्यः परमात्मैव ; न नभस्वान् ।

'नभस्वतोपि सर्वास्सु चेष्टा भगवतो हरेः ।
किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः ॥'

इति । 'को ह्येवान्यात् कः प्राण्यात्' इत्यादि प्रमाणात् । नभस्वतोपीत्यादि—सर्वश्रेष्ठस्य वायोः सर्वाः चेष्टा अपि विष्णोरधीना इत्युक्ते किमुत तदितरस्य जगतः चेष्टा हरेर्भवन्तीति वक्तव्यमित्यर्थः ।

---

## ११ ज्योतिरधिकरणं। (३०)–द्वैतम्

### ४० ज्योतिर्दर्शनात् (१०३)

हृद्यान्तर्ज्योतिरित्यत्र ज्योतिर्जीवो हृदिस्थितेः।
नैवं ज्योतिर्विष्णुरेव चतुर्वेदशिखाऽब्रवीत् ॥२३४॥

अधिकरणार्थः। 'योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्यत्र ज्योतिः पुरुषः विष्णुरेव। दर्शनात्–विष्णुरेव ज्योतिरिति श्रुतेः। योयमित्यादि–प्राणेषु–इन्द्रियेषु; अन्तः=हृद्यन्तश्च नियन्तृत्वेन वर्तमानः विज्ञानपूर्णः; ज्योतिः=जीवस्य बुध्यादिप्रकाशः; पुरुषः=पूर्णषट्कगुणकः, स आत्मा विष्णुरेवेत्यर्थः।

'भावेऽभावेपि सूर्यादेः जीवानां विष्णुरेव हि।
ज्योतिस्तथाप्यभावे तु तज्ज्ञेयं हि विशेषतः ॥'
अस्वातन्त्र्यात्तु जीवस्य द्योतयन् बुद्धिमस्य सः।
प्रवर्तयति सर्वेशः तमस्यपि जनार्दनः ॥'

इति भाष्याच्च जीवबुद्धिप्रकाशः ज्योतिश्शब्दवाच्यः विष्णुरेव। अत्र प्रकरणे आत्मशब्दवाच्यः विष्णुरेव ॥

---

## १२ अर्थान्तरत्वाधिकरणम् (३०)–अद्वैतम् ॥

### ४१ आकाशोऽर्थान्तरत्वादिव्यपदेशात्। (१०५)

यन्नामरूपात्मकमेतदस्य निर्वोढृता ब्रह्मण एव युक्ता।
पूर्वत्र निर्णीत 'ख'शब्द एव प्रपञ्चते मन्दधियां सुखाय।२३५॥

अधिकरणार्थः 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा ८-१-४) इत्यत्र आकाशशब्दवाच्यः भूताकाशो वा परमात्मा वेति विशये आकाशशब्दस्य रूढ्या भूताकाशे प्रसिद्धेः भूताकाश इति प्राप्ते आकाशः परं ब्रह्म। अर्थान्तरत्वादि व्यपदेशात्-ते यदन्तरा तद्ब्रह्मेति

नामरूपाभ्यां अन्यदेव व्यपदिशति। आदिशब्देन नामरूपनिर्वहणत्वादि गृह्यते। ब्रह्मव्यतिरिक्ते नामरूपनिर्वहणं न संभवति। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि (छा ६-३-२)' इति श्रुतेः ब्रह्मण एव नामरूपव्याकृत्युक्तेः। इति ॥

## १३ सुषुप्त्यधिकरणम् ।(३१)—अद्वैतम्

४२ सुषुप्त्युत्क्रान्त्योर्भेदेन। (१०५)
४३ पत्यादिशब्देभ्यः। (१०६)

**प्राणेषु विज्ञानमयोयमात्मा जीवोथवा प्राज्ञ इतीह चिन्ता।**
**स्वापोत्क्रमादौ परमात्मसक्तः न वेदबाह्यं यदसौ परात्मा ॥ २३६ ॥**

**अधिकरणार्थः** "कतम आत्मेति योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" (बृहदारण्यके ४-३-७) इत्यत्र विज्ञानमयः संसारिजीवो वा परमात्मा वेति संशये प्राणेष्विति प्राणसहचारदर्शनात् जीव इति प्राप्ते विज्ञानमयः परमात्मैव। 'प्राज्ञेनात्मना संपरिष्वक्तः न बाह्यं किंचन वेद नान्तरं' (बृ ४-३-२१) इति दर्शनात् 'प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जन् याति' (बृ ४-३-३५) इत्युत्क्रान्तौ च भेदेन व्यपदेशात्। 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्यादि वाक्यशेषाच्च परमात्मैवेति निश्चीयते। संसारिजीवस्य सर्वाधिपतित्वाद्यसंभवात्।

## १० अर्थान्तरत्वाधिकरणम्। (२७)—विशिष्टाद्वैतम्

४२ आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१०७)
४३ सुषुप्त्युत्क्रान्त्योर्भेदेन। (१०८)
४४ पत्यादिशब्देभ्यः। (१०९)

**आकाशशब्दार्थविनिर्णये सत्यत्रापि तच्छब्दविचारचिन्ता।**
**युक्ता न नाऽकाशपदं ब्रवीति मुक्तात्मरूपं भवतीह चिन्ता ॥ २३७ ॥**

निर्वोढृता ब्रह्मणि सुप्रसिद्धा सर्वेश्वरत्वादिगुणास्तथैव ।
आकाशशब्दोत्र परं ब्रवीति न भूतखं जीवमपीति साधु ॥ २३८ ॥

**अधिकरणार्थः** 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा(छा-८ १४ १)इत्यत्र आकाशशब्दवाच्यः मुक्तात्मा उत परमात्मा इति । 'धूत्वा शरीरं अकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि(छा-८ १३-१) इति मुक्तस्य अनन्तरप्रकृतत्वात् मुक्तात्मेति पूर्वपक्षः । 'तद्ब्रह्म तदमृतं' इति वाक्यशेषात् सर्वजगन्नामरूपनिर्वोढृत्वाभिधानाच्च परंब्रह्मेति सिद्धान्तः । मुक्तात्मनः अनन्तरप्रकृतत्वासंभवात् न मुक्तात्मा । 'ब्रह्मलोकमभिसंभवामि' इत्यनन्तरं 'आकाशो ह वै नामरूपे'ति श्रुतिः विद्यते । ततः पूर्वं खलु 'धूत्वा शरीरं अकृतं कृतात्मा' इति वर्तते । तत्रापि ब्रह्मण एव मुक्ताभिसंभाव्यतया ब्रह्मलोकशब्दः पठितः । अतश्च न मुक्तात्मा । जीवस्य सुषुप्त्युत्क्रान्त्यादौ प्राज्ञपरिष्वङ्गदर्शनात् ब्रह्मण एव सर्वाधिपतित्वदर्शनाच्च न मुक्तात्मा ।

अस्मिन् तृतीयचरणे निगमान्तगीर्षु
यत् स्पष्टजीवगतलिङ्गकवाक्यमस्ति ।
ब्रह्मामृतं सदिति यं विबुधा वदन्ति
तस्यार्थ एष घटपूरधिनाथ शार्ङ्गी ॥ २३९॥

---

१२ आकाशाधिकरणम् । (३१)—द्वैतम्

४१ ओं आकाशोऽर्थान्तरत्वादिव्यपदेशात् । (१०४)

छान्दोग्यान्तश्रुताकाशः नामरूपवहश्श्रुतः ।
यदन्तरा ते तद्ब्रह्मेत्यादिना विष्णुरीरितः ॥ २४० ॥

**अधिकरणार्थः** 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा ८-१४-१) इत्यादिविषयवाक्यं । अत्र आकाशब्दः विष्णुरेव । अर्थान्तरत्वादिव्यपदेशात् । नामरूपरहित्यारूयविलक्षणार्थव्यपदेशात् । नामरूपत्वाभावेऽपि कथं विष्णुरिति लभ्यत इति चेत् :'अवर्णमगोत्रमाकायमव्रणं'

(आ १-६) 'यतो वाचो निवर्तन्ते' (पुरु) इत्यादि श्रुतेः, 'अनामा सोऽप्रसिद्धत्वात् अरूपो भूतवर्जनात्' इत्यादि प्रमाणाच्च 'प्राज्ञेनात्मना अन्वारूढः उत्सर्जन् याति' इत्यादि प्रमाणाच्च विष्णुरेव। प्राकृतनामरूपरहित इत्यर्थः ॥

---

१३ सुषुप्त्यधिकरणम् (३२)—द्वैतम्

४२ ओं सुषुप्त्युत्क्रान्तियोर्भेदेन (१०५)

**प्राज्ञात्मसंयुक्तनरो हि बाह्यं न वेद किंचान्तरमित्यवादीत् ।**
**असंगशब्दः परमात्मबोधः स्वप्नादिद्रष्टा स हि विष्णुरेव ॥ २४१ ॥**

**अधिकरणार्थः** 'स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत् तत्र किंचित् पश्यति अनन्वगतस्तेन भवति । असंगो ह्ययं पुरुष' इति विषयवाक्यम्। 'असंगो ह्ययं' इति स्वप्नद्रष्टुः असंगत्वं प्रतीयते । तस्मात् असंगशब्दः जीव इति प्राप्ते 'प्राज्ञेनात्मना संपरिष्वक्तः' इति जीवात् परमात्मनो भेदव्यपदेशात् विष्णोरेवासङ्गत्वं । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात् विष्णोरेव । अतः असङ्गशब्दवाच्यः विष्णुरेव । असङ्गः=पापफलसम्बन्धशून्य इत्यर्थः । "अंशेन जीवमादाय क्वचिदीशो बहिर्नयेत् । स्वप्नेषु फल्गुनं यद्वत् कृष्णः कैलासमानयत् ॥ वासना रूपकान् प्रायस्त्वन्तरेव प्रदर्शयेत्" इत्यादिभाष्याच्च स्वप्नद्रष्टापि विष्णुरेव॥

---

२४ ब्राह्मणाधिकरणम् (३३)—द्वैतम्

४३ ओं पत्यादिशब्देभ्यः । (१०६)

**महिमा ब्रह्मणस्यैषः अज आत्मेति विश्रुतः ।**
**न विरिञ्चो विष्णुरेव सर्वस्याधिपतिश्रुतेः ॥ २४२ ॥**

**अधिकरणार्थः** 'एष नित्यो महिमा ब्राह्मणस्य,' 'स वा एष महानज आत्मा' इत्यत्र 'ब्राह्मणस्य' इति शब्दस्य चतुर्मुख एवार्थ इति प्राप्ते 'सर्वस्याधिपतिः' इत्यादि वाक्यशेषश्रुत्या 'ब्राह्मणस्यमहिमा' इत्यन्तेन विष्णोरेव महिमेत्यर्थः ।

इति भारद्वाजकुलतिलकानां नवसालपुराधीश विद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां काळे वङ्गिपुरं
रङ्गाचार्याणां कृतिषु मतत्रयसारसंग्रहे
प्रथमाध्याये तृतीयः पादः ॥

---

श्री

## ॥ मतत्रयसारसंग्रहे प्रथमाध्याये चतुर्थः पादः ॥

**सद्गोपुरं वेत्रवतीसहायं श्रीपक्षिराजं विविधाश्च गोष्ठीः ।**
**लक्ष्म्या च भूम्या च विरोचमानं पश्येयमत्रैव कदानु शार्ङ्गिन् ॥२४३॥**

### १ आनुमानिकाधिकरणं (३२)—अद्वैतम्

**१ आनुमानिकमप्येकाषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च । (१०७)**

२ सूक्ष्मन्तु तदर्हत्वात् । (१०८)

३ तदधीनत्वादर्थवत् । (१०९)

४ ज्ञेयत्वावचनाच्च । (११०)

५ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् । (१११)

६ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । (११२)

७ महद्वच्च । (११३)

अव्यक्तनामा महतः परं यत् ततः परो यो पुरुषश्श्रुतोऽतः।
सांख्योक्ततत्वावगमात् प्रधानं जगन्निदानं कपिलोक्तमाह ॥ २४४ ॥
रथी स जीवः सरथश्शरीरं इत्यादिना रूपकदर्शनान्न।
अव्यक्तशब्दोत्थसुसूक्ष्ममूर्ति स्थूलादिहेतुं प्रसमर्हतीति ॥ २४५ ॥
ध्येयं प्रधानं न च वक्ति वेदः प्राज्ञं निचाय्येति हि वाक्यशेषः
प्राज्ञात्मजीवाग्नय एव पृष्टाः तेषामुपन्यास इह श्रुतश्च ॥२४६॥

**अधिकरणार्थः** काठके 'महतः परमव्यक्तं अव्यक्तात् पुरुषः परः' (काठ-१-३-११) इत्यादि पठ्यते। तत्र सांख्योक्तप्रक्रिया भातीति पुनः प्रधानवादी कथं अशाब्दत्वं प्रधानस्येति प्रत्यवतिष्ठते।

'भेदानां परिणामात् समन्वयाच्छक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥''

'कार्यकारणमस्त्यव्यक्तं' इति,

"मूलप्रकृतिरविकृतिः महदाद्याः प्रकृतिविकृतयस्सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥''

इत्यादि सांख्योक्तरीतिरेव 'पुरुषान्न परं किंचित् सा काष्ठा सा परागतिः' (काठ-१-३-१०, ११) इत्याद्युपनिषत्सु दृश्यत इति पूर्वपक्षः।

सिद्धान्तस्तु ब्रह्मप्रकरणात् 'तद्विष्णोः परमं पदं' इति वाक्यशेषे उपासकस्य विष्णुपदप्राप्तिरूपफलश्रवणात् उपासकस्य, उपास्यस्य, शरीरस्य इन्द्रियादीनां च रथरथ्यश्वप्रग्रहादि परिकल्पनया विष्णुपदमार्गगमनमुच्यत इत्यत्र न सांख्यरीतिः प्रतिभाति। सांख्यरीतिविरोधस्यैव 'बुद्धेरात्मा महान् परः' इत्यादौ दर्शनाच्च।

---

## १ आनुमानिकाधिकरणं (२८)—विशिष्टाद्वैतम्

**१ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च (११०)**

२ सूक्ष्मं तु तदर्हत्वात् । (१११)
३ तदधीनत्वादर्थवत् । (११२)
४ ज्ञेयत्वावचनाच्च । (११३)
५ वदतीति चेन्न प्राज्ञो हि प्रकरणात् । (११४)
६ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । (११५)
७ महद्वच्च । (११६)

**अव्यक्तं च तदूर्ध्वगश्च पुरुषो जीवः प्रधानं किमु**
**शारीरश्च शरीरमेव विशये सांख्योक्ततत्वश्रुतेः ।**
**अव्यक्तं तु निदानमस्य जगतः मैवं शरीरं रथः**
**'तद्विष्णोः परमं पदं' जिगमिषोरश्वो रथस्सारथिः ॥ २४७ ॥**

**इत्याद्येव निरूप्यतेऽत्र निगमे सांख्योक्ततत्वानि नो**
**सूक्ष्माव्यक्तमिहोच्यते प्रकृतिरप्येतच्छरीरं खलु ।**
**ज्ञेयत्वावचनादिह प्रकरणात् प्राज्ञस्य सर्वत्र भो**
**जीवोपायपरात्मनां प्रभवतः प्रश्नोत्तरे नानुमा ॥ २४८ ॥**

**अधिकरणार्थः** अत्र अब्रह्मात्मकप्रकृति–पुरुषप्रतिपादनाभासाः क्वचिद्वेदान्तवाक्येषु दृश्यन्त इति 'ईक्षतेर्नाशब्दं' इत्यधिकरणन्यायेन प्रतिक्षिप्तोपि प्रधानकारणवादी पुनः प्रत्यवतिष्ठते । 'पुरुषान्न परं किंचित् सा काष्ठा सा परागतिः (कठ-१-३-११)' 'महतः परमव्यक्तं अव्यक्तात् पुरुषः परः' (कठ-१-६१), इत्युपनिषत्सु महदव्यक्तपुरुषशब्दश्रवणात् 'पुरुषान्न परं किंचित्' इति पुरुषात् परस्य कस्यचिदप्यभावश्रवणाच्च सांख्योक्तरीतिरेवेति प्राप्ते, उपनीषत्सु क्वचिदपि सांख्यप्रक्रिया न दृश्यते । विष्णुपदप्राप्तिकामस्य उपासकस्य स्वरूपमेव तत्र कथ्यते । लोके रूपकालंकारेषु उपनिषत्सु च 'यन्मरणं तदवभृथं, एतद्वै जरामर्यमग्निहोत्रं' इत्यादौ 'उषा वा अश्वस्य मेध्यस्य शिरः सूर्यः चक्षुः, वातः प्राणः व्यक्तमग्निःवैश्वानरस्संवत्सरः आत्माश्वस्य मेध्यस्य' इत्यादाविव 'आत्मानं रथिनं विद्धि शरीरं रथमेव च बुद्धिं तु सारथिं विद्धि, मनः प्रग्रहमेव च (कठ १-३-३) सोध्वनः

पारमाप्नोति तद्विष्णोः परमं पदं (कठ १-३-९) इत्यादिना उपासक-शरीरेन्द्रियादीनां रथिरथाश्वादिकल्पनैव श्रूयते। अव्यक्तात् परस्य पुरुषस्य 'बुद्धेरात्मा महान् परः (कठ १-३-१०) इत्यस्य च वर्णनस्य रीतिः सांख्यमतप्रक्रिया विरुद्धैव दृश्यते। अपि च प्राज्ञोपासनं अव्यक्त-शब्दस्य शरीरवाचकत्वं च तत्र दृश्यत इति न सांख्यरितिः क्वचिदपि दृश्यत इति ॥

---

१ आनुमानिकाधिकरणं (३४)—द्वैतम्

१ ओं आनुमानिकमप्येकेषामिति चेन्नशरीररूपकविन्यस्त गृहीतेर्दर्शयति च (१०७)

२ ओं सूक्ष्मं तु तदर्हत्वात्। (१०८)

३ ओं तदधीनत्वादर्थवत्। (१०९)

४ ओं ज्ञेयत्वावचनाच्च। (११०)

५ ओं वदतीति चेन्न प्राज्ञो हि (१११)

६ ओं प्रकरणात् (११२)

७ ओं त्रयणामेवमुपन्यासः प्रश्नश्च। (११३)

८ ओं महद्वच्च। (११४)

९ ओं चमसवदविशेषात् (११५)

**सांख्योक्तरीतिः कठवाक्यदृष्टात् अव्यक्तशब्दात् परपूरुषोस्मिन्।**
**अव्यक्तशब्दस्त्रिगुणं समाह नाव्यक्तशब्दो हरिमेव वक्ति ॥ २५९ ॥**
**शीर्षार्थकोयं चमसो यथा वा विष्ण्वर्थकोयं महदत्र शब्दः।**
**साकांक्षया सर्वमिदं च वाक्यं हर्यध्वगन्तारमिह ब्रवीति ॥ २४३ ॥**

**अधिकरणार्थः** 'इन्द्रियेभ्यः पराह्यार्था अर्थेभ्यश्च परं मनः मनसश्च परा बुद्धिः बुद्धेरात्मा महान् परः महतः परमव्यक्तमव्यक्तात् पुरुषः परः पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः'; 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' इत्यादि। अत्र अव्यक्तशब्दादयः न प्रधानादिवाच्याः;

अपि तु विष्णोरेव वाचकाः। कुत्सितशरीरार्थकाव्यक्ते विन्यस्तस्य परमात्मन एव अव्यक्तशब्देन गृहीतेः।

'अव्यक्तमचलं शान्तं' इत्यादिश्रुतेश्च 'अव्यक्तोक्षर उच्यते' इति वचनाच्च 'महतः परं ध्रुवं, निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति महतः परस्य अव्यक्तस्य ज्ञेयत्वमस्तीति चेन्न। अणोरणीयान् महतो महीयान्' इत्यादिना महतोपि परत्वं विष्णोरेव दृश्यत इति विष्णोरेव ध्येयत्वमुच्यते। प्रकरणे स्वपितुः सुमनस्कत्वस्य, अग्नेः, परमात्मनश्च, प्रश्नोपन्यासश्च दृश्यते। चमसशब्दः भक्षणसाधने प्रसिद्धोपि 'इदं तच्छिरः, एषह्यर्वाग्बिलश्चमस ऊर्ध्वबुघ्नः' इति श्रुतेः यथा शिरोवाचकोभ्युपगम्यते तथा अव्यक्तादिशब्दाः 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इति श्रुत्या विष्णुवाचका एव। इन्द्रियेभ्य इति—'सोमवित्तपसूर्याप्याश्व्यग्नीन्द्रेन्द्रसूनयः। यमो दक्षश्चेन्द्रियेशाः 'इत्युक्ताभिमानिदेवेभ्यः पराः; अर्थाः=अर्थाभिमानिन्यः 'सुपर्णी वारुणी तथा, 'उमेति चार्थमानिन्यः' इत्युक्ताः तिस्रो देवताः पराः। ताभ्यः 'मोक्षाभिमानिनो रुद्रवीन्द्रशेषास्त्रयोपि तु। ते श्रेष्ठा' इत्युक्त प्रकारेण मनोभिमानि देवताः श्रेष्ठा इत्यर्थः। ताभ्यः बुद्धिः 'तेभ्यो बुद्धिः सरस्वती' इति प्रमाणात् बुद्ध्यभिमानिदेवता सरस्वती श्रेष्ठा। तस्याः परः 'तस्या ब्रह्मा महानत्मा' इति प्रमाणात् महच्छब्दवाच्यः चतुर्मुखः श्रेष्ठः। तस्मात् परा 'ततोव्यक्ताभिधा रमा' इति प्रमाणात् अव्यक्तशब्दवाच्या लक्ष्मीरित्यर्थः। तस्याः परः 'तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः' इति प्रमाणात् पुरुषशब्दवाच्यः विष्णुरित्यर्थः। तदविरोधाय महदव्यक्तशब्दाः अन्यत्र श्रुताः तत्स्थितविष्णुबोधका इत्यभ्युपेयम्।

---

## २ चमसाधिकरणम् (३३)—अद्वैतम्

८ चमसवदविशेषात्। (११४)

९ ज्योतिरुपक्रमात्तु तथाह्यधीयत एके। (११५)

१० कल्पनोपदेशाच्च मध्वादिवदविरोधः। (११६)

'एकामजां' कश्चिदिहोपभुङ्क्ते परोनुभुक्तां त्यजतीति वाक्ये।
सांख्योक्तरीत्या प्रकृतिर्मनुष्यः मैवं विशेषाप्रतिपत्तिरेव ॥ २५१ ॥
तेजोजलान्नात्मकभूतयोनि ह्यजापदं वक्ति *तुभोपमेयम्।
छागोनुभुक्तां च यथा जहाति ज्ञानी तथा सन्त्यजति ह्यविद्याम् ॥२५५
स्त्रीरूपजीवं पुरुषोभिभुङ्क्ते तदात्मभेदो भवतीति चेन्न।
छागत्वक्लृप्त्या हि तथोच्यते यत् भूतेषु सर्वेषु निगूढ एकः ॥२५३॥

*तुभः=छाग इत्यर्थः।

**अधिकरणार्थः** 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः' इति श्वेताश्वतरोपनिषदि (४·५) प्रकृतिपुरुषभोगत्यागयोरेव श्रवणात् सांख्यरीतिः दृश्यत इति प्राप्ते 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इत्यादौ चमसोपपत्तिवदत्रापि प्रकृतिपुरुषावेवेति निर्णेतुं न शक्यते। विशेषाप्रतिपत्तेः। 'इदं तच्छिरः एषह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ २-२-३)इति वाक्यशेषात् चमसविशेषप्रतिपत्तिः यथा वा तात्रोच्यते तद्वत् अत्रापि 'रोहितशुक्लकृष्णां' इति विशेषणदानात् 'यदग्नेरोहितंरूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत् कृष्णं तदन्नस्य' इति श्रुत्या तेजोबन्नान्येव प्रत्यभिज्ञायते। अतः तेजोबन्नात्मक-माया-अविद्या-प्रकृति पर्यायाजाशब्द एवात्र अर्थ इति ज्ञायते। न तु सांख्योक्ताव्यक्तस्य इति। यथा अमधुनः आदित्यस्य 'असौ वा आदित्यो देवमधु' इति मधुत्वकल्पनं, अधेनोः वाचः 'वाचं धेनुमुपासीत' इति श्रुत्या धेनुत्वकल्पनं तद्वत् तेजोबन्नात्मिकायाः चराचरयोनेः प्रकृतेः अजात्वकल्पनं अविदुषः छागत्वकल्पनं चात्र पठ्यत इति न सांख्यस्य अवकाशोत्र इति॥ अत्र श्रीभाष्ये 'यत्पुनरस्याः प्रकृतेः अजाशब्देन छागत्वपरिकल्पनमुपदिश्यत इति, तदप्यसङ्गतं; निष्प्रयोजनत्वात्' इत्युक्तं। तत्र केचित् मध्वादिवदिति सूत्रे आदित्ये मधुत्वकल्पनमिव 'आदि' शब्देन छागत्वपरिकल्पनमपि सूत्रकाराभिमतमिति न दोष इति; वेदे सर्वशब्दानां प्रयोजनवत्त्वस्य परिकल्पनविषये उत्कृष्टनिकृष्टभावस्य च नैयत्याभावात् 'हा वुहा वुहा वु' 'ग्रावाणः प्लवन्ते', इत्यादौ 'नामब्रह्मेत्युपासीत', 'आदित्यादिमतेश्चाङ्गोपपत्तेः',

'आत्मेतितूपगच्छन्ति ग्राहयन्ति च', 'अहं ब्रह्मास्मि ब्रह्मैवाहं' 'कप्यासं पुण्डरीकं', 'अम्बे अम्बाल्यम्बिके', 'नमायभतिकश्चन', इत्यादौ (यभ मैथुने इत्यर्थः) उत्कृष्टनिकृष्टभावस्य च निकृष्टवर्णनस्य च बहुशोदृष्टत्वात्, इति वदन्ति।

---

## २ चमसाधिकरणं (२९)—विशिष्टाद्वैतम्

८ चमसवदविशेषात् (११७)
९ ज्योतिरुपक्रमात्तु तथाह्यधीयत एके (११८)
१० कल्पनोपदेशाच्च मध्वादिवदविरोधः। (११९)

**बहुप्रजाया जननीत्यजाऽत्र ब्रह्मात्मिका ज्योतिरुपक्रमादेः।**
**भुङ्क्ते जहातीति मधुत्वमर्के यथा तथाऽत्रेति न सांख्यवार्ता ॥ २५४॥**

**अधिकरणार्थः** 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'(श्वे-४-५) इत्यत्र अजाशब्देन सांख्योक्तप्रकृतिरेव जगत्कारणत्वेनोच्यत इति पुनः प्रत्यवतिष्ठमाणस्योत्तरं। 'चमसवदविशेषात्'। चमसवत्—'मातृवदस्याः कलाः' इत्यत्र यथा माता विद्या शून्या तथैव सुताऽपि विद्याहीना इति वैरूप्यदृष्टान्तः; पितृवदधीयते पुत्रः इति यथा पिता अध्ययनसंपन्नः तथा पुत्रोपीति सारूप्यदृष्टान्तश्च लोके दृष्टः। अत्र वतिप्रत्यये उभयधा व्याख्यानमपि प्रकृतेः संभवति। यथा चमसशब्दः भक्षणसाधनसामान्ये प्रयुक्तः, विशेषार्थे प्रयोगाभावः, चमु-भक्षणे इति धातोः निष्पन्नत्वात् इति वैरूप्य दृष्टान्तेऽपि अजाशब्दस्य न जायत इत्यजा इति व्युत्पत्त्या सांख्योक्तप्रधानमेव अजाशब्दार्थ इति विशेषाप्रतिपत्तेरित्यर्थः। 'यथेदं तच्छिरः' इति वाक्यशेषेण यथा शिरसः चमसत्वनिश्चयः तथैव 'तं देवा ज्योतिषां ज्योतिः' इति ज्योतिरुपक्रमादेः इहापि प्रकरणारम्भे 'किं कारणं ब्रह्मणः' इत्यारभ्य 'मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरं' इत्यादिना ब्रह्मात्मकप्रकृतिरेव अजाशब्देनोच्यत इति अजाशब्दस्य विशेषे तात्पर्यवर्णनमपि युक्तमेवेति।

---

## २ ज्योतिरुपक्रमाधिकरणम्। (३५)—द्वैतम्

**१० ज्योतिरुक्रमात्तु तथाह्यधीयत एके। (११६)**

११ कल्पनोपदेशाच्च मध्वादिवदविरोधः। (११७)

**कर्मक्रमादौ विनियुक्तमेतत् ज्योतिः पदं विष्णुनिरूढमत्र।**
**अभ्यार्चदित्यादि शतर्च्यवाचा मध्वादिवत् कल्पनया च विष्णौ॥**

**अधिकरणार्थः** 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ वसन्तकाल-कर्तव्यज्योतिष्टोमादौ प्रसिद्धज्योतिरादिशब्दस्य कथं विष्णौ समन्वय इत्याक्षेपे 'तावा एतास्सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः' इत्यादि श्रुत्या ज्योतिरादिशब्दाः विष्णावेव प्रसिद्धाः। लोके ज्योतिश्शब्दस्य यागादौ प्रसिद्धिरपि मधुविद्यादिवत् कल्पनया उपपद्यत इति।

---

## ३ संख्योपसंग्रहाधिकरणम्। (३४)—अद्वैतम्

**११ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च। (११७)**

१२ प्राणादयो वाक्यशेषात। (११८)

१३ ज्योतिषैकेषामसत्यन्ने। (११९)

**यस्मिन् पञ्चेतिवाक्ये कपिलमतगता विंशतिः पञ्चचेत्थं**
**मैवं तत्रापि पञ्चद्वयमिति दशसंख्यैव युक्तापृथक्त्वात्।**
**किञ्चास्मिन्नन्तरिक्षं भवति समधिकं विंशतिस्सप्तसंख्याः**
**लभ्यन्तेऽतः परात्मन्यखिलमपि जगद्वैदिकप्राक्रियाऽभात॥ २५६॥**
**प्राणादयः पञ्च च वाक्यशेषात् ज्योतिः पदेनापि च पूर्णसंख्या।**
**श्रुतिप्रसिद्धैव हि रीतिरत्र स्मृतिप्रसिद्धा तु न काचिदस्ति॥ २५७॥**

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोमृतं।' (बृ-४-४-१७) इत्यत्र पञ्च पञ्चजना इति (Ouരക്ക —5 × 5=25) पञ्चविंशतेः प्रतीत्या सांख्यमतसिद्धायाः 'मूलप्रकृतिर-

विकृतिः महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारो न प्रकृतिर्नविकृतिः पुरुषः ॥' (सांख्य का-३) इति पञ्च भूतानि एकादश इन्द्रियाणीति षोडशको गणः; महदहङ्कार-पञ्चतन्मात्र-प्रकृतिविकृतयः सप्त; आहत्य पञ्चविंशतिः संपद्यत इति तत्त्वगणनायाः प्रतीत्या सांख्यरीतिरेवोपनिषदि दृश्यत इति प्राप्ते, पञ्चविंशतिसंख्यापरिग्रहेऽपि पञ्चशः पञ्चश इति समुदायगणनारूपः सांख्यमते साधारणधर्मो नास्ति आकाशात्मनोः पृथक्त्वाच्च, 'पञ्चजना' इति समस्तपदत्वात्, पुल्लिङ्गत्वाच्च न सांख्यरीतिः । वेदान्ते तु 'प्राणस्य प्राणं उत चक्षुषश्चक्षुः उत श्रोत्रस्य श्रोत्रं अन्नस्यान्नं मनसो ये मनोविदुः' इति पञ्चजन-शब्दप्रयोग उपपद्यते । काण्वपाठेऽपि 'तं देवाज्योतिषां ज्योतिरि'ति ज्योतिश्-शब्दवाच्यानां इन्द्रियाणां प्रतीतेः यस्मिन् परमात्मनि चतुर्विंशति सांख्योपलक्षितं सर्वं जगत् अध्यस्तं स एव परमात्मेति उच्यत इति वैदिकप्रक्रियैव वेदान्ते पठ्यते ।' द्वादशवर्षक्षामार्थक 'पञ्चसप्त च वर्षाणि न ववर्ष शतक्रतुः' इत्यादौ द्वादशसंख्या प्रतीतिरिव 'पञ्चपञ्चजना' इत्यत्र दशसंख्याप्रतीतिरेव भवतीति वक्तुं शक्यत्वाच्च ।

---

३ संख्योपसंग्रहाधिकरणं । (३०)—विशिष्टाद्वैतम्

११ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च । (१२०)
१२ प्राणादयो वाक्यशेषात् । (१२१)
१३ ज्योतिषैकेषामसत्यन्ने । (१२२)

**यस्मिन्नभः पञ्चजनाश्च पञ्च प्रतिष्ठितोऽन्यश्च न सांख्यमाह ।**
**यस्मिन् जगत्सर्वमिदं विभाति परस्स आत्मेति हि वक्ति वेदः ॥२५८**
**सप्तर्षयस्सप्त यथा च पञ्चजनाश्च पञ्चेति हृषीकपञ्च ।**
**प्राणादयो वाक्यगता वदन्ति शाखान्तरे ज्योतिरुपक्रमाच्च ॥**

**अधिकरणार्थः** 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवंमन्य आत्मानं विद्धिन्ब्रह्मामृतोऽमृतम् (बृ ६-४-१७) इत्यत्र पञ्चजन

इति लिङ्गव्यत्ययः छान्दसः; पञ्चानां जनानां समूहः, पञ्चजनाः। तथा च पञ्च पञ्चजना इत्युक्ते 'मूलप्रकृतिरविकृतिः' इत्यादि तन्त्रसिद्धपञ्चविंशति-तत्वप्रतीतेः कापिलमतस्यापि वैदिकप्रसिद्धिरस्तीति प्राप्ते न कापिलमतप्रक्रिया अत्र दृश्यते। पञ्चविंशतिगणनाङ्गीकारेऽपि 'यस्मिन' इत्याधारत्वेन एकस्य आकाशश्च प्रतिष्ठित' इति अन्यस्य च गणनया सप्तविंशति तत्वप्रतीतेः। 'तं षड्विंशकमित्याहुः सप्तविंशमथापरे' इति श्रुतिप्रसिद्ध-तत्वप्रतीतेरेव सत्त्वात। पञ्चजनाश्च 'प्राणस्य प्राणं' इत्यादिना शाखान्तरे 'तं देवा ज्योतिषां ज्योतिः आयुर्होपासतेऽमृतं (बृ ६-४-१६) इति ज्योतिरूपब्रह्माधीनस्वकार्याणि पञ्चजन-शब्दितानि कर्मेन्द्रियज्ञानेन्द्रियादीनि उक्तानीति न सांख्यरीतिर्दृश्यत इति ॥

---

## ३ नसंख्योपसंग्रहाधिकरणम्। (३६)–द्वैतम्

**१२ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च। (११८)**

१३ प्राणदयो वाक्यशेषात। (११९)

१४ ज्योतिषैकेषामसत्यन्ने। (१२०)

**यस्मिन्नभश्च प्रतितिष्ठतीति श्रुतो य आकाश इहपि विष्णुः।**
**विष्णुश्च खे तिष्ठति खाच्च सर्वं उत्पद्यतेऽतो बहुसंख्यकत्त्वात् ॥२६०॥**
**प्राणं चक्षुश्श्रुतिश्चान्नं मन इत्यस्ति पञ्चकं।**
**ज्योतिषा च जनाः पञ्च विष्णुरेवेति कथ्यते ॥ २६१ ॥**

**अधिकरणार्थः**। "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्यादिषु आकाशशब्दवाच्योपि विष्णुरेव। बहुसंख्योपसंग्रहेऽपि ब्रह्मण एव आकाशादिषु नानाभावात; आकाशाद्व्यतिरिक्तस्वरूपत्वाच्च। 'प्राणस्य प्राणं', 'तं देवा ज्योतिषां ज्योतिः' 'आकाशे तिष्ठन्' इत्यादिना पञ्चजनशब्दवाच्योपि विष्णुरेव। विष्णोरेकत्वेऽपि विशेषशक्तिबलात सर्वमुपपन्नमित्यर्थः। इति ॥

**न संख्योपसंग्रहादपीत्यादि–पञ्चजनशब्दवाच्यः विष्णुरेव। संख्योपसंग्रहादपि बहुत्वव्याप्यपञ्चत्वसंख्याविशिष्ट-वस्तुप्रतिपादननिमित्तकः; यस्मिन्नित्याधाराधे-यभावनिमित्तकश्च विरोधः पञ्चजनशब्दवाच्ये विष्णौ न भवति। विष्णोः**

नानारूपत्वात एकरूपत्वाच्च। विष्णोरेकत्वेऽपि विशेषशक्तिबोधात सर्वमुपपन्नमिति।

---

३ कारणत्वाधिकरणम्। (३५)—अद्वैतम्

१४ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः। (१२०)
१५ समाकर्षात (१२१)

**वेदान्तेषु च सृष्टिमाह बहुधा भिन्नां स्वयं व्याक्रियां**
**ब्रह्मण्येव समन्वयो न भवति तैयन्तवाचामिति।**
**मैवं सत्यपि सृज्यवर्गविषये चान्योन्यरोधोपि तत्**
**स्रष्टर्यत्र विगानमेव न भवत्याम्नायवागन्वयः॥ २६२॥**
**यत्कारणं ब्रह्म च चेतनं तत् अहं 'बहुस्यामि'ति कामनावत्।**
**सद्ब्रह्मशब्दादि तदेव वक्ति सृज्यस्य भेदादि न दूषणं नः॥२६३॥**
**व्यासो द्वितीयेऽत्र च लक्षणेऽस्य सृज्यक्रमाणां नियतिं ब्रवीति।**
**'आसीदिदं चास'दिति श्रुतिश्च विभागशून्यस्थितिमेव वक्ति॥२६४॥**

**अधिकरणार्थः** 'आत्मन आकाशस्संभूतः' (तै २-१) 'तत्तेजोऽसृजत', (छा ६-२-३) 'स प्राणमसृजत, प्राणाच्छ्रद्धां' (प्र-६-४) 'स इमाल्लोकानसृजत अम्भो मरीचीमरमापः (ऐ-३-६-१-२) 'असद्वा इदमग्र आसीत, तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादिना सृज्यस्रष्टृविगानं बहुधा दृश्यत इति जागत्कारणरूपब्रह्मणि सर्ववेदान्तसमन्वयः कथं संभवतीति सिंहावलोकनन्यायेन आक्षेपे प्राप्ते, सृज्यवर्गे विगाने श्रुतेऽपि स्रष्टरि जगत्कारणरूपब्रह्मणि विगानाभावात उपनिषदां ब्रह्माणि समन्वयस्संभवत्येव। सृज्यवर्गस्य मिथ्याभूतत्वात तत्र विगानं न दूषणमर्हति। तत्रापि च विगानाभावं 'न वियदश्रुतेः' इत्यादिना सूत्रकारोपि वक्ष्यति। 'सदेव सोम्येदमग्र आसीत' असदेवेदमग्र आसीत' इति स्रष्टरि विगाने सत्यपि असत पदस्य प्रपञ्चात्मना विभागशून्यं ब्रह्मैव आसीदित्यर्थ इति, कुत्रापि वेदान्तेषु जगत्कारणत्वविगानं ब्रह्मणो नास्तीति ब्रह्मैककारणत्वं वेदान्तवाक्यानि वदन्तीति न कश्चिद्विरोधः।

---

## ४ कारणत्वाधिकरणं (३१)—विशिष्टाद्वैतं

**१४ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः । (१२३)**
१५ समाकर्षात्　(१२४)

**जगन्निदानं बहुधाविभिन्नं ह्यसत्सदेवेत्यसदेव स्रष्टृ ।**
**प्रधानमेवार्हति कारणं न विभागशून्यस्थितिमाह चासत् ॥ २६५ ॥**
**आकाशसद्ब्रह्मपरात्मशब्दाः सर्वज्ञशक्त्यादिगुणोपपन्नाः ।**
**योगान्निरूढ्या च पशोर्नयाच्च तुल्यार्थका ब्रह्म वदन्ति हेतु ॥ २६६ ॥**

**अधिकरणार्थः** । 'सदेव सोम्येदमग्र आसीत्' (छा ६ २-१) इति सत्पूर्विका सृष्टिः क्वचित्; 'असद्वा इदमग्र आसीत्' इति असत् पूर्विका क्वचित्; 'असदेवेदमग्र आसीत, तत्सदासीत्' (छा ३-१९-१) इति क्वचित् 'तद्धेदं तर्ह्यव्याकृतमासीत तन्नामरूपाभ्यां व्यक्रीयत' (बृ ३-४-७) इति बहुधा दृश्यते । विचार्यमाणे सति प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यत इति प्राप्ते समाधीयते ।

वेदान्तेषु कारणत्वप्रतिपादकवाक्यानां सर्वज्ञत्वादिविशिष्टस्यैव आकाश-सत-प्राण-आत्मादिषु ब्रह्मणः कारणत्वेनोक्तेः ब्रह्मणि समन्वयो युज्यते । 'असद्वा' इत्यत्र असच्छब्दस्य पूर्वत्र पठ्यमानाऽनन्दमयरूपात्मैव अर्थ इति नामरूपविभागाभावापन्नं ब्रह्मैव असच्छब्दार्थ इति । 'अव्याकृतमासीत्' इत्यत्र च अव्याकृतशरीरकं ब्रह्मैव नामरूपस्रष्टृ इत्यर्थ इति ब्रह्मैककारणं जगदिति, 'यतो वा इमानि' इत्यादिनोक्तं सुप्रतिष्ठितमेव । इति ॥

---

## ४ कारणत्वेनचाकाशाधिकरणम् । (३७)—द्वैतम्

**१५ ओं कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः । १२१**

**आकाशो विष्णुरित्युक्तः आकाशे तिष्ठतीह सः ।**
**अवान्तरनिदानेन श्रुत्या तदुपपद्यते ॥ २६७ ॥**

**अधिकरणार्थः** 'आकाशादेव समुत्पद्यन्ते' 'आत्मन आकाशस्संभूतः' इत्यत्र आकाशशब्दः विष्णुवाचकोपि आकाशे तिष्ठन्नित्यादौ विष्णुरेव अकाशेऽप्यवान्तरकारणत्वेनतिष्ठतीत्यर्थः। विष्णुः आकाशादीनां कारण त्वेन च कार्यत्वेन च स्थित इत्यर्थः ॥

---

**५ समाकर्षाधिकरणम्। (३८)**

१६ ओं समाकर्षात्। (१२२)
१७ ओं जगद्वाचित्वात् (१२३)
१८ ओं जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातं। (१२४)
१९ ओं अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके।(१२५)
२० ओं वाक्यान्वयात्। (१२६)
२१ ओं प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः। (१२७)
२२ ओं उत्क्रमिष्यत एवं भावादित्यौडुलोमिः। (१२८)
२३ ओं अवस्थितेरिति काशकृत्स्नः। (१२९)

**विष्णुवाचकशब्दानां अन्यार्थो युज्यते कथं।**
**व्यवह्रियन्ते सर्वत्र विष्णोराकृष्य सर्वशः ॥ २६८ ॥**
**जगतो वाचकास्ते स्युः तदधीनत्वदर्शनात्।**
**सर्वे लोका वायुनैव नीयन्ते इति वागपि।**
**उपासा त्रिविधा प्रोक्ता विष्णुरेव सदागतिः ॥ २६९ ॥**

**अधिकरणार्थः**। विष्णुवाचकास्सर्वेशब्दाः कथमन्यत्र प्रयुज्यत इति चेत्

"परस्य वाचकाश्शब्दाः समाकृष्येतरेष्वपि।
व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥"

इति प्रमाणात् विष्णोराकृष्य जगत्यपि व्यह्रियन्ते। विष्ण्वधीनो जीव इति विष्ण्वधीनो मुख्यप्राण इति विष्ण्वधीनो वायुरिति उपासात्रैविध्यार्थं उपनिषद्वाक्यशेषे जीवमुख्यप्राणलिङ्गदर्शनमिति विष्णुरेव सर्वशब्दवाचीति सिद्धं। इति॥ समाकर्षात्—सर्वलौकिकवैदिकशब्दवाच्यः विष्णुरेव। लोके तत्तदर्थशब्दप्रयोगस्तु ब्रह्मसकाशात् समाकृष्य अमुख्यया वृत्त्या भवतीति ॥

समाकर्षात सर्वलौकिकवैदिकशब्दवाच्यः विष्णुरेव। लोके तत्तदर्थे शब्दप्रयोगस्तु ब्रह्मसकाशात् समाकृष्यामुख्यया वृत्त्या भवतीति ॥

## ४ जगद्वाचित्वाधिकरणम्। (३६)—अद्वैतम्

१६ जगद्वाचित्वात्। (१२२)

१७ जीवमुख्यप्राणलिङ्गान्नेति चेतद्व्याख्यातम्। (१२३)

१८ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानामपिचैवमेके। (१२४)

कर्ता बालाकपुंसां भवति च यदिदं कर्म वा यस्य सोऽयं
जीवोऽथ मुख्योऽनिल उत परमात्मेति वाक्यस्य शेषात्।
सन्देहे जीववाय्वोरिह निखिलजगद्रूपकर्मेत्यभावात्
तुभ्यं ब्रह्म ब्रवाणीत्युपनिषदि समारम्भतो ब्रह्म नाम् ॥ २७० ॥
ब्रह्म प्रधानार्थकवाक्यमेतत् प्राज्ञेन सुप्तस्य च संगतोक्तेः।
सुप्ताच्च जीवात् परमेश्वरोऽयं उपाधिनिर्मुक्त इहापि वेद्यः ॥ २७१ ॥

अधिकरणार्थः 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म, स वै वेदितव्यः' इति कौषीतकीब्राह्मणे (४-१-९)।

तत्र जीवः, मुख्यप्राणः, परमात्मा वा वेदितव्य इति संशये त्रयाणां वाक्यशेषे दर्शनात् तत्रापि च जीवमुख्यप्राणयोरेव विशेषतः श्रवणात् जीववायू एव वेद्यौ इति प्राप्ते, 'जगद्वाचित्वात्'। विषयवाक्यस्थकर्मशब्दस्य निखिलजगद्रूपसृज्यवर्गार्थकस्य श्रवणात्, पुरुषकर्तृत्वश्रवणाच्च 'ब्रह्म ते ब्रवाणि' इति मुख्यब्रह्मसंशब्दनाच्च परमेश्वर एव सर्वजगतः कर्ता वेदितव्यः। जीवमुख्यप्राणोपन्यासस्तु उपासकत्रैविध्यत्वाय; संसारिजीवस्य ब्रह्मप्रतिपत्तये च।

## ५ जगद्वाचित्वाधिकरणम्। (३२)—विशिष्टाद्वैतं

१६ जगद्वाचित्वात्। (१२५)

१७ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्। (१२६)

१८ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके। (१२७)

**कर्तैषां मानवानां जगति च विदितं कर्म वा यस्य चैतत्**
**भोक्तारं भोग्यजातं पृथगिह समधिगम्यमुक्तिः प्रतीता।**
**तस्माज्जीवोऽत्र वेद्यः प्रकृत इति कथा सांख्यरीत्यैव दृष्टा**
**नैवं ब्रह्मोपदेशादपि निखिलजगत्स्रष्टृतादिप्रतीतेः॥ २७२॥**
**प्राणस्य जीवस्य च कीर्तनं यत् उपासनाऽत्र त्रिविधेति वक्तुं।**
**य एष विज्ञानमयः क्वसुप्तः इति श्रुतेर्ब्रह्म तु वेद्यमत्र। २७३॥**

**अधिकरणार्थः** बालाक्यजातशत्रुसंवादे 'ब्रह्म ते ब्रवाणि' इत्यारभ्य यो वै बालक एतेषां पुरुषाणां कर्ता; यस्य वैतत् कर्म; स वै वेदितव्यः' (कौषीतकी—४—१८) इत्यत्र पुण्यापुण्यात्मककर्मफलश्रवणात् जीवस्यैव वेद्यत्वमिति प्राप्ते निखिलजगद्रूपक्रियावाचककर्मशब्दश्रवणात् सर्वपुरुषकर्तृत्वश्रवणाच्च 'ब्रह्म ते ब्रवाणि' इत्युपक्रमात्, 'प्राण एव एकधा भवति' (कौ ४.१९) इति श्रुतेः प्राणशब्दवाच्यपरमात्मन्येव एकधाभावरूपार्थश्रवणाच्च ब्रह्मैवास्मिन् विषयवाक्ये वेदितव्यमिति सिद्धं। जीवमुख्यप्राणोपन्यासश्च उपासात्रैविध्यार्थं। इति॥

---

## ५ वाक्यान्वयाधिकरणम् (३७)—अद्वैतम्

१९ **वाक्यन्वयात्।** (१२५)
२० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः। (१२६)
२१ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः। (१२७)
२२ अवस्थितेरिति काशकृत्स्नः। (१२८)

**द्रष्टव्य आत्मेत्यनुशिष्ट आत्मा जीवो भवेदात्मसुखादिदृष्टेः।**
**मोक्षस्य नाशास्ति धनेन पत्नीत्यबाधितात्मानमुपादिशत् सः॥ २७४॥**
**यदात्मविज्ञानत एव सर्वं विज्ञातमस्तीत्युपदेशनाच्च।**
**ब्रह्मात्मविज्ञानत एव सर्वं ज्ञातं भवेत् ज्ञानमयोत्र नेति॥ ॥२७५॥**

**'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते।' इति श्रुतेस्सर्वजगत्यमुष्य परात्मनोऽवस्थितिदर्शनात् सः ॥ ॥२७६॥**

**अधिकरणार्थः ।** बृहदारण्यके मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय' इत्युपक्रम्य' 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति; आत्मनस्तु कामाय सर्वं प्रियं भवति; आत्मा वा अरे द्रष्टव्यो श्रोतव्यो मन्तव्यो, निदिध्यासितव्यो विज्ञानेनेदं सर्वं विदितं' इति (बृ ४-५-६) । अत्र द्रष्टव्यत्वादिनोपदिश्यमानात्मा विज्ञानमयो वा परमेश्वरो वेति विशये 'भोग्यं सर्वं आत्मनः प्रियं भवती'त्युक्तत्वात्, 'भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' 'न प्रेत्य संज्ञाऽस्ति' (बृ २ ४-१२) इत्यादिना शरीरोत्थिति मरणसंज्ञाभावादि दर्शनाच्च, 'विज्ञातारमरे केन विजानीयात्' इति ज्ञातृत्ववचनेन उपसंहाराच्च विज्ञानमय एवेति प्राप्ते, 'वाक्यन्वयात्'; पूर्वापरवाक्यान्वयात् द्रष्टव्यत्वेनोक्तात्मा परमेश्वर एवेति सिद्धान्तः ।

तथा हि 'अमृतत्वस्य तु नाशास्ति वित्तेन' इति याज्ञवल्क्येनोक्ते 'येनाहं नामृतास्यां, किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि' इति मैत्रेय्या पुनः पृष्टः याज्ञवल्क्यः परमात्मविज्ञानमेवोपदिदेशेति गम्यते । 'ब्रह्म तं परादात्, योऽन्यत्र आत्मनो ब्रह्म वेद.' इदं सर्वं यदयमात्मा,' 'निश्वसितमेतद्यदृग्वेदः' इत्यादिना च उपदिश्यमानं परमात्मानमेवावगमयतीति ।

आत्मनि विज्ञाते सर्वमिदं विज्ञातमिति प्रतिज्ञासिद्ध्यर्थं आत्मसुखादिसूचनमित्याचार्याभिप्रायाच्च अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति जीवभावेनावस्थितिदर्शनाच्च इति ॥

---

६ **वाक्यान्वयाधिकरणं ।** (३३)–**विशिष्टाद्वैतम्**

१९ **वाक्यान्वयात् ।** (१२८)

२० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः (१२९)

२१ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः । (१३०)
२२ अवस्थितेरितिकाशकृत्स्नः । (१३१)

द्रष्टव्य आत्मेति च याज्ञवल्क्यप्रोक्तः परात्मैव न जीव एव ।
उपक्रमे स्यां अमृतेति चान्ते समस्तवेदाः श्वसितेति हेतोः ॥२७७॥
यदात्मविज्ञानत एव सर्वं ज्ञातं भवेदित्युपदेशनाच्च ।
शरीरमात्मादिकमन्तरात्मा सर्वेषु चावस्थितिरित्यतश्च ॥ २७८ ॥
येनाहं नामृतास्यां तदलमिह भवान् मोक्षहेतुं ब्रवीतु
जायापुत्रादिलाभात् भवति यदिह शं ह्यात्मनोऽन्यत्र नैव ।
यज्ज्ञानात् ज्ञातमेतत् सकलमिह जगत् भूतयोनिर्महान् सः
विज्ञाता कृत्स्नवेदाः श्वसितमपि भवेदात्मनोऽसावुपास्यः ॥ २७९ ॥
'न प्रेत्य संज्ञास्ति' विमुक्तिकाले न ज्ञानसत्तां वदतीति चेन्न ।
मुक्तौ न संसारविशिष्टबुद्धिः विपश्चितेति श्रवणाविरोधात् ॥ २८० ॥

**अधिकरणार्थः** 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' (बृ ६-५-६) इति मैत्रेयीब्राह्मणे । अत्र 'आत्मा वा अरे द्रष्टव्य' इति श्रुतः जीवात्मा परमात्मा वेति संशये प्रियादिसूचितात्मा जीवात्मैवेति, तदधिष्ठिता प्रकृतिरेव जगदुपादनं, न परमात्मेति प्राप्ते ; 'वाक्यान्वयात्'— उपनिषद्गतपूर्वोत्तरवाक्यान्वयात् परमात्मैवेति सिद्धान्तः । तथा हि विरक्तायै स्वभार्यायै अमृतत्वप्राप्त्यर्थमुपदिश्यमानात्मा परमात्मैव भवितुमर्हति ।' तमेवं विद्वानमृत इह भवति, नान्यः पन्था' (पुरुषसूक्त) इत्याद्युपनिषत्सु ब्रह्मज्ञानादृते अमृतत्वप्राप्तेः नान्य उपाय इति प्रतिपादनात् अत्रापि 'आत्मनो वा अरे दर्शनेन मत्या' (बृ ४-४-५) 'इदं ब्रह्म, इदं क्षत्रं, यदयमात्मा, महद्भूतमनन्तमपारं', (बृ ६-५-७) इत्यादिना परमात्मस्वरूपकथनस्यैव दर्शनात् । 'आत्मनस्तु कामाय' इत्यत्र परमात्मन इष्टसम्बन्धय इत्यर्थः ।

---

## ६ प्रकृत्यधिकरणम्। (३८)–अद्वैतम्

२३ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्। (१२९)
२४ अभिध्योपदेशाच्च। (१३०)
२५ साक्षाच्चोभयाम्नानात (१३१)
२६ आत्मकृतेः परिणामात्। (१३२)
२७ योनिश्च हि गीयते। (१३३)

यत्कारणंब्रह्म निमित्तमेतत् यथा कुलालादि घटादिसृष्टौ।
यस्मान्निमित्तं जगतोस्य दृष्टं तस्मादुपादानमपीह वाच्यम् ॥ २८१ ॥
यज्ज्ञानतो ज्ञातमिदं च सर्वं मृज्ज्ञानतो मृद्विकृतिर्हि दृष्टा।
आद्यप्रतिज्ञा गुरुणोपदिष्टा दृष्टान्तबाहुल्यनिदर्शनात्तत् ॥ २८२ ॥
ब्रह्मैव सोकामयतैक्षतेति बहुप्रजायेय च कर्तृतोक्तेः।
साक्षाच्च खादेव जनिश्च तस्मिन् लयः प्रपञ्चस्य निदर्शनाद्वै ॥ २८३ ॥
स्वयं तदात्मानमथाकरोत्तं यद्भूतयोनिं पुरुषश्च योनिं।
वक्ति श्रुतिर्ब्रह्म निमित्तमस्य तस्मादुपादानमपीह सिद्धम् ॥ २८४ ॥

**आधिकरणार्थः** ब्रह्मणः 'जन्माद्यस्य यतः' इति उत्पत्तिलयादिलक्षणं कारणलक्षणमुक्तम्। तत्र घटवलयादीनां मृत्सुवर्णादिवत् उपादानकारणत्वे; घटादीनां कुलालादिवत् 'स ईक्षाञ्चक्रे (प्र ६-३) स प्राणमसृजत' (प्र ६-३) इत्यादिना निमित्तकारणमेव ब्रह्मण युज्यत इति पूर्वपक्षे प्राप्ते, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्—ब्रह्मण उपादानकारणत्वं, निमित्तकारणत्वं च सिद्धयत्येव। अविज्ञातं विज्ञातं, (छा ६-१-२)'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं, विज्ञातं' इत्यादि प्रतिज्ञादृष्टान्तानुसारात सोऽकामयत बहुस्यां प्रजायेयेति' 'आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति'(छा १-९-१)'तदात्मानं स्वयमकुरुत' (तै-२-७) 'कर्तारमीशं पुरुषं ब्रह्मयोनिं' (मु-३-१-३) यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादिना संकल्पोत्पत्तिलय-आत्मकर्मत्वसर्वभूतयोनित्वादि-कथनात ब्रह्म कारणद्वयवद्भवतीति सिद्धम्। इति ॥

---

## ७ प्रकृत्यधिकरणम् । (३४)–विशिष्टाद्वैतम्

२३ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । (१३२)

२४ अभिध्योपदेशाच्च । (१३३)

२५ साक्षाच्चोभयाम्नानात् । (१३४)

२६ आत्मकृतेः । (१३५)

२७ परिणामात् । (१३६)

२८ योनिश्च हि गीयते । (१३७)

यस्मान्मृत्स्ना घटादेः प्रकृतिरिव जगत्कारणं ब्रह्मणस्स्यात्
तस्मादस्यापि मर्दादिकविकृतिरपि ब्रह्मणस्स्याच्च मैवम् ।
यस्मादावेशशक्तिः द्विविधमपि परब्रह्मणः प्राह हेतुं
कूर्मोऽङ्गानीव शक्त्या निजतनुमखिलां विस्तृणातीति विद्यात् ॥२८५॥
त्वमेवोपादानं भवसि च निमित्तं त्रिजगतां
यदुक्तं तत् सर्वोऽपि हि न चलयितुं प्रभवति ।
त्वमेवोपास्यः स्वैः निखिलफलकामैः भवसि भो
फलं त्वद्रूपाप्तिः फलद इति सूत्राणि जगदुः ॥२८६॥
यत् कल्याणगुणाकरं त्रिजगतां सृष्ट्यादि हेतुं विदुः
आत्मानं परिणामिनं निजगदुः लोकात्मना वैदिकाः ।
राजा स्वीयमहावनेषु विचरन् दासैः स्वकीयैर्वृतः
दोषास्पृष्टसुखो यथा विहरते श्रीमान् स्वशक्त्या तथा ॥ २८७ ॥
जीवाश्च नित्या बहवश्च सन्ति परश्च तेषां विदधाति कामान् ।
भोक्ता च भोग्यं च परेरितेति वेदान्तवाचः प्रवदन्ति नित्यं ॥२८८॥
'नित्यो विभुस्सर्वगतो ह्यणीयान्' अजः पुराणो बहुधा विजातः ।
विरुद्धवाचो न परस्परं ताः सर्वज्ञशक्त्यादि गुणादि सत्त्वात् ॥२८९॥

**अधिकरणार्थः** । जगत्कारणत्वेन ब्रह्माभ्युपगमेऽपि जगदुपादानतया प्रधानमेव प्रतिपाद्यं, घटादीनां कुलाल इव निमित्तकारणमेव ब्रह्म इति कश्चन

सेश्वरसांख्यः प्रत्यवतिष्ठते। 'निष्कलं निष्क्रियं शान्तं' (श्वे ६-१९) 'स वा एष महानज आत्माऽजरोमृतः' (बृ ६-४-२५) इत्यादिना ब्रह्मणः जरामरणादि-विकारशून्यत्वं 'अस्मान्मायी सृजते विश्वमेतत्'; (श्वे-४-९) 'विकारजननीमज्ञां' इत्यादिना ब्रह्माधिष्ठितप्रकृतिरेव कुलालाधिष्ठितमृत्तिकेव घटस्येति ब्रह्मणोभिन्ननिमितोपादानत्वं न सिद्ध्यतीति।

अत्र समाधिरभिधीयते—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्। ब्रह्म जगदु-पादानकारणं निमित्तकारणं च भवत्येव। उत तमादेशंमप्राक्ष्यः (छा६-१-३) 'यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्। एवं सोम्य स आदेशो भवति' (छा ६) इत्यन्तं प्रतिज्ञादृष्टान्तोपादनार्थानुसारात्; निमित्तोपादानयोरैक्यश्रवणात्। सूक्ष्मचिदचिच्छरीरकं ब्रह्म कारणावस्थं; स्थूल-चिदचिद्विशिष्टं कार्यावस्थमिति चिदचिद्गता विकारादयः तद्विशिष्टे ब्रह्मणि न भवन्ति। यथा बालत्वयुवत्वादयो शरीरनिष्ठा एव, न त्वात्मनिष्ठा। 'ब्रह्मवनं ब्रह्म सवृक्ष आसीत' 'ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' इत्यादिना साक्षाद्ब्रह्मण उभयविधकारणत्वावगमात्। यथा रक्तपटे रक्तिमा यत्र दृश्यते तद्देश एव रागः, न त्वन्यत्तदेशे। तद्वच्च ब्रह्मशरीरचिदचिद्गतदोषः ब्रह्मणि न प्रसज्यते; अपितु चिदचितोरेव। इति॥

---

## ६ प्रकृत्यधिकरणम्। (३९)—द्वैतम्

२४ ओं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधत्। (१३०)
२५ ओं अभिध्योपदेशाच्च। (१३१)
२६ ओं साक्षाच्चोभयाम्नानात (१३२)
२७ ओं आत्मकृतेः परिणामात। (१३३)
२८ ओं योनिश्च हि गीयते। (१३४)

**यथा समुद्रं प्रविशन्ति नद्यः नामानि रूपाणि तथैव विष्णुं।**
**इति प्रतिज्ञामनुसृत्य वक्ति स्त्रीलिङ्गशब्दः प्रकृतिश्च विष्णुम्॥२९०॥**

संकल्प एव प्रकृतिस्तथास्तु यद्भूतयोनिस्स हि विष्णुरेव ।
स एव आत्मा प्रकृतिं प्रविश्य स्वात्मानमेवं बहुधाचकार ॥ २९१ ॥
अव्यवधानेन सूतेस्सः साक्षात्प्रकृतिरिष्यते ।
एष प्रकृतिरित्याद्याः स्त्रीलिङ्गा विष्णुवाचकाः ॥ २९२ ॥

अधिकरणार्थः । 'यथा नद्यस्स्यन्दमानाः समुद्रायाणाः समुद्रं अभिविशन्ति' इति श्रुत्या प्रतिज्ञादृष्टान्तोपपादनात् प्रकृतिशब्दवाच्यश्च विष्णुरेव । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' 'प्रकृतिर्वासनेत्येव तवेच्छानन्तकथ्यते ॥' इति वचनात् विष्णोरिच्छैव प्रकृतिशब्देनोच्यत इति । 'एष स्त्री, एष पुरुषः, एष प्रकृतिः' इत्यादिना विष्णोः प्रकृतिपुरुषवाचकत्वोभयाम्नानात् । प्रकृतावनुप्रविश्य प्रकृतिं परिणम्य प्रकृतौ स्वयं स्थित्वा बहुधाकरणात्, अव्यवधानेन प्रकृतित्वं इति विष्णोः प्रकृतिद्वारा उत्पत्तिद्वारत्वं इत्याद्युक्तेश्च प्रकृतिशब्दवाच्यः विष्णुरेव ॥

प्रकृतिश्चेत्यादि—सूत्रैः ब्रह्मण उपादानकारणत्वं कथ्यत इति परोक्तव्याख्यानं न युक्तमिति भावः । मूलप्रकृतिं प्रविश्य मूलप्रकृतिपरिणामं विधाय आत्मकृतेः स्वस्य बहुधाकरणात्, प्रकृष्टा कृतिः यस्य सः=प्रकृतिरिति योगबलाच्च प्रकृतिशब्दवाच्यः विष्णुरेवेति । प्रकर्षेण करोतीति विग्रहे, 'उणादयो बहुलं' इति सूत्रेण कर्तरि क्तिन्प्रत्यय इति बोध्यम् ॥

---

७ सर्वव्याख्यानाधिकरणम् (३९)—अद्वैतम्

२८ एतेन सर्वे व्याख्याताव्याख्याताः । (१३४)

प्रधानमित्थं जगतो निदानं अवादिषुर्ये सकला निरस्ताः ।
अनेन शास्त्रेण कणादिपक्षाः सर्वे निरस्ता इति वेदितव्याः ॥२९३ ॥
श्रीशंकरार्यभाष्येस्मिन्नध्याये प्रथमेङ्घ्रिषु ।
संख्याधिकरणानां च त्रिंशन्नवतिरिष्यते ॥ २९४ ॥

अधीकरणार्थः प्रधानकारणवादप्रतिषेधन्यायादिभिः अन्ये सर्वे अण्वादिकारणवादा अपि निरस्ततया व्याख्याता इति वेदितव्या इति ॥

अत्र केचित् सद्ब्रह्मादिशब्दाः 'एको ह वै नारायण आसीत्' इति नारायण एव छागपशुन्यायेन पर्यवसन्नाः। तस्माद्ब्रह्मशब्दवाच्यः नारायण एव उपास्यः; न चतुर्मुखेश्वरादिरिति वदन्ति। तदपि अद्वैतमते न विरुद्धमिति अनेन श्लोकेन व्याख्यातं—

ब्रह्मैव सर्वमिति यन्मतमस्ति लोके
विष्णुश्शिवो द्रुहिण इत्यभिदैव तत्र।
सर्वं च तथ्यमिति यन्मतमत्र भाति
तत्रैव चोत्तमनिकृष्टपदार्थचिन्ता॥

तथापि—

"योब्रह्मविणुरुद्राणां भेदमुत्तमभावतः।
साधयेदुदरव्याधियुक्तो भवति मानवः॥

इति कर्मविपाकादिशास्त्रोक्तरीत्या ब्रह्मविष्णुरुद्राणां परब्रह्मरूपत्वात् तत्र तारतम्यादिविचारः—

"यो विष्णौ प्रतिमाकारे लोहभावं करोति च।
यो गुरौ मानुषं भावमुभौ नरकपातिनौ॥"

इत्यादिशास्त्रात् दोषहेतुरेवेति सर्वं शुभं॥

---

## ८ सर्वव्याख्यानाधिकरणम्। (३५)—विशिष्टाद्वैतम्

### २९ एतेन सर्वे व्याख्याता व्याख्याताः। (१३८)

**पादैश्चतुर्भिः कथितैर्नयैश्च शास्त्राणि सर्वाणि निरूपितानि।**
**जानीत शिष्या इति निश्चयेन पादद्वयोक्त्याऽऽह महर्षिरत्र॥ २९५॥**
**श्रीभष्ये प्रथमाध्याये चरणानां चतुर्ष्वपि।**
**संख्याधिकरणानां च पञ्चत्रिंशत्समीरिता॥**

अस्मिन् मतत्रितयसारचतुर्थपादे
छायानुसारि निगमान्तवचोविधानम् ।
अध्याय एव निगमान्तसमन्वयाख्यः
श्रीशार्ङ्गपाणिकृपया लभतेस्म पूर्तिम् ।। २९७ ॥

७ सर्वव्याख्यानाधिकरणम् । (४०)—द्वैतम्

२९ एतेन सर्वे व्याख्याता व्याख्याताः । (१३५)

तुच्छशून्यादिशब्दाश्च सर्वे विष्णुं वदन्ति हि ।
एतदध्यायसंप्रोक्तन्यायास्तस्योपलक्षणम् ॥ २९८ ॥
श्रीमन्मध्वार्थभाष्येऽस्मिन्नध्याये प्रथमेंत्रिषु ।
संख्याधिकरणानां च चत्वारिंशन्निगद्यते ॥ २९९ ॥

सूत्रार्थः अत्र तुच्छशून्यादिशब्दाः लोके निरर्थकत्वेन प्रसिद्धाः । ते विष्णुवाचका वा न वेति संशये एतेऽपि विष्णुवाचका एव । 'एष ह्येव शून्यः एष ह्येव तुच्छः एष ह्यबाभावः' इत्यादिश्रुतेः । एतेन अप्रसिद्धार्थकत्वेन श्रुताः सर्वे शून्यादिशब्द व्याख्याता इत्यर्थः । 'एतेन' विष्णवधीनत्वाद्युक्तिसमुदायेनाश्रुतं सर्वं तदधीनं तदात्मकमित्यर्थः ।

एतध्यायार्थबोधकमणुभाष्यमत्र लिख्यते—
'विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानन्दोन्तरः खवत् ॥
प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णुरेवैकः सर्वैस्सर्वगुणत्वतः ॥
सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितस्सदा ।
विश्वजीवान्तरत्वाद्यैः लिङ्गैस्सर्वैर्युतस्स हि ॥
सर्वाश्रयः पूर्णगुणः सोऽक्षरस्सन् हृदब्जगः ।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि
ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यश्च जीवतः ।
पतित्वादिगुणैर्युक्तः तदन्यत्र च वाचकैः ॥

मुख्यतस्सर्वशब्दैश्च वाच्य एको जनार्दनः ।
अव्यक्तः कर्मवाक्यैश्च वाच्य एकोमितात्मकः ॥
अवान्तरं कारणं च प्रकृतिश्शून्यमेव च ।
इत्याद्यन्त्र नियतैरभिमुख्यतयोदितः
शब्दैरतोऽनन्तगुणो यच्छब्दाऽयोगवृत्तयः ॥

इत्यत्र प्रथामध्याये महायोगवृत्या लैकिकानां सर्वेषां शब्दानां परमेश्वरे विष्णौ व्युत्पत्तिरुच्यते। अत एव "रूढि रूढियोगः, महायोगः, महारूढियोगः, रूढोपचारः रूढलक्षणोपचार लक्षणेति शब्दवृत्तिभेदात् रूढिपूर्वकत्वेन महायोगवृत्या परमेश्वरे अखिलशब्दव्युपत्त्युपपत्तेरिति न्यायविवरणे उक्तम् ॥

इति भारद्वाजकुलतिलकानां नवसालुपुराधीशविद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां कालि वङ्गीपुरं
रङ्गाचार्याणां कृतिषु मतत्रयसारसंग्रहे
प्रथमाध्याये चतुर्थः पादः ॥

---

समाप्तश्चाध्यायः ॥



श्रीः

# मतत्रयसारसंग्रहे

## द्वितीयाध्याये प्रथमः पादः ॥

१ स्मृत्यधिकरणम् । (४०)–अद्वैतं

१ ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाश-
दोषप्रसङ्गात् (१३५)

२ इतरेषां चानुपलब्धेः । (१३६)

पूर्वाध्यायविचारितस्य परमेशस्यैव शास्त्रान्तरैः
रोधो नेति च तत्र तत्र कथितन्यायानुसारादिकम् ।
व्यासो वक्तुममुं द्वितीयमविरोधाध्यायमारब्धवान्
तत्रापि स्मृतिकारसूक्तिनिवहं व्याख्याति कारुण्यतः ॥२९९॥

श्रुतिप्रसिद्धिः कपिलस्य यद्वत् मनोस्तथैव श्रुतिराह कीर्तिं ।
तयोर्मनोरेव बलीयसीति मनुस्मृतिप्रोक्तमिहाद्रियन्ते ॥ ३०० ॥
पूर्वं विरोधाधिगतेर्नयेन गतार्थमित्यादि न वक्तुमर्हम् ।
श्रुत्या स्मृतेरेव हि बाध उक्तः स्मृत्योर्विरोधे परिहार इष्टः ॥ ३०१ ॥
स्मृत्योश्च मूलं श्रुतिरेव मानं श्रुत्योर्विरोधे सति का समाधिः ।
हरिप्रवेशो कपिलो महात्मा स सागराणां तपनेऽन्यतुल्यः ॥ ३०२ ॥
सामान्यकाले कपिलोक्तसांख्यं न मानमेतद्रजसा विमिश्रम् ।
वैवस्वतोऽयं तु सदा प्रबुद्धः अतस्तदुक्तिर्भिषगुक्तितुल्या । ३०४ ॥

**अधिकरणार्थः** इदानीं स्वपक्षे पूर्वाध्यायोक्तार्थस्य स्मृतिन्यायविरोधपरिहारः प्रधानादिवादानां न्यायाभासत्वं च निरूप्यते । तत्र प्रथमं स्मृतिविरोधपरिहारः कथ्यते । 'सांख्यस्य वक्ता कपिलः' इति 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानं च पश्येत्' इति (श्वे ५-२) 'यद्वै किञ्च मनुरवदत् तद्भेषजं'

इत्यत्र (तै·सं-२-२-१०) श्रुतिषु कपिलस्य मनोश्च तुल्यगौरवप्रतिपादनात् कपिलोक्तसांख्यरीतिरेव वेदान्तेष्वाश्रयणीया। मनोश्च कर्मकाण्डोक्तयागादिप्रतिपादकत्वेन त्रिवर्गफलसाधनत्वादौ सार्थक्यात् इति पूर्वपक्षे प्राप्ते वेदान्तेषु च मनुस्मृत्युक्तमेवाङ्गीकरणीयं। कपिलस्य सगरपुत्रनाशकत्वेन प्रसिद्धिसत्त्वात् तादृशवासुदेवनामा कपिलः अन्यः। 'ऋषिं प्रसूतं कपिलं' इति श्रुत्युक्तकपिल अन्य इति वक्तुमपि शक्यत्वात्। 'ऋषिं प्रसूतं कपिलं' इति ऋषिसामान्यश्रवणाच्च समान्यकपिलऋषिप्रोक्तसांख्यापेक्षया विप्रतिपत्यभावयुक्तमनुप्रोक्तस्य संसारव्याधिग्रस्तस्य भेषजत्वेन कथनात् मनुस्मृतिरेव बलीयसीति तदुक्तमेव ग्राह्यमिति सिद्धान्तः॥

---

१ स्मृत्यधिकरणं। (३६)—विशिष्टाद्वैतम्

**त्वद्दिव्यमंगलशरीरगुणादिकांश्च संदृश्य सप्तगुरवः* शठविद्विडाद्याः।**
**सन्तुष्टुवुस्तत्र कृपावशतो द्वितीयाध्यायेन बाह्यकृतपीडनरोधिनाम्ना॥**

**१ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्। (१३९)**

**२ इतरेषाञ्चानुपलब्धेः (१४०)**

**वैवस्वतस्यापि मनोर्यथा वा तथा प्रसिद्धिः कपिलस्य चास्ति।**
**अथापि वैवस्वतसूक्तिरेव बलीयसीति प्रतिपादिताऽत्र॥ २०४॥**

**आधिकरणार्थः** अत्र पूर्वप्रतिपादितार्थस्य इतरैः दूषणानर्हत्वप्रतिपादनाय द्वितीयोध्याय आरभ्यते। तत्र कपिलस्मृतिमनुस्मृत्योर्विरोधे मनुस्मृतिरेव बलीयसीत्यनेनाधिकरणेन निगद्यते। "ऋषिं प्रसूतं कपिलं" इत्यादौ श्रुत्युक्तावपि बृहस्पतिप्रणीत-चार्वाकस्मृतिवत् कपिलप्रणीता स्मृतिरनादरणीया। केवलसत्वभूयिष्ठाऽऽप्ततममनुप्रणीता स्मृतिरेवादरणीया इति॥

---

*सप्तगुरवः (ஏழு ஆழ்வார்களால் பாடல்பெற்ற கும்பகோணம் ஸ்ரீ ஆராவமுதன் என்று தாத்பர்யம்)

## १ स्मृत्यधिकरणम् । (४१)–द्वैतम्

१ ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् । (१३६)

२ ओं इतरेषां चानुपलब्धेः । (१३७)

३ ओं एतेन योगः प्रत्युक्तः । (१३८)

सर्वज्ञरुद्रादिकृतस्मृतीनां विष्ण्वादिसत्वस्थकृतस्मृतीनां ।
अन्योन्यरोधे सति विष्णुमुख्यस्मृत्यादिरेव प्रबलेत्यवोचत् ॥ ३०५ ॥
अन्यस्मृतिप्रोक्तफलस्य साक्षाददर्शनात्तद्वचनं न मानं ।
योगस्मृतेश्चापि न मानमिष्टं अदर्शनादेव फलस्य तत्र ॥ ३०६ ॥

**अधिकरणार्थः** सर्वास्स्मृतयः प्रमाणं नवेति संशयः । सर्वज्ञरुद्रादिकृत स्मृतीनामपि प्रामाण्यं भवतु इति पूर्वपक्षः । विष्ण्वादिकृतानां स्मृतीनामेव प्रामाण्यं । इतरकृतस्मृत्युक्तफलस्यानुपलब्धेः तासामप्रामाण्यं । योगशास्त्रोक्तस्य प्रत्यक्षोपलब्ध्या योगस्मृतेः प्रामाण्यमस्तु इति चेत् योगाभ्यासकाले फलादृष्टेः योगस्मृतिरपि प्रामाण्यपदवीं नार्हति । इति ॥

---

## २ योगप्रत्युक्त्यधिकरणम् (४१)–अद्वैतम्

३ एतेन योगः प्रत्युक्तः । (१३७)

योगाख्यशास्त्रेऽपि विरुद्धदृष्टेः योगो न मानं कपिलादिवच्च ।
योगस्य निश्श्रेयससाधनोक्तेः शंकाधिकाऽस्तीति निरस्यतेऽत्र ॥३०७॥
बह्वात्मवादप्रतिपादकोऽसौ नात्मैकतत्त्वार्थविचिन्तको हि ।
अद्वैतदृष्टिर्न हि तत्र भाति ध्यानं ब्रवीति श्रुतिनिष्ठयोगम् ॥ ३०८ ॥

**अधिकरणार्थः** "अथ तत्वदर्शनोपायो योगः" इति तत्वदर्शनस्य उपायत्वेन श्रुतं योगशास्त्रं प्रमाणमित्यधिकाशङ्कायां योगस्मृतिः न प्रमाणं । योगनिष्ठाश्च द्वैतिन एव; नात्मैकत्वदर्शिनः । असङ्गो ह्ययं पुरुषः (बृ ४.३.१६) इति निर्गुणविशुद्धपुरुषैकत्वप्रतिपादकवेदान्तशास्त्रविरोधात् । "तं त्वौपनिषदं

पृच्छामि" (बृ ३-९-१६) "नावेदविन्मनुते तं बृहन्तं" (तै ब्र ३-१२-९-७) इत्यादिश्रुतयः पुरुषैकत्वे प्रमाणं इति।

---

## २ योगप्रत्युक्त्यधिकरणम्। (३७)–विशिष्टाद्वैतम्

**३ एतेन योगः प्रत्युक्तः। (१४१)**

**यस्माद्बिडौजाश्च विरोचनश्च ब्रह्मात्मविज्ञानमजादगृह्णात्।**
**तस्मात्प्रमा न प्रकृतिः स्वतन्त्रा बीजंत्विति प्रोक्तमतो न मानं॥ २०९॥**

**अधिकरणार्थः** चतुर्मुखप्रोक्त योगस्मृतिः प्रमाणं भवतु। "ब्रह्मा अथर्वाय ज्येष्ठपुत्राय प्राह" इत्यादिना चतुर्मुखस्य वेदान्तशास्त्रप्रवर्तकत्वस्य श्रुतत्वात्, इत्यधिकाशङ्कायां, निमित्तकारणमात्रेश्वराभ्युपगमात् चतुर्मुखस्यापि कदाचित् रजस्तमोऽभिभवसंभवाच्च स्वसृष्टसरस्वत्यभिधावनादिदृष्टेश्च तत्कृत-योगस्मृतिः न प्रमाणम्। इति॥

---

## ३ विलक्षणत्वाधिकरणम्। (४२)–अद्वैतम्

**४ न विलक्षणत्वादस्य तथात्वं च शब्दात्। (१३८)**

५ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्। (१३९)

६ दृश्यते तु। (१४०)

७ असदिति चेन्न प्रतिषेधमात्रत्वात्। (१४१)

८ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्। (१४२)

९ न तु दृष्टान्तभावात्। (१४३)

१० स्वपक्षदोषाच्च। (१४४)

११ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः। (१४५)

**ज्ञानं विशुद्धं भगवत्स्वरूपं जगत्तु नित्यं परिणामि दृष्टं।**
**जगन्निदानं च विलक्षणत्वात् ब्रह्मेतिवक्तुं न समर्हतीति॥ २१०॥**
**नैवं नराल्लोम नखादिदृष्टेः गवां पुरीषादपि कीटदृष्टेः।**
**नैकान्ततोऽस्तीह निदानमस्य ब्रह्मैकबीजं श्रुतिरेव वक्ति॥ २११॥**

**तर्केण नैषा मतिरापनेया चेयं विसृष्टिर्यत आबभूव ।**
**कोवेद चाद्धा क इह प्रवोचत् इत्यादिना ब्रह्म विलक्षणं तत् ॥३१२॥**

**अधिकरणार्थः**—लोके घटादिनिर्माणे मृत् प्रकृतिः, कुलालः निर्माता इति दृष्टम् । अत्र तु सकलविलक्षणं ब्रह्म चेतनाचेतनरूपप्रपञ्चस्य निमित्तं उपादानं च कथं भवेदिति लोकदृष्टया शङ्का। समाधिस्तु वेदोक्तत्वादेव लोक-विलक्षणं ब्रह्मैव जगतः निमित्तमुपादानं च भवितुमर्हति । शब्दैकप्रमाणका हि वयं । शब्दश्च "विज्ञानं चाविज्ञानं च" (तै २-६) मृदब्रवीत् आपोऽब्रु-वन् (६-१-३-२-४) "तत्तेजो ऐक्षत ता आप ऐतक्षन्त" (अ ६-२-३-४) ते हे मे प्राणः, अहं श्रेयसे विवदमानाः ब्रह्म जग्मुः (६-१-७) ते ह वाचमूचुः त्वं नोद्गयेत (अ १-५-२) इत्यादिश्रुतिभ्यः चेतनाचेतनयोः ब्रह्मानुप्रवेशमुक्त्वा अचेतनानामपि चेतनवत् प्रश्नोत्तरवत्वादिश्रवणाच्च विलक्षण-मपि ब्रह्म जगतो निमित्तमुपादानं च भवितुमर्हति इति । लोकदृष्टप्रक्रिया तु 'अचिन्त्याः खलु ये भावः न तांस्तर्केण योजयेत्" इति "नैषा तर्केण मतिरापनेया" इत्यादि श्रुतिस्मृतिभिः ब्रह्मण अचिन्त्यशक्तिमत्वोक्तेः ।

---

### ३ विलक्षणत्वाधिकरणम् (३८)—विशिष्टाद्वैतं

**४ न विलक्षणत्वादस्य तथात्वं च शब्दात् (१४२)**

५ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (१४३)

६ दृश्यते तु । (१४४)

७ असदिति चेन्न प्रतिषेधमात्रत्वात् । (१४५)

८ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् (१४६)

९ न तु दृष्टान्तभावात् । (१४७)

१० स्वपक्षदोषाच्च । (१४८)

११ तर्काप्रतिष्ठानादपि । (१४९)

१२ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः । (१५०)

केचित् प्रधानं जगतो निदानं त्रैगुण्यरूपस्य सरूपमाहुः।
'तदैक्षते'ति श्रुतिराह सृष्टिं सङ्कल्पपूर्वां तदचेतनं हि ॥ ३१५॥
विलक्षणत्वाज्जगतो निदानं न ब्रह्म किन्तु त्रिगुणं सरूपं।
मैवं हि कीटो मधुनोऽपि वह्निः जातोऽरणेस्तद्धि विलक्षणत्वात्। ३१६॥
दृष्टं शरीरात् दशना–शिरोज-नखादि कीटादि च गोमयादेः।
तस्मादनन्तं बहुशक्तिमच्च ब्रह्मैव सर्वात्मकमत्र हेतु ॥ ३१७ ॥
प्रियाऽप्रिये न स्पृशतोऽशरीरमित्यादिना मुक्ततनुर्न दृष्या।
अप्राकृताकारशरीरसत्वे बहुप्रमाणानि भवन्ति शास्त्रे ॥ ३१८ ॥
विशुद्धसत्वाश्रयगोपुरादि लोकाश्च विष्णोस्सततं विभान्ति।
यद्यस्य शेषं तदु तस्य वर्ष्म शरीरलक्ष्मेति मते न दोषः ॥ ३१९ ॥

अधिकरणार्थः "यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" (मनु १२-१०६) इति मनुस्मृत्या तर्कानुगृहीतशास्त्रमेव प्रमाणं। यद्धि यत्कार्यं तत्तस्मादविलक्षणं दृष्टम्; यथा मृत्कार्यं घटादि तद्वत् अचेतनरूपस्य जगतः कार्यस्याचेतनरूपं प्रधानमेव कारणं भवितुमर्हति। न तु चेतनं ब्रह्म इति पूर्वपक्षे प्राप्ते, कार्यकारणयोः नियतसालक्षण्ये प्रमाणाभावात् वैलक्षण्येऽपि कार्यकारणदर्शनाच्च, अचेतनात् गोमयात् चेतनवृश्चिकादीनां, चेतनाच्च ऊर्णनाभेः अचेतनतन्त्वादीनां चोत्पत्तिदर्शनात्, शब्दैकसमधिगम्यकारणत्वे न कश्चित् दोषमुद्भावयितुं शक्यमिति सिद्धान्तः।

चिदचिच्छरीरकपरब्रह्मणः जगत्कारणत्वाङ्गीकारे शरीरभूतचेतना-चेतननिष्ठदोषाः शरीरिणि ब्रह्मणि प्रसज्येरन्निति चेत्, मैवं। शरीरलक्षणस्य तार्किकाद्युक्तस्य अव्याप्त्यतिव्याप्त्यादि दोषग्रस्तत्वात् यद्यदेकनियाम्यं यदेकधार्यं, यस्यैकशेषभूतं तत्तस्य शरीरमिति शरीरलक्षणाश्रयणेन शरीरगतदोषादयः शरीरिणि न संभवन्त्येव। "अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" (छा) इत्यादिश्रुतयस्तु कर्मकृतशरीरस्यैवेति नाप्राकृतशरीरविशिष्टपरब्रह्मण इति न कोपि दोष इति ॥



---

२ नविलक्षणत्वाधिकरणम् (४२)–द्वैतम्

४ ओं न विलक्षणत्वादस्य तथात्वं च शब्दात् । (१३९)
५ ओं दृश्यते तु । (१४०)

मन्वादिस्मृतयस्तथैव सकलावेदाश्च साङ्गाः प्रमा
प्रत्यक्षं फलमत्र यद्धि विफलं तत्कर्म तत्कारणम् ।
सांख्यादिस्मृतयः प्रमाणपदवीं नार्हन्ति दोषाधिकाः
वेदाश्च स्मृतयः स्वतस्तु मितयः नित्याश्च विष्णाविति ॥ ३२० ॥
लोकाद्विलक्षणे वेदे नित्ये यत्कथ्यते प्रमा ।
वेदस्मृतीनां प्रामाण्यं दृश्यते नित्ययेति च ॥ ३२१ ॥

**अधिकरणार्थः** वेदानां मन्वादिस्मृतीनां च तत्तदुक्तफलोपलब्ध्या रुद्रादिकृतस्मृतिविलक्षणत्वात् वेदादीनां नित्यत्वाच्च स्वतः प्रामाण्याच्च 'वाचाविरूपनित्यया' (ऋ ८-६४-६) 'अनादिनिधनाह्येषा' इत्यादिना वेदादीनां नित्यत्वश्रवणाच्च तदुक्तफलस्य दृष्टत्वाच्च रुद्रादिकृतस्मृतिवत् वेदेषु न कल्प्या दोषाः। यत्रकुत्र च वेदोक्तफलं दृष्टं तत्र तज्जीवकर्तृककर्मनिमित्तमिति फलनत्वस्य व्यभिचाराभावात् साङ्गा वेदाः प्रमाणमेव।

---

३ अभिमान्यधिकरणम् (४३)–द्वैतम्

६ ओं अभिमानि व्यपदेशस्तु विशेषानुगतिभ्याम् । (१४१)
७ ओं दृश्यते च (१४२)

अब्रवीत् पृथिवीत्यादि वेदवाचां न न प्रमा ।
भूम्यादेश्शक्तिसत्वाच्च भूरादेर्वक्ति देवताः ॥ ३२२ ॥
अचेतनमृदादीनां देवता अभिमानिनः ।
वासुदेवप्रदत्ताश्च शक्तयस्सन्ति तास्वपि ॥ ३२३ ॥

**अधिकरणार्थः** "मृदब्रवीत" "आपोऽब्रुवन्" (श ६-१-३) इत्यादिश्रुतयः न प्रमाणं । तेषु चेतनधर्मासंभवात् इति पूर्वपक्षे तत्तदभिमानि

दैवता ब्रुवन्तीति शास्त्रात् मृदादीनां भगवद्दत्तविशेषसामर्थ्यमस्तीति ॥

"अचिन्त्याश्शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।
ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः" ॥

इति प्रमाणात् न कोपि विरोध इति ॥

---

## ४ असदधिकरणम् (४४)–द्वैतम्

८ ओं असदितिचेन्न प्रतिषेधमात्रत्वात् । (१४३)
९ ओं अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् । (१४४)
१० ओं न तु दृष्टान्तभावात् । (१४५)
११ ओं स्वपक्षदोषाच्च । (१४६)
१२ ओं तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः
१३ ओं एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः । (१४८)

**असतः कारणत्वोक्तेरसद्वाच्यो हरिस्स्मृतः ।
सत एव जनिः प्रोक्ता विनाशश्च सशेषकः ॥ ३२४ ॥
दृष्टान्तभावाभावाभ्यां तर्कानिश्चयतः परे ।
विरुद्धवादिनः सर्वे निरस्ता इति चोच्यते ॥ ३२५ ॥
उत्पत्तावसतो नास्ति दृष्टान्तो युक्तयस्तथा ।
विष्णोरेव समुत्पन्नं प्रमाणादुपपद्यते ॥ ३२६ ॥
दृष्टान्तभावाभावाभ्यां शिष्टा अप्यपरिग्रहाः ।
प्रधानवादितुल्यास्ते निरस्ता अभवन्निह ॥ ३२७ ॥**

**अधिकरणार्थः** 'नासदासीन्नोसदासीत् तदानीं नासीद्रजो नो व्योमा परो यत् (ऋ १०-१२१) असदेवेदमग्र असीत' (छा-६-२-१) 'असतः सदजायत; (ऋ १०-७२-३) इत्यादिना असतः कारणत्वोक्तेः विरोध इति पूर्वपक्षे असतः' कारणत्वाद्युक्तिः न विरुद्धा। सर्वशब्दानां असच्छब्दवाच्ये विष्णौ समन्वये सत्यपि असत उत्पत्तिः तत्र निषिध्यते । युक्तिविरोधो निराक्रियत इत्यर्थः । असत

उत्पत्तौ प्रलये सर्वासत्त्वमेव स्यादिति युक्तिविरोधः। प्रलये सर्वासत्त्व-दृष्टान्ताभावादेव तथा वक्तुं न युज्यते। लोके सत उत्पत्तिः सशेषविनाशश्च दृष्टः ; न सर्वविनाशः; दृष्टान्ताभावादेव न युज्यते। अतः सत उत्पत्तिरेव न्याय्या। अन्यथाप्यनुमेयं न भवति। एतद्रीत्यैव परिशिष्टा विरुद्धमतवादिनः निरस्ता वेदितव्याः। यत्र असत उत्पत्तिरुच्यते तत्र असच्छब्दवाच्यात ब्रह्मणः जगदुत्पत्तिरित्यभ्युपेयते। यत्र विरोधः तत्र ब्रह्मैवोच्यत इति नियमात्। प्रलये वाय्वन्तरिक्षरूपं भूतं पृथिव्यप्तेजोरूपं भूतं वाय्वादिकं कार्यं कारण-भूतं वाय्वादिकं च चेष्टमानं नासीत्। अपि तु परमात्मैवासीदिति तात्पर्यम् ॥

---

**४ शिष्टापरिग्रहाधिकरणम्। (४३)—अद्वैतम्**

**१२ एतेन शिष्टापरिग्रहा अपि व्याख्याताः। (१४६)**

**कारणं जगतोण्वादि ब्रुवते तार्किकादयः।**
**तेषां परिग्रहो नात्र तत्तुल्यानां तथैव च ॥ ३२८ ॥**

**अधिकरार्थः।** प्रधानकारणवादिनिरसनेन शिष्टैः मनुव्यासप्रभृतिभिः अपरिगृहीता अण्वादिकारणवादिनश्च निरस्ता इत्यर्थः ॥

---

**४ शिष्टापरिग्रहाधिकरणम् (३९)—विशिष्टाद्वैतम्**

**१२ एतेन शिष्टापरिग्रहा अपि व्याख्याताः। (१५१)**

**अशेषशेषकाणादमुख्याश्च कपिलादिवत्।**
**शून्यात्मवादिनस्सर्वे निरस्ता अभवन्निति ॥ ३२९ ॥**

**अधिकरणार्थः।** परिशिष्टाः वेदापरिगृहीतसांख्यपक्षक्षपणेन परि-शिष्टाः वेदापरिगृहीता अण्वादिकारणवादिनः काणादादयः एतेन निरस्ता वेदितव्याः।

---

**५ भोक्त्रापत्त्यधिकरणम्। (४४)—अद्वैतम्**

**१३ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्। (१४७)**

**श्रुतिप्रमाणाधिगमेऽपि लोके भोक्तुश्च भोग्यस्य विभाग इष्टः ।**
**अन्योन्यभावाप्तिरिहापि दोषः ब्रह्मण्यभिन्नद्वयकारणे न ॥ ३३० ॥**
**जलात्मकाब्धेश्च तरङ्गवीचीफेनादिभावे व्यवहारभेदः ।**
**तुल्येऽन्तरिक्षेऽपि घटान्तरिक्षं यथा तथोपाधिवशादिहापि ॥ ३३१ ॥**

**अधिकरणार्थः** शब्दप्रमाणकत्वेऽपि लोकदृष्टव्यवहारविरोधः प्रतिभातीति पुनः सांख्यवादी प्रत्यवतिष्ठते । भोक्ता देवदत्तादिः । भोज्यः ओदनादिरिति लोके भोक्तृभोग्यविभागो दृष्टः । प्रपञ्चस्य ब्रह्मोपादानत्वे भोग्यस्य भोक्तृत्वापत्तिः, भोक्तुश्च भोग्यत्वापत्तिः प्रसज्येत इत्याक्षेपे समाधिः "स्याल्लोकवत्" इति। फेनवीचीतरङ्गबुद्बुदादीनां उदकात्मकसमुद्राभिन्नत्वेऽपि इतरेतरविभागादिव्यवहार उपलभ्यते । "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै २-६) इति श्रुत्या अविकृतस्यैव स्रष्टुः कार्यरूपप्रपञ्चानुप्रवेश इति अविद्योपाधिनिमित्त विभागः, आकाशस्य घटाद्युपाधिनिमित्तभेद इव, कार्यानन्यत्वेऽपि भोक्तृभोग्यविभागः युक्त एव ।

---

### ५ भोक्त्रापत्त्यधिकरणम् । (४०)—विशिष्टाद्वैतम्

**१४ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । (१५२)**

**देहो जीवः प्रकृतिरपि च ब्रह्मणोऽङ्गीकृतस्यात्**
**भोक्त्रापत्तिर्विकृतय इहाऽयान्ति तद्ब्रह्मवादे ।**
**हर्म्येऽरण्ये नृप इव परब्रह्मशक्त्यैव जीवे**
**पुण्यापुण्यानुगुणतनुगं भोक्तृतादि करोति ॥ ३३२ ॥**

**अधिकरणार्थः** स्थूलसूक्ष्मचिदचिच्छरीरस्य ब्रह्मणः कार्यत्वरूपाङ्गीकारे जीववत् ब्रह्मणोपि भोक्तृत्वापत्तिः केवलब्रह्मकारणवादे मृदः घटादिविकारवत् जगद्गतापुरुषार्थाश्रयप्रसङ्ग इति प्राप्ते 'स्याल्लोकवत्' । जीवेश्वरस्वभावयोः विभागः अनादिजीवगतपुण्यापुण्यकर्मकृतशरीरविषयत्वात् सुखदुःखयोः । ब्रह्मणस्तु 'अपहतपाप्मत्वादि गुणकत्वात् सर्वशक्तिमत्त्वाच्च जीवान्तर्यामित्वेऽपि

यथा राजा विपिने प्रासादे च सुखी वर्तते तद्वत् जीवं नियम्य जीवगतदोषास्पृष्ट एव वर्तत इति न ब्रह्मणो भोक्तृत्वापत्तिः । अत एव—

"शार्ङ्गिन् ! त्वमेव जगतां चिदचिद्विशिष्टः सन्कारणं विपरिणम्य वर्तसे हि ।
मृल्लोहरुक्मविकृतेः कलशादिभावः यद्वत्तथापि विकृतिश्चिदचिद्गतैव ॥
(श्रीशा-११६)

इत्यस्माभिरुक्तः श्रीशारङ्गपाणिस्तवे ॥ परिशिष्टाः वेदापरिगृहीता अण्वादि-कारणवादिनः काणादादय एतेन निरस्ता वेदितव्याः ।

---

५ भोक्त्रधिकरणम् । (४५)–द्वैतम्

१४ ओं भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । (१४९)

**एकीभवत्यत्र परेऽव्ययेऽयं ततो विभागो भवतीह विष्णोः ।**
**यथोदके सिक्तजलं तथैव भवत्यथाधिक्यमिदैव चात्र ॥ २३३ ॥**
**सर्वेऽपि जीवाश्च न ते महित्वमन्वश्नुवन्तीति वदन्ति वेदाः ।**
**फलाधिकारेऽपि विचार्यमेतत् युक्तेर्विरोधेऽपि विचार्यमेव ॥ २३४ ॥**

**अधिकरणार्थः** । 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वे एकी भवन्ति' (आ ६-७) इति श्रुतौ मुक्तस्य परमात्मापत्तिरुच्यते । अतः विष्णुरपि जीव एव । अन्यस्य अन्यत्वं न युज्यते हीति पूर्वपक्षे 'स्याल्लोकवत्' इति समाधानं ।

'यथोदकं शुद्धे शुद्धं आसिक्तं तादृगेव भवति' (का-४-१५) इति श्रुतेः जले जलान्तरस्य संबन्धेऽपि जलाधिक्यरूपभेदः दृश्यत इति विष्णोः जीवाद्भेदो मुक्तावपि दृश्यत एव । मुक्तावपि विष्णुमहिमा जीवस्य न जायत इति श्रुतेः ॥

---

६ आरम्भणाधिकरणम् (४५)–अद्वैतम्

१४ तदनन्यत्वमारम्भणशब्दादिभ्यः । (१४८)

१५ भावेचोपलब्धेः । (१४९)
१६ सत्वाच्चापरस्य । (१५०)
१७ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् (१५१)
१८ युक्तेश्शब्दान्तराच्च । (१५२)
१९ पटवच्च । (१५३)
२० यथा च प्राणादिः । (१५४)

लोकवद्भोक्तृभोग्यादि व्यवहारस्समीरितः ।
वस्तुतो ब्रह्मणो नान्यदस्तीतीह प्रतन्यते ॥ ३३५ ॥
सर्वं ब्रह्मैव नाना न हि किमपि तथा संवदन्तीह वेदाः
वाचारम्भो विकारो घटमणिकमुखं मृत्तिकेत्येव सत्यं ।
इत्यादीनां बहूनामुपनिषदि तथा दर्शनाद्ब्रह्मणोन्यत्
नेति स्पष्टं प्रतीतेः तदपि च तदनन्यत्वमित्यादिनाऽऽह ॥ ३३६ ॥
कारणाद्व्यतिरेकेण कार्यस्य परमार्थतः ।
अभावस्य प्रतीतत्वादनन्यत्वमिहोच्यते ॥ ३३७ ॥
ब्रह्म स्वतन्त्रं सगुणं यदिस्यात् सुखैकतानं जनयेज्जगद्धि ।
अतो जगत्कारणवस्तु मायाविशिष्टमन्यद्धि सदा प्रकाशम् ॥ ३३८ ॥

**अधिकरणार्थः** । 'यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' वाचरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं (छा-३-१-१ इत्यत्र एकमृत्पिण्डज्ञानेन सर्वं मृद्विकारजातं ज्ञातं भवतीत्युक्त्वा रूपनामादिक-विकारव्यवहारः केवलवाङ्मात्रमेव । मृदेव सत्यमिति उपनिषदर्थो भाति । तत्र मृदेव सत्यं, मृद्विकारं मिथ्येत्युक्तेः पूर्वोक्तभोक्तृभोग्यादिव्यवहारः कथं उपपद्यत इति पूर्वपक्षे प्राप्ते 'यथा सोम्य एकेन 'इत्यादिश्रुत्या भोक्तृभोग्यादिकं मिथ्यैव । तुष्यतु दुर्जन इति न्यायेन लोकव्यवहारदृष्ट्या पृष्टस्य तद्रीत्या तदुत्तरं दत्तं पूर्वं । इदानीं ब्रह्मव्यतिरेकेण सत्यरूपस्यान्यस्याभाव एव समर्थ्यते सूत्रकृद्भिः ।

तदनन्यत्वं—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।

अप्राशस्त्यं विरोधश्च नञर्थाष्षट्प्रकीर्तिताः ॥"

इति वैय्याकरणोक्तरीत्या नञ अभावार्थकत्वेन अन्यस्य अभावः—अनन्यः, अनन्यस्य भावः—अनन्यत्वं। परब्रह्मणोव्यतिरेकेणाभावः—इत्यर्थः सिद्ध्यति। वाङ्मात्रं केवलं, न तु पदार्थसत्तेत्यर्थकवाचारम्भणादि शब्देभ्यः तथैवावगमात्। "ब्रह्मैवेदं सर्वं" (मु २-२-११) "नेह नानास्ति किञ्चन (बृ ४-४-१९) एवमादि श्रुतिभ्यः यथा मृगतृष्णिकोदकादीनां ऊषरादिभ्योनन्यत्वं घटमठाकाशानां महाकाशादनन्यत्वं तद्वत् ब्रह्मणः तद्व्यतिरिक्तप्रञ्चस्यचानन्यत्वं। समुद्रफेनादिदृष्टान्तोपि युक्त एव। "परिणामात्" इति सूत्रकाराभिप्रायरीत्या महासमुद्रस्थानीयस्य ब्रह्मणः नदिकुल्यादिवत् सत्यत्वमभिप्रेत्य सगुणब्रह्मोपासनेषु तदनन्यत्वप्रकारोपि उपपद्यत एव। "अस्मान् मायी सृजते विश्वमेतत्" इति श्रुत्या मायाविशिष्टं ईश्वरशब्देन व्यवहार्यं सगुणं ब्रह्म जगत्कारणं। अविद्याविशिष्टं जीवशब्देन व्यवहार्यं ब्रह्मैव भोक्तृभोग्यभावादिना वर्तत इति मायाविद्याविभागोप्यस्मिन् मते युक्त एव।

"माया भवेद्विमलसत्वगुणप्रधाना प्रोक्तामलापिहितं-सत्वगुणात्वविद्या।"

इति मायाविद्ययोः, "आत्मविद्याविलासोक्तं" पृथक् लक्षणं सङ्गच्छते।

"जीवो ब्रह्म विशुद्धाचित् भेदस्तस्यास्तयोर्द्वयोः

अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इत्यस्मिन् मते षण्णां अनादिसिद्धत्वाङ्गीकारात् भोक्तृभोग्यादि व्यवस्था, सुख दुःखादि व्यवस्था ब्रह्मानन्यत्वसिद्धिश्च सङ्गच्छते। ज्ञानरूपे ब्रह्माणि अविद्या मायासङ्गः कथं भवेत् इतिचेत् जले औष्ण्यमिव अग्नौ शैत्यमिव संभवेदेवेति न दोषः ॥

---

## ६ आरम्भणाधिकरणं। (४१)—विशिष्टाद्वैतं

**१५ तदनन्यत्वमारम्भणशब्दादिभ्यः। (१५३)**

**१६ भावेचोपलब्धेः। (१५३)**

१७ सत्त्वाच्चापरस्य । (१५५)
१८ असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च । १५६
१९ पटवच्च । (१५७)
२० यथा च प्राणादिः । (१५८)

ब्रह्मानन्यत्वमेतत् तदितरजगतस्सत्यता नेति युक्त्या
प्रोचुर्मिथ्येति वाक्यं क्वचिदपि न भवेत् सत्यमित्येव सिद्धम् ।
एवं चेत् कार्यहेत्वोः कथमपि तदनन्यत्वसिद्धिर्न च स्यात्
मैवं सर्वेषु कार्येष्वनुविशति परब्रह्म तस्मात्तदैक्यम् ॥ ३३९ ॥
सन्मूलं च सदाधारं 'ऐतदात्म्यमिदं' त्विति ।
जीवेनानुप्रविश्येति सत्यं जगदितिस्थितम् ॥
मृल्लोहकार्ष्णायससत्यवाणी नान्यस्य सत्त्वादि रुणद्धि किन्तु ।
ज्ञाते मृदादौ सति तद्विकाराः ज्ञाता भवन्तीति तदेव सत्यम् ॥३४१॥
'इत्येव' शब्दाच्च तथा तदर्थः मृत्स्नैव सत्यं त्विति वेदवाक् न ।
सुवर्णमृत्स्नादि च सत्यमेतदनित्यमन्यच्च विकारजातम् ॥ ३४२ ॥
ब्रह्मात्मसदहं शब्दाः भवन्ति ज्ञानिवाचिनः ।
ईक्षां चक्रे बिभेतीति चिन्मात्रस्य कथं भवेत् ॥ ३५२ ॥

**अधिकरणार्थः** 'सन्मूलास्सोम्य इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा-६-३-३) इत्यादि विषयवाक्यम् । अत्र लोके कारणात् कार्यस्य भेद एव बुद्धिशब्दकार्याकारादिभेदात् दृश्यत इति ब्रह्मणोभिन्ननिमित्तोपादानत्वं न संभवतीति प्राप्ते 'तदनन्यत्वमारम्भणशब्दादिभ्यः ।' तदनन्यत्वं —ब्रह्मणोनन्यत्वं जगतः आरम्भणशब्दादिभ्योवगम्यते। 'ऐतदात्म्यमिदं सर्वं' (छा ६-८-६,७) इत्यादिना ब्रह्मकार्यं इदं चेतनाचेतनप्रपञ्चरूपं सृष्टेः प्राक् प्रपञ्चरूपभावेन सूक्ष्मतया आसीत् । सृष्ट्युत्तरं 'कूर्मोङ्गानीव सर्वशः' 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इत्यादि न्यायेन च ब्रह्मणः प्रपञ्चरूपेण परिणामात् ब्रह्मानन्यत्वं सिद्धं । परिणामित्वे दोषभाक्त्वं तु 'नियन्तृत्वात्' इत्यादिना परिहृतं ।

मृत्त्वैव सत्यं इति श्रुत्यभावात् 'मृत्तिकेत्येव सत्यं' इत्युक्तत्वाच्च मृदादि दृष्टान्तैश्च सर्वं द्रव्यं सत्यं, तद्विकाराश्च अनित्या इत्येव श्रुत्यर्थस्याङ्गीकर्तव्यत्वात् इति ।

कर्मानादित्वमात्राभ्युपगतिरिह नस्साम्यकारुण्यसिद्ध्यै
षण्णां चानादिताङ्गीकृतिरपरमतेऽनादिनित्यौ समार्थौ ।
नित्यानाद्योश्च वाच्ये भवति न हि भिदाऽद्वैतिनां तुल्यता नः
षण्नित्यास्तन्मते स्युः सकलमपिमते लक्ष्मणार्यस्य नित्यम् ॥२४४ ॥
अनादेर्नाशिता दृष्टा सा नो नित्यस्य चेति न ।
मृदादिपरिणामाद्धि नाशो रूपान्तरं स्मृतम् ॥ ३४५ ॥

अपि च परमते ब्रह्मणः जगत्सृष्टौ वैषम्यनैर्घृण्यपरिहारार्थं अनादित्वाङ्गीकृतिरभ्युपेयते । अस्मिन् मते तु सर्वेषां पदार्थानां नित्यत्वात् अनादिकर्मणः एकस्यैवाभ्युपगमेन साम्यवैषम्यसिद्धिः भवतीति लाघवमस्ति । अपि च नित्यानादिशब्दयोः वस्तुतो अर्थभेद एव न ॥

न च अनादित्वस्य नाश्यत्वादिसिद्ध्या, नित्यस्य तदभावाच्च अर्थभेदो भवत्येवेति वाच्यं । भावान्तराभाववादि पक्षे वस्तुनः परिणामसत्त्वेऽपि नाश्यत्वाभावात् वस्त्वन्तररूपेण सत्त्वाभ्युपगमात् । न च निर्वाणस्य दीपस्य वस्त्वन्तराभावस्य सिद्धत्वात् विकारजातं सर्वं नाश्यमेव; न तु वस्त्वन्तरमिति वाच्यम् । लोके सर्वस्य विकारजातस्य भावान्तरमेव दृष्टमिति निर्वाणदीपस्यापि भावान्तरं कल्प्यमेव । 'भूयसां स्यात् बलीयस्त्वात्' इति न्यायात् । अत एव, श्रीलक्ष्मीनृसिंहस्तवे' अस्माभिरुक्तम्—

'विकार्यनित्यं त्विति केचिदाहुः नृसिंह! तच्चापि न युक्तमेव ।
विनश्यदन्यत् भजते हि रूपं भावान्तरं त्वेतदभावरूपम् ॥
यन्नश्यति द्रव्यमिदं मृषेति न तच्च तस्य प्रकृतिं समेति ।
घटादिनाशेऽपि मृदादि दृष्टेः निर्वाणदीपेऽपि तथैव कल्प्यम् ॥

(श्रील स्तव-पूर्वभाग २१२-२१३)

---

## ६ आरम्भणाधिकरणम् । (४६)–द्वैतम्

१५ ओं तदनन्यत्वमारम्भणशब्दादिभ्यः । (१५०)

१६ ओं भावेचोपलब्धेः । (१५१)

१७ ओं सत्त्वाच्चापरस्य । (१५२)

१८ ओं असद्व्यपदेशान्नेति चेन्न धर्मान्तरेणवाक्यशेषात् । (१५३)

१९ ओं युक्तेः शब्दान्तराच्च । (१५४)

२० ओं पटवच्च । (१५५)

२१ ओं यथा प्राणादिः । (१५६)

यथा कुलालस्य घटादिसृष्टौ आलोकवाय्वादियुता च मृत्स्ना।
अपेक्षिता तद्वदिहापि विष्णुः प्रापेक्षते साधनवर्गमेषः ॥ ३४६ ॥
सर्वज्ञशक्त्यादिगुणैस्सुपूर्णः नापेक्षते किंचिदपीह विष्णुः ।
तस्मादनन्यत्वमिहोपपन्नं असाधनस्सन् सृजतीह सर्वं ॥ ३४७ ॥
पटादिसृष्टौ च यथा हि तन्तुः तथा शरीरेन्द्रियसाधनश्च ।
अनुप्रविश्यैव जगद्विसृष्टिं करोति तत्साधनवान् हि विष्णुः ॥ ३४८ ॥

**अधिकरणार्थः** किंस्विदासीदधिष्ठानं आरम्भणं कतमस्वित् कथासीत्' (ऋ १०-७१-२) इति ब्रह्मणः सृष्टिकाले साधनाधिष्ठानाद्यनुक्तेः घटादि निर्माणे कुलालस्येव साधनापेक्षा न संभवति। कुलालो हि परतन्त्रः विष्णुश्च स्वतन्त्रः। 'साधनानां साधनत्वं यतः किं तस्य साधनैः' इति प्रमाणात् साधनान्तरानपेक्ष्यैव विष्णुः सृष्टिं करोति ।

'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः ॥'

इति प्रमाणात् शरीरेन्द्रियादि साधनवानपि भवति विष्णुः।

---

## ७ इतरव्यपदेशाधिकरणम् । (४६)—अद्वैतम्

२१ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः । (१५५)
२२ अधिकन्तु भेदनिर्देशात् । (१५६)
२३ अश्मादिवच्च तदनुपपत्तिः । (१५७)

स चेतनं ब्रह्म जगन्निदानं स्वकीयदुःखादि नयेत् कथं तत् ।
नैवं विशुद्धं न जगन्निदानं मायाविशिष्टं च सचेतनं तत् ॥ ३४९ ॥
अनादि बद्धेषु हि दुःखसृष्टिः मायानिवृत्त्यैव निमुक्तिभाजः ।
ब्रह्मेतरद्बन्धविमोक्षभाक् तु न ब्रह्मणो दुःखसुखादयश्च ॥ ३५० ॥
अनादिसिद्धा यदिहापि शास्त्रे ह्यनादिजीवेषु हितादिसृष्टिः ।
तदीय कर्मानुसृतेः परेशः सृष्टिं करोतीति न कोपि दोषः ॥ ३५१ ॥
गूढं प्रकेतं तमसाऽनृतेन प्रच्छादिताः कर्मवृता हि जीवाः ।
किञ्चापि दृश्यं सकलं मृषैव मिथ्यामतिस्सैव हितादि सृष्टिः ॥ ३५२॥
यथा पृथिव्यादिविकारभूतपाषाणरत्नादिषु तारतम्यं ।
यथा पृथिव्याश्रयबीजगन्धः किंपाकचूतादिषु भिन्न एव ॥ ३५३ ॥
ब्रह्मैव बीजं जगतोपि सिद्धं उपाधिसंगात् बहुधाविभेदः ।
आत्मा हि नित्यो विभुरेक एव मरीचिकेवान्यदसत्यमेव ॥ ३५४ ॥

**अधिकरणार्थः** ब्रह्मणः स्रष्टृत्वमुक्तं । स्वतन्त्रः कर्तेति सचेतनः परमेश्वरः जन्ममरणजरारोगाद्यनेकानर्थजालं आत्मनः कथं कुर्यात इति आक्षेपे 'अधिकं तु भेदनिर्देशात्' इत्यादिना तत्समाधानमुच्यते । 'अस्मान्मायी सृजते (श्वे ४-९) इति श्रुत्या मायाविशिष्टं ब्रह्मैव जगत्कारणं ; न तु शुद्धं । 'आत्मा वा अरे द्रष्टव्योः श्रोतव्यो' (बृ २-४-५) इत्यादिना शुद्धब्रह्मण एव अन्वेष्टव्यादिकं श्रूयते । यथा रज्जौ सर्पभूदलनाम्बुधारादिरध्यस्यते तद्वत ब्रह्मणि भोक्तृभोग्यादिभ्रमः । वस्तुतः तत्त्वमसीत्यादिना जीवब्रह्माभेद एव एक एवात्मेति सिद्धान्तः

भेदाभेदौ आकाशादिवदुपाधिभेदादुपपद्येते एव। यथा पृथिवीत्वाश्रयाणां अश्मनां केचित् वज्रवैडूर्यादयः, केचित् सूर्यकान्तादयः, केचिल्लोष्टपाषाणादयः; यथा पृथिव्याश्रयाणां बीजानां बहुविधं पत्रपुष्पादिवैचित्र्यं तथा ब्रह्मणोविद्यावशात् सर्वमुपपद्यत इति॥

---

७ इतरव्यपदेशाधिकरणम्। (४२)—विशिष्टाद्वैतम्

२१ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः। (१५९)

२२ अधिकं तु भेदनिर्देशात्। (१६०)

२३ अश्मादिवच्च तदनुपपत्तिः। (१६१)

चिदचिच्छरीरपरमात्मकर्तृता चिदचिच्छरीरगतदोषमिश्रता।
न शरीरनिष्ठाशिशुतादि चात्मनि श्रुतानियाम्यमिदमङ्गलक्षणम्।
ब्रह्म स्वतन्त्रं सगुणं यदि स्यात् सुखैकतानं जनयेज्जगद्धि।
ततो जगत्कारणवस्तु माया विशिष्टमन्यद्धि सदा प्रकाशम्॥ ३५६ ॥
नैवं विशुद्धं स्वयमेव भातं चिन्मात्रमङ्गीक्रियते यदीह।
विशुद्धविज्ञानघनस्वरूपे मायापिधानं न कदापि जीवेत्॥ ३५७ ॥
देहो यस्य ब्रह्मणः सृज्यवर्गस्सर्वस्तस्माद्धि स्वदेही परश्चेत्।
मूर्तेर्दुःखं मूर्तिनस्स्यादितीयं चित्रे वस्त्रे रक्तिमेवात्र न स्यात्॥३५८
यच्चेतनस्य यद्द्रव्यं आधेयं शेषमेव च।
तत्तस्य हि शरीरं स्यान्नास्त्यन्यन्मूर्तिलक्षणम्॥ ३५९ ॥

अधिकरणार्थः। 'अयमात्मा ब्रह्म' (बृ ६-४-५) 'तत्त्वमसि' (छा ६-८-७) इत्यादि श्रुत्या जगद्ब्रह्मणोरनन्यत्वं परैस्साधितं। तत्र किञ्चिदाक्षिप्य समाधानं क्रियते सूत्रकारैः। जीवस्य ब्रह्मभावोपदेशे ब्रह्मैव जीव इति सिद्धया, आत्मनः हिताहितादिमिश्रजगत्सृष्ट्यादिदोषाः ब्रह्मणः प्रसज्येरन्निति चेत्, जीवात्मनः पृथगेव परंब्रह्मेति 'य आत्मनि तिष्ठन्' (बृ ५-७-२२)

पृथगात्मानं प्रेरितारं च मत्वा' (श्वे-१-६) इत्यादिभिः ज्ञायते । स्थूलचिद चिद्विशिष्टब्रह्मणः कार्यभूतस्य जीव तच्छरीरगत दोषाः ब्रह्मणि न प्रसज्यन्ते। यथा शरीरगतबालत्वयुवत्वादायः शरीरिणि जीवे न भवन्ति तथा परमात्मनीति ।

---

७ इतरव्यपदेशाधिकरणम्। (४७)–द्वैतम्

२२ ओं इतरव्यपदेशाद्धिताकरणादि दोषप्रसक्तिः । (१५७)
२३ ओं अधिकन्तु भेदनिर्देशात्। (१५८)
२४ ओं अश्मादिवच्च तदनुपपत्तिः। (१५९)
२५ ओं उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि। (१६०)
२६ ओं देवादिवदपि लोके। (१६१)
२७ ओं कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा। (१६२)

जीव एव जगत्कर्ता यदिस्याददहितं कथं।
विष्णुरेव जगत्कर्ता श्रमराहित्यशक्तिमान् ॥ ३६० ॥
नैव जीवो जगत्कर्ता निष्प्रतीकादिवेदतः।
नित्यो व्यवयवो ज्ञाता सुखीदुःखीति च श्रुतेः ॥ ३६१ ॥

**अधिकरणार्थः** । श्रुतिप्राप्तजीवकर्तृत्वपक्षः इदानीं निराक्रियते। जीवस्यैव जगत्काणत्वाभ्युपगमे हिताहितादिदोषप्रसक्तिः स्यादेव। विष्णोः जगत्स्रष्टृत्वाभ्युपगमे न कोऽपि दोषः। सर्वशक्त्यादिमत्त्वात्। अतः विष्णोः जगत्कर्तृत्वाभ्युपगमे हिताहितादिदोषो न भवति। जीवस्य चेतनत्वेऽपि अश्मादिवत् कर्तृत्वानुपपत्तेः स्रष्टृत्वं न संभवति। गोषु दृश्यमानं क्षीरं प्राणादेव जायते।'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ' इति वचनात् जीवे दृश्यमानः कार्योपसंहारोऽपि विष्णुगत एव। लोके सामान्यपिशाचादीनामपि अन्यशरीरं प्रविश्य विचित्र कार्यादिकरणे शक्तिर्दृष्टा। किमु वक्तव्यं विष्णोः शक्तिमत्त्वे। तथा च विष्णुः अन्यैरदृष्टस्सन जीवादीन् अनुप्रविश्य करोति कारयति चेति ॥

---

## ८ उपसंहारदर्शनाधिकरणम् । (४७)—अद्वैतम्

२४ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि । (१५८)
२५ देवादिवदपि लोके (१५९)

मृद्दण्डचक्रादिसहायसत्त्वे करोति कुम्भादिघटादिकर्ता ।
तथा परेशोऽपि सहायकाङ्क्षी दध्नीतरत्क्षीरमपेक्षते न ॥ ३६२ ॥
दृष्टा हि देवेषु मुनीष्वपीह शरीरहर्म्यादि विशेषसृष्टिः ।
बलाकवर्गश्च विनैव शुक्रं दधाति तस्मान्निरपेक्ष ईशः ॥ ३६३ ॥

**अधिकरणार्थः** घटपटादिकर्तुः मृद्दण्डसूत्रापेक्षा यथा तद्वत् ब्रह्मणोऽपि साधनापेक्षा भवतीत्यक्षेपे लोके जलं स्वयमेव हिमभावमाप्नोति । क्षीरञ्च दध्यादिभावम्बाप्नोति । बलका च रेतस्सेकमन्तरेण गर्भं धत्ते । पद्मिनी च प्रस्थानसाधनमनपेक्ष्यैव तटाकात्तटाकान्तरं प्रतिष्ठते । देवादयश्च इन्द्रादयः सौभरिप्रभृतयश्च सिद्धयोगिनश्च सचेतनाः स्वशक्त्यैव शरीरान्तरं हर्म्यादिकं, देशान्तरगमनादिकं च कुर्वन्त्येव । तथा सचेतनं ब्रह्म साधनमनपेक्ष्यैव जगत्सृष्टिं करोति । अत्र देवादिवदिति दृष्टान्तोपन्यासः साधनानपेक्षकार्यकरणमात्र एव विवक्ष्यते । अन्यथा एकस्य सामर्थ्यं दृष्ट्वा अन्योप्येवं भवितुमर्हन्तीति प्रश्नस्य अवकाशस्स्यात् इति ॥

---

## ८ उपसंहारदर्शनाधिकरणम् (४३)—विशिष्टाद्वैतं

२४ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि । (१६२)
२५ देवादिवदपि लोके । (१६३)

'स्वाभाविकज्ञानबलक्रिया'दि युक्तं परंब्रह्म विसाधनं तत् ।
अन्यानपेक्षं सृजति प्रपञ्चं देवर्षिपित्रादिवदेव सर्वं ॥ ३६४ ॥

**अधिकरणार्थः** सर्वज्ञात् सर्वशक्तेः ब्रह्मणः जगत्सृष्टिः साधनानपेक्षयैव सिद्ध्यति । परिमितशक्तीनां साधनोपसंहारसापेक्षत्वेऽपि

'स्वाभावकी ज्ञानबलक्रिया च' (श्वे-६-७) इति श्रुत्या सर्वशक्तेः ब्रह्मणः साधनापेक्षैव न। क्षीरजलादिकं दधिहिमादिभावेषु यथा अन्यानपेक्षं दृष्टं; लोके च देवादयः स्वसंकल्पादेव अनेकविचित्रकार्याणि सृजन्ति तद्वदित्यर्थः।

---

९ कृत्स्नप्रसक्त्यधिकरणम्। (४८)—अद्वैतं

२६ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा। (१६०)

२७ श्रुतेस्तु शब्दमूलत्वात्। (१६१)

२८ आत्मनि चैवं विचित्राश्च हि। (१६२)

२९ स्वपक्षदोषाच्च। (१६३)

**ब्रह्मैव लोको यदि कृत्स्ननाशः अङ्गीतिचेन्निष्कलवेदकोपः।**
**शब्दप्रमाणादुभयं न दुष्टं ब्रह्मान्यदज्ञानविमिश्रमन्यत् ॥ ३६५ ॥**
**आत्मन्यपि स्वप्नदर्शिप्रदृष्टः स्वरूपसत्वेऽपि रथादिसृष्टिः।**
**मायावि देवादिषु दृष्टमेतत् स्वरूपसत्वे विकृतिं विनैव ॥ ३६६ ॥**
**प्रधानवादेऽपि समान दोषः कृत्स्नप्रसक्तिश्च निरङ्गता स्यात्।**
**ब्रह्मैकहेतौ च न कोपि दोषोऽविद्यावशाज्ज्ञानबलक्रियादेः ॥ ३६७ ॥**

**अधिकरणार्थः**। इदानीं ब्रह्मणः जगत्कारणत्वपक्षे प्राप्तदोषं निवारयति। श्रुत्यवगतं निरवयवं ब्रह्म जगद्रूपेण परिणामि चेत् कृत्स्नपरिणामप्रसक्तौ ब्रह्मण एव नाशः प्रसज्येत। सावयवत्वाभ्युपगमे 'निष्कलं निष्क्रियं शान्तं' इत्यादि शब्दकोपेन अनित्यत्वप्रसङ्गः; सावयवत्वात्; इत्याक्षेपे समाधिः। 'तावानस्य महिमा ततो ज्यायाँश्च पूरुषः' (पूरुषसूक्तं)

'अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥'

इत्यादिश्रुतिस्मृतिभ्यः अतीन्द्रियार्थयाथात्म्यज्ञानं संपादनीयं। अतः यागक्रियाविषयक-षोडशिनस्तोत्रविकल्पवत् वस्तुनि विकल्पासहत्वात् सावयवत्वनिरवयवत्वयोः, अविद्याकल्पितरूपभेदाश्रयणेन सावयवं वस्त्वाश्रित्य

अगत्सृष्टिरुपपद्यते। यथा तिमिरदोषेण अनेकचन्द्रदर्शनेऽपि चन्द्रैकत्वनिश्चयः अबाधितो जायते तथा अत्रापि ज्ञानरूपं ब्रह्म शुद्धमेव। अविद्याविशिष्टं ब्रह्म अविद्याकल्पितनामरूपादिभेदेन परिणमत इति न दोषः। परिणामश्रुतिश्च वस्तुतो न परिणामप्रतिपादनार्था। अपि तु पञ्चकोशादिवाक्यवत् 'स एष नेति नेत्यात्मा' (बृ-३-९-२६) इत्युपदिष्टात्मप्रतिपादनार्थेति सर्वं निरवद्यं। यथा मिथ्याभूताः रथादियोगाः स्वप्नदृशि भवन्ति, मायाव्यादिषु स्वस्वरूपानुपमर्देनैव विचित्रसृष्टिः दृश्यते तद्वत् एकस्मिन्नपि ब्रह्मणि स्वरूपाविकारेणैव सर्वासृष्टिरुपपद्यते। प्रधानादिवादिन एवायं दोषः संभवतीति॥

---

### ९ कृत्स्नप्रसक्त्यधिकरणम्। (४४)—विशिष्टाद्वैतं

२६ **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा।** (१६४)
२७ श्रुतेस्तु शब्दमूलत्वात्। (१६५)
२८ आत्मनि चैवं विचित्राश्च हि। (१६६)
२९ स्वपक्षदोषाच्च। (१६७)
३० सर्वोपेता च तद्दर्शनात्। (१६८)
३१ विकरणत्वान्नेति चेत्तदुक्तम्। (१६९)

**एकं ब्रह्म व्यवयवमिदं चेतनाचेतनांशः**
**शून्यं ब्रह्म स्थितमिति यदि ब्रह्मणस्साङ्गता स्यात्।**
**ब्रूते वेदः प्रमितिजनकः सर्वशक्त्यादिजुष्टम्**
**दृष्टो दन्तावलमुखमुखे चित्रसर्गः परस्य॥ ३६८॥**

**अधिकरणार्थः।** सूक्ष्मचिदचिच्छरीरं ब्रह्म जगत्कारणं इत्युक्तेऽपि शरीरांशस्य ब्रह्मणः कार्यत्वाऽपत्या ब्रह्मणोपि कार्यत्वेनोपयुक्तत्वात् ब्रह्मांशोपि नष्ट एव। निरवयवत्वे बहुभवनं च नोपपद्यते। अतः ब्रह्मकारणत्वं असमञ्जसमिव भातीति चेत् शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वविचित्रशक्तिमत्वाद्यभ्युपगमाद्ब्रह्मणः लोकदृष्टं सामान्यं दूषणं न संभवति। यथा

अग्निजलादीनां औष्ण्यशैत्यादिकाः स्वाभाविकाः विचित्राश्शक्तयः दृश्यन्ते तद्वत्'—

"शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता" ॥

इत्यादि प्रमाणात् ब्रह्मणः जगत्सृष्टिः स्वविकारभावादिश्चोपपन्न एव। गजमुखनृसिंहादौ विचित्रसृष्टिः प्रसिद्ध एवेति ॥

---

८ श्रुतिशब्दमूलत्वाधिकरणम् । (४८)—द्वैतम्

२८ ओं श्रुतेस्तुशब्दमूलत्वात् । (१६३)
२९ ओं आत्मनिचैवं विचित्राश्च हि । (१६४)
३० ओं स्वपक्षदोषाच्च । (१६५)
३१ ओं सर्वोपेता च तद्दर्शनात् । (१६६)
३२ ओं विकरणत्वान्नेति चेत्तदुक्तम् । (१६७)

**विष्णोः कर्तृत्वपक्षे तु न दोषः प्रसजेदिति ।**
**श्रुत्युक्तार्थं लोकयुक्तिः बाधितुं नार्हतीह या ॥ ३६९ ॥**
**विचित्राश्शक्तयः सन्ति विष्णावित्यागमात् प्रभौ ।**
**न दोषः परमे कश्चित् गुणा एव निरन्तराः ॥ ३७० ॥**

**अधिकरणार्थः** जीवस्य कर्तृत्वं दूषयति विस्तरेण। जीवः नित्यः, निरवयवः, सुखी, दुःखी, ज्ञाता, अज्ञाता, इत्यादिजीवधर्मोक्तेः; परमात्मनः सर्वशक्त्युक्तेः विचित्रशक्तिमत्वोक्तेश्च विष्णुरेव कर्ता, न जीव इति। 'अपाणिपादो जवनो गृहीता' (श्वे ३-१९) इत्यादिना विष्णोः विचित्रशक्तिमत्त्वमुच्यते। अजस्रशक्तिमत्त्वं सर्वशक्तिमत्त्वं कार्यकारणाभावत्वादि च विष्णोरेव दृष्टं ।

---

**सर्वोपेताधिकरणम् । (४९)—अद्वैतम्**

**३० सर्वोपेता च तद्दर्शनात् । (१६४)**

विकरणत्वान्नेति चेत्तदुक्तम् । (१६५)

**यस्सर्वकर्मा स च सर्वकामः योऽपाणिपादो जवनेन गामी ।**
**योऽकर्मचक्षुस्स शृणोति पश्यत्यतश्च सर्वं श्रुतिवाक्यसिद्धम् ॥ ३७१ ॥**
**त्रयी विरोधप्रशमं विधत्ते स्रष्टेति मायीत्यनृतेन गूढात् ।**
**आम्नायगाज्ज्ञानत एव सिद्धं परस्य कस्यापि मते न युक्तिः ॥ ३७२ ॥**

**अधिकरणार्थः** । ब्रह्मणः विचित्रविकारप्रपञ्चभावे शक्तियोगः क इत्याक्षेपे सर्वकर्मा, सर्वकामः सत्यकामः सत्यसंकल्पः, यः सर्वज्ञः सर्ववित्, "एतस्य वा अक्षरस्य प्रशासने" (बृ३-८-९) इत्यादि श्रुतिभ्यः ब्रह्मणः सर्वशक्त्यवगतेः । श्रुतिप्रमाणामेव 'नेति नेति' (बृ ३-९-२६) इति श्रुत्यवगत-प्रतिषिद्धसर्वविशेष-ब्रह्मणोऽपि 'अपाणिपादं' इत्यादि श्रुत्या साधनसामग्र्यभावेऽपि सृज्यसर्गशक्तिमत्त्वमस्तीत्यवगम्यते । वेदान्तिनः शब्दैकप्रमाणका हीति ।

---

११ **प्रयोजनवत्त्वाधिकरणम्** (५०)—**अद्वैतम्**

३२ **न प्रयोजनवत्त्वात्** । (१६६)
३३ लोकवत्तु लीला कैवल्यम् । (१६७)

**यद्ब्रह्म निष्काममदो हि स्रष्टृ सृष्टेः फलं नैव हि दृश्यतेऽत्र ।**
**यथाऽऽप्तकामस्य विभोश्च लीला श्वासादिवद्ब्रह्मण एव भावः ॥३७३ ॥**

**अधिकरणार्थः** । उच्चावचः प्रपञ्चरूपं जगद्बिंबं परमेश्वरकर्तृकं न भवति ; परमेश्वरस्य प्रयोजनाभावात् इत्याक्षेपे 'लोकवत्तु लीला कैवल्यं' । यथा राज्ञः राजामात्यस्य वा प्रयोजनाभिसन्धिरहितस्य लीलारूपाः प्रवृत्तयः कन्दुकादि-विहारेषु भवन्ति, यथा च उच्छ्वासनिश्श्वासादयः बाह्यप्रयोजनानपेक्षयैव स्वभावादेव प्रवर्तन्ते, तथैव परमेश्वरस्यापि सृष्टिरिति ज्ञायते । अथापि नेयं परमार्थविषया सृष्टिः । अपि तु ब्रह्मात्मभावप्रतिपादनाय नडकोशादिवदिति ज्ञेयं । इति ॥

---

## १० प्रयोजनवत्वाधिकरणम् (४५)-विशिष्टाद्वैतम्

३२ न प्रयोजनवत्त्वात् (१७०)
३३ लोकवत्तु लीला कैवल्यम्। (१७१)
३४ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति। (१७२)
३५ न कर्माविभगादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च (१७३)
३६ सर्वधर्मोपपत्तेश्च। (१७४)

**अवाप्तकामस्य जगद्विसर्गे क्रीडाफलंवक्तुमशक्यमेव।**
**जरामृतिक्लेशभयप्रसूतिजुष्टं हि सृष्टं जगदत्र दृष्टम्॥ ३७४॥**
**संकल्पमात्रेण विचित्रसृष्टिः अनादिकर्मानुसृतेर्न दोषः।**
**वैषम्यनैर्घृण्यकथा परस्मिन् ब्रह्मण्यतो नास्ति समञ्जसत्वात्॥ ३७५॥**

**अधिकरणार्थः।** 'आप्तकामस्य का स्पृहा' इति ब्रह्मणः विचित्रसृष्टौ प्रयोजनाभावात् लीलेत्यपि वक्तुं न शक्यत इति प्राप्ते सार्वभौमस्यापि राज्ञः लीलैकप्रयोजनाः कन्तुकाऽऽरामादिविहारा इव स्वसंकल्पमात्रेण जीवकर्मानुसृत्या लीलयैव सृष्टिं करोतीति न दोषः। सर्वज्ञसर्वशक्तिमदपि ब्रह्म चेतनकर्मापेक्षया जगत्सृजतीति ब्रह्मणः पक्षपातादिकथा नेति चिदचिद्विशिष्टब्रह्मण एव कारणत्वाङ्गीकारे श्रुत्युक्तसर्वधर्मोपपत्तिः संभवतीति सिद्धम्।

---

## ९ प्रयोजनवत्वाधिकरणम् (४९)-द्वैतम्

३३ ओं न प्रयोजनवत्वात्। (१६८)
३४ ओं लोकवत्तु लीला कैवल्यम्। (१६९)

**सुखोद्रेकात् यथा मत्तः कुरुते नृत्यगीतकम्।**
**तथा विष्णुर्जगत्सृष्टिं करोत्यानन्दतः स्वयम्॥ ३७६॥**

**अधिकरणार्थः** 'अथ य एष एव परमानन्दः (बृ-६-३-३३) इत्यादि श्रुत्या कृतकृत्यत्वान्न प्रयोजनाय जगत्सृष्टिं करोति विष्णुः।

'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु।
कुरुते केवलानन्दात् यथा मत्तस्य नर्तनम्॥'

इति केवललीलयैव सृजति।

---

## १२ अवैषम्यनैर्घृण्याधिकरणम्। (५१)—अद्वैतम्

३४ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति। (१६८)
३५ न कर्माविभागादिति चेन्नानादित्वात्। १६९)
३६ उपपद्यते चाप्युपलभ्यते च। (१७०)

**दुःखैकतानं क्वचिदत्र सृष्टिः सुखैकतानं द्वितयं क्वचिच्च।**
**अनादिसंसारिवृषानुसृत्या सृजत्यवत्यत्ति कृपादियुक्तः ॥ ३७७ ॥**

**अधिकरणार्थः।** स्थूणानिखनन्यायेन पूर्वोक्तजगत्कारणत्वं ब्रह्मणः द्रढीकरोत्यनेनाधिकरणेन। 'समोऽहं सर्वभूतेषु'; 'न मे द्वेष्योऽस्ति न प्रियः' इत्यादिना निष्पक्षपातिनः ब्रह्मणः स्रष्टृत्वाभ्युपगमे सृष्टौ बहुविधपक्षपातदर्शनात् न ब्रह्मणः जगत्कारणत्वं युक्तमिति प्राप्ते, ईश्वरस्य विषमत्वनिर्घृणत्वे न प्रसज्येते। अनादिजीवगतधर्माधर्मापेक्षयैव सृष्टिं करोति। अतः ईश्वरस्य न पक्षपातादिदोषः। व्रीहीयवादि सृष्टौ मेघस्य साधारणकारणत्वेऽपि व्रीहीयवादि वैषम्यानि तत्तद्बीजगतासाधारणसामर्थ्यानि यथा कारणानि भवन्ति तथैव ईश्वरोऽपीत्यर्थः। 'पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेन' (बृ ३-२-१३) इत्यादि श्रुतेः संसारस्यानादित्वावगतेः सर्वमुपपद्यते। वस्तुतस्तु अनिर्वाच्यात् सृष्टिरित्युक्तं न विस्मर्तव्यम्। सृष्टेः याथार्थ्यमभ्युपगम्य इदं समाधानमुक्तं इति ज्ञेयं। इति॥

---

## १० वैषम्यनैर्घृण्याधिकरणम्। (५०)—द्वैतम्

३५ ओं वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति (१७०)
३६ ओं न कर्माविभागादिति चेन्नानादित्वात्। (१७१)
३७ ओं उपपद्यतेचाप्युपलभ्यते च। (१७२)

जीवकर्मानुसृत्यैव सुखाद्युक्तं जगद्धरिः ।
सृजतीति श्रुतिर्वक्ति ह्यनादित्वाच्च कर्मणः ॥ ३७८ ॥
जीवस्य कर्मापेक्ष्यैव विष्णुस्सृजति चेत् प्रभुः ।
अस्वातन्त्र्यं भवेन्नैवं सृष्टिर्विष्णोरनुग्रहात् ॥ ३७९ ॥

**अधिकरणार्थः**। हरेः जगत्सृष्टिः जीवगतपुण्यापुण्यापेक्षयैवेति न विष्णोः वैषम्यनैर्घृण्यदोषः । कर्मणोऽनादित्वात् ।

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया ॥

इति प्रमाणात् विष्णोः कर्मापेक्षत्वेऽपि स्वातन्त्र्यमस्त्येव ।

'स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशिताऽपि ।
ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानां ॥

इति चतुर्वेदशिखावाक्यात् विष्णोः कारयितृत्वेऽपि स्वातन्त्र्यस्य हानिर्न । दोषश्च नेत्यवगतत्वात् ।

---

## १३ सर्वधर्मोपपत्त्यधिकरणम् । (५२)–अद्वैतम्

३७ सर्वधर्मोपपत्तेश्च । (१७१)

**सर्वशक्तिमहामायं सर्वज्ञं ब्रह्मलक्षितं ।**
**सर्वधर्मोपपत्तिश्च ब्रह्मवादे तु युज्यते ॥ ३८० ॥**

**अधिकरणार्थः**। औपनिषदचेतनब्रह्मजगत्कारणवादे सर्वज्ञत्वादि सकलधर्मोपपत्तिः सम्भवति। न तु प्रधानादिवाद इति सिद्धम् ।

---

## ११ सर्वधर्मोपपत्त्यधिकरणम् । (३१)–द्वैतम्

३८ ओं सर्वधर्मोपपत्तेश्च । (१७३)

गुणाश्श्रुता विरुद्धाश्च विष्णौ सन्त्यश्रुता अपि ।
तथा प्रतीतिरज्ञानां विष्णुस्सर्वगुणान्वितः ॥ ३८१ ॥

अधिकरणार्थः 'चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः' इति प्रमाणात् विष्णावेव सर्वगुणोपपत्तिस्सम्भवतीति सर्वमुपपन्नं ॥

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां काळि
नञ्जीपुरं रङ्गाचार्याणां कृतिषु मतत्रयसारसंग्रहे
द्वितीयाध्याये प्रथमः पादः ॥

---

## ॥ मतत्रयसारसंग्रहे
## द्वितीयाध्याये द्वितीयः पादः ॥

### १ रचनानुपपत्त्यधिकरणम् (५३)—अद्वैतं

१ रचनानुपपत्तेश्च नानुमानम् । (१७२)
२ प्रवृत्तेश्च । (१७३)
३ पयोम्बुवच्चेत्तत्रापि । (१७४)
४ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् । (१७५)
५ अन्यत्राभावाच्च न तृणादिवत् । (१७६)
६ अभ्युपगमेऽप्यर्थाभावात् । (१७७)
७ पुरुषाश्मवदिति चेत्तथापि । (१७८)
८ अङ्गित्वानुपपत्तेश्च । (१७९)
९ अन्यथानुमितौ च ज्ञशक्तिवियोगात् (१८०)
१० विप्रतिषेधाच्चासमञ्जसम् । (१८१)

निराकृतस्सांख्यमताभिमानी तर्कानुमाभ्यां यतते पुनश्च ।
जीवाश्रितस्यैव च मृत्तिकादेः घटादिरूपा विकृतिः प्रदृष्टा ॥ ३८२॥
क्षीरं यथाऽचेतनमेव वत्सविवृद्धयेऽम्भश्च परोपकृत्यै ।
निष्पन्दते सा प्रकृतिर्नरस्य तृप्त्यै शरीरं स्वयमेव चास्ते ॥ ३८३ ॥

**दृक्शक्तिहीनः पुरुषश्च पङ्गुमाश्रित्य कार्यं सकलं करोति ।**
**अश्माह्ययस्कान्त इहस्थितस्सन् आकर्षतेऽयस्स्वयमेव दृष्टम् । ३८४॥**
**इत्यादि दृष्टान्तगणैः प्रधानं प्रवर्तयत्येव नरं स्वतृप्त्यै ।**
**निरीश्वरस्यैव तथोक्तिरस्तु ब्रह्मैव सर्वत्र च वर्तते नः । ३८५ ॥**
**पयोम्बुपङ्ग्वन्धशिलादयोऽपि स्वीय प्रवृत्तौ परमाश्रयन्ते ।**
**अतश्च सांख्याभिमतं मतं तु विरोधदृष्टेरसमंजसं तत् ॥ ३८६ ॥**

**अधिकरणार्थः** । सांख्याः पुनः कानिचिद्वेदान्तवाक्यानि स्वानुकूलनीति कृत्वा स्वमतानुगुण्येनैव उपनिषद्वाक्यानि व्याख्यातुमारभन्ते । अतः तन्निरासः पुनरपि क्रियते । केवलप्रधानमेव जगत्कारणं । केवलमृदादिरेव घटादिरूपेण परिणमते इत्युक्त्वा पङ्ग्वन्धशिलादीनां प्रवृत्तिं दृष्टान्तत्वेनोदाहरन्ति । तत्र समाधिः 'योप्सु तिष्ठन् (बृ ५-७-४) एतस्य वा अक्षरस्य प्रशासने' (बृ ५-८-९) इत्याद्युपनिषद्वाक्यैः सर्ववस्तुषु परमेश्वरस्य सत्त्वादेव तेषां तादृशशक्तिः । न तु स्वयमेवेति । चेतनानधिष्ठितं प्रधानं च न कदाचित् परिणमितुं शक्तम् । कुम्भकारानधिष्ठितमृदादिवदिति, सांख्यमतप्रक्रीयायां च परस्पर विप्रतिषेधसत्वाच्च सांख्यमतमसमञ्जसम् । ननु—

"दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरितः श्रेयां व्यक्ताव्यक्तज्ञविज्ञानात ॥'

**अस्यार्थः**— आनुश्रविकः—वेदोक्तोपायः ; दृष्टवत्—ओषधादिवत् प्रत्यक्षोपाय एव । स हि वेदोक्तोपायः ; अविशुद्धिक्षयातिशययुक्तः—'न हिंस्यादि'ति शास्त्रनिषिद्धहिंसा च, वृक्षपत्रादिछेदन-क्षुद्रजन्तुनाशादिदोषश्च अविशुद्धिः; यागादि कर्मफलस्य क्षयित्वेन क्षयानन्तरं दुःखोत्पत्तिश्च क्षयशब्दार्थः । तत्रापि दुःखाधिक्यसत्त्वं अतिशयशब्दार्थः। अतश्च एतादृश दोषदुष्टः वैदिकमार्गः। तद्विपरीतः वैदिकमार्गविरुद्धः ; श्रेयान्—श्रेयःप्रदः । व्यक्ताव्यक्तज्ञविज्ञानात्—व्यक्तं—भूतादि ; अव्यक्तं प्रधानं ; ज्ञः—पुरुषः ; एषां विविच्यज्ञानात आत्यन्तिकदुःखोच्छेदरूपः ;

वैदिकमार्गं हित्वा सांख्यमतोक्त—व्यक्ताव्यक्तज्ञविज्ञानमेव संपादनीयं मोक्षाय इति तात्पर्यं । अत एव भारतेऽपि

"तातैतद्बहुशोऽभ्यस्तं जन्मजन्मान्तरेष्वपि ।
त्रयीधर्ममधर्माढ्यं न सम्यक् प्रतिभाति मे ॥"

गीतायां च—

त्रैगुण्यविषया वेदाः निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥'

'कर्मचितो लोकः क्षीयते' इति श्रुतौ च सांख्यमतानुसारेण वैदिकमार्गदूषणमेव प्रतिभाति । अतः सांख्यमतमादरणीयमिति चेन्न । 'तं षड्विंशकमित्याहुः सप्तविंशमथापरे' इति । प्रकृतिपुरुषाभ्यां व्यतिरिक्त परमेश्वरोस्तीत्यभ्युपगमात् परमपुरुष एव जगत्कारणमङ्गीकर्तव्यम् । वैदिकमार्गोक्त दूषणं च न घटते । सामान्यविशेषन्यायेन उत्सर्गापवादन्यायेन च 'पदे जुहोति' ; 'आहवनीये जुहोति'; 'न हिंस्यात् सर्वा भूतानि'; 'अग्निषोमीयं पशुमालभेत'; इत्यादिषु दोषाभावस्य प्रदर्शितत्वात् ।

'न हि भिक्षुकास्सन्तीति स्थाल्यो नाधिश्रीयन्ते; न हि मृगास्सन्तीति यवा नोप्यन्ते' इति न्यायात 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वपदास्पदम्॥' इत्युक्तानन्दसमुद्रप्राप्त्यर्थकर्मणि किञ्चिदशुद्ध्यादिकं संजातमपि न दुःखाय भवेत । 'न साहसमनारुह्य नरो भद्राणि पश्यति, इति न्यायत् । 'कूपखानवत् एतद्भविष्यति; तद्यथा; कूपखानकः कूपं खनन् यद्यपि मृदा पांशुभिश्च आवकीर्णो भवति सोप्सु संजातासु तत एव तं गुणमासादयति येन स च दोषो निर्हण्यते; भूयसा चाभ्युदयेन योगो भवति" इति महाभाष्यन्यायाच्च न दोषः ।

"असारमल्पसारं च सारं सारतरं त्यजेत् ।
भजेत् सारतमं शास्त्रे रत्नाकर इवामृतं ॥'

इति शास्त्रात् मोक्षार्थिनः यागादिकर्मफलेषु विरक्तिमात्रार्थतात्पर्यार्थकत्वात् गीताश्लोकस्येति ॥

---

## रचनानुपपत्त्यधिकरणम्—विशिष्टाद्वैतम्

(१) रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ।
(२) पयोम्बुवच्चेत्तत्रापि ।
(३) व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ।
(४) अन्यत्राभावाच्च न तृणादिवत् ।
(५) अभ्युपगमेऽप्यर्थाभावात् ।
(६) पुरुषाश्मवदिति चेत्तदुक्तम् ।
(७) अङ्गित्वानुपपत्तेश्च ।
(८) अन्यथानुमितौ च ज्ञशक्तिवियोगात् ।
(९) विप्रतिषेधाच्चासमञ्जसम् ।

केषांचिन्मन्दबुद्धीनां युक्त्याभासमजानताम् ।
स्वप्रोक्तार्थं दृढीकर्तुं परपक्षो निरस्यते ॥२८७॥
विचित्रसन्निवेशादिकार्यं तत्समहेतुकम् ।
प्रधानं जगतो हेतु मैवं ब्रह्मविशेषितम् ॥
तृणादेः क्षीरभावश्च वृषजग्धे न दृश्यते ।
सर्वत्र तिष्ठति ब्रह्म 'योऽप्सु तिष्ठन्नि'ति श्रुतेः ॥
प्रधानवादे सर्वत्र परस्परविरुद्धता ।
दृष्टा विप्रतिषेधाच्च सांख्यवादो निरस्यते ॥ २९० ॥

अधिकरणार्थः ।'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयं' 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इति श्रुतिस्मृतिभ्यामनुमानस्य प्रमाणतमत्वेन अङ्गीकृत्य आनुमानिकं प्रधानं जगत्कारणं भवतु ।

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥'

'भेदानां परिणामात् समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥'
'कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतस्समुदायाच्च ।
परिणामत सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥'
'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पंग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्गः॥' (सांख्यकारिका)

इति सांख्यग्रन्थेन यथा सलिलं एकमपि सहकारिभेदात् गुणवैषम्याच्च नारिकेलजम्बीरादि सहकारिभेदात् मधुरतिक्तरसादिभावं प्रतिपद्यते, पंग्वन्धश्च परस्पराश्रयात् प्रवृत्यादिवत्, प्रधानपुरुषयोस्संसर्गात् लोकप्रवृत्तिसंभवात्, इदं प्रधानमपि नानारूपेण परिणमत इति सांख्योक्तं प्रधानमेव जगत्कारणमिति प्राप्ते, 'नैषातर्केण मतिरापनेया' तर्काप्रतिष्ठानात्' इति श्रुतिस्मृतिभ्यां केवल अनुमानस्य दूषितत्वात्, वृषभमहिषादिभुक्ततृणादे' क्षीराभावदर्शनात्' योऽप्सु तिष्ठन्' (बृ ५-७-४) यो विज्ञाने तिष्ठन (बृ ५-८-९) 'सच्च त्यच्चाभवत्' (तै-आ७-७) इत्यादिना भगवत्सृष्टपदार्थेषु भगवतः स्थित्यैव पदार्थव्यवहार-दर्शनाच्च चेतनानधिष्ठितस्य मृदादेः घटाद्यभावदर्शनाच्च न प्रधानमेव जगत्कारणं। अपि तु ब्रह्माधिष्ठित प्रधानं जगत्कारणं। एतत्प्रक्रियायां पूर्वोत्तरयोः परस्परविरोधदर्शनाच्चासमञ्जस एव प्रधानवादः।

अत्र सांख्योक्ततत्वानि ब्रह्मणोवयवभूतानीति—

'चेतश्चकति चेतनाऽसिरमतिः तत्संवृतिर्मालिका
भूतानि स्वगुणैरहंकृतयुगं शंखेनशार्ङ्गायते।
बाणाः खानि दशाऽपि कौस्तुभमणिर्जीवः प्रधानं पुनः
श्रीवत्सः कमलापते तव गदामाहुर्महान्तं बुधाः॥'

इति पूर्वाचार्यैरुक्तानि।

अस्यार्थः—चेतः—मनः; चकति—चक्रायुधो भवति; चेतना—ज्ञानं; असिः— खड्गो भवति; अमतिः—अज्ञानं-कर्म; तत्संवृतिः—असेः छादकं; भूतानि स्वगुणैर्मालिका—पञ्चभूतानि स्वगुणैस्सह वैजयन्तीरूपेण भवन्ति; अहंकृतियुगं भूतादिः इन्द्रियादिश्च शंखेनशार्ङ्गायते सात्विकाहंकार

शार्ङ्गं भवति, तामसाहंकारः शंखो भवति; बाणाः खानिदशाऽपि दशेन्द्रियाणि शराभवन्ति; कौस्तुममणि जीवः—पुरुषतत्वं कौस्तुभरत्नं भवति; प्रधानं पुनः—मूलप्रकृतिः; श्रीवत्सः—श्रीवत्सो भवति (...); महान्तं-महत्तत्वं गदाभवतीत्यर्थः।

अनेन चेतनाचेतनशरीरं ब्रह्मापरनामधेयं श्रीमन्नारायणं ध्यायेत् इत्यर्थः इति।

---

१ रचनाधिकरणम्। (५२)–द्वैतम्

१ ओं रचनानुपपत्तेश्च नानुमानं (१७४)
२ ओं प्रवृत्तेश्च। (१७५)
३ ओं पयोम्बुवच्चेत्तत्रापि। (१७६)
४ ओं व्यतिरेकानवस्थितेश्चानपेक्षत्वात्। (१७७)

इतरेषां च सूत्रेणानुपलब्धेश्च हेतुतः।
दूषितानि मतान्यत्र निरस्यन्ते विशेषतः॥ ३९१॥
स्वयं प्रवृत्तिर्न विचेतनस्य दृष्टाऽक्षरस्यैव च शासनात् सा।
अतः प्रधानं हरिणानुविष्टं जगन्निदानं भवतीति युक्तम्॥

अधिकरणार्थः। प्रधानं जगत्कर्तृ इति सांख्योक्ताचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेः चेतनस्यैव प्रवृत्तिदर्शनाच्च अक्षरप्रशासनेनैव सर्वप्रवृत्तिदर्शनात्, 'एतेन हवाव पयो मण्डं भवति' इति श्रुत्या पयसः दध्यादिभावेऽपि विष्णु-शक्त्यैवेति विष्णुप्रवेशाभावे कस्यचिदपि वस्तुनः स्वकार्ये शक्त्यभावोक्तेश्च न प्रधानं जगत्कारणम्।

---

२ अन्यत्राभावाधिकरणम्। (५३) द्वैतम्

५ ओं अन्यत्राभावाच्च न तृणादिवत्। (१७८)

मेघानुषिक्ता पृथिवी तृणाद्युत्पादिका यथा।
ईश्वरानुगृहीतं तत् प्रधानं केवलं न हि॥ ३९२॥

विष्णुर्हि सर्वत्र च तिष्ठतीति स्वजीवमायां च सिसृक्षतीं तां ।
इत्यदिना विष्ण्वनुशासनाच्च जगन्निदानं स हि विष्णुरेव ॥

अधिकरणार्थः 'ब्रह्मण्येवेदमाविरासीत्, ब्रह्मणि लयमभ्युपैति 'स एव भूयो निजवीर्यचोदितां, स्वजीवमायां प्रकृतिं सिसृक्षतीं' इति श्रुतिस्मृतिभ्यां विष्णुः जीवमायां प्रकृतिरूपां अनुप्रविश्य जगत्सृजतीति नसेश्वरसांख्य-वादोऽपि युक्तः ।

---

३ अभ्युपगमाधिकरणम् । (५४)—द्वैतम्

६ ओं अभ्युपगमेऽप्यर्थाभावात् । (१७९)

लोकायतिकपक्षेऽत्र धर्माधर्म कथैव न ।
अतः स्वव्याहतेरेव न द्रष्टव्यं च तन्मतम् ॥ २९५ ॥

---

४ पुरुषाश्माधिकरणम् । (५५)—द्वैतम्

७ ओं पुरुषाश्मवदिति चेत्तथाऽपि । (१८०)
८ ओं अंगित्वानुपपत्तेः । (१८१)

अश्मादि चादाय विचेतनाङ्ग जीवस्य सङ्गाच्चलतीति दृष्टेः ।
तथैव जीवेनसह प्रधानं मैवं हरिस्तत्र च तिष्ठतीति ॥

अधिकरणार्थः पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति । यथा चेतनसंबन्धात् अचेतनमेवशरीरमश्मादिकमादाय गच्छति, एवं अचेतनापि प्रकृतिः पुरुषसंबन्धात् प्रवर्तत इति चेन्न। विष्णोरस्थित्या विष्णुप्रेरणेनैव प्रवर्तत इति त्वदुक्तार्थे दृष्टान्ताभावादित्यर्थः ॥

---

५ अन्यथानुमित्यधिकरणम् । (५६)—द्वैतम्

९ ओं अन्यथानुमितौ च ज्ञशक्तिवियोगात् । (१८२)
१० ओं विप्रतिषेधाच्चासमंजसम् । (१८३)

प्रकृतेः पुरुषस्यैवं संबन्धं कुरुते हरिः ।
सर्वश्रुतिविरुद्धत्वात् अनीश्वरमतं न तु ॥ ३९७ ॥

**अधिकरणार्थः** प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति । शरीरसंबन्धात् पुरुषः प्रवर्तत इति अङ्गीकारेऽपि तस्य पुरुषस्य असामर्थ्यात् शरीसंबन्ध एव अयुक्तः । सकलश्रुतिस्मृविरुद्धत्वात् अनीश्वरमतमसमञ्जसम् ।

---

महद्दीर्घाधिकरणम् । (५७)—अद्वैतम्

११ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । (१८२)

यत्कारणद्रव्यगुणास्समानजातीयमन्यं गुणमारभन्ते ।
शुक्लादिसम्भूतपटादिकैश्च शुक्लप्रतीतिः परिदृश्यतेऽत्र ॥ ३९८ ॥
जगन्निदानं परमेश्वरश्चेत् चैतन्यसङ्गोपि घटादिषु स्यात् ।
विलक्षणोत्पत्तिनिदर्शनेन वैशेषिकोऽनेन निरस्त एव ॥ ३९९ ॥

**अधिकरणार्थः** शुक्लतन्तूत्पन्नपटे शुक्लदर्शनवत्, परमेश्वरसृष्टजगति परमेश्वरनिष्ठचैतन्यानुवृत्तिः प्रसजेदिति पूर्वपक्षे प्राप्ते' न विलक्षणत्वादस्य तथात्वं' इति गोमयादेः वृश्चिकादिदर्शनेन कारणगुणस्य चैतन्यस्य कार्ये जगति अनुवृत्तिनियमो नास्तीत्युक्तत्वात् जगति चैतन्यानुवृत्तिर्न संभवति ।

---

२ परमाणुजगत्कारणत्वाधिकरणम् । (५५)—अद्वैतं

१२ उभयथापि न कर्मातस्तदभावः । (१८३)
१३ समवायाभ्युपगमाच्च साम्यादनवस्थितेः (१८४)
१४ नित्यमेव च भावात् । (१८५)
१५ रूपादिमत्वाच्च विपर्ययोर्दर्शनात् । (१८६)
१६ उभयथा च दोषात् । (१८७)
१७ अपरिग्रहाच्चात्यन्तमनपेक्षा । (१८८)

पराणुवादे बहवो हि दोषाः शास्त्रेषु दृष्टास्तत एव तन्न ।
क्षित्यम्बुवाय्वग्नि पराणवोऽपि सापेक्षमेवात्र निदान भूताः ॥

**अधिकरणार्थः।** पटादिद्रव्याणि सावयवानि सन्ति; स्वानुगतैः संयोगसचिवैः तन्त्वादिभिः आरभ्यमाणानि दृश्यन्त इति जगतः परमाणुकारणं वदन्ति। तत्र सुखदुःखव्यवस्थाऽपेक्षया जीवकर्मनिमित्तमपेक्ष्यैव परमाणुः जगत् सृजतीति त्वयैव दोष उक्तः। समवाय इति कस्यचित् पदार्थस्य अधिकस्याभ्युपगमाच्च; असत्कार्यवादोक्तेश्च अनेकदोषदुष्टत्वेन परमाणुकारणवादो नाभ्युपगन्तव्यः। विस्तरस्तु भाष्यादौ द्रष्टव्यः।

---

## २ महद्दीर्घाधिकरणम्। (४७)—विशिष्टाद्वैतम्

१० **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां** (१८४)
११ उभयथापि न कर्मातस्तदभावः।
१२ सावयवाभ्युगमाच्च साम्यादनवस्थितेः। (१८६)
१३ नित्यमेव च भावात्।
१४ रूपादिमत्त्वाच्च विपर्ययो दर्शनात्। (१८८)
१५ उभयथा च दोषात्। (१८९)
१६ अपरिग्रहाच्चात्यन्तमनपेक्षा। (१९०)

जगन्निदानं परमाणुरेव निमित्त हेतुःपरमेश्वरोसौ।
इति प्रवादस्त्र्यणुकादिवच्च सर्वा तदुक्तिर्नपरिग्रहार्हा॥
परस्य च स्वस्य च निर्वहादौ जातेः स्वभावः परिकल्प्यतेऽत्र
त्वया च कल्प्ये सामवायरूपे वस्त्वन्तरे मानमदृष्टमेव॥ ४०२॥

**अधिकरणार्थः।** परमाणुकारणवादी अनेनाधिकरणेन निरस्यते। 'आत्मन आकाशस्संभूतः' इति श्रुत्या आकाशस्यानित्यत्वेन नित्यत्वाश्रयणरूपदोषात्; समवायाख्य पदार्थान्तर कल्पनारोपदोषात् परमाणोः सावयवत्वनिरवयवत्वरूपविकल्पे सर्षपमहीधराद्यसिद्धरूपदोषात् 'पारिमाण्डिल्यभिन्नानां कारणत्वमुदाहृतम्' इति परमाणुनिष्ठाणुपरिमाणस्य परमाण्वारब्धकार्यादौ अनुवृत्तिरूपदोषपरिहाराय परमाणुनिष्ठाणुपरिमाणं केवलं परमाण्वारब्धकार्याणां

कारणं न भवति । कारणस्वभावस्तु स्वाश्रयारब्धद्रव्यपरिमाणारंभको भवेत् । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् । महदारब्धस्य महत्तरत्ववत् इति मत्वा अणुजन्यस्य अणुतरत्वप्रसङ्गात् इत्युक्तं । तदर्थं 'पारिमाण्डिल्यभिन्नानां कारणत्वमुदाहृतं' ; पारिमाण्डिल्यं—अणुपरिमाणं भिन्नानां—अणुपरिमाणभिन्नानां -कारणत्वं । अणुपरिमाणं तु न कस्यापि कारणमित्युक्तम् । तत्र किञ्चियामकमिति वक्तुमशक्यत्वमित्यादिरूपदोषाच्च ॥

---

६ वैशेषिकाधिकरणं (५७)—द्वैतम्

११ ओं महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । (१८४)
१२ ओं उपयथापि न कर्मातस्तदभावः । (१८५)
१३ ओं समवायाभ्युपगमाच्च साम्यादनवस्थितेः । (१८६)
१४ ओं नित्यमेव च भावात् । (१८७)
१५ ओं रूपादिमत्त्वाच्च विपर्ययोदर्शनात् । (१८८)
१६ ओं उपयथा च दोषात् । (१८९)
१७ ओं अपरिग्रहाच्चात्यन्तमनपेक्षा । (१९०)

**यथा दीर्घाच्च महतः कार्यमुत्पद्यते तथा ।**
**ह्रस्वाच्च पारिमाण्डिल्यात् कार्योत्पत्तिः कुतो न हि ॥ ४०३ ॥**
**सामवायरूपसंबन्धाङ्गीकृतावनवस्थितेः ।**
**श्रुतिस्मृतिविरोधाच्च तर्कशास्त्रं निरर्थकम् ॥ ४०४ ॥**
परमाण्वारम्भवादमपाकरोति ।

"अणुदीर्घं महद्ध्रस्वं इति तद्भेद ईरितः" इति परमाणुभेदाङ्गीकारेण यथा महत्वात् दीर्घत्वाच्च कार्यमुपत्पद्यते, एवं ह्रस्वात् पारिमाण्डिल्याच्च कार्यमुत्पद्येत । अन्यथा महत्वदीर्घत्वयोरपि कार्यारंभकत्वं न भवेत् । कार्यकारणादीनां समवायसंबन्धरूप पदार्थस्य पृथक्त्वाङ्गीकारे अनवस्थिति-दोषप्रसङ्गाच्च । परमाणूनां रूपादिमत्त्वे घटपटादीनामिव अनित्यत्वं च स्यात् । परमाणुनित्यत्वे सर्वनित्यत्वप्रसङ्गात् । 'आन्वीक्षिकीं तर्कविद्यां

अनुरक्तो निरर्थकं' । इति भारतात्, श्रुतिस्मृत्यपरिगृहीतत्वाच्च परमाणुकारणवादस्य, तार्किको निरस्त इति वेदितव्यः ।

---

### ४ समुदायाधिकरणम् । (५६)—अद्वैतम्

१८ समुदाय उभयहेतुकेपि तदप्राप्तिः । (१८९)
१९ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् (१९०)
२० उत्तरोत्पादे च पूर्वनिरोधात् । (१९१)
२१ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा । (१९२)
२२ प्रतिसङ्ख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् । (१९३)
२३ उभयथा च दोषात् । (१९४)
२४ आकाशे चाविशेषात् । (१९५)
२५ अनुस्मृतेश्च । (१९६)
२६ नासतोऽदृश्यत्वात् । (१९७)
२७ उदासीनानामपि चैवं सिद्धिः । (१९८)

**सर्वं च वस्तु क्षणिकं स्थिरं नो * परैः कृतं कर्म परस्मरेन्न ।**
**अभावतो जन्म च वस्तुनश्चेत् क्षीराद्दधीत्याद्यनपेक्षमेव ॥ ४०५ ॥**
**'संभूत आकाश' इति श्रुतेश्च वस्तुत्वसिद्ध्या निरुपाख्यता न ।**
**इत्यादिदोषात् समुदायसिद्धिः नास्तीति भाष्ये विशदीकृतश्च ॥४०६॥**

* नो=नेत्यर्थः

**अधिकरणार्थः** सर्ववैनाशिकराद्धान्तः अनेनाधिकरणेन निरस्यते । अत्र सर्वास्तित्ववादिनः केचित्, विज्ञानास्तित्ववादिनः केचित्, सर्वशून्यत्ववादिनः केचित् । तत्र पृथिव्यप्तेजोवायूनां संहतिरेव जगद्रूपेण परिणमत इत्युक्तिः न युक्ता । समुदायस्याचेतनत्वादेव । स्थिरस्य चेतनस्य कस्यचिदपि तन्मते अभावात् पूर्वक्षणे विनष्टमुत्तरक्षणजातः कः स्मृत्वा कः कुर्यात् इत्यादिदोषापत्त्या आकाशस्यात्मन उत्पत्त्युक्तेः तन्मते निरुपाख्यत्वाश्रयणाच्च सर्वस्य सर्वत्र सर्वदा उत्पत्तिप्रसङ्गाच्च वैनाशिकसमयोऽनुपपन्नः ।

---

## ३ समुदायाधिकरणम् (४८)—विशिष्टाद्वैतम्

१७ **समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।** (१९१)
१८ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् । (१९२)
१९ उत्तरोत्पादे च पूर्वनिरोधात् । (१९३)
२० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा । (१९४)
२१ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् । (१९५)
२२ उभयथा च दोषात् । (१९६)
२३ आकाशे चाविशेषात् । (१९७)
२४ अनुस्मृतेश्च । (१९८)
२५ नासतोऽदृष्टत्वात् । (१९९)
२६ उदासीनानामपि चैवं सिद्धिः । (२००)

**भू-वायु-वार्यग्नि-समूह एव प्रपञ्चरूपेण चकास्ति लोके ।**
**सर्वं च वस्तु क्षणिकं हि दृष्टं नभश्च नास्तीति वदन्ति केचित् ॥४०७**
**स्थिरस्य भोक्तुः कथमप्यभावे पूर्वोत्तरादिः न च सिद्ध्यतीति ।**
**ते वेदबाह्या इति तन्मतं च नो * युक्तियुक्तं तत एव दृष्टं ॥ ४०८ ॥**

* नो इत्यव्ययं नञर्थकं

**अधिकरणार्थः** सौगतमतं निरस्यते । पार्थिवाप्यतैजसवायवीयपरमाणुसंघातः लोकहेतुर्भवतीति केचित् । बाह्यार्थः सर्वः मिथ्या; विज्ञानेन अनुमेयमिति केचित् । अर्थशून्यं विज्ञानमेव परमार्थसत् । एते सर्वेऽपि क्षणिकः पदार्थ इति मन्यन्ते । आकाशश्च निरुपाख्य इति दीपज्वालानाशदृष्टान्तेन च क्षणिक इत्यभ्युपगच्छन्ति । तदसत् । क्षणिकत्वे कश्च विज्ञाता; को वा कमर्थं कदा वा कुर्यात् । स्रष्टा हि नष्टः; स्पृष्टश्च नष्टः । निमित्तमन्तरा सतः कार्यस्य कथं वा नाशः । ज्वालादृष्टान्तेऽपि भावान्तराभाववादिपक्षे, ज्वालायाः नष्टत्वेऽपि धूममेघादिरूपभावान्तरापत्तिरेव लोकदृष्टप्रक्रियया कल्प्यते । सर्वदा सर्वत्र वस्तुनः स्थितिर्वा अभावो वा तन्मते भवेदिति बहुविध दोषदुष्टत्वात् तन्मतमनादरणीयम् । अपि च वाय्वादिपरमाणुप्रतीतिविनाशवत्

आकाशस्यापि 'अत्र श्येनः पतति' इति प्रयोगात् प्रतीतिविनाशाभ्युपगमं हित्वा किमर्थमाकाशस्य निरुपाख्यता उक्ता । वस्तुतः 'आत्मन आकाशस्संभूत' इत्याकाशस्य वस्तुत्वमेव वैदिकमतमिति सौगतमतं वेदबाह्यमेव ।

---

७ समुदायाधिकरण । (५८)—द्वैतम्

१८ ओं समुदाय उभयहेतुकेपि तदप्राप्तिः । (१९१)
१९ ओं इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् । (१९२)
२० ओं उत्तरोत्पादे च पूर्वनिरोधात् । (१९३)
२१ ओं असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा । (१९४)
२२ ओं प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् । (१९५)
२३ ओं उभयथा च दोषात् । (१९६)
२४ ओं आकाशे चाविशेषात् । (१९७)
२५ ओं अनुस्मृतेश्च । (१९८)

**यथा ज्वाला क्षणे नष्टा तथा सर्वं क्षणे हतं ।**
**तथा प्रतीतिर्गगने भवेदिति तदुत्तरम् । ४०९ ॥**
**भूरादिसमुदायस्य लोकहेतुर्न युज्यते ।**
**कार्योत्पत्तौ हेतुनाशात् कार्यान्तरजनिः कथम् ॥ ४१० ॥**
**कार्यकारणयोर्नित्यं भावोऽभावोपि वा भवेत् ।**
**भावान्तरं कल्प्यमेव नष्टदीपे च युक्तितः ॥ ४११ ॥**

**अधिकरणार्थः** । परमाणुपुञ्जवादिमतं निराकारोति । परमाणुपुञ्ज समुदायस्य लोकहेतुत्वं न युज्यते । कार्योत्पत्तिसमये कारणस्य विनाशात् न विशेषकार्यसिद्धिः । कारणे विनष्टे कार्यमुत्पद्यत इत्यभ्युपगमे 'कार्यं' इति प्रतिज्ञाहानिः । कारणमस्तीत्यभ्युपगमे कार्यस्य विनाशकारणाभावात् सर्वकार्याणां यौगपद्य प्रसज्येत । दीपादिषु ज्वालानाशस्य दर्शनात् अन्यत्रापि क्षणिकत्वमनुमीयते चेत्, आकाशे च विशेषदर्शनाभावात् तादृशक्षणिकत्वमनुमीयेत । तदेवेदमिति प्रत्यभिज्ञानाच्च वस्तुनः स्थिरत्वस्यैव सिद्धेः । न तु क्षणिकत्वस्य सिद्धिरिति ॥

---

८ शून्याधिकरणम्। (५९) द्वैतम्

२६ **नासतोदृष्टत्वात्**। (१९९)
२७ उदासीनानामपि चैवं सिद्धिः। (२००)
२८ नाभाव उपलब्धेः। (२०१)
२९ वैधर्म्याच्च स्वप्नादिवत्। ( ०२)

**असतः कारणत्वे च खपुष्पादिजनिर्भवेत्।**
**स्वप्नादिदर्शनं चापि स्थिरस्यैव भवेदिति ॥ ४१२ ॥**

**अधिकरणार्थः**। शून्यावादमपाकरोति। लोके अदृष्टत्वात् असतः कारणत्वं न युज्यते। असतः कारणत्वाभ्युपगमे गगनकुसुमादीनामप्युत्पत्तिः स्यात्। जगत् शून्यमिति न वाच्यं। सर्वैरपि दृष्टत्वात्। स्वाप्नज्ञानं च **'अयं मया दृष्टस्स्वप्नः'** इत्याद्यनुभवदर्शनात् आत्मनः स्थिरत्वमेव सिद्ध्यति।

---

५ अभावाधिकरणम्। (५७) अद्वैतम्

२८ **नाभाव उपलब्धेः**। (१९९)
२९ वैधर्म्याच्च न स्वप्नादिवत्। (२००)
३० न भावोऽनुपलब्धेः। (२०१)
३१ क्षणिकत्वाच्च। (२०२)
३२ सर्वथानुपपत्तेश्च। (२०३)

**चन्द्रेऽद्वितीयेऽपि यथा द्वितीयप्रतीतिवत् भ्रान्तिगता हि भेदाः।**
**नीलं च तद्धीश्च सहोपलम्भात् ज्ञानादृते नान्यदिति ब्रवीति ॥४१३ ॥**
**ज्ञानार्थसाहित्यमपीह भेदप्रकाशकं ज्ञानमथास्ति बाह्यं।**
**घटादिविज्ञानपटादिमत्योः ज्ञानैक्यसत्त्वेऽपि पटादिभेदात् ॥ ४१४ ॥**
**स्वाप्नं स्थिरस्यात्मन एव दृष्टं ज्ञानं मतेऽतः क्षणिकं प्रदुष्टं।**
**सर्वप्रकारेण च सौगतानामनादरार्हं मतमत्र बोध्यम् ॥ ४१५ ॥**

**अधिकरणार्थः** विज्ञानवादिबौद्धमतं निरस्यते। कैश्चित् दुर्युक्त्याभासैः स्तम्भकुड्यघटपटादीनां ज्ञानमात्रमेव प्रकाशते। न तु बाह्यार्थमिति—

'सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैः दृश्येतेन्दाविवाद्वये॥'

इत्यादिना बाह्यार्थानाश्रयस्वाप्नज्ञानदृष्टान्तेन च बाह्यार्थं विनैव सर्वप्रतीतिः संभवतीति विज्ञानमात्रवादी मन्यते। सर्वानुभवविरोधात् सर्वशास्त्रविरोधाच्च सर्वैः प्रमाणैः बाह्यार्थस्योपलब्धेश्च साहित्यस्य च बाह्यपदार्थास्तित्वस्यैवोपपदकत्वाच्च, 'स्वप्नोऽयं मया दृष्टः' इति सुषुप्तप्रबुद्धस्य स्थिरस्यैवात्मनः वचनाच्च तन्मतं सर्वथा अनादर्तव्यम्।

---

४ उपलब्ध्यधिकरणं। (४९)—**विशिष्टाद्वैतं**

**१७ नाभाव उपलब्धेः।** (२०१)
२८ वैधर्म्याच्च न स्वप्नादिवत्। (२०२)
२९ न भावोऽनुपलब्धेः। (२०३)

**विज्ञानमात्रं भवतीह तत्त्वं नैवेहबाह्यार्थ इति ब्रुवन्ति।**
**उत्पद्यते वासनया च पूर्वज्ञानं परस्येति मतं न युक्तं॥ ४१६॥**
**ज्ञानं निरालम्बनमेव दृष्टं यथा सुषुप्ताविति तन्नयुक्तं।**
**स्वप्ने मया दृष्टमिति स्थिरस्य विविच्य सूक्तेः क्षणिके तथा न॥**
**साहित्यहेतुश्च सहोपलब्धेः घटं च जानाम्यहमादि दृष्टेः।**
**सकर्तृकर्मार्थक एव धातुः ज्ञानं पदार्थं च सहब्रवीति॥ ४१८॥**

**अधिकरणार्थः** बाह्यार्थवैचित्र्यं नास्ति; बाह्यार्थवत् ज्ञानवैचित्र्यमेव प्रकाशते। तादृशज्ञानं च क्षणिकं; नष्टेऽपि ज्ञाने वासनावशात् प्रपञ्चभ्रमः वर्तत इति स्वाप्नज्ञानं च दृष्टान्तीकृत्योक्तं। तन्नसंभवति। बाह्यार्थानुभवविरोधात्। स्थिरस्यात्मनः सत्त्वादेव वासनोपपादनसंभवाच्च; अर्थशून्यस्य

ज्ञानस्य क्वचिदप्यनुपलब्धेः; घटमहं जानामीति सकर्मकर्तृकस्य ज्ञानस्य प्रतीतेश्च; स्वप्नज्ञानादिके च नार्थशून्यत्वमित्युक्तत्वाच्च तन्मतमनादरणीयं । इति॥

५ सर्वथानुपपत्त्यधिकरणम् । (५०)—विशिष्टाद्वैतम्

३० सर्वथानुपपत्तेश्च । (२०४)

**शून्यं तत्वं जगद्धीस्तु रज्जौ सर्पभ्रमो यथा ।**
**अधिष्ठानापारमार्थ्ये कथं भ्रान्तिरुदेति चेत् ॥ ४१९ ॥**
**दोषाद्यपारमार्थ्येऽपि भ्रमोऽद्वैते यथा तथा ।**
**सर्वथाऽनुपपत्तेस्तन्मतं व्यासो निराकरोत् ॥ ४२० ॥**

अधिकरणार्थः शून्यवादिनिरासोऽनेन क्रियते । शून्यमेव तत्वं, अभावापत्तिरेव मोक्ष इति बुद्धस्य मुख्याभिप्रायः । तर्हि कथं लोकप्रत्यक्षं उपपद्यत इति चेत् यथा रज्जोः सर्पस्य च पारमार्थ्याभावेऽपि रज्जौ सर्पभ्रमो भवति तद्वत् शून्येऽपि लोकभ्रम उपपद्यत इति तन्मतं । एतच्च 'सर्वथानुपपत्तेश्च' इति सूत्रेण विस्तरेण भाष्ये दूषितत्वात् नेह तन्यते ।

९ अनुपलब्ध्यधिकरणम् । (६०)—द्वैतम्

३० ओं न भावोऽनुपलब्धेः । (२०३)
३१ ओं क्षणिकत्वाच्च । (२०४)
३२ ओं सर्वथानुपपत्तेश्च । (२०५)

**जगद्विज्ञानमात्रं न बाह्यार्थस्थिरता न च ।**
**क्षणिकं न ज्ञानमात्रं सर्वथा दूषितं मतं ॥ ४२१ ॥**

अधिकरणार्थः विज्ञानवादमपाकरोति । ज्ञानमात्रं जगत्, तच्च क्षणिकं, बाह्यार्थश्च न । एवमपि तदुक्तिः श्रुतिस्मृतिन्यायविरुद्धत्वान्नाङ्गीकरणीया । इति

६ एकस्मिन्नसंभवाधिकरणम् । (५८)—अद्वैतम्

३३ नैकस्मिन्नसंभवात् । (२०४)

३४ एवं चात्माऽकार्त्स्न्यम् । (२०५)
३५ न च पर्यायादप्यविरोधो विकारादिभ्यः । (२०६)
३६ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः । (२०७)

**यस्सप्तभङ्गीनयरीतिमाह ह्यजीवजीवौ च पदार्थभेदौ ।**
**पञ्चास्तिकाया इति तत्प्रभेदात् तदुक्तयुक्त्यैव निरस्त एव ॥ ४२२ ॥**

**अधिकरणार्थः** दिगम्बरमतं निरस्यते । तन्मते जीवाजीवाविति पदार्थद्वयमेव । तत्प्रभेदाः पञ्चास्तिकाया इत्युक्त्वा सर्वत्र सप्तभङ्गीनयमाचक्षते । तन्नयुक्तमित्याह । एककाले कस्मिंश्चित्पदार्थे शीतोष्णवत् सत्वासत्त्वादिवत् विरुद्धधर्मावेशः न संभवतीति ।

---

## एकस्मिन्नसंभवाधिकरणम् । (५१) विशिष्टाद्वैतम्

३१ नैकस्मिन्नसंभवात् । (२०५)
३२ एवञ्चात्माकार्त्स्न्यं । (२०६)
३३ न च पर्यायादप्यविरोधो विकारादिभ्यः । (२०७)
३४ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः । (२०८)

**जीवाजीवात्मकं लोकं सप्तभङ्गीनयेन तत् ।**
**ब्रुवन्ति तन्मतं दुष्टं विरुद्धाऽसंभवादिति ॥ ४२३ ॥**

**अधिकरणार्थः** एतत् जगत् जीवाजीवात्मकं निरीश्वरम् । जीवानां मोक्षोपायश्च जीवाजीवाऽस्रवबन्धनिर्जरसंवरमोक्षा इति च सर्वत्र स्यादस्तीत्यादिना सप्तभङ्गीनयमूचिरे । तन्नयुक्तं । एकस्मिन् वस्तुनि छायातपवत् अस्तित्वनास्तित्वादेः युगपदसंभवादित्यादिना भाष्ये सम्यक् दूषितमिति विरम्यते ।

---

## १० नैकस्मिन्नधिकरणम् । (६१)-द्वैतम्

३३ ओं नैकस्मिन्नसंभवात् । (२०६)
३४ ओं एवं चात्माकार्त्स्न्यम् । (२०७)
३५ ओं न चपर्यायादप्यविरोधोविकारादिभ्यः । (२०८)

३६ ओं अन्यावस्थितेश्चोभयनित्यत्वादविशेषात् । (२०९)

**सप्तभङ्गीनयोप्यत्र कस्मिन्नपि न युज्यते ।**
**प्रत्यक्षेण विरुद्धत्वात् जीवो देहमितो न च ॥ ४२४ ॥**

**अधिकरणार्थः** एकस्मिन् वस्तुनि सत्त्वस्यासत्त्वस्य सदसत्त्वस्य च असंभवात्, लोकदृष्टेः शरीरपरिमितः जीव इत्यङ्गीकारे अण्वादिपिपीलिकादि शरीरस्थस्य जीवस्य गजहयादिशरीरे अकार्त्स्न्यं स्यात् । तत्तच्छरीरस्थस्य जीवस्य तत्तत्परिमाणत्वमित्यङ्गीकारे विकारित्वानित्यत्वादिदोषप्रसक्तेः । परिमाणाभावे स्वरूपाभावप्राप्तेश्च स्याद्वादिमतं दुष्टमिति ।

---

## ७ पत्युरसामञ्जस्याधिकरणम् । (५९)–अद्वैतम्

३७ **पत्युरसामञ्जस्यात्** । (२०८)
३८ सम्बन्धानुपपत्तेश्च । (२०९)
३९ अधिष्ठानानुपपत्तेश्च । (२१०)
४० करणवच्चेन्न भोगादिभ्यः । (२११)
४१ अन्तवत्त्वमसर्वज्ञता वा (२१२)

**माहेश्वराणां मतमत्र दुष्टमाचारवैचित्र्यविरुद्धतादेः ।**
**श्रुतिप्रमाणात् परमेश्वरस्य जगन्निदानाश्रयणे न दोषः ॥ ४२५ ॥**

**अधिकरणार्थः** पशुपतिरीश्वरः निमित्तकारणं । कार्यकारण-योगविधिदुःखान्ताः पञ्चपदार्थाः पशुपाशविमोक्षणाय पशुपतिना उपदिष्टा इति वर्णयन्ति । केचित् वैशेषिकादयोऽपि स्वप्रक्रियानुसारेण निमित्तकारणं ईश्वर इति वर्णयन्ति । अत्रोत्तरमाह सूत्रकारः 'पत्युरसामञ्जस्यात्' इति । पत्युः ईश्वरस्य, जगत्कारणत्वाभ्युपगमे अस्मदादिवत् रागद्वेषादिदोषप्रसक्तेरनीश्वरत्वं प्रसज्येत । जीवकर्माऽपेक्षया विषमसृष्टिरित्यीश्वरस्य दोषाप्रसङ्ग इति चेन्न, कर्मेश्वरयोः प्रवर्त्यप्रवर्तकत्त्वे अन्योन्याश्रयदोषप्रसङ्गात् । ईश्वरः करुणावान् वीतरागश्च प्राणिनः कुत्सिते कर्मणि न प्रवर्तयेत् । उत्पन्नमपि कर्म

नाधितिष्ठेत। तावन्मात्रेण प्राणिनां दुःखानुत्पादात। ईश्वराधीना जनाः स्वातन्त्र्येण कुत्सितं कर्म कर्तुं नार्हन्ति। ईश्वरानधिष्ठितं कुत्सितं कर्म फलं प्रसोतुं नोत्सहते। तस्मात स्वतन्त्रोपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयं। तथा चायमपरो गण्डस्योपरि स्फोट इत्यितरेतराश्रयः प्रसज्येत। कर्मणा ईश्वरः प्रवर्तनीयः; ईश्वरेण च कर्म इत्यितरेतराश्रयरूप दोषः प्रसज्येतेत्यर्थः। तस्मादीश्वरस्स्वतन्त्रः सन् कर्मभिः प्रवर्त्यत इति ईश्वरस्य स्वातन्त्र्यभङ्गोपि जायेत। अनादित्वादितरेतराश्रयपरिहारः। पूर्वकर्मणा ईश्वरः इदानींतने कर्मणि प्रवर्त्यते। तेनेश्वरेणाद्यतनं कर्म स्वकार्ये प्रवर्त्यत इति चेन्न, इदानीमिव अतीतकालेष्वपि इतरेतराश्रयदोषादि परम्परापत्तेः। तार्किकमते ईश्वरस्सर्वज्ञोनन्तश्चेति, अन्तवच्च प्रधानं, अनन्ताश्च पुरुषा इत्यभ्युपगम्यते। तत्रेश्वरस्यात्मनः प्रधानस्य पुरुषाणां चेयत्ताज्ञानं अस्ति वा न वा। अस्ति चेदन्तवत्त्वदोषः नेति चेदसर्वज्ञत्वरूपदोषः। तस्मात माहेश्वरवैशेषिकादिमतं नादरणीयमिति।

---

## ७ पशुपत्यधिकरणम्। (५१)—विशिष्टाद्वैतम्

३५ पत्युरसामञ्जस्यात्। (२०९)
३६ अधिष्ठानानुपपत्तेश्च। (२१०)
३७ करणवच्चेन्न भोगादिभ्यः। (२११)
३८ अन्तवत्त्वमसर्वज्ञता वा। (२१२)

**कपालभस्मस्नानादिसुराकुम्भादिपूजना।**
**ब्राह्मण्याश्रयसंप्राप्तिः मुद्राषट्कादि धारणम्॥ ४२६॥**

**श्रुतिस्मृतिविरुद्धानां बहूनां समवायतः।**
**पशुपत्यागमप्रोक्तं न ग्राह्यं केनचित् क्वचित्॥४२७॥**

**अधिकरणार्थः** पशुपतिमतं निरस्यते—

'रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके।

कपालं भस्मना स्नानमपवर्गफलप्रदम् ॥
'कर्णिकारुचकं चैव कुण्डलं च शिखामणिं ।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ॥'
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ।
जीवाः पशव उच्यन्ते तेषामधिपतिश्शिवः ॥
स तेषामुपकाराय पञ्चाध्यायीमचीक्लृपत् ।
उपादानं निमित्तं च व्याख्यातं कारणं द्विधा ॥
निमित्तकारणं रुद्रः तत्कला कारणान्तरम् ॥
मह्वन्तं महदादिकार्यमुदितं तद्वद्विधिर्गीयते
गूढाचारमुखश्मशानभसितस्नानावसानः परः ।
योगे धारणमुच्यते हृदिधियामोंकारपूर्वं तथा
दुःखान्तो हि मतोऽपवर्ग इति ते पञ्चापि संकीर्तिताः ॥
तत्र पञ्चपदार्थास्तु व्याख्याताः कारणादयः ॥
'कारणंकार्यं विधिर्योगो दुःखान्त इति पञ्च ॥ इति

आत्यन्तिकदुःखनिवृत्तिः दुःखान्तशब्देनोक्ता । वैशेषिकात्मगुणोच्छेद-लक्षणा मुक्तिरित्यादि शैवागमोक्तः सर्वश्रुतिस्मृत्याचारविरुद्ध इति वैदिकैः अनादरणीय एव । तथा हि श्रुतिस्मृतिविरुद्धार्थकल्पनयासह श्रुतिस्मृत्युक्तों-कारस्मरणयोगधारणादिकथनात् अभिन्ननिमित्तोपादानब्रह्मणः निमित्तमात्र-करणत्वोक्त्या च वेदबाह्या असुरादिमोहनार्थं विष्णुप्रेरितरुद्रकृतत्वाच्च शैवागमस्य तदुक्तं सर्वं त्याज्यमेव । 'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय' इत्यादि प्रमाणाच्च ।

ननु— 'यस्सर्वज्ञस्सर्ववित्', 'ईश्वरात् ज्ञानमन्विच्छेत्' इत्यादि प्रमाणात् सर्वज्ञः रुद्रः कथं मोहनशास्त्रं कुर्यादिति चेत् 'एष एव असाधुकर्म कारयति यमधोनिनीषति' इत्यादिशास्त्रात् सर्वज्ञस्यापि मोहनशास्त्रकरणप्रवृत्तिरपि सिद्धत्येव । केचित्तु पौण्ड्रीकवासुदेवादिवत् रुद्रनाम्ना केनचिदन्येन

शैवागमः कृत इत्यूचिरे। अत एव च तन्मतमनादरणीयमिति च।
वेदान्तशास्त्रेषु

'जगन्निमित्तोपादानं परंब्रह्मश्रुतौ श्रुतम्।
महानन्दात्मको मोक्षः तत्रतत्रासकृच्छ्रुतः॥'

इत्युक्त्वा

'परस्परविरोधेन व्याहतैषां प्रमाणता।
त्रयीदण्डप्रतिक्षेपं किंचिन्नैव प्रतीक्षते॥'

इत्यादिभिः पूर्वाचार्यग्रन्थैः शैवागमो दूषितः।
अपि च शैवागमोक्तसंप्रदायरीतिः—

'भिक्षो मांसनिषेवणं प्रकुरुते किं तेन मद्यं विना
किं ते मद्यमपि प्रियं प्रियमहो वाराङ्गनाभिस्सह।
वेश्याद्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतः दासस्य कान्यागतिः॥'

इत्याद्यालंकारिकोक्तरीतिवत विरुद्धसंमेलनं भवतीति तन्मतं सर्वथा निराकरणीयम्।

---

## ११ पाशुपतनिराकरणाधिकरणम् (३२)—द्वैतम्

३७ ओं पत्युरसामञ्जस्यात्। (२१०)
३८ ओं संबन्धानुपपत्तेश्च। (२११)
३९ ओं अधिष्ठानानुपपत्तेश्च। (२१२)
४० ओं करणवच्चेन्न भोगादिभ्यः।
४१ ओं अन्तवत्त्वमसर्वज्ञता वा। (२१४)

**जगत्कर्ता पशुपतिः नैवं नारायणश्रुतेः।**
**पारतन्त्र्यात् पशुपतेर्मतं तस्मान्न गृह्यते॥ ४२८॥**

**अधिकरणार्थः।** पाशुपतिमतं निराकरोति। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवेऽहं तन उ'। एको नारायणो आसीत्, न ब्र

नेशानः' इत्यादि श्रुतेः रुद्रस्यावरत्वेन परतन्त्रत्वेन च नारायणस्यैव कारणत्वोक्तेः पशुपतेः कर्तृत्वे मृतपुरुषवत् जगता संबन्धो न युज्यते, अशरीरत्वात् ।अतः पशुपतिरशरीर इत्याद्युक्तेश्च पृथिव्याद्यधिष्ठितृत्वाभावाच्च कुलालादिवत्, उत्पत्तिविनाशसुखदुःखादिप्राप्तेश्च देहवत्त्वे अन्तवत्त्वापत्तेश्च, देहाभावे ज्ञानोत्पत्त्यभावाच्च पशुपतिः न जगत्कारणं । विष्णोः कारणत्वे तु सर्वे विरोधाः श्रुत्यैव परिहृताः । सर्वं तस्यास्ति दुःखादिकं च नास्तीति ।

'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।

ज्ञानज्ञानस्सुखसुखः स विष्णुः परमेश्वरः ॥

इत्यादि प्रमाणादवगम्यते ।

---

## ८ उत्पत्त्यसम्भवाधिकरणम् । (६०)–अद्वैतम्

४२ उत्पत्त्यसंभवात् । (२१३)

२३ न च कर्तुः करणम् । (२१४)

४४ विज्ञानादिभावे वा तदप्रतिषेधः । (२१५)

४५ विप्रतिषेधाच्च । (२१६)

**कर्तुश्च जीवात्करणं मनश्च संजायते व्यूहमिदापि दृष्टा ।**
**श्रीवासुदेवात् जनिमात्मनश्च कर्तुश्च जीवान्मनसोपि जन्म ॥ ४२९ ॥**
**तस्मादहंकारजनीं ब्रवीति केचित्तदेकायनशाखिमूलम् ।**
**तन्नामशाखैव न चास्ति लोके वैखानसेनाऽपि निषिद्धमेतत् ॥ ४३० ॥**

**अधिकरणार्थः** । प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणं, ईश्वरोभिमतः येषां पक्षः, तत्पक्षः प्रत्याख्यायते । तत्पक्षस्तु वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपा व्यूहा इति वासुदेवात् संकर्षणनाम्नः जीवस्योत्पत्तिः, तस्मादनिरुद्धाभिधेयस्याहंकारस्योत्पत्तिरित्यादि पाञ्चरात्रे वर्तते । तन्नयुज्यते । 'न जायते म्रियते वा विपश्चित्' नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः' इत्यादिश्रुतिस्मृतिसूत्रेभ्य आत्मनः नित्यत्वश्रवणात् जीवात् मनस उत्पत्तिश्रवणाद्युक्तेश्च ज्ञानैश्वर्यशक्तिबलवीर्यतेजसां षण्णां वासुदेव एव

विद्यमानत्वावगतेः तदितरव्यूहत्रये तदभावोक्तेश्च ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतः भगवद्व्यूहावगमेन चतुर्व्यूहकथनानुपपत्तेः शाण्डिल्यस्य वेदनिन्दापूर्वकपांचरात्रशास्त्रप्रवृत्तेश्च तन्मतं न युक्तमिति। अपि च पंचरात्रस्य एकायनशाखामूलत्वमङ्गीकृत्य कैश्चित् प्रामाण्यमुक्तं। तदपि न युक्तं। एकायनशाखेति काचित् शाखैव नास्ति। खिलशाखात्वकल्पने च न प्रमाणं।

"आग्नेयं पांचरात्रं तु दीक्षायुक्तं च तान्त्रिकं।
अवैदिकत्वात् तत्तन्त्रं ततो वैखानसेन तु॥
सौम्येन वैदिकेनैव देवदेवं समर्चयेत् ॥"

इत्यादिना पांचरात्रस्य वैदिकापरिग्राह्यत्वमुक्तं वैखानसशास्त्रे।

न च वैखानसप्रशंसार्थं पांचरात्रदूषणमिति वाच्यं। प्रशंसापरत्वेऽपि अवैदिकत्वादिति हेतूक्त्या पांचरात्रं न प्रमाणमित्येवेति दीक्षितादयोऽब्रुवन्।

परभाष्ये पांचरात्रोक्तं सर्वं प्रमाणमेवेति वर्णितं। तत्तु न घटते। सूत्रकारेण परपक्षनिराकरणप्रकरणान्ते तैस्सहपाठात् 'निषेधाश्च बलीयांसः' इति न्यायात् निषेधशास्त्रस्यैव प्राबल्यमिति पंचरात्रप्रमाणनिषेधवाक्यस्यैव प्रबलतया अङ्गीकारेण पांचरात्रमप्रमाणमित्येव भातीति। अन्यथा पशुबन्धप्रकरणे 'आज्यभागौ यजतीति' आपस्तम्बश्रौते 'आज्यभागौ यजतीति' सूत्रेण आज्यभागौ विधाय 'तौ न पशौ करोति न सोम इत्येके' इति सूत्रेण अज्यभागौ निषिद्धाविति विधिनिषेधाभ्यां विकल्पोऽङ्गीकृतः। तद्वदत्रापि पांचरात्रस्य प्रामाण्यविकल्पापत्तिः प्रसज्येत। विकल्पश्च न युक्त इति। ननु—'नातिरात्रे षोडशिनं गृह्णाति; अतिरात्रे षोडशिनं गृह्णाति' इतिवत् विकल्पो युक्त इति चेत्, तत्रापि फलतारतम्ये विकल्पो दृष्टः; इच्छा च नियामिका तत्र। 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इतिवत्। अत्र तु भगवत्प्राप्तिरूपफलस्य वेदान्तशास्त्रे च पञ्चरात्रे च तुल्यत्वात् सर्वाङ्गीकृतवेदोक्तमार्गप्रवृत्तेरेव फले सिद्धे विवादग्रस्तपाञ्चरात्रे प्रवृत्त्यसंभवात् विकल्पो न युक्तः। तुल्यफलेऽपि विकल्पो दृष्ट इति चेन्न तत्रापि अतिरात्रादौ षोडशिग्रहणसत्वे क्रतुफलाधिक्यं, तदभावे क्रतुफलस्य न्यूनत्वमेवाङ्गीकृतं मीमांसकैरिति। किञ्च—अत्र

'कर्मज्ञानमुपासनं च शरणं व्रज्येति चावस्थितान्
सन्मार्गानपवर्गसाधनविधौ सद्वारकाद्वाकारान् ।'

इति तदीयोक्त्या फलसाधनमार्गाणां चतुर्णामेव कथनात् पांचरात्रोक्तमार्गः कश्चनान्यः भगवत्प्राप्तेरस्तीत्यनुक्तेश्च न युक्तः ।

ननु च शैवादिमतेषु विरुद्धाचारादिदर्शनात् तेषां प्रामाण्याभावेऽपि पाञ्चरात्रे वेदविरुद्धाचाराद्यभावात् वेदविरुद्धवत्भासमानस्यापि वाक्यस्य उपनिषत्सु परस्परविरुद्धवाक्येषु अविरुद्धार्थसमन्वयवर्णनवद् विरुद्धार्थप्रतिपादनात् पञ्चरात्रं प्रमाणमिति चेन्मैवं; शैवादिग्रन्थेष्वपि सर्वथा विरुद्धांशस्य त्याज्यत्वाङ्गीकारेण अविरुद्धार्थभागस्य प्रामाण्यापत्तेः । इष्टापत्तौ पांचरात्रेऽपि अविरुद्धांशः प्रमाणं भवतु, विरुद्धांशः त्याज्य इति पंचरात्रं सर्वं प्रमाणमित्युक्तिः न संगच्छत इति ।

किं च महाभाष्यकृता पस्पशाह्निके 'सप्तद्वीपा वसुमती, त्रयोलोकाः, चत्वारो वेदाः, साङ्गास्सरहस्याः बहुधा भिन्नाः; एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः; एकविंशतिधा बाह्वृच्यं; नवधा अथर्वणो वेदः; वाकोवाक्यं; इतिहासः पुराणं; वैद्यकं, इत्येतावान् शब्दस्य प्रयोगविषय इत्युक्तं । छान्दोग्योपनिषदि च'अधीहि भगव इति होपससाद सनत्कुमारं नारदः तं होवाच यद्वेत्थ तेन मोपसीद, ततस्त ऊर्ध्वं वक्ष्यामीति । सहोवाच, ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं, सामवेदं आथर्वणं चतुर्थमितिहासपुराणं, पञ्चमं वेदानां वेदं, पित्र्यं राशिं, दैवं निधिं वाकोवाक्यं एकायनं देवविद्यां, ब्रह्मविद्यां, भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां, सर्पदेवजनविद्यां, एतद्भगवोऽध्येमि; इति नारदेनोक्तं । तत्र उभयत्र पांचरात्रस्य कस्यचित् प्रमाणभूतस्य सत्त्वे तदनुवादाभावः कथं घटते । तत्र अनुवादाभावेऽपि अनुक्तमन्यतोग्राह्यमिति न्यायेन यद्येतत्तन्त्रमस्तीत्यभ्युपगम्येत तदा शैवाद्यागमवदेव तदिति

"न सांख्यं न शैवं न तत्पांचरात्रं न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वात् तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥

इति दशश्लोक्यामाचार्योक्तेरवगम्यत इत्यलमतिप्रसङ्गेन ।

८ उत्पत्त्यसम्भवाधिकरणं। (५३)—विशिष्टाद्वैतं

३९ उत्पत्त्यसम्भवात्। (२१३)
४० न च कर्तुः करणम्। (२१४)
४१ विज्ञानादिभावे वा तदप्रतिषेधः। (२१५)
४२ विप्रतिषेधाच्च। (२१६)

मनोऽनिरुद्धजीवानामुत्पत्तिर्दृश्यते यतः।
पाञ्चरात्रं च न ग्राह्यं मैवं प्रामाण्यमेव तत्॥ ४३१ ॥
तोयेन जीवान् विससर्ज भूम्यामित्यादि वाक्यस्य यथोपपत्तिः।
तथैव जीवादिजनिश्च किंच श्रीवासुदेवो हि चतुः प्रकारः॥ ४३२ ॥

**अधिकरणार्थः** पांचरात्रस्य प्रामाण्यमुच्यते। तत्रेयं प्रक्रिया 'परमकारणात् वासुदेवात् संकर्षणो नाम जीवो जायते। संकर्षणात् प्रद्युम्नसंज्ञं मनो जायते। तस्मात् अनिरुद्धसंज्ञोऽहंकारो जायत' इति। तत्रायं पूर्वपक्षः। आत्मनः नित्यत्वात् जीवो जायत इत्युक्तिरसंगता। मनसः जीवादुत्पत्तिः मनसश्चाहंकारस्योत्पत्तिरसंगता। 'न जायते म्रियते वा विपश्चित्', 'एतस्माज्जायते प्राणः मनस्सर्वेन्द्रियाणि च' इत्यादि श्रुतिविरुद्धत्वादिति। समाधिस्तु जीवोत्पत्तिवादिनीनां श्रुतीनां शरीरसंबन्ध एव जीवस्योत्पत्तिरिति यथा वर्णिता तद्वदेवात्रापि। मनोऽहंकारादीनामपि वासुदेवव्यूहादेव जनिरिति 'एतस्माज्जायते प्राणः' इत्यादि श्रुतेरविरोध एव। तत्रापि प्रकृतेः जीवस्य चोत्पत्तिनिषेधदर्शनाच्च वेद इव पांचरात्रमपि सर्वं प्रमाणमेव। साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पाञ्चरात्रं अधिकृतवानित्युक्तिस्तु 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु तदितरद्विधेयं प्रशंसितुमि'ति न्यायेन 'यथा अनुदितहोमनिन्दा उदितहोमप्रशंसार्था तथैव पांचरात्रप्रशंसापरं शाण्डिल्यवचनमिति न कोऽपि दोषः।

ननु—
"शैवं पाशुपतं चैव बौद्धमप्यार्हतं तथा।
कपालं पाञ्चरात्रं चेत्येवं पाषण्डतास्मृतेः॥"

वैदिकं तान्त्रिकं चेति विभागकरणादपि ।
गम्यते पाञ्चरात्रस्य वेदबाह्यत्वनिश्चयः ॥
शैवं पाशुपतं सौम्यं लागुडं च चतुर्विधम् ।
तन्त्रभेदस्समुद्दिष्टः संकरं न समाचरेत् ॥
भाक्तं भागवतं चैव सात्वतन्त्रत्रिधामतं ।
इत्येवं तन्त्रभेदोक्तिः पञ्चरात्रेऽपि दृश्यते ॥
श्रुतिस्मृतिप्रतिक्षिप्तजीवजन्मादिगोचरम् ।
न्यायहीनं वचस्तथ्यमितिहासमिदं महत् ॥

इत्यादिना वेदबाह्यमतैस्सह पाञ्चरात्रस्य परिगणनात् 'सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणं' इति वैय्याकरणन्यायाच्च 'विशये प्रायदर्शनात्' इति मीमांसासूत्रेण प्रायपाठाच्च पाञ्चरात्रस्य वेदबाह्यत्वमेव सिद्ध्यतीति चेन्मैवं ।

"इत्थं नानाश्रुतिमुनिवचस्सन्ततस्तूयमान–
ज्ञानैश्वर्यः परमपुरुषः पाञ्चरात्रं व्यधत्त ।
तच्चेदेतच्छ्रुतिपथपरिभ्रष्टतन्त्रैस्समानं
पातृत्वेन प्रसजति तदा सोमपस्ते सुरापैः ॥"

इति यामुनाचार्योक्त्या पञ्चरात्रस्य वेदबाह्यतन्त्रैस्सह पठितत्वेन साम्यापत्तौ, सोमपीथिनः मद्यपस्य च पातृत्वसाम्यात् मद्यपतुल्यापत्त्या पञ्चरात्रस्य वेदबाह्यसमानवर्णनं न युक्तं ।

"किं जीव पुरुषोक्तिगोचर इति श्रीशोऽपि तद्गोचरः
जीवस्स्यात् गिरिशो ध्रुवो भवति किं तौ स्थाणुसंज्ञाविति ।
तक्षत्वाय घटेत किं मुखभुवामाचार्यसंशब्दनात्
मण्डूकत्वमुपैति किं हरिपदस्पर्शेन कण्ठीरवः ॥
(पुरुषावात्ममानवौ ।
'स्थाणुः पुमान् महादेवे शंकावस्त्रीस्थिरे त्रिषु'
'ध्रुवश्शंकौ वटे कीले योगे तारान्तरे पुमान्' ।
"मन्त्रव्याख्याकृदाचार्यः ग्रामतक्षा च कथ्यते ।'
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।

शुका हि कपि मेकेषु हरिर्नां कपिले त्रिषु ।

इत्यादयोर्थान्तरप्रतिपादकाः । ) एवं पूर्वाचार्यश्लोक्तन्यायेन बाह्यमतेन पाठेऽपि पाञ्चरात्रस्य दोषाभावात् पाञ्चरात्रोक्तं सर्वं प्रमाणमेव ।

ननु—"वासुदेवाभिधानेना केनचिद्विप्रलिप्सुना ।
प्रणीतं प्रस्तुतं तन्त्रमिति निश्चिनुमो वयम् ॥'
'मायामोहनविग्रहेण हरिणा देवद्रुहां संहर्तिं
हन्तुं मोहयताऽहितान्यभिहितान्याहुर्हि तच्छद्मना ।
एवं किन्नु नयन्नयं निजमहामायागुहा गह्वरं
व्याजह्रे किमिदं नवेति विशये जाते कथं निर्णयः ॥'
'प्रत्युत भ्रमयन्नेव व्याजहारेति गम्यते ।
वैदिकैरगृहीतत्वात् तथार्हतमतं यथा ॥'

इत्यादिना भगवत्त्वैव मायाविना असुरमोहनार्थमिदं पाञ्चरात्रमलेखि इति वा उत वासुदेव इति नामान्तरेण केनचित् पुरुषेण इदं निर्मितमिति वा अभ्युपगम्य शैवागमादिभिः तुल्यतया वर्णयितुं शक्यं ; न तु प्रमाणत्वेनेति चेन्मैवं ;

'वेदसिद्धान्तमार्गेषु विष्णुरेवपरस्स्मृतः ।
विष्णुरेव नरश्रेष्ठः महिष्ठः पुरुषोत्तमः ॥'
श्रुतिमूर्ध्निप्रसिद्धेर्न वासुदेवेन भाषितं ।
तन्त्रं मिथ्येति वक्तुं नः कथं जिह्वा प्रवर्तते ॥'
न च तन्त्रान्तरेष्वेषः न्यायः प्रसरमर्हति ।
यततस्तन्निबन्धॄणां विभ्रमाद्यपि संभवि ।

इत्यादिना आचार्यैरेव पञ्चरात्रस्य वक्ता स्वयं नारायण एव ; तस्य भ्रान्त्यादिः कदापि कुत्रापि न संभवति; मोहनार्थं च न कृतवान्, अपि तु भक्तभागवतोज्जीवनार्थं वैदिकमताविरोधेन भगवद्ध्यानस्तुत्यर्चनादयोत्र शास्त्रे उक्त इति सर्वं पांचरात्रं प्रमाणमेव ।　　　म. 27

वेदैश्चतुर्भिस्समितं कृतं मेरौ महागिरौ
एवमादिवचोभङ्गीशतैस्सादरमीरितैः ।
वेदान्तसारसर्वस्वमात्मीयं परमं मतं ।
पांचरात्रं निराकुर्यात कथं द्वैपायनस्स्वयम्

इत्यादिना वेदतुल्यत्वमेव वर्णितं ।

'षाड्गुण्याद्वासुदेवः पर इति स भगवान् मुक्तभोग्यो बलाढ्यात्
बोधात् संकर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नस्सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनुरुद्धः
बिभ्राणः पासि तत्वं गमयसि च तथा व्यूहरङ्गाधिराज ॥'

इति पूर्वाचार्यैरेव पञ्चरात्रशास्त्रस्य प्रामाण्यं तदुक्तार्थसंग्रहश्चोक्तः ।

अपि च 'न हिंस्यात् सर्वा भूतानि' इति सामान्यशास्त्रोक्तनिषेधस्य 'अग्निषोमीयं पशुमालभेत' इत्यादि विशेषविहितयागीयहिंसाव्यतिरिक्तविषयतया अभ्युपगम इव प्रकृते पंचरात्राद्यप्रमाणमिति सामान्यरूपनिषेधस्य पांचरात्रं प्रमाणमिति विशेषवाक्यव्यतिरिक्तविषयतयाभ्युपगमेन उत्सर्गापवादन्यायबलात् पञ्चरात्रशास्त्रं प्रमाणमिति सिद्ध्यति ।

किञ्च 'यज्जुहोति तदाहवनीये' इत्याहवनीयाग्नौ विहितस्य होमसामान्यस्य 'अश्वस्य मेध्यस्य पदे जुहोति' इति विशेषविहितपदहोमव्यतिरिक्तत्वेनाभ्युपगम इव प्रकृतेऽपि पाञ्चरात्रप्रामाण्यव्यतिरिक्तविषयं शैवागमादिनिषेधवाक्यमित्यभ्युपगमाच्च पाञ्चरात्रं प्रमाणमेव ।

ननु, प्रमाणान्तरप्राप्तस्यैव निषेधो युक्तः । अत एव 'सर्वादीनि सर्वनामानि' इति व्याकरणसूत्रे महाभाष्ये 'कः प्रतिषेधो नाम अविशेषेण किंचिदुक्त्वा विशेषेण नेत्युच्यत' इत्युक्तं । तदर्थालोचने प्रतिषेधशास्त्रस्यैव विशेषशास्त्रत्वमिति प्रतिभाति । तथा सति पञ्चरात्रस्याप्रामाण्यमेव पुनरायाति इति चेन्मैवं, मन्वादिस्मृतिवत् पञ्चरात्रस्यापि प्रामाण्यं प्राप्तं । तच्च, पञ्चरात्राद्यप्रमाणमिति, विशेषनिषेधेन दूषितं । तादृशनिषेधवचनस्यापवादापवादपर्यायप्रतिप्रसवरूप—

'इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमं ॥
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ।
सांख्ययोगकृतां तेन पञ्चरात्रानुशब्दितम् ॥
भविष्यति प्रमाणं वै एतदेवानुशासनम् ।
सात्वतं विधिमास्थाय गीतस्संकर्षणेन यः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।

इत्यादि भारतस्थपञ्चरात्रप्रमाणवचनबाहुल्यं बाधकमिति प्रतिप्रसवरूपेण पंचरात्रप्रामाण्यमेव सिद्ध्यति । यदुक्तं निषेधशास्त्रस्य विशेषशास्त्रत्वमिति महाभाष्यात् प्रतिभातीति तदयुक्तम् । पाणिनी तन्त्र एव 'आद्गुणः, इति सामान्यशास्त्रस्य 'वृद्धिरेचि' इत्यादि विशेषशास्त्रं बाधकं । 'येन नाप्राप्ते यो विधिरारभ्यते, तस्य बाधको भवति,' इत्यादि नञ्समभिव्याहाराभावेऽपि उत्सर्गापवाद-सामान्यविशेष-बाध्यबाधकादीनां दृष्टत्वात् ।

अत एव एतादृशीरीतिः 'ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मजिज्ञासापदस्य समासविचारे ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा इति विग्रहं प्रदर्श्य 'कर्तृकर्मणोः कृति' इति सूत्रेण षष्ठीविभक्तिं प्रसाध्य 'प्रतिपदविधानाच्च षष्ठी न समस्यते' इति वार्तिकेन समासनिषेधमाशङ्क्य' कृद्योगाच्च षष्ठी समस्यते' इति वार्तिकान्तरेण प्रतिप्रसवसंभवात् इति ब्रह्मजिज्ञासा पदं समस्तं साध्वित्युक्तं । तद्वदत्रापीति ।

अपि च पित्रेष्ट्यां 'प्राचीनावीती दोहयति' इत्यारभ्य पित्रेष्ट्युपन्यास-समये 'प्राशनोत्सेचन—परिषेचनानि न विद्यन्ते' इति श्रौतसूत्रेण 'ऋत्विजो हविष्येषान भक्षयन्ति' इत्यादि सामान्यशास्त्रप्राप्तहविः प्राशनं 'तामुपहूय अवहैव जिघ्रन्ति, न प्राश्नन्ति' इति श्रुत्या मन्थस्य इडोपह्वाना-नन्तरं अवघ्राणं विधाय प्राशनं निषिद्धम् । तत्रैव केनचिद्याज्ञिकेन कर्काचार्येण ग्रन्थकृता उक्तं—'न प्राश्नन्तीति प्रतिषिध्य प्रतिप्रसवः प्राशितव्यंत्वेव वयं मन्यामहे' इति । अत्र सामान्यशास्त्रेण हविरशनं प्राप्तं; 'न प्राश्नन्तीति

निषिद्धम् । पुनरपि निषिद्धस्यापवादरूपेण नञ्समभिव्याहारं विनैव 'प्राशितव्यंत्वेव' इति वाक्यात् हविर्भोजनमेव साधितं । तद्वदत्रापि पाञ्चरात्रं प्रमाणमिति भारतवचनमेव प्रतिप्रसवरूपमिति । मन्वादि स्मृतिवत् नारायणप्रोक्तपाञ्चरात्रस्य प्रामाण्यं प्राप्तं । 'शैवं पाशुपतं चैव बौद्धमप्यार्हतं तथा........गम्यते पाञ्चरात्रस्य वेदबाह्यत्वनिश्चयः ॥' इत्यादि निषेधशास्त्रेण प्रतिषिद्धमपि 'वेदैश्चतुर्भिस्समितं' इत्यारभ्य 'पञ्चरात्रं निराकुर्यात् कथं द्वैपायनस्स्वयम् । भविष्यति प्रमाणं वै एतद्देवानुशासनम् । सात्वतं विधिमास्थाय गीतस्संकर्षणेन यः ॥' इति प्रतिप्रसवरूपभारत-यामुनादिवचनैः पञ्चरात्रमामूलाग्रं सर्वं प्रमाणमित्येव सुष्ठूक्तम् । छान्दोग्ये सप्तमप्रपाटके स्वाभ्यस्तविद्यामध्ये एकायनमिति किञ्चनशास्त्रमधीतमिति नारदेनोक्तम् । तस्य एकायनपदस्य 'वाकोवाक्यं मूलवेदः वेदसारोपसंहृतिः एकयनमिति प्रोक्तं' इति सामसंहितावचनानुसारेण वेदसारोपसंहृतिरिति कश्चन ग्रन्थः ज्ञायते । तथैव मध्वभाष्ये व्याख्यातम् । श्रीरङ्गरामनुजभाष्ये च 'एकायनं एकायनशाखा इत्यर्थः' इति वर्णितं । तथा च एकायनशाखामूलत्वं पाञ्चरात्रस्य न्याय्यमिति । एकायनमित्यस्य नीतिशास्त्रमर्थ इति भगवत्पादभाष्ये उक्तमपि तावता एकायनशाखा नस्तीति नैव बोध्यत इति ।

"ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥"

इति स्कान्दवचनाच्च पाञ्चरात्रं सर्वं प्रमाणमेव ॥

अपि च एकायनशाखासत्त्वे शाण्डिल्यस्मृतिरपि प्रमाणं । तथा हि शाण्डिल्यस्मृतौ—

"श्रीमद्योतागिरेर्मूर्ध्नि श्रीमत्यायतने हरिः ।
शाण्डिल्यमृषिमासीनं प्रणम्य मुनयोऽब्रुवन् ॥
'श्रीमदेकायनं शास्त्रं श्रुतं गुह्यं सनातनम् ।
ज्ञातं च सर्ववेदानामन्तस्सारमिदंत्विति

निर्वृत्तं वैदिकं कर्म यत्प्रोक्तं भवभेषजम् ।
पञ्चकालात्मकं ज्ञानं तच्च ब्रह्मैकदैवतम् ॥

इत्यारभ्य—

इदं वेदागमाख्यं तु वेदशास्त्रमितीरितम् ।
इति संक्षेपतः प्रोक्तः सदाचारो यथागमं ॥

इत्यन्तं एकायनशाखोक्तसदाचारानुष्ठानक्रमः उपब्रह्मीतेति पाञ्चरात्रस्य एकायनशाखामूलत्वोक्तिः संगच्छत इति । यथा मन्वादिस्मृतीनां मूलवेद अङ्गीक्रियते तथा शाण्डिल्यस्मृतेरपि मूलवेदोस्तीति स्पष्टं प्रतीयते । अत एव यामुनाचार्यैरयं श्लोकः पठितः—

आकल्पं विलसन्तु सात्वतमतं पस्पर्द्धि दुष्पद्धति
व्यामुग्धोद्धतदुर्विदग्धपरिषद्वैदग्ध्यविध्वंसिनः ।
श्रीमन्नाथमुनीन्द्रवर्द्धितधियो निर्धूतविश्वाशिवाः
सन्तस्सन्ततगद्यपद्यपदवी हृद्याऽनवद्योक्तयः ॥ इति ।

यत्तु मोक्षैकफलसाम्येऽपि 'कर्मज्ञानमिति' श्लोकेन चतुर्णामेव मोक्षसाधनत्वेन वर्णितं; न त्वन्यः पांचरात्रोक्तमार्ग इति तदीयैरेव पञ्चरात्रं प्रमाणमिति नाभ्युपगतमिव भातीत्युक्तं तन्न युक्तं । तच्च श्रीरहस्यत्रयसारस्थ,-गतिविशेषाधिकारोक्तरीत्या समाहितमिति नेह तन्यते । पांचरात्रशास्त्रोक्त-कर्मानुष्ठाता अन्य इति तस्य तन्मार्ग इति हि तत्रोक्तमिति । अपि च मोक्षसाधनोपायाः चत्वारः तुल्यफला इत्यपि अस्मदीयैर्नाभ्युपगताः । भक्ति-रूपोपायनिष्ठस्य बहूनां जन्मनामन्ते मोक्षप्राप्तिः, शरणागतिनिष्ठस्य तु एतद्देहावसान एव मोक्षप्राप्तिः । तत्राप्यार्तप्रपन्नस्य तदपेक्षितकाल एव मोक्ष-सिद्धिरिति कर्मज्ञानयोः भक्तिसाधनत्वेनेत्यभ्युपगमात फलवैषम्यसिद्धेरिति ।

किंच—

भक्त्या परमया वापि प्रपत्त्या वा महामते ।
प्राप्योहं नान्यथा प्राप्यः ममकैंकर्यलिप्सुभिः ॥

इति शास्त्रानुसारेण मोक्षोपायमार्गौ द्वावेव । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादि वेद-प्रमाणादभ्युपगतौ । कर्मज्ञानमिति चोपायोपायतया उपचारात् वर्णितौ; न तु साक्षान्मोक्षोपायतया । पांचरात्रोक्तमार्गः अन्य एव । तत्रापि संहिताभेदेन करणमन्त्रं तदनुष्ठानप्रकारभेदेन अवान्तरभेदभिन्ना बहवः वर्तन्त इत्येतत् सर्वमधिकारिविभागोक्तिस्थेन—

मुमुक्षुत्वे तुल्ये सति च मधुविद्यादिषु यथा
व्यवस्था संसिध्यत्यधिकृतिविशेषेण विदुषां ।
विकल्प्येत न्यासे स्थितिरितरविद्यासु च तथा
नियत्या वैय्यात्यं नियमयितुमेवं प्रभवति ॥

इति श्लोकेन समर्थितमिति ग्रंथविस्तरभयाद्विरम्यते । सूत्रार्थस्तु आचार्यैरेव वर्णित इति नेह तन्यते ॥

### १२ उत्पत्त्यधिकरणम् ॥ (६३)—द्वैतम्

४२ ओं उत्पत्त्यसंभवात् । (२१५)

४३ ओं न च कर्तुः करणम् । (२१६)

४४ ओं विज्ञानादिभावे वा तदप्रतिषेधः । (२१७)

४५ ओं विप्रतिषेधाच्च । (२१८)

**पुरुषाननुगृहीतस्त्री प्रजोत्पादनविक्षमा ।**
**विज्ञानपुरुषाश्लिष्टस्त्री क्षमेति न युक्तिमत् ॥ ४३३ ॥**
**तर्हीश्वरनिदानादिवादेऽन्तर्भाव एव सः ।**
**श्रुतिस्मृतिविरोधाच्च न समञ्जसमेव तत् ॥ ४३४**

अधिकरणार्थः । शक्तिपक्षं दूषयति । केवलस्त्रीभ्यः प्रजा नोत्पद्यन्ते । तदर्थं पुरुषानुग्रहाङ्गीकारे करणाभावात् तदनुपपत्तिः । तदर्थं

विज्ञानादिकरणाङ्गीकारे तर्हि विज्ञानादिनैव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भाव एव; न तु शक्तिपक्ष इति मतान्तरं। शक्तिवादे सकलश्रुतिविरोधात् असमञ्जसमेव ॥

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां
**काळि वल्लीपुरं रङ्गाचार्याणां**
कृतिषु मतत्रयसारसंग्रहे
द्वितीयाध्याये द्वितीयः पादः ॥

# मतत्रयसारसंग्रहे
# द्वितीयाध्याये तृतीयः पादः ॥

## १ वियदधिकरणम्। (६१)—अद्वैतम्

१ **न वियदश्रुतेः।** (२१७)
२ अस्ति तु। (२१८)
३ गौण्यसंभवात्। (२१९)
४ शब्दाच्च। (२२०)
५ स्याच्चैकस्य ब्रह्मशब्दवत्। (२२१)
६ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः। (२२२)
७ यावद्विकारं तु विभागो लोकवत्। (२२३)

**नभोजनिर्नास्त्यमृतं च नित्यं आकाशवन्नित्य इति श्रुतेश्च।**
**अन्यत्र संभूतपदं च गौणं तत्तेज इत्यग्रजमेव तेजः॥ ४३५॥**

अतोऽन्तरिक्षस्य जनिर्नहीति मैवं परस्मात् गगनं प्रजातम् ।
तेजोग्रजं स्वस्य जनिं न रुन्धे विकारजातं खलु तज्जलांश्च ।।४३६।।
आकाशवाय्वग्निजलक्रमेण सृष्टिः प्रतीतीति वियज्जनिस्स्यात् ।
अतः प्रतिज्ञाप्युपपद्यतेऽसौ येनाश्रुतं सुश्रुतमेवमादि ॥ ४३७ ॥

अधिकरणार्थः । उपनिषदि वाय्वाद्युत्पत्तिप्रकारः वाय्वाद्यनुत्पत्तिश्च श्रूयते । ब्रह्मणः जगत्कारणत्वे तादृशविरुद्धवाक्यार्थः कथमुपपद्यत इति शंकायां तदर्थविचारायायं पादः आरभ्यते । आकाशस्योत्पत्तिर्नास्ति ; आकाशनित्यत्वादिश्रुतेः । अमृतमित्युक्तेश्च । 'सदेव सोम्य' (छा ६-२-१) इति सृष्टिप्रकरणे वायोरनुत्पत्तिश्रुतेश्च । शाखान्तरे सृष्टिप्रकरणे वायोरनुत्पत्तिश्रुतेश्च । शाखान्तरे सृष्टिप्रकरणे 'तत्तेजोऽसृजत' (छा ६-२-३) इति तेजस एव प्रथमं सृष्ट्युक्तेश्च । 'आत्मन आकाशस्संभूत (तै-२-१) इति संभूतपदस्य गौणार्थकतया वक्तुं शक्यत्वादिति वायोः नोत्पत्तिरितिप्राप्ते, 'आकाशशरीरंब्रह्म', 'आत्मन आकाशस्संभूतः' (तै २-१) इत्यादिना आकाशोत्पत्तिश्रुतेः ;'येनाश्रुतं श्रुतं भवति' आत्मनि खलु अरे दृष्टे श्रुते, मते विज्ञाते इदं सर्वं विदितं' (बृ-४-५-६) इत्यादि बहुश्रुत्युक्त एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तये चाकाशस्य उत्पत्तिस्सिद्धा । शाखान्तरे तेजसः प्रथमं सृष्टिः शाखान्तरसिद्धाकाशोत्पत्तिं न वारयति । 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा- ३-१४-१) 'ब्रह्मैवेदं अमृतं पुरस्तात्' 'आत्मन आकाशस्संभूतः' (तै-२-१) इत्यादि श्रुतिभ्यः ब्रह्मण एव आकाशादीनां उत्पत्तिरस्तीत्यवगम्यते । आकाशस्य नित्यत्वामृतत्वप्रतिपादकाश्श्रुतयः देवानाममर्त्यत्वमिव आपेक्षिकत्वेन गौणतया नेयाः ।

## २ मातरिश्वाधिकरणम् । (६२)—अद्वैतं

८ एतेन मातरिश्वा व्याख्यातः । (२१४)

वायोरुपास्तिश्रवणात् क्वचिच्च सैषेतिचानस्तमितेति वेदात् ।
वायोर्जनिर्नेति न युक्तमेव खाद्वायुरित्यागमवाक्यतश्च ॥ ४३७ ॥

**अधिकरणार्थः** संवर्गविद्यायां 'वायुर्वाव संवर्गः' इत्यादिना वायो-रूपास्तिश्रवणात 'सैषा अनस्तमिता देवता यद्वायुः' (बृ-१८-२२) इति बृहदा-रण्यकश्रुतेश्च, 'वायुश्चान्तरिक्षं चामृतम्' इत्यादि श्रुतेश्च मातरिश्वन उत्पत्तिर्ना-स्तीत्यधिकाशंकायां, 'एतेन मातरिश्वा व्याख्यातः' इति समाधिरभिहिता। एतेन पूर्वोक्तब्रह्मव्यतिरिक्तानां सर्वेषां ब्रह्मण उत्पत्तिश्रवणेन, एकविज्ञानप्रतिज्ञानोप-पादनादिना च, आकाशाद्वायुरित्यादिना च वायोरुत्पत्तिः सिद्धा; अमृतत्वादि-श्रुतिश्च प्रशंसार्थेति।

---

३ **असंभवाधिकरणम्**। (६३) **अद्वैतम्**

९ **असम्भवस्तु सतोऽनुपपत्तेः**। (२२५)

**यत्कारणं तच्च विकारि दृष्टमाकाशवाय्वादिषु तद्वदत्र।**
**जगन्निदानस्य परात्मनश्च बीजं परं चेदनवस्थितिस्स्यात्**॥ ४३८ ॥
**नोत्पद्यते ब्रह्म विकारि चेति 'न चास्य कश्चिज्जनिते'ति वेदात्।**
**जनेरभावस्सत एव दृष्टः विश्वभ्रमो ब्रह्मणि सत्य इष्टः**॥ ४३९ ॥
**सत्यं ह्यधिष्ठानमियं च रज्जुर्न सर्प इत्यादिवदेव चात्र।**
**प्रपञ्चविभ्रान्तिरपीह मूलप्रकृत्यधिष्ठानवदेव सत्यम्**॥ ४४० ॥

**अधिकरणार्थः** 'आकाशाद्वायुः वायोरग्निरि'ति कस्माच्चित् विकारात् कस्यचिद्विकारस्योत्पत्तिः दृश्यते। तद्वत् ब्रह्मण उत्पत्तिः कस्यचिद्विकारात् संभवितुमर्हतीत्याक्षेपे समाधिः 'असंभवस्तु' इति।

सदात्मकस्य ब्रह्मणः अन्यतः सम्भवः नोपपद्यते। सतः सन्मात्र-ब्रह्मण उत्पत्तिः न संभवति; असत्यतिशये प्रकृतिविकार-भावानुपपत्तेः। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः (श्वे ६-९-)इति श्रुतेश्च। न च, विकारात् विकारान्तरोत्पत्तिवत् ब्रह्मणोऽपि कस्माच्चिद्विकारादुत्पत्तिः भवितुमर्हतीति वाच्यं। अधि-ष्ठानस्य अनवस्थाप्रसंगनिवारणाय मूलप्रकृतिः सर्वविकारजातस्य अधिष्ठानभूता

इति यथा परैरभ्युपगम्यते तद्वदेवात्र ब्रह्म सर्वाधिष्ठानभूतमित्यभ्युपगम्यते। नेदं रजतं, अपि तु शुक्तिरित्यत्र प्रत्यक्षदृष्टं रजतं कस्यचिदन्यस्य पारमार्थिकत्वमङ्गीकृत्यैव तत्र निषिध्यते; तद्वत् 'नेह नानास्ति किंचन' इति प्रत्यक्षदृष्टप्रपञ्चस्य निषेधः किंचित् पारमार्थिकं अन्यत् तत्वमङ्गीकृत्यैव वर्णनीयः। तथा सति परमते मूलप्रकृतिरेव सर्वविकारस्याधिष्ठानमिति यथा, तद्वत् तत्स्थानापन्नं ब्रह्मैव सर्वविकारजातस्याधिष्ठानमिति नानावस्थादयो दोषाः प्रसज्यन्तेऽस्मन्मते। इति॥

---

### ४ तेजोऽधिकरणम्। (६४)—अद्वैतम्

१० तेजोऽतस्तथाह्याह। (२२६)

आत्मा ससर्ज प्रथमं हि तेजः क्वचिच्च वायुप्रभवोऽग्निरित्थम्।
योयुज्यते तत्र च तैत्तिरीयश्रुत्युक्तवायुप्रभवत्वमग्नेः॥ ४४१॥

अधिकरणार्थः वायोरेव तेजस उत्पत्तिः।

---

### (५) अबधिकरणम् (६५)—अद्वैतम्

११ आपः (२२७)

'अग्नेराप' इति श्रुत्या जलमग्निजमुच्यते।
यद्यप्येषः स्पष्ट एव मध्यवर्तीति शोधितम्॥ ४४२॥

अधिकरणार्थः स्पष्ट एव।

---

### ६ पृथिव्यधिकरणम्। (६६)

१२ पृथिव्यधिकाररूपशब्दान्तरेभ्यः। (२२८)

ता अन्नमित्यागमगान्नशब्दो व्रीह्यादि वा किं किमोदनं वा।
क्ष्मामन्नशब्दो वदतीह वाक्यशेषस्तथाद्भ्यः पृथिवीति वेदः॥ ४४३॥

अधिकरणार्थः। 'ता अन्नमसृजन्त (छा ६-२-४), इत्यन्नशब्दवाच्या पृथिवी एव; न व्रीह्यादिः। महाभूताधिकारात्, कृष्णवर्णाच्च 'अद्भ्यः पृथिवी'ति वेदाच्च॥

## (७) तदभिध्यानाधिकरणम् । (६७)--अद्वैतं

(१३) तदभिध्यानादेव तु तल्लिङ्गात्सः । (२२९)

**आकाशवाय्वग्निजलाचलादि सृष्टिश्च साक्षात्परमात्मनो वा ।**
**स्वयं तदात्मानमिहाकारोत् स च्चत्यच्चाभवत् तत्तदनुप्रवेशात् ॥ ४४४ ॥**

**अधिकरणार्थः ।** वियदादिसृष्टेः यथाश्रुति 'आकाशाद्वायुः वायोरग्निरि'त्यादि स्वतन्त्राकाशादिकमेव तत्तदुपादानं भवेत् इति प्राप्ते परमेश्वर एव 'सोऽकामयत बहुस्यां प्रजायेयेति' इत्यारभ्य 'सच्चत्यच्चाभवत्' (तै-२-६-१) इत्यादिना तद्ब्रह्मादिकमभिध्यायन्नेव सृजतीति सिद्धान्तः ॥

---

## ८ विपर्ययाधिकरणम् । (६८)—अद्वैतं

१४ विपर्ययेण तु क्रमोऽत उपपद्यते च । (२३०)

**लयक्रमःसृष्टयनुसारि वाऽथ विपर्ययो वाऽनियमेन वेति ।**
**सृष्टिक्रमापेक्षविपर्ययोऽत्र भूमिर्जले लीयत एवमादेः ॥ ४४५॥**

**अधिकरणार्थः ।** पूर्वमाकाशादीनामुत्पत्तिक्रमो विचारितः । इदानीं तेषां लयक्रमो विचार्यते । 'यतो वा इमानि' (तै ३-१-१) इत्यादिना भूतानां सृष्टिस्थितिलया उच्यन्ते । तत्र तेषां लयविषये नियमाभावात् अनियमोऽपि युज्यत इति प्राप्ते ; 'विपर्ययेण तु क्रमोऽत उपपद्यते च' इति समाधिः । उत्पत्तिक्रमविपर्ययेण अप्यय इति 'पृथिव्यप्सु प्रलीयते, ज्योतिष्यापः प्रलीयन्ते' इत्यादिनाऽवगतेः ॥

---

## ९ अन्तराविज्ञानाधिकरणम् । (६९)—अद्वैतं

१५ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् । २३१

**विज्ञानमनसोश्चापि भूतोत्पत्तिलयक्रमः ।**
**भूतक्रमाविशेषाच्च विज्ञानमनसोरपि ॥ ४४६ ॥**

**अधिकरणार्थः**। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मु २-१-३) इति श्रुतौ मनस्सर्वेन्द्रियाणि च ब्रह्मणः उत्पन्नानीति गम्यते। खं वायुर्ज्योतिरित्यादि परत्र दृश्यते। उत्पत्तिक्रमविपर्ययेणाप्ययाङ्गीकारे मनस्सर्वेन्द्रियाणि च इति विज्ञानमनसोरप्ययक्रमः बाधितो भवेत् इति प्राप्ते विज्ञानमनसोरात्मनश्च भूतानां च मध्यवर्तिनोरप्यविशेषात् भूतोत्पत्ति क्रमवत् भूतलक्षयमोपि इति अनयोः क्रमान्तरं नान्वेषणीयं। तस्मात् भूतोत्पत्तिक्रमभङ्गो नैवेत्ति॥

---

१० **चराचरव्यपाश्रयाधिकरणम्**। (७०)—अद्वैतं

**१६ चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वात्।२३२**
**जीवस्य जन्मात्र मृतिश्च शास्त्रे संस्कारकर्मप्रतिबोधनाच्च।**
**चराचरस्थूलसमाश्रयेयं भाक्ता तदुक्तिश्च शरीरनिष्ठा॥ ४४०॥**

**अधिकरणार्थः**। जीवस्याप्युत्पत्तिप्रलयौ भवतः। जातो मृत इति व्यवहारात्। जातकर्मौर्ध्वदेहिकसंस्कारादिविधानाच्चेति प्राप्ते जन्ममरणादि जीवस्य स्थूलशरीरव्यपाश्रय एव। स्थावरजङ्गमभूतान्येव जायन्ते म्रियन्त इति व्यवहारभाञ्जि श्रूयन्ते। 'स वा अयं पुरुषः जायमानः शरीरमभिसंपद्यमानः' (बृ ४-३-८) इति बृहदारण्यकोक्तरीत्या जीवस्य शरीरसंबन्ध एव जन्म; शरीरादुत्क्रमणमेव मरणमिति न जीवस्योत्पत्तिः भवति। जातकर्मादिविधानमपि देहप्रादुर्भाव देहविगमापेक्षमिति द्रष्टव्यम्। इति॥

---

१ **वियदधिकरणं** (५१)—**विशिष्टाद्वैतं**

१ **न वियदश्रुतेः**। (२१७)
२ अस्ति तु। (२१८)
३ गौण्यसंभवाच्छब्दाच्च। (२१९)
४ स्याच्चैकस्य ब्रह्मशब्दवत्। (२२०)
५ प्रतिज्ञाहानिरव्यतिरेकात्। (२२१)

६ शब्देभ्यः । (२२२)
७ यावद्विकारं तु विभागो लोकवत् । (२२३)
८ एतेन मातरिश्वा व्याख्यातः । (२२४)
९ असम्भवस्तु सतोऽनुपपत्तेः । (२२५)

**श्रुतिन्यायाविरोधं च परपक्षपराहतिम् ।**
**विधाय परतो द्वाभ्यां कार्यभागो विचिन्त्यते ।**
**न वा जनिः खस्य वियच्च खं च न जायते किन्त्वमृतं नु मैवं ।**
**सम्भूत आकाश इहात्मनस्स तच्चामृतं किंचिदपेक्षयैव ॥**

**अधिकरणार्थः** । इदानीं कार्यवर्गशोधनमारभ्यते । आकाशः वायुरुभावपि नोत्पन्नौ । 'वायुश्चान्तरिक्षं च एतदमृतम्' इत्यमृतत्व-श्रुतेः । 'आत्मन आकाशस्संभूतः आकाशाद्वायुः' इति आकाशस्य वायोश्चोत्पत्ति श्रवणं गौणतया नेयं । छान्दोग्ये 'सदेव सोम्य इदमग्र आसीत् एकमेव' इति सृष्टिप्रकरणे 'तत्तेजो असृजत (छा ६-२-३) इति तेजस एव प्रथमं सृष्ट्युक्तेः 'आत्मन आकाशस्सम्भूत' इति तैत्तिरीयश्रुतिगतसंभूतपदं गौणम् इति प्राप्ते समाधिः ; 'येनाश्रुतं श्रुतमि'ति (छा ६-२-३) प्रतिज्ञाविरोधा-भावाय सर्वकार्यवर्गस्यापि ब्रह्मण एवोत्पत्तिसिद्धेः । अमृतत्वोक्तिः देवानां अमर्त्यत्ववदापेक्षिकी । छान्दोग्यस्थतेजसःप्राथम्यसृष्टिः आकाशस्योत्पत्तिं न निवा-रयति । अपि तु उत्पत्तिक्रममेव । अतश्च वायुराकाशश्च उत्पन्नावेव । ब्रह्मण एवोत्पत्त्यसंभवः श्रुत्युक्तः ।

---

## २ तेजोऽधिकरणं । (५५)—विशिष्टाद्वैतं

**१० तेजोऽतस्तथाह्याह** । (२२६)
**११ आपः** । (२२७)
**१२ पृथिवी** । (२२८)
**१३ अधिकाररूपशब्दान्तरेभ्यः** । (२२९)
**१४ तदभिध्यानादेव तु तल्लिङ्गात्सः** । (२३०)

१५ विपर्ययेण तु क्रमोऽत उपपद्यते च। (२३१)

१६ अन्तराविज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्। (२३२)

१७ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्। (२३३)

तत्तेज इत्यागमवाक् तु तस्य न खस्य जन्म प्रतिषेधतीह।
जनिक्रमादेव लयक्रमोपि ग्राह्यस्ततो ब्रह्मण एव सर्वम्॥
उत्पत्त्यभावस्सत एव दृष्टेः वायोश्च तस्माज्जनिरेव सिद्धा।
येन श्रुतेनाश्रुतमित्यतश्च सर्वं जगद्ब्रह्मजमेव वक्ति॥
ब्रह्मार्थका एव च सर्वशब्दाः कथं घटाद्यर्थविशेषबोधः।
गौणेन लोकेऽत्र घटादिबोधः शब्दस्य शक्तिश्च परात्मनीति॥

**अधिकरणार्थः**। 'आकाशाद्वायुः, वायोरग्निः, अग्नेरापः अद्भ्यः पृथिवी,' (तै आ १) इति भूतानां व्यवहितकारणत्वेऽपि तत्तच्छरीरकब्रह्मण एव भूतोत्पत्तिः वाच्या। छान्दोग्यस्थ श्रुतिप्रमाणादेव। 'एतस्माज्जायते प्राणः मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मु-२-१-३)इत्यादि श्रुतेश्च। सर्वेषां शब्दानां ब्रह्मार्थकत्वे लोके तेजआदिशब्दैः तत्तदर्थेषु व्यवहारः कथमिति चेत् ब्रह्मणि शक्त्या बोधनं, लोकेषु गौण-इति 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्' इति सूत्रेणोक्त इति सर्वं समञ्जसम्।

---

१ वियदधिकरणम् (६४) द्वैतम्

परात्मनश्च जीवानां भूतदैवेषु शोधनम्।
विरोधपरिहाराय तृतीये क्रियते पदि॥

१ ओं न वियदश्रुतेः। (२१९)

२ ओं अस्ति तु। (२२०)

३ ओं गौण्यसंभवात्। (२२१)

४ ओं शब्दाच्च । (२२२)

५ ओं स्याच्चैकस्य ब्रह्मशब्दवत् । (२२३)

६ ओं प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः । (२२४)

७ ओं यावद्विकारं तु विभागो लोकवत् । (२२५)

**आकाशोऽनादिरित्यादि श्रुतिर्गौणीति विश्रुता ।**
**ब्रह्मणोऽन्यस्य नित्यत्वे सृज्यं सर्वं न सिद्ध्यति ॥**
**यो विभागी विकारी सः आकाशोऽपि पृथक् पृथक् ।**
**तस्माद्विष्णोस्समुद्भूतं सर्वं जगदिति श्रुतम् ॥**

**अधिकरणार्थः** । 'आत्मन आकाशस्संभूतः' इति श्रुत्या आकाशस्य विष्णोरुत्पत्तिस्सिद्धा । 'अनादिर्वा अयमाकाशः' इति श्रुतिस्तु गौणी । ब्रह्मशब्दस्य परब्रह्मणि अन्यत्र च यथा वा प्रयोगः तद्वदाकाशस्योत्पत्तिश्रुतिरनुत्पत्तिश्रुतिश्च गौणमुख्यापेक्षया नेया । विकारिपदार्थस्यैव विभक्तत्वं प्रसिद्धं । अविभक्तस्य पृथक्सिद्धिरेव । तथा चाविभक्तः विष्णुरेव ।

'तद्विभागेन जायन्ते आकाशाद्याः पृथक् पृथक् ।
यो विभागी विकारस्सः सोऽविकारः परो हरिः ॥

इति विष्णोरेवाविभागित्वेन विकाराभाव उक्तः । अन्येषां विकार एव । ब्रह्मणो अन्यस्य नित्यत्वे 'इदं सर्वमसृजत' इति श्रुतिविरोधापत्तेश्च ।

---

## २ मातरिश्वाधिकरणं । (६५)—द्वैतम्

८ ओं एतेन मातरिश्वा व्याख्यातः । (२२६)

**पवते योऽयमनिलोऽनादिरित्यादि वेदतः ।**
**वायोर्जनिर्नेति चेन्न विष्णुर्नित्यो न चापरः ॥**

**अधिकरणार्थः** । 'वायुर्वाव चेतनः । वायुना हि सर्वाणि भूतानि विज्ञायन्ते' । वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नीयन्ते' । इत्यादि श्रुत्या वायोर्नित्यत्वे प्राप्ते, 'एतेन मातरिश्वा व्याख्यातः' ।

एतेन=अमुख्यनित्यत्वेन वायोरप्युत्पत्तिः सिद्धा।
"प्रतिव्यूह्य व्यूह्य चासौ अतीत्य च जनार्दनः।
धारयत्यनिशं देवो नित्यानन्दैकलक्षणः॥"
इति मुख्यनित्यत्वस्य परमात्मन्येवोपपत्तेः।

---

३ असंभवाधिकरणम्। (६६)—द्वैतम्

**९ ओं असंभवस्तु सतोऽनुपपत्तेः। (२२७)**
**असतस्तु सतो जन्म श्रुतौ दृष्टं तथा न च।**
**असदर्थो विष्णुरेव ब्रह्म वा असदित्यतः।**

**अधिकरणार्थः।** 'असद्वा इदमग्र आसीत्; ततो वै सदजायत।' 'असतस्सदजायत' इत्यादि श्रुत्या सतोऽप्युत्पत्तिरस्तु इति प्राप्ते सत अनुत्पत्तिरेव। अदृष्टत्वात्; अनुपपत्तेश्च। 'तद्वा एतत्परमाहुः, परतो हि तदुदीक्ष्यते' इति श्रुतेः असच्छब्दो ब्रह्मवाची। 'ब्रह्म वा असत् सद्भाव प्राणः' इति श्रुतेरसच्छब्दवाच्योऽपि ब्रह्मैवेति।

---

४ तेजोधिकरणम्। (६७)—द्वैतम्

**१० ओं तेजोऽतस्तथाह्याह। (२२)**
**तेजश्च विष्णोरुत्पन्नं कारणं च परं न हि।**
**वायोरग्निश्च संभूतः इति हेतुद्वयं न तु॥**

**अधिकरणार्थः।** तेजसः वायोरुत्पत्तिः श्रूयते। 'तत्तेजो असृजत' इति विष्णुसृज्यत्वं च वायोः श्रुतं। एकस्य तेजसः उभयकारणकत्वं न युक्तमिति प्राप्ते साक्षादुत्पत्तिस्थानं तेजसः विष्णुरेव। अमुख्या अन्येषां इति उभयकारणत्वं तेजसो नेति समाधिः।

---

५ अबधिकरणम्। (६८)—द्वैतम्

**११ ओं आपः। (२२९)**

अग्नेरापो भवन्तीति श्रुतिर्गौणीति बुद्ध्यताम् ।
तत्तेजोऽसृजतेत्यादि श्रुतिर्मुख्येति कीर्त्यते ॥

**अधिकरणार्थः** । 'ब्रह्मैवेदमग्र आसीत् तदपोऽसृजत' इति श्रुतेः अपां ब्रह्मणः सृष्टिरेव युक्ता ॥

---

६ पृथिव्यधिकरणम् । (७९)–द्वैतम्

१२ ओं पृथिव्यधिकाररूपशब्दान्तरादिभ्यः । (२३०)
ता अन्नमद्भ्यः पृथिवी त्रयीवाङ् न विरुध्यते ।
भूतकार्ष्ण्यश्रुतिभ्यश्च भूरेवान्नेन कथ्यते ॥

**अधिकरणार्थः**—'ता अन्नमसृजन्त', 'अद्भ्यः पृथिवी (तै ३-२-३) इति श्रुतिद्वयात् अद्भ्यः अन्नमुत्पन्नं; अद्भ्यः पृथिवी उत्पन्ना इति द्वयोश्श्रुत्योः विरोधात् अप्रामाण्यमिति प्राप्ते समाधानं 'पृथिवी' इत्यादि सूत्रम् । भूतप्रकरणात् भूमेः कृष्णवर्णत्वाच्च 'अद्भ्यः पृथिवी' इति श्रुतेश्च अन्नशब्देन पृथिव्येवोच्यतइति न विरोधः । अपौरुषेयवेदप्रमाणात् युक्तेश्च ॥

---

७ तदभिध्यानाधिकरणम् ।–द्वैतम् (७०)

१३ ओं तदभिध्यानादेव तु तल्लिङ्गात् सः । (२३१)
संहर्ता रुद्र एवेति विशान्तक इति श्रुतेः ।
विष्ण्वभिध्यानलिङ्गाच्च लयकर्ता हरिस्स्मृतः ॥

**अधिकरणार्थः** । 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः' (तै-१८०) इति श्रुत्या संहर्ता विष्णोः अन्य इति प्रतीयत इति पूर्वपक्षे समाधिः 'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति ।' तस्याभिध्यानाद्योजनात्तत्त्वभावात्' (श्वे-१-१०) इति श्रुत्या विष्णोरेव संहर्तृत्वं प्रतीयत इति । 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः' इति प्रमाणाच्च ॥



---

## ८ विपर्ययाधिकरणम् । (७१)—द्वैतम्

१४ ओं विपर्ययेण तु क्रमोऽत उपपद्यते च । (२३२)
**जनिक्रमस्य भूतानां प्रतिरूपो लये क्रमः ।
उपपत्तिश्च तस्येति चतुर्वेदशिखाऽवदत् ॥**

**अधिकरणार्थः** । 'कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च । यः क्रमात्व्युत्क्रमाच्चैव स हरिः पर उच्यते' इति श्रुत्या सृष्टिक्रमप्रतिरूपो लयक्रमः इति प्रतीयते ॥

---

## ९ अन्तराविज्ञानाधिकरणम् (७२)—द्वैतम्

१५ ओं अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्
१६ ओं चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।
**अन्तरा ज्ञानमनसोर्विपरीतः क्रमो भवेत् ।
श्रुतिं कांचित्समाश्रित्य स क्रमो न हि मुख्यतः ॥**

**अधिकरणार्थः** ।'प्राणान्मनो मनसश्च विज्ञानं' 'यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि' (का-२-३-१३) इति श्रुत्या मध्ये विज्ञानमनसोः विपरीतक्रमः प्रतिभातीति चेन्न; विशेषप्रमाणाभावात् । 'विज्ञानतत्वात्तु मनः, मनस्तत्वात्तु खादिकम्' इत्यादि प्रमाणात् चराचरव्यपेक्षया स विपरीतक्रमः ; न तु मुख्यत इति ॥

---

## ११ आत्माधिकरणम् । (७१)—अद्वैतम्

१७ नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः । (२३३)
**आत्मा न भोक्ता पर एकमत्या ज्ञानं च सर्वं भवतीति वेदात् ।
जनेर्निषेधात् पर एव चात्मा सर्वेषु भूतेषु विभाति गूढः ॥**

**अधिकरणार्थः** । 'स कारणं करणाधिपाधिपः (श्वे-६-९) इति श्रुत्या शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलानुभोक्ता कश्चिज्जीवोऽस्ति । स आकाशादिवत् ब्रह्मण उत्पद्यते न वेति संशयः । 'यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सह-

सशः प्रभवन्ते सरूपाः। तथाऽक्षरात् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु-२-१-१) इति श्रुत्या अग्नेः स्फुलिङ्गा इव परमात्मनः सरूपाः प्रजाः जायन्त इति अर्थावगतेः, एकस्मिन् विदितेसर्वं विदितं भवति इति प्रतिज्ञया च, 'तोयेन जीवान् विससर्ज भूम्याम्' (तै-२) इति श्रुत्या च, 'देवदत्तो जातो मृतः' इति लोकानुभवाच्च जीवस्योत्पत्तिरिति प्राप्ते समाधानं 'नात्माऽश्रुतेः' इत्यादि सूत्रेणोच्यते। 'अजो नित्यः' (कठ-२-१८) 'स वा एष महानज आत्मा' (बृ-४-४-२५) 'न जीवो म्रियते' (छा-६-११-३) 'तत्त्वमसि' (छा-६-८-७) अयमात्मा ब्रह्म' (बृ-२-५-१९) इत्यादिश्रुत्या भोक्ता जीवोऽपि ब्रह्मैव। ब्रह्मण एव अविद्यया जीवभावापत्तिः न तु स्वतः। 'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे-६-११) इतिश्रुत्या ब्रह्मण एव सर्वभूतान्तर्वर्तित्वोक्तेरिति ॥

---

## ३ आत्माधिकरणम्। (५६)–विशिष्टाद्वैतम्

### १८ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः। (२३४)

**तोयेन जीवान् विससर्ज भूम्यां जातो मृतोऽसाविति दर्शनाच्च।**
**तेजोऽप्पृथिव्यादिवदेव तत्र जीवस्य जन्मेति न चाश्रुतिस्सा ॥**
**न जायते वा म्रियते स जीवो नित्यः पुराणोऽज इति श्रुतिभ्यः।**
**अनादिकर्माप्तशरीरसङ्गावियोगनिष्ठा हि जनिर्मृतिश्च ॥**
**उत्पत्त्यभावेऽस्य कथं प्रतिज्ञा सिद्ध्येन्नचैवं चिदचित्तनुर्हि।**
**परात्मनश्शास्त्रत एव सिद्धा शरीरमत्यङ्गमतिश्च सिध्येत् ॥**

**अधिकरणार्थः।** जीवस्योत्पत्तिर्नवेति संशये, 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् विससर्ज भूम्यां' (तै-अम्भ) 'प्रजापतिः प्रजा असृजत' (यजु-२-अष्ट) इत्यादिश्रुत्या वियदादिवत् जीवस्योत्पत्तिरिति प्राप्ते, 'न जायते म्रियते वा विपश्चित्' (कठ-२-१८) 'नित्यो नित्यानां' (श्वे-६-१३) इत्यादि श्रुत्या जन्ममरणप्रतिषेधात् नित्यतया चोत्पत्तिर्नेति सिद्धान्तः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च जीवस्य तच्छरीरत्वादेवोपपद्यते। 'यस्यात्मा शरीरं यस्यविज्ञानं शरीर'मित्यादि श्रुतिस्तत्र मानमिति ॥

ननु—जीवो नाम कश्चिद्देहाद्व्यतिरिक्तो नास्त्येव। 'भस्मान्तं शरीरं', 'न प्रेत्य संज्ञास्ति' इत्यादि श्रुत्या मरणान्तरं कस्यचिदप्यभावएव श्रूयते। स्वभाव एव लोकप्रवृत्तिः। 'कालस्य भावो नियतिर्यदृच्छा' इति श्रुतौ स्वभावस्यापि कारणत्वोक्तेः। 'अथलोकायतं पृथिव्यापस्तेजोवायुरिति तत्वानि; तेभ्यश्चैतन्यं, किण्वादिभ्यो मदशक्तिवत्' इत्यारभ्य

'यावज्जीवं सुखं जीवेत् नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥'
'अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः।
देहस्थौल्यादियोगाच्च स एवात्मा न चापरः ॥'
'मम देहोऽयमित्युक्तिः संभवेदौपचारिकी।
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः ॥
'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥
'अग्निहोत्रं त्रयो वेदाः त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥'
'पशुश्चेन्निहतस्स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥'
'मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनं ॥
'स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥
यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
'यदि गच्छेत् परं लोकं देहादेव विनिर्गतः।
कस्माद्भूयो न चायाति बन्धुस्नेहसमाकुलः ॥
ततस्तु जीवनोपायो ब्राह्मणैर्विहितस्त्विह।

मृतानां प्रेतकार्याणि नत्वन्यद्विद्यते क्वचित् ॥
'त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः ।
जर्फरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥
अश्वस्यात्र हि शिश्नं तु पत्नीग्राह्यं प्रकीर्तितम् ।
भण्डैस्तद्वत् परं चैव ग्राह्यजातं प्रकीर्तितम् ।
मांसानां खादनं तद्वत् निशाचरसमीरितम् ॥'

इति बृहस्पतिनैव देहाद्व्यतिरिक्तस्य जीवस्य स्थितिर्नेत्युक्तेः,

भुङ्क्ते वेत्ति च देह एव स महाभूतानि तेष्वेव धीः
किण्वादौ मदशक्तिवत् क्रतुफलं भोक्ता न कोऽपि स्थितः ।
बन्धः किं पुनरप्युपैति म्रियनो न क्वापि जीवेत् सुखं
यावज्जीवति दैवतं नरपतिः न्यायोबलं केवलम् ॥

इति पूर्वाचार्योक्तेश्च देहाद्व्यतिरिक्तः जीवोनाम न कश्चित् सिद्ध्यतीति चेत्, अत्र विस्तरेण पूर्वाचार्यैरेव तदुक्तीनां वेदबाह्यत्वोक्तेः तन्मतमनादरणीयमेवेति नेह तन्यते । ममदेहः, ममज्ञानं, ममेदं धनं, ज्ञानी, सुखी, स्वर्गी इत्यादि व्यवहारादेव 'न हिंस्यात्सर्वाभूतानि', 'यजेत स्वर्गकामः', 'न परदारां गच्छेत्' नानृतं वदेत्' इत्यादि श्रुतिभ्यश्च देहाद्व्यतिरिक्तः जीवोऽन्य एवेति सुप्रसिद्धः । अत एव

'न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात्सुमत्यैकसिद्धस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥
देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी ॥'
'देहाक्षादि विलक्षणोऽणुरजडो नित्योऽहमर्थोऽमल-
ज्ञानानन्दमयोऽप्यतन्मय इव भ्राम्यत्यविद्यावृतः ।
पञ्चक्लेशविपाकपावकशिखालीढस्य तस्यात्मनो
मोक्षायात्मसमर्पणं भगवति प्रोक्तं त्रयीशेखरे ॥'
'प्रत्यक्त्वादुपलम्भतो मम सुखं भावीति मोक्षेच्छया
मुक्तब्रह्ममुमुक्षुवेदवचसा सुतोऽहमित्युक्तितः ।

मां नाज्ञासिषमित्यपि स्ववपुराद्यज्ञानमात्राश्रयात
स्वापप्राच्यनिजक्रियास्मरणतोऽप्यात्माहमर्थः स्थिरः ॥' इति

पूर्वाचार्यैरेव जीवलक्षणस्योक्तेः जीवोऽनादिकर्मसंबद्धः, परमात्माधीनो वर्तत एवेति जीवात्मनः अणुत्वे सति चेतनत्वं, स्वतश्शेषत्वे सति चेतनत्वम् इत्यादि लक्षणं चोक्तम्। सूत्रे आत्मेति एकवचनं तु 'जात्याख्यायां एकस्मिन् बहुवचनं अन्यतरस्यां' इति पाणिनिसूत्रेण जात्यभिप्रायम्। अतः आत्मानोऽनन्ता एव बद्धमुक्तनित्याश्चेति अलमतिप्रसङ्गेन ॥

---

१० आत्माधिकरणम्। (७३)–द्वैतम्

१७ नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः। (२३५)

**आत्मा तुच्छेनापिहित इति वाचाऽऽत्मनो लयः।**
**मैवं लयस्याश्रुतत्वाच्छन्नार्थो लय उच्यते॥**

अधिकरणार्थः। लयप्रकरणात विष्णोरपि 'तुच्छेनाभ्वपिहितं यदासीत्' इति श्रुत्या तुच्छे लय इति प्राप्ते 'स एतस्मिन् तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति। नैनं पश्यति कश्च न' इति पौत्रीश्रुत्या तमसि च्छन्नस्सन्निव भाति इति विष्णोः लयो नेति ॥

---

१२ ज्ञाधिकरणम्। (७२)—अद्वैतम्

१८ ज्ञोऽत एव। (२३४)

**जीवस्य चैतन्यमनित्यमत्र सुषुप्तिकाले तददर्शनान्न।**
**विज्ञानमानन्दमिति स्वरूपात् द्रष्टुश्च दृष्टेरविनाशितोक्तेः॥**

अधिकरणार्थः। आत्मा स्वाभाविकचैतन्यगुणको वा आगन्तुकचैतन्यगुणको वेति विशये, सुषुप्तिमूर्च्छादिकाले चैतन्यानुपलम्भात आगन्तुकमेव चैतन्यं आत्मन इति प्राप्ते समाधिः 'ज्ञोऽत एव' इति।

अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव'(बृ ४-५-१३) 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति (बृ ४-३-९) 'विज्ञानमानन्दं ब्रह्म' (बृ ३-९-२८) इत्यादिश्रुत्या आत्मनः नित्यमेव चैतन्यमिति ज्ञायते । सुषुप्त्यादिषु विषया-भावादेव चैतन्याप्रकाशः । 'यद्वैतन्न पश्यति' पश्यन्वैतन्न पश्यति (बृ ४-३-२३) इति सुषुप्तिविषयकश्रुत्या आत्मनः चैतन्यस्य सद्भाव एव ज्ञायत इति ॥

---

## (१३) उत्क्रान्त्यधिकरणं । (७३)—अद्वैतम्

१९ उत्क्रान्तिगत्यागतीनाम् । (२३५)
२० स्वात्मना चोत्तरयोः । (२३६)
२१ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात । (२३७)
२२ स्वशब्दोन्मानाभ्याञ्च । (२३८)
२३ अविरोधश्चन्दनवत (२६९)
२४ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि । (२४०)
२५ गुणाद्वा लोकवत । (२४१)
२६ व्यतिरेको गन्धवत । (२४२)
२७ तथा च दर्शयति । (२४३)
२८ पृथगुपदेशात । (२४४)
२९ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत । (२४५)
३० यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात । (२४६)
३१ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात । (२४७)
३२ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा । (२४८)

उत्क्रान्तिगत्यागतिभावसत्त्वादाराग्रमात्रोन्मितिदर्शनाच्च ।
हृदि स्थितेश्चाप्यणुरेव जीव इति प्रसक्ते विभुरेव जीवः ।
आकाशवत् सर्वगतश्च नित्यः 'वेदाहमेतं पुरुषं महान्तम् ।'
इत्यादिना ब्रह्म महद्धि जीवः बुद्ध्यादिसंगादणुतोपपन्ना ॥

**अधिकरणार्थः**। जीवः अणुपरिमाणः अथ मध्यमपरिमाणः, उत महापरिमाण इति विशये, "शरीरादुत्क्रामति", 'लोकात्पुनरैति' 'लोकाप्रयन्ति' इत्यादि श्रुतिभ्यः अणुपरिमाण इति प्राप्ते, 'आकाशवत् सर्वगतश्च नित्यः', 'सवा एष महानज आत्मा' इत्यादि श्रुत्या विभुरेव जीव इति सिद्धान्तः। अणुपरिमाणादि प्रतिपादकश्रुतयश्च उपाधिसंसर्गात् तउपपद्यन्त इति न कोऽपि दोषः। यावदात्मभावित्वाच्च बुद्ध्याद्युपाधिसंसर्गस्य। यदा 'तत्त्वमसि' इति ज्ञानेन सर्वाविद्यानाशो जीवस्य भवति तदा विभुः—इत्यर्थः।

---

### (४) ज्ञाधिकरणम्। (५७)—विशिष्टाद्वैतम्

१९ **ज्ञोत एव**। (२३५)
२० उत्क्रान्तिगत्यागतीनाम्। (२३६)
२१ स्वात्मना चोत्तरयोः। (२३७)
२२ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्। (२३८)
२३ स्वशब्दोन्मानाभ्यां च। (२३९)
२४ अविरोधश्चन्दनवत्। (२४०)
२५ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि। (२४१)
२६ गुणाद्वा लोकवत्। (२४२)
२७ व्यतिरेको गन्धवत्तथा च दर्शयति। (२४३)
२८ पृथगुपदेशात्। (२४४)
२९ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्। (२४५)
३० यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्। (२४६)
३१ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्। (२४७)
३२ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा। (२४८)

**स्वाभाविकज्ञानगुणो हि जीवो ज्ञाधातुरप्येष सकर्मकर्ता।**
**रत्नार्कवत् दीप्तियुतस्स नित्यः अगन्तुकज्ञानमिहोच्यते न॥**
**जीवोऽणुरात्मा हृदयस्थितत्वादुत्क्रान्तिगत्यागति सत्तया च।**
**जानात्ययं पूरुष इत्यतश्च ज्ञातैव सुप्तो भवतीति चोक्तम्॥**

अधिकरणार्थः। जीवः तार्किकोक्तरित्या आगन्तुकचैतन्यगुणकः उत ज्ञातृत्वमेवास्य स्वरूपमिति संशयः। ज्ञातृत्वमेव अस्य स्वरूपमिति सिद्धान्तः। 'विज्ञानं यज्ञं तनुते' 'न पश्यो मृत्युं पश्यति' 'जानात्येवायं पुरुषः' इत्यादि श्रुतेः। जीवश्च अणुरेव, उत्क्रान्तिगत्यागत्यादिश्रुतेः। 'निष्क्रामति, 'लोकात्प्रयन्ति' 'लोकात्पुनरेति' इत्यादिश्रुतिभ्यः। 'हृदि ह्ययमात्मा' इत्यादिश्रुत्या हृदयान्तर्वर्तित्वाच्च धर्मभूतज्ञानवत्त्वाच्च सुषुप्त्यादिकालेऽपि ज्ञानस्य सत्त्वाच्च अयमात्मा नित्यज्ञानस्वरूपः, धर्मभूतज्ञानवान्, अणुः, हृदयायतनश्च इति सिद्धम्॥

## (११) ज्ञाधिकरणम्। (७४)–द्वैतम्

१८ ओं ज्ञोऽत एव। (२३६)
१९ ओं युक्तेश्च। (२३७)

विष्णोरुत्पद्यते जीवः श्रुतेरेवावगम्यते।
उपाध्यपेक्षयोत्पत्तिः नित्यस्याप्युपपद्यते॥

अधिकरणार्थः। 'सर्व एते चिदात्मानो व्युच्चरन्ति' इति श्रुत्या जीवस्य विष्णोरुत्पत्तिरिति प्राप्ते, 'अत एव' शब्दादेव जीवाः, उत्पन्नाः मातृदेहात् निःसृत्य जाताः अनुत्पन्नाः अविनष्टाः, 'परं ज्योतिर्निविशन्ति' इत्यादि श्रुतेः नित्या एव जीवाः॥

## १२ उत्क्रान्त्यधिकरणम्। (७५)–द्वैतम्

२० ओं उत्क्रान्तिगत्यागतीनाम्। (२३८)
२१ ओं स्वात्मना चोत्तरयोः। (२३९)
२२ ओं नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्। (२४०)
२३ ओं स्वशब्दोन्मानाभ्यां च। (२४१)
२४ ओं अविरोधश्चन्दनवत्। (२४२)
२५ ओं अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि। (२४३)
२६ ओं गुणाद्वालोकवत्। (२४४)

**"आत्मानश्चेतना व्याप्ताः," 'अणुरात्मे'ति च श्रुतिः ।**
**न विरुद्धा विष्णुरेव व्यापकोऽन्येऽणवस्स्मृताः ॥**

**अधिकरणार्थः** । जीवानां अणुत्वं व्यापकत्वं च श्रूयते श्रुतिषु । एकस्याणुत्वं विभुत्वं च विरुद्धमेवेत्याशङ्क्य समाधानमाह—'उत्क्रान्तिगत्यागतीनाम्' इति । 'स गर्भी भवति स प्रसूयते' स कर्म कुरुते', 'सोऽस्माच्छरीरादुत्क्रम्य अमुं लोकमभिगच्छति' इत्यादिश्रुत्या जीवः अणुरेव । अस्वतन्त्रश्च, 'स एतेनैव स्वात्मना परेण इमं गर्भमनुप्रविशति' इत्यादि श्रुतेः । विष्णुप्रविष्टस्यैव कर्तृत्वोत्पत्त्यादिकं श्रूयते । परिमितत्वं जीवात्मन एव । आत्माऽमेयः परं ब्रह्म । अणुत्वेऽपि जीवस्य सर्वशरीरव्याप्तिः हरिचन्दनबिन्दुवत् हृदयायतनत्वेऽपि जीवस्य आलोकप्रकाशवत् चिद्गुणेन सर्वशरीरव्याप्तिरपि वा युज्यते ॥

ज्ञ इति सूत्रे जात्येकवचनम् । तथा च जीवा असंख्याकाः, गणशोऽप्यनन्ताः, विविधाश्च; मुक्तियोग्याः नित्यसंसारिणः, तमोयोग्याश्चेति । मुक्तियोग्याश्च पञ्चविधाः देवाः देवगन्धर्वाश्च, ऋषयः, पितरः चक्रवर्तिनः मनुष्योत्तमाश्च मनुष्यगन्धर्वाश्च । नित्यं सुखदुःखमिश्राः—नित्यसंसारिणः । तमोयोग्याश्च दैत्याः राक्षसाः पिशाचाः, मनुष्याधमाश्चेति चतुर्विधाः । सर्वे च जीवाः परस्परं भिन्नाः परमात्मना च भिन्नाः, संसारे मुक्तौ च तारतम्योपेताः । अत्र प्रमाणं तु—

"अनागता अतीताश्च यावन्तस्सहिताः क्षणाः ।
अतीतानागताश्चैव यावन्तः परमाणवः ॥
ततोऽप्यनन्तगुणिताः जीवानां राशयः पृथक् ।
परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः ॥"

इत्यादि तत्वनिर्णयोक्तम् ॥

---

## (१३) व्यतिरेकाधिकरणम् । (७६)—द्वैतम्

**२७ ओं व्यतिरेको गन्धवत्तथा च दर्शयति । (२४५)**

**बहुधात्मा श्रुतिर्या सा शक्त्याधिक्यात्तु युज्यते ।
आत्मानं बहुधा कृत्वा क्रीडते योगसंपदा ॥**

**अधिकरणार्थः** । 'शतधा सहस्रधा स गच्छति समुच्यते' इति पाराशर्यायणश्रुतौ जीवस्यैव बहुरूपत्वं दृश्यत इति चेन्न । व्यतिरेको गन्धवत् । यथा पुष्पात् गन्धः पृथक् गच्छति एवं अंशिनो जीवात् अंशाः पृथक् गच्छन्ति । 'आत्मानं बहुधाकृत्वा क्रीडते योगसंपदा' इति प्रमाणात् ईश्वरदत्तयोगशक्त्या जीवस्यापि अनेकधाभावो युक्त एव ॥

---

## १४ पृथगधिकरणम् । (७७)—द्वैतम्

२८ ओं **पृथगुपदेशात्** । (२४६)

२९ ओं तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् । (२४७)

**तत्त्वमस्यादिना ब्रह्मजीवाभेदः प्रतीयते ।
नैवं जीवात् परो विष्णुः पूर्णोऽपूर्णः परस्स्मृतः ॥
ज्ञानानन्दादयो ब्रह्मगुणाः जीवेषु सन्ति हि ।
गुणसादृश्यतो ब्रह्माभेदश्रुत्या प्रकीर्त्यते ॥**

**अधिकरणार्थः**। 'तत्त्वमसि' (छा ६-८-७) 'अहं ब्रह्मास्मि (बृ १-४-१०) इत्यादिना जीवस्य परमात्मना अभेदः प्रतीयते । 'द्वा सुपर्णा सयुजा सखायौ' (का-५-१) इत्यादिषु भेदश्च । कथं परिहार इति चेत्; 'पृथगुपदेशात्'इति समाधिः। 'भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परो जीवसंघो ह्यपूर्णः' इति कौशिकश्रुतेः पूर्णगुणात् विष्णोः भिन्न एव जीवः । ज्ञानानन्दादिब्रह्मगुणाः जीवस्यापि वर्तन्त इति तत्स्वरूपेण अभेदनिर्देशः ॥

---

## १५ यावदधिकरणम् । (७८)—द्वैतम्

३० ओं **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** । (२४८)

**नित्यानां पुण्यपापादिसबन्धौ मुक्तिरित्यपि ।
परो नित्यश्च जीवश्चेत्यादिश्रुत्या च युज्यते ॥**

**अधिकरणार्थः** । यथा परमात्मा नित्यः अनन्तश्च, एवं जीवः नित्यः अनन्तश्च । जीवस्य धातव एवानित्याः उत्पत्तिमरणभाजः सुखदुःखवन्तश्चेति । जीवस्य नित्यत्वेऽपि सुखदुःखादिकं उत्पत्यादिकं च युज्यत एव ॥

---

१६ पुंस्त्वाधिकरणम् । (७९)—द्वैतम्

३१ ओं पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् । (२४९)

३२ ओं नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा । (२५०)

**पुंस्त्वादि बाल्ये सत्त्वेऽपि यथा न व्यज्यते तथा ।**
**ज्ञानानन्दादिसत्त्वेऽपि मुक्तौ तच्च प्रकाशते ॥**
**देवा मनुष्या असुराः भिन्नव्यक्तय एव ते ।**
**सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ॥**
**विपरीतं तु दैत्यानां ज्ञानस्यैवं व्यवस्थितिः ।**
**विष्णुनाऽज्ञाननाशे सत्याविर्भवति तत्तथा ॥**

**अधिकरणार्थः** । जीवस्य 'आनन्दी भवति' इत्यादिना मुक्तौ आनन्दाविर्भावः श्रुतः । बद्धावस्थायामपि विज्ञानात्मा 'स आनन्दः, स बलः स ओजः' इति श्रूयते । कथं तदुपपत्तिः इति चेत्, 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति समाधिः । जीवानां ज्ञानानन्दादिसत्त्वेपि यथा पुंस्त्वस्त्रीत्वादीनां बाल्ये सत्वेपि यौवनावस्थायामेव प्रकाशः, मध्ये तिरोहितिः, तद्वत् ज्ञानानन्दादिकस्य मध्ये कर्मणा तिरोधिः मुक्तौ प्रकाशश्चोपपद्यते । देवासुरमनुष्याणां ज्ञानतारतम्य सत्त्वात् तत्तदानुगुण्येन ज्ञानानन्दादीनां संकोचविकासभावः युक्त एव ॥

'नित्यानन्दज्ञानबला देवा नैवं तु दानवाः ।
दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ॥
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।
विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः ॥"

इति प्रमाणात् ॥

---

## १४ कर्त्रधिकरणम्। (७४)—अद्वैतं

३३ कर्ता शास्त्रार्थवत्त्वात्। (२४९)

३४ विहारोपदेशात्। (२५०)

३५ उपादानात्। (२५१)

३६ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः। (२५२)

३७ उपलब्धिवदनियमः। (२६३)

४८ शक्तिविपर्ययात्। (२६४)

३९ समाध्यभावाच्च। (२६५)

**स्वे शरीरे यथाकामं वर्तते जुहुयदिति।**
**आत्मा द्रष्टव्य इत्यादि श्रुत्या जीवस्य कर्तृता॥**

**अधिकरणार्थः**। जीवस्य कर्तृत्वं अस्तिवा नवेति विशये, 'बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्र-५-९) 'स्वे शरीरे यथा कामं परिवर्तते'(बृ-२-१-१८) इत्यादि श्रुत्या 'यजेत स्वर्गकामः' 'जुहुयात स्वर्गकामः', दद्यादन्नकामः', इत्यादि शास्त्राणां वैयर्थ्या भावाय कर्तृत्वमपि अङ्गीकर्तव्यमिति॥

---

## १५ तक्षाधिकरणम्। (७५)—अद्वैतम्

**४० यथा च तक्षोभयथा। (२५६)**

**जीवस्य कर्तृतोपाधिसंबन्धान्न स्वभावतः।**
**वास्यादिमान् यथा तक्षा दुःखी तद्रहितस्सुखी॥**

**अधिकरणार्थः**। जीवस्य कर्तृत्वं न स्वाभाविकं। अपि तु बुद्ध्याद्युपाधिसंसर्गकृतम्। 'यत्र हि द्वैतमिव भवति तदितरइतरं पश्यति' (बृ-२-४१४) इत्यादिना जीवस्य स्वाभाविककर्तृताभ्युपगमे संसारित्वस्यैव प्राप्तेः अभिधानात॥

---

## ५ कर्त्रधिकरणम्। (५८)—विशिष्टाद्वैतं

**३३ कर्ता शास्त्रार्थवत्त्वात्। (२४९)**

३४ उपादानाद्विहारोपदेशाच्च । (२५०)
३५ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः । (२५१)
३६ उपलब्धिवदनियमः । (२५२)
३७ शक्तिविपर्ययात् । (२५३)
३८ समाध्यभावाच्च । (२५४)
३९ यथा च तक्षोभयथा । (२५५)

**जीवः कर्ता न वेत्यस्मिन् कर्ता जीवः प्रकीर्त्यते ।**
**न हिंस्याच्च यजेतेति शास्त्रसाफल्यसिद्धये ॥**

**अधिकरणार्थः ।**

"उभौ तौ न विज्ञानीतो नायं हन्ति न हन्यते ।"
"अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥"

इत्यादिना जीवस्य कर्तृत्वं नास्तीत्याक्षेपे समाधिः । आत्मैव कर्ता 'यजेत-स्वर्गकामः', 'मुमुक्षुर्ध्यायीत उपासीत' इत्यादि शास्त्रस्यार्थवत्त्वायाभ्युगम्यते । श्रूयमाणं गुणकर्तृत्वं बद्धदशायां सत्वरजस्तमोगुणसंबन्धात भवतीत्येताव-न्मात्रापेक्षयाप्युपपद्यते । वास्यादिकरणसंपन्नोऽपि तक्षा यदेच्छति तदा कार्यं करोति, इच्छाभावे न करोति च तद्वत् कर्ता जीवः इच्छासत्त्वे प्रवर्तते, इच्छाभावे निवर्तते ॥

---

## (१७) कर्तृत्वाधिकरणम् । (८०)—द्वैतम्

**३३ ओं कर्ता शास्त्रार्थवत्वात् ।** (२५१)
३४ ओं विहारोपदेशात । (२५२)
३५ ओं उपादानात । (२५३)
३६ ओं व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः । (२५४)
३७ ओं उपलब्धिवदनियमः । (२५५)
३८ ओं शक्तिविपर्ययात । (२५६)
३९ ओं समाध्यभावाच्च । (२५६)

४० ओं यथा च तक्षोभयथा । (२५८)

४१ ओं परात्तु तच्छ्रुतेः । (२५९)

४२ ओं कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः । (२३०)

**हरिस्स्वतन्त्रकर्ताऽन्ये परतन्त्राः प्रकीर्तिताः ।**
**शास्त्रावैय्यर्थ्यभावाय जीवानां कर्तृतेष्यते ॥**
**मोक्षेऽपि स्त्रीविहारादिदृष्ट्या कर्तृत्वमिष्यते ।**
**अत्यल्पशक्तयो जीवाः पूर्णशक्तिर्हरिस्स्मृतः ॥**
**यथा तक्षा कारयित्रा सह कर्ता प्रतीयते ।**
**कृतप्रयत्नापेक्षेण हरिणा प्रेरितास्तथा ॥**

**अधिकरणार्थः** । परमात्मन एव कर्तृत्वं नत्वन्यस्य इति पूर्वमुक्तम् । इदानीं जीवस्यापि कर्तृत्वमस्तीत्युच्यते । परमात्मशक्त्यधीनकर्तृत्वं जीवस्य बद्धदशायां विधिनिषेधशास्त्रावैयर्थ्याय । उपासनाधीनाच्च । मोक्षेऽपि स्त्रीभिस्सह विहारदर्शनाच्च । जीवस्याल्पशक्तिमत्त्वाच्च यथा तक्ष्णः कारयितृत्वनियतस्वकर्तृत्वं दृश्यते एवं जीवस्यापि कारयितृत्वविशिष्टकर्तृत्वं भवति । वैषम्यादिदोषपरिहाराय जीवगतपूर्वकर्मापेक्षया जीवान् विष्णुः प्रेरयतीत्यभ्युपगम्यते ॥

---

१६ **परायत्ताधिकरणम्** । (७६)–अद्वैतं

४१ **परात्तु तच्छ्रुतेः** । (२३७)

४२ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः । (२३८)

**अविद्याश्रितजीवस्य कर्तृत्वं पारमेश्वरम् ।**
**सदसत्कर्म जीवं च कारयत्येष आगमात् ॥**

**अधिकरणार्थः** । जीवो रागद्वेषादिदोषप्रयुक्तः साधनसामग्रीसंपन्नः स्वतन्त्रः कर्ता भवेदेव । किं ईश्वरेणेति चेन्न । 'एष हि एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्यः उन्निनीषते' (कौषी-३-८) इत्यादि श्रुत्या परमेश्वरप्रेरित एव जीवः कर्ता भवति ।" हिताहितसृष्ट्यादिदोषस्तु परमात्मनो न भवत्येव ।

अनाद्यविद्यातिमिरान्धजीवकृतप्रयत्नापेक्षस्सन् जीवानां शुभाशुभं ईश्वरो विधत्ते ॥

---

६ परायत्ताधिकरणम् । (५९)–विशिष्टाद्वैतम्

**४० परात्तु तच्छ्रुतेः । (२५६)**

४१ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः । (२५७)

**स्वातन्त्र्यकर्तृता नास्ति परायत्ता हि कर्तृता ।**
**अनादिकर्मसंबन्धात् स्वतन्त्र इव भासते ॥**

**अधिकरणार्थः** । जीवः पराधीनकर्ता । 'अन्तः प्रविष्टश्शास्ता जनानाम्' (तै-आरण-३-११-१०) 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठते' (गी-१८-६१) इत्यादि श्रुतिस्मृतिभिः ईश्वरनियाम्यत्वश्रवणात् । जीवकृतपूर्व-कर्मानुगुण जीवोद्योगमपेक्ष्य भगवान् करोतीति भगवतो न दोषः ॥

ननु, 'एकस्सन् बहुधाविचारः', 'एको देवस्सर्वभूतेषु गूढः' 'एकमेवा-द्वितीयम्' इत्यादि श्रुतिभ्यः एक एव ब्रह्मरूपं वस्तु, नान्यदिति प्रतीयते। तर्हि त्वं बहुधा सृष्ट्वा हत्वा च विहरसि इति चेत् भ्रान्ततुल्यो भवसि, 'नित्यो नित्यानां चेतनश्चेतनानां', 'अनृतेन प्रत्यूढाः' इत्यादि श्रुत्या अनादि कर्मसम्बद्धान् जीवान् तत्तत्कर्मानुगुणेन सृष्ट्यादिकं कृत्वा विहरसीति चेत् तर्हि त्वया किं फलं, कर्मैव फलप्रदमस्तु इति चेत्; स्वातन्त्र्यमेवोत्तरं। अयमर्थः श्रीलक्ष्मी नृसिंहस्तवे पूर्वभागे अस्माभिरुक्तः—

'एकस्सन् बहुधा विचार इति तु त्र्यन्तवाचोऽवदन्
तर्हि त्वं बहुधा विसृज्य नृहरे हंसीति वक्षीति चेत् ।
भ्रान्तस्त्वं भवसि स्वकर्मवशगान् सृष्ट्वा निहन्मीति चेत्
कर्मैवास्तु फलप्रदं जगति चेत् स्वातन्त्र्यमेवोत्तरम् ॥' इति ॥

(श्री-ल-स्तवे-श्लो ११८)

## १७ अंशाधिकरणम् । (७७)—अद्वैतं

४३ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत-एके । (२५९)
४४ मन्त्रवर्णाच्च । (२६०)
४५ अपि च स्मर्यते । (२६१)
४६ प्रकाशादिवन्नैवं परः । (२६२)
४७ स्मरन्ति च । (२६३)
४८ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् । (२६४)
४९ असन्ततेश्चाव्यतिकरः । (२६५)
५० आभास एव च । (२६६)
५१ अदृष्टानियमात् । (२६७)
५२ अभिसन्ध्यादिष्वपि चैवम् । (२६८)
५३ प्रदेशादिति चेन्नान्तर्भावात् । (२६९)

यथा स्फुलिङ्गो ज्वलनांश एवं ब्रह्मांशको जीव इह प्रसिद्धः ।
तद्दुःखसंप्राप्तिरिहेश्वरे नाविद्यावशात् सर्वमिहोपपन्नम् ॥
आभासा ब्रह्मणश्चेमे जलसूर्यकवत् स्मृताः ।
अत एवाव्यतिकरो जीवान्तरफलादिना ॥

अधिकरणार्थः । अत्र जीवेश्वरयोः किं राजभृत्यवत् परस्परसंबन्धः, उत अग्निविष्फुलिङ्गयोरिव संबन्धः; उत प्रेर्यप्रेरकयोरिव संबन्धः इति विशये, जीवः ईश्वरांश एव । अग्निविष्फुलिङ्गवत् । अंश इव अंश इति आभास एव अंश इत्युच्यते । निरवयवस्य ब्रह्मणः मुख्यांशासंभवादेव । 'एतमेव विदित्वा मुनिर्भवति' इत्यादिना भेदनिर्देशात् 'ब्रह्म दासाः' त्वं स्त्री त्वं पुमानसि' (श्वे-४-३)'नान्योऽतोऽस्ति द्रष्टा'(बृ ३-७-२३)'पादोऽस्य सर्वा भूतानि'(छा ३-१२-६) 'ममैवांशो जीवलोकः' (गी १५-७) इत्यादिना अभेदनिर्देशाच्च भेदाभेदबोधक-

श्रुतिनिर्वाहाय अंशांशिभावो भङ्गीक्रियते इत्यर्थः। अंशगतदुःखादिकं अंशिनि न प्रसज्यते। यथा सूर्यप्रकाशः सर्वत्रव्याप्तोऽपि अङ्गुल्याद्युपाधिसंबन्धात् ऋजुवक्रादिभावं भजमानोऽपि परमार्थतः तद्भावं नापद्यते; तद्वत् परमेश्वरोऽपि अंशगतदुःखादिकं न भजत इत्यर्थः। विधिनिषेधशास्त्राणि अविद्याकृतदेहसंबन्धात् उपपद्यन्ते। यथा अग्नेः एकत्वेऽपि श्मशानाग्निः परिह्रियते, वैदिकाग्निः परिगृह्यते, यथा भौमाः प्रदेशा अपि नरकलेवरादयो देशाः परिह्रियन्ते वज्रवैडूर्यादयः उपादीयन्ते, गवां मूत्रपुरीषं पवित्रतया परिगृह्यते महिषादीनां त्यज्यते, तद्वत्। इति॥

---

७ अंशाधिकरणम्। (६०)—विशिष्टाद्वैतं

४२ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके। (२५८)

४३ मन्त्रवर्णात्। (२५९)

४४ अपि स्मर्यते। (२६०)

४५ प्रकाशादिवत्तु नैवं परः। (२६१)

४६ स्मरन्ति च। (२६२)

४७ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्। (२६३)

४८ असन्ततेश्चाव्यतिकारः। (२६४)

४९ आभास एव च। (२६५)

५० अदृष्टानियमात्। (२६६)

५१ अभिसन्ध्यादिष्वपि चैवम्। (२६७)

५२ प्रदेशभेदादिति चेन्नान्तर्भावात्। (२६८)

सर्वे जीवा ब्रह्मणोंऽशाः 'ममैवांश' इति स्मृतेः।
'ब्रह्म दाशाः' 'तत्त्वमसी' त्यादिश्रुत्यविरोधतः॥
प्रभावतः प्रभा यद्वत् अग्नेर्ज्योत्स्ना यथा हि तौ।
अंशास्सर्वाणि भूतानि परोंऽशी समुदाहृतः॥

**अधिकरणार्थः** । जीवः परस्मात् अत्यन्तभिन्नः उत ब्रह्मांश इति संशये जीवः ब्रह्मांश एव । भेदाभेदबोधकश्रुतिनिर्देशात् । 'पादोऽस्य सर्वा भूतानि' 'तस्य उत्तमः पुरुषः' 'उत्तमः पुरुषस्त्वन्यः' इत्यादि श्रुतिस्मृतिनिर्देशात् ।

'एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा ।
परस्य ब्रह्मणश्शक्तिः तथेदमखिलं जगत् ॥'

'तत्सर्वं हरेस्तनुः' इत्यादि प्रमाणात् प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन च अंशांशिभावः जगद्ब्रह्मणोरिति निश्चीयते । इति ॥

---

## १८ अंशाधिकरणम् । (८१)–द्वैतम्

**४३ ओं अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके । (२६१)**

४४ ओं मन्त्रवर्णात् । (२६२)

४५ ओं अपि स्मर्यते । (२६३)

४६ ओं प्रकाशादिवन्नैवं परः । (२६४)

४७ ओं स्मरन्ति च । (२६५)

४८ ओं अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् । (२६६)

४९ ओं असंततेश्चाव्यतिकरः । (२६७)

५० ओं आभास एव च । (२६८)

**अंशी विष्णुः परे जीवाः अंशा एव प्रकीर्तिताः ।
"ब्रह्मैवेम इति श्रुत्या ह्यभेदइति चेत् न हि ॥
सर्वा भूतानि पादोऽस्य ममैवांश इति स्मृतेः ।
प्रतिबिंबांशको जीवः न साम्यं विष्णुना ततः ॥**

**अधिकरणार्थः** । जीवाः ब्रह्मणो अंशाः । यथा जलांशस्य अमृतसमुद्रस्य कालाग्नेः खद्योतस्य, यथा भिन्नप्रकारता तथैव ब्रह्मांशत्वेऽपि नैकप्रकारता । जीवानां प्रतिबिंबस्वरूपत्वाच्च विष्णोर्न साम्यं । इति ॥

---

## १९ अदृष्टाधिकरणं (८१)–द्वैतम्

५१ **ओं अदृष्टानियमात्।** (२६९)
५२ ओं अभिसन्ध्यादिष्वपि चैवम्। (२७०)
५३ ओं प्रदेशादिति चेन्नान्तर्भावात्। (२७१)

**अनादिविद्याकर्मादिवैचित्र्यात् जीवचित्रता।**
**जीवादृष्टापेक्षितत्वात् देशचित्रं न युज्यते॥**

**अधिकरणार्थः।** जीवानां प्रतिबिंबरूपत्वाभ्युपगमेऽपि जीवकर्मापेक्षया परस्परं वैचित्र्यं युज्यत एव। स्वर्गनरकभूम्यादि देशविशेषात् वैचित्र्यमिति तु न युज्यते वक्तुम्। देशवैचित्र्यपि अदृष्टमेव कारणमिति वक्तव्यत्वात् एकदेशस्थ-जीवानामपि वैचित्र्यदर्शनाच्च।

इति भारद्वाज कुलतिलकानां नवसाल्पुराधीशविद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां
**काळि. वङ्गीपुरं. रङ्गाचार्याणां** कृतिषु मतत्रयसारसंग्रहे
द्वितीयाध्याये तृतीयः पादः॥

---

# मतत्रय सारसंग्रहे द्वितीयाध्याये चतुर्थः पादः ॥

१ प्राणोत्पत्त्यधिकरणम् । (७८)—अद्वैतम्

१ तथा प्राणाः । (२७०)
२ गौण्यसंभवात् । (२७१)
३ तत्प्राक्छ्रुतेश्च । (२७२)
४ तत्पूर्वकत्वाद्वाचः । (२७३)

प्राणोत्पत्तिर्भवति वा न वेति विषये तथा ।
वियज्जनिवदेवैषां जनिमाहुस्त्रयीगिरः ॥
सिद्धान्तबोधकं सूत्रं "तथा प्राणा" इति श्रुतम् ।
सत्यपि व्यवधानेऽत्र खातिदेशो हि युज्यते ॥
पूर्वापराभ्यां सन्दंशात् सूत्रं राद्धान्तसाधकम् ।
पूर्वपक्षो बहिर्भूतः तथा सूत्रेषु दृश्यते ॥

अधिकरणार्थः । 'तदाहुः के ते ऋषयः इति प्राणा वा व ऋषयः' (शतपथ-५-१-१)इति सृष्टेः प्राक् प्राणानां सद्भावश्रवणात्, 'एवमेव एतस्मादात्मन स्सर्वे प्राणः' 'एतस्माज्जायते प्राणः' (मु-२-१-३)इत्यादौ प्राणानामुत्पत्तिश्रवणाच्च विशये आकाशादिवत् प्राणानामुत्पत्तिरिति अनेन 'तथा प्राणाः' इति सूत्रेणाति-दिश्यते । उत्सूत्रः पूर्वपक्षः, सिद्धान्तसूत्रमिदम् । मध्वभाष्येऽपि एतद्रीत्यैव वर्णितं । परभाष्ये तु 'तथा प्राणाः' इति पूर्वपक्षसूत्रत्वेन वर्णितम् । सिद्धान्तः स्वयुक्त्यैव साधितः । 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' इत्यादि सिद्धान्तसूत्राणि दृश्यन्ते । तेषु पूर्वपक्ष एव बहिर्भूतः । अपि च पूर्वस्मिन् पादे आकाशाद्युत्पत्तिरुच्यते । अत्रापि 'तथा प्राणाः' इत्यनन्तरमपि पूर्वोक्ताकाशा-दिविषयचिन्ता वर्तते । अतः पूर्वापरसाहचर्यात् सन्दंशन्यायाच्च 'तथा प्राणाः' इति सूत्रस्य आकाशादिवदिति अतिदेशसूत्रतया वर्णनं युक्तमिति ॥

---

## १ प्राणोत्पत्त्यधिकरणम् । (६१)—विशिष्टाद्वैतम्

१ तथा प्राणाः । (२६९)

२ गौण्यसंभवात् तत्प्राक्छ्रुतेश्च । (२७०)

३ तत्पूर्वकत्वाद्वाचः । (२७१)

आत्मोत्पत्तिर्यथा नास्ति प्राणोत्पत्तिस्तथैव न ।
मैवं श्रुतिविरोधाच्च प्रतिज्ञाहानिभीतितः ॥
नात्मेत्यतो नानुवृत्त्या तथा सूत्रं समर्थितम् ।
सिद्धान्तस्तु स्वयुक्त्यैव साधितश्श्रुतिवाक्यतः ॥

**अधिकरणार्थः** । इन्द्रियाणामुत्पत्तिरस्ति न वेति चिन्तायां, 'तथा प्राणाः' इति यथा आत्मोत्पत्तिर्न भवति तथा इन्द्रियोत्पत्तिर्न भवति, 'असद्वा इदमग्र आसीत्, तदाहुः किं तदासीदिति ऋषयो वा वत्ते अग्रे असदासीत् तदाहुः के ते ऋषयः इति प्राणावाव ऋषयः' (शतपथ-६-१-१) इति जगदुत्पत्तेः प्राक् इन्द्रियसद्भावश्रवणात् इति प्राप्ते—'एतस्माज्जायते प्राणः' (मु-२-१-३) इत्यादि-श्रुतेः सृष्टेः प्राक् इन्द्रियसत्त्वे एकविज्ञानप्रतिज्ञानुपपत्तेश्च इन्द्रियाणां उत्पत्ति-रेवेति सिद्धान्तः । यद्यपि प्राणशब्दवाच्यत्वं इन्द्रियाणामस्ति, तथाऽपि 'प्राणा वा व ऋषयः' इत्यत्र प्राणशब्देन परमात्मैवोच्यते । ऋषिशब्दसमभिव्याहारात् । ऋषिशब्दार्थश्च परमात्मैव । बहुवचनं तु पाशाधिकरणन्यायेन एकत्वविवक्षया साध्वेव । अस्मिन् शास्त्रे, पाणिनीयसूत्रेषु स्वरितेनाधिकारः(पा-१-३-११) इति सूत्रेण स्वरितत्व प्रतिज्ञया सूत्रस्थपदानुवृत्तितोऽप्यनन्वृत्तिप्रदर्शकसूत्राभावात् व्याख्या-याविशेषप्रतिपत्तिः न हि सन्देहादलक्षणं' इति महाभाष्यन्यायात् आवश्यक-पदानुवृत्तिविषये तत्तदाचार्यव्याख्यानमेव शरणमिति यथा न वियत् इत्यतः वियदादिवदर्थातिदेशः परमते, तथा नात्माश्रुतेरिति सूत्रवात् नेति पदार्थानु वर्तनेन व्याख्यानेऽपि न दोष इति ॥

---

## १ प्राणोत्पत्त्यधिकरणं । (८३)—द्वैतम्

१ ओं तथा प्राणाः । (२७२)
२ ओं गौण्यसंभवात् । (२७३)
३ ओं प्रतिज्ञानुपरोधाच्च । (२७४)

**उत्पत्तिरिन्द्रियाणां च गगनादिवदिष्यते ।**
**अनादित्वश्रुतिर्गौणी सर्वं सृष्टमिति श्रुतेः ॥**

**अधिकरणार्थः ।** युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोति अनेन पादेन । 'अथ प्राणा एवानादयः प्राणा नित्याः' इति श्रुत्या प्राणादीनामुत्पत्तिः नेति गम्यते । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु-४-३) इति प्रबलश्रुतेः, 'तथा प्राणाः' इति प्राणानां परमात्मनः उत्पत्तिरेवोच्यते आकाशादिवत् । अनादित्वश्रुतिस्तु सूक्ष्मरूपेण इन्द्रियाणां स्थित्या गौणी । इति ॥

---

## २ तत्प्रागधिकरणम् । (८४)—द्वैतम्

४ तत्प्राक् श्रुतेश्च । (२७५)

**इन्द्रियत्वेऽपि मनसोऽनादित्वान्न जनिर्भवेत् ।**
**पूर्वोत्पन्नं मन इति तथोक्तिर्नाजनित्वतः ॥**

**अधिकरणार्थः ।** मनस्सर्वेन्द्रियाणीति पूर्वं मनसः उत्पत्त्युक्तेः मनसोऽपि उत्पत्तिरेव । इति ॥

---

## ३ तत्पूर्वकत्वाधिकरणम् । (८५)—द्वैतम्

५ तत्पूर्वकत्वाद्वाचः । (२७६)

**वाग्वावेति श्रुतेर्वाचो नोत्पत्तिरिति चेन्नहि ।**
**वागिन्द्रियस्यापि जनिः यथैव मनसस्तथा ॥**

**अधिकरणार्थः ।** वागिन्द्रियमपि पूर्ववदुत्पन्नमेव । इति ॥

---

२ सप्तगत्यधिकरणम् । (७९)—अद्वैतम्

५ सप्त गतेर्विशेषितत्वाच्च । (२७४)
६ हस्तादयस्तु स्थितेऽतो नैवम् । (२७५)

**प्राणाश्च सप्त क्वचिदष्टधा नव क्वचिद्दशैकादश च त्रयोदश ।**
**एकादशैवात्र करादिसंश्रयात् न्यूनेऽधिके क्लिष्टतरा च कल्पना ॥**

अधिकरणार्थः । इन्द्रियाणां संख्या बहुधा श्रुतौ श्रुता । तथाऽपि एकादशैवेति निश्चीयते । 'दशेमे पुरुषे प्राणाः आत्मैकादशः' (बृ-३-९-४) इति श्रुतेः प्राबल्यात् ॥

---

२ सप्तगत्यधिकरणम् । (६२)—विशिष्टाद्वैतम्

४ सप्त गतेर्विशेषितत्वात् च । (२७२)
५ हस्तादयस्तु स्थितेऽतो नैवम् । (२७३)

**प्राणा हि लोकेषु चरन्ति सप्त जीवेन तेषां मृतिजन्मदृष्टेः ।**
**हस्तादिवत्साधनतास्मृतेश्च प्राणा इहैकादशसंश्रितास्ते ॥**

अधिकरणार्थः । 'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः । (गी-१३-५)' 'तैजसानीन्द्रियाण्याहुः देवा वैकारिका दश । एकादशं मनश्चात्र' (वि-पु-१-२-४७) इतिस्मृतेरिन्द्रियाणां संख्या एकादशैव । न्यूनाधिककल्पना विवक्षाभेदेन इति ॥

---

४ सप्तगत्यधिकरणम् । (८६)–द्वैतम्

६ ओं सप्त गतेर्विशेषितत्वाच्च । (२७७)
७ ओं हस्तादयस्तु स्थितेऽतो नैवम् । (२७८)

**ज्ञानेन्द्रियापक्षयैव सप्त प्राणा इति श्रुतिः ।**
**क्रियाविषयहस्तादीन्द्रियैर्द्वादश कथ्यते ॥**

अधिकरणार्थः । 'सप्त प्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः । एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम्' इति पुराणवचनात् द्वादशेन्द्रियाण्येव ॥

---

## ६ प्राणाणुत्वाधिकरणं । (८०)—अद्वैतं

७ अणवश्च । (२७६)

रन्ध्राद्देहेर्निर्गमनं यथा सा न दृश्यते प्राणगतिश्शरीरात् ।
प्राणास्तु सूक्ष्मा अत एव सिद्धाः व्यापित्वक्लृप्तिश्च निरर्थकैव ॥

अधिकरणार्थः प्राणानां सर्वशरीरव्यापित्वं न कल्प्यं । प्राणाः सूक्ष्माः परिच्छिन्नाश्च इति शास्त्रादवगम्यते ॥

---

## ३ प्राणाणुत्वाधिकरणम् । (६३)–विशिष्टाद्वैतम्

६ अणवश्च । (२७४)
७ श्रेष्ठश्च । (२७५)

प्राणाश्च सर्वेऽप्यणवःस्मृताः स्युरुत्क्रान्तिगत्यागतिदर्शनात्ते ।
प्राणा ह्यनन्ता इति वेदवाक् तु फलाय चोपास्तिविधिप्रयुक्ता ॥
श्रेष्ठस्य जन्माऽपि नभोवदेव ह्यानीतवातात्विति वेदवाचा ।
जनेरभावं प्रविशङ्क्य नेति वायुं विनाऽऽनीदिति तत् सदेव ॥

अधिकरणार्थः सर्वे प्राणाः अणवः उत्क्रान्त्यादिश्रवणात् । प्राणानन्त्यवाक् तु फलाय उपास्तिविधानार्था। श्रेष्ठप्राणोऽपि उत्पन्न एव ।'आनीदवातम्'इत्यत्र अवातमिति वायुं विना अस्तीत्युक्तया तद्ब्रह्मैव आनीदित्यनेनोच्यते, न तु मुख्यप्राण इति ॥ अन प्राणने इति धातोरत्र सत्तामात्रमर्थः ॥

---

## ५ अण्वधिकरणम्। (८७)-द्वैतम्

८ अणवश्च। (२७९)

प्राणाश्च सर्वेऽप्यणवः शक्त्या ग्रहणधारणे।
तद्यथा ह्यणुनश्चक्षसः प्रकाश इति श्रुतेः॥

अधिकरणार्थः 'तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्याततः', 'अणुभिः पश्यति' इत्यादिना प्राणानां अणुत्वं ज्ञायते। यथा अणुनः=स्वरूपतो अणुभूतस्य; चक्षसः = प्रकाशः, व्याततः = व्याप्तः; तथा जीवस्य प्रकाशो व्याततः। ततः जीवः अणुरेव भवति इति॥ अणुभिः पश्यति = ज्ञानेन्द्रियैः पश्यतीत्यर्थः॥

---

## ४ प्राणश्रैष्ठ्याधिकरणम्। (८१)—अद्वैतम्

८ श्रेष्ठश्च। (२७७)

आनीदवातं त्विति वेदवाचा वायोर्जनिर्नेति न युक्तमेतत्।
जनिश्च तस्यापि भवत्यवातं तत्रानिलाभावविशिष्टसत्तु॥

अधिकरणार्थः 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किञ्चनास' (ऋ-८-७-१७) इति ऋग्वेदे यजुर्वेदे च दृश्यते। तत्र मुख्यप्राणवायुना सह परमात्मा अस्तीति गम्यते। अन प्राणने इति धातोः आनीदिति निष्पन्नत्वात्। अतः मुख्यप्राणस्योत्पत्तिर्नेति प्राप्तम्। 'अप्राणो ह्यमनाःशुभ्रः' इति श्रुत्या प्राणाभावस्य स्पष्टतया प्रतीतेः मुख्यप्राणस्यापि जनिरस्ति। आनीदित्यत्र च अवातमिति वायुं विना आनीदित्यर्थस्य स्पष्टत्वाच्च। 'न वै शक्ष्यामः त्वदृते जीवितुं' (बृ-६-१-१३) इति श्रुत्या 'प्राणोवाव ज्येष्ठश्च' (छा-५-१-१) इति श्रुत्या च श्रेष्ठत्वं गुणाधिक्यात् सिद्धम्॥

---

## श्रेष्ठाधिकरणम् । (८८)—द्वैतम्

९ ओं श्रेष्ठश्च । (२८०)

ओं न वायुक्रिये पृथगुपदेशात् । (२८१)

**नैष प्राण उदेतीति श्रेष्ठप्राणजनिर्नहि ।**
**मुख्यप्राणः परस्माच्च जनिं प्राप्नोति मानतः ॥**

**अधिकरणार्थः** । 'आत्मतः एष प्राणो जायते' (ष·प्र·३·३) इति श्रुत्या श्रेष्ठप्राणस्य उत्पत्तिमत्त्वं सूक्ष्मत्वं च युक्तम् ॥

---

## ३ वायुक्रियाधिकरणं । (८२)–अद्वैतम्

९ न वायुक्रिये पृथगुपदेशात् । (२७८)

१० चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः । (२७९)

११ अकरणत्वाच्च न दोषस्तथा हि दर्शयति । (२८०)

१२ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते । (२८१)

**प्राणोऽपि वायुः किमुत क्रिया वा सवायुरेवाथ च तस्य वृत्तिः ।**
**प्राणस्य वायोश्च जनेः परस्मात् भेदेन निर्देशत एव तौ न ॥**
**श्रेष्ठत्वमस्यैव न चेतरेषां राज्ञो यथाऽमात्यवदस्वतन्त्रः ।**
**प्राणश्च जीवस्य तथोपकर्ता पञ्चप्रकारस्तत एव मुख्यः ॥**

**अधिकरणार्थः** वायुः पञ्चविधः प्राणापानादि भेदात् । मुख्यप्राणस्य वायोश्च पृथगुत्पत्तिश्रवणात् वायुश्च प्राणश्च भिन्नावेव सन्तौ जीवस्य उपकारं कुरुतः । यथा राज्ञः अमात्यः राजपरतन्त्रस्सन्नेव राज्याङ्गैस्सह उपकारं करोति तद्वत् मुख्यप्राणोऽपि अन्येन्द्रियैस्साकं जीवाधीनस्सन्नेव जीवस्य उपकरोति । मुख्यप्राणश्च पञ्चधाऽवस्थाय जीवस्य शरीरधारणादिकं करोतीति प्राणस्य श्रेष्ठत्वम् इति ॥

---

## ४ वायुक्रियाधिकरणम् (६४)–विशिष्टाद्वैतम्

८ न वायुक्रिये पृथगुपदेशात्। (२७६)
९ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः । (२७७)
(१०) अकरणत्वाच्च न दोषस्तथाहि दर्शयति। (२७८)
११ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते । (२७९)

**वायुक्रियायामथ वायुमात्रे प्रयोगसत्त्वात्किमिहाश्रितन्नु ।**
**प्राणो हि जीवात्मसमीपवर्ती पञ्चप्रकारोपकृतिं करोति ॥**

**अधिकरणार्थः** वायुप्राणयोः पृथक् जन्मोपदेशात् प्राणोऽपि अन्येन्द्रियाणीव जीवस्योपकरणमेव। जीवस्य शरीरेन्द्रियधारणादिना प्राणः पञ्चधाऽवस्थायोपकारं करोति। यथा कामादिवृत्तिभेदेऽपि मनसः एकत्वं, तथा प्राणस्य प्राणापानादिभेदसत्वेऽपि एकत्वं मुख्यत्वं च युज्यत एव ॥

---

## ७ चक्षुराद्यधिकरणम् (८३) द्वैतम्

११ ओं चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः। (२८२)
१२ ओं अकरणत्वाच्च न दोषस्तथा हि दर्शयति। (२८३)

**चक्षुरादिवदेवायं मुख्यः प्राणः परानुगः ।**
**इन्द्रियाणां च सर्वेषामुत्तमत्वमसाधनात् ॥**

**अधिकरणार्थः** चक्षुरादीन्द्रियाणि यथा परमात्माधीनानि तथा श्रेष्ठश्च मुख्यप्राणोऽपि परमात्माधीन एव। इतरेषां प्राणानां करणत्वात् मुख्यप्राणस्य अकरणत्वेपि उत्पत्तिर्युज्यते एव ॥

---

## ८ पञ्चवृत्त्यधिकरणम्। (९०)–द्वैतम्

१३ ओं पञ्चवृत्तिर्मनोवद्व्यपदिश्यते। (२८४)

मनोबुद्धिरहंकारः चित्तं चेतनया यथा।
पञ्चधा भवति प्राणः प्राणापानादिभेदतः॥

अधिकरणार्थः मुख्यप्राणोऽपि पञ्चधा भेदेन व्यपदिश्यते। यथा मनसः पञ्चविधो भेदः॥

---

६ श्रेष्ठाणुत्वाधिकरणम्। (८३)—अद्वैतम्

१३ अणुश्च। (२८२)

मुख्यप्राणस्य सूक्ष्मत्वं प्राणान्तरवदिष्यते।
हिरण्यगर्भप्राणात्मबोधिका विभुवेदवाक्॥

अधिकरणार्थः मुख्यप्राणश्चाणुरेव। अणुत्वं च न परमाणुतुल्यत्वं। पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्। मुख्यप्राणोऽपि सूक्ष्मः व्याप्तश्च। परिच्छिन्नत्वमात्रं प्राणस्य उत्क्रान्त्यादिना ज्ञायते। 'समोऽनेन सर्वेण' (बृ-१-३-२२) इत्यादि विभुत्ववादस्तु हैरण्यगर्भेण प्राणात्मनेति न विरोधः॥

---

५ श्रेष्ठाणुत्वाधिकरणम्। (६५)—विशिष्टाद्वैतम्

१२ अणुश्च। (२८०)

प्राणोऽनूत्क्रामतीत्यादि श्रवणादणुरेव सः।
प्राणिजातं तदायत्तमिति तद्विभुता स्तुतिः॥

अधिकरणार्थः 'सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' (बृ-६-४-२) 'सर्वं हीदं प्राणेनावृतं' (बृ-३-३) इत्यादि श्रुत्या श्रेष्ठप्राणो महापरिमाण इति शंकायां उत्क्रान्त्यादिश्रुतेः परिच्छिन्नत्वं निश्चितं। सर्वप्राणिजातस्य प्राणायत्तस्थितित्वेन प्राणस्तुतिपरं इतरश्रुतिवाक्यम्॥

---

अण्वधिकरणम्। (९१)–द्वैतम्।

१४ अणुश्च। (२८५)

मुख्यप्राणश्चाणुरेव प्राणोऽणुश्च महान् बहिः।
श्रुत्यैव ज्ञायते तस्मात् व्याप्तिस्तु स्तुतिबोधिका॥

**अधिकरणार्थः** मुख्यप्राणश्चाणुरेव। 'अन्तर्वाणुः बहिर्महान्' इति श्रुतेः। प्राणव्याप्तिश्रुतिस्तु स्तुतिपरैव॥

---

७ ज्योतिराद्यधिकरणम्। (८४)—अद्वैतम्

१४ ज्योतिराद्यधिष्ठनं तु तदामननात्। (२८३)

१५ प्राणवता शब्दात्। (२८४)

१६ तस्य च नित्यत्वात्। (२८५)

वागादिसर्वेन्द्रियजातमस्य स्वयं स्वशक्त्योपकृतिं करोति।
न देवताऽऽविष्टमिहेति तन्न वृषादियुक्तं शकटं यथा तत्॥
सप्राण एवात्मनि भोक्तृतोक्तेः क्वचित्सुषुप्तावभिमान्यदृष्टेः।
सप्राणजीवस्य तनौ नियत्या स्थितेश्च भोक्तृत्वमयुक्तमासाम्।

**अधिकरणार्थः** प्रकृताः प्राणाः स्वस्मै स्वकार्यं स्वशक्त्या कुर्वन्ति; उत अभिमानिदेवताविष्टिता एवेति विशये देवतानामेव अधिष्ठातृत्वमङ्गीकृत्य देवताधिष्ठितप्राणा एव कार्यं कुर्वन्तीति 'अग्निर्वाक् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐ-२-४) इत्यादि श्रुत्या निश्चीयते। यथा शकटादीनां वृषाद्यधिष्ठितानां कार्यकरणे सामर्थ्यं, तद्वत् अभिमानिदेवताविष्ठप्राणानामेव कार्यकरणे सामर्थ्यं। भोक्तृत्वं तु जीवस्यैवेति निश्चीयते।

---

## ६ ज्योतिराद्यधिकरणम्। (६६)—विशिष्टाद्वैतम्

**१३ ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्। (२८१)**
१४ तस्य च नित्यत्वात्। (२८२)

**जीवाश्च वागाद्यभिमानिदेवाः अध्यासते प्राणमिह स्वयं न।**
**परात्मसंकल्पविशेषयुक्ताः कुर्वन्ति ते कर्म निजं च सर्वं ॥**

**अधिकरणार्थः** प्राणानां देवताधिष्ठातृत्वं किं स्वायत्तं उत परायत्तमिति विशये परमात्मायत्तमेव अधिष्ठानम्; 'योऽग्नौ तिष्ठन्, यो वायौ तिष्ठन्' (बृ-५-७-५) इत्यादि श्रुतिभ्यः तेषां परमात्मनियाम्यत्वश्रवणात्। 'तदेवानुप्राविशत् (तै-आ-६-२, ३) इति परमात्मानुप्रवेशस्य नित्यत्वश्रुतेश्च ॥

---

## १० ज्योतिराद्यधिकरणम्। (९२)—द्वैतम्

**१५ ओं ज्योतिराद्यधिष्ठानं तु तदामननात्। (२८६)**
१६ ओं प्राणवता शब्दात्। (२८७)
१७ ओं तस्य च नित्यत्वात्। (२८८)

**करणत्वं चेन्द्रियाणां ब्रह्माधिष्ठितिसंयुतम्।**
**सेन्द्रियं जीवनिवहं विष्णुरेवाध्यतिष्ठति ॥**

**अधिकरणार्थः** प्राणाद्यधिष्ठितं ब्रह्मैव इन्द्रियैः प्रवर्तयति। 'यः प्राणे तिष्ठन्'िति विष्णोरेव प्राणेषु स्थित्युक्तेः। जीवकरणनां करणत्वं यदि स्यात् तर्हि जीवस्य कारणानि इन्द्रियाणि इति कथं युज्यत इति चेत्;

'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम्।
श्रोत्रादिभिः कारयति कारणानीत्यतो विदुः ॥' इति

प्रमाणात् विष्णोरेव मुख्यकारणत्वं। जीवकरणत्वं तु तदपेक्षया इति न विरोधः। जीवकरणसंबन्धस्य अनादिनित्यत्वात् जीवकरणत्वोक्तिश्च युज्यत एव ॥

---

## ८ इन्द्रियाधिकरणम्। (८५)—अद्वैतम्

१७ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्। (२८६)
१८ भेदश्रुतेः। (२८७)
१९ वैलक्षण्याच्च। (२८८)

**प्राणाश्चैकादशात्रापि प्राणवृत्तय एव ते।**
**प्राणात्तत्वान्तराण्येव वागादीनीति बुद्ध्यताम्॥**

**अधिकरणार्थः** किं मुख्यप्राणस्यैवेतरे प्राणाः वृत्तिभेदाः उत तत्वान्तराणीति विशये मुख्यप्राणव्यतिरिक्तानि एकादशेन्द्रियाणि तत्वान्तराण्येव। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु-२-१-३)इति मुख्यप्राणस्य इन्द्रियाणां च पृथगुत्पत्तिदर्शनात्॥

'मनस्सर्वेन्द्रियाणि च' इति मनसः इन्द्रियेभ्यः पृथगुत्पत्तिश्रवणेऽपि मनसः श्रुतिस्मृत्योः इन्द्रियत्वेन प्रसिद्धिदर्शनात् मनसः इन्द्रियत्वं युज्यते। प्राणस्य तु तथा नेति मुख्यप्रणादितरे इन्द्रियाण्येव। 'ते ह वाचमूचुः; आसन्यं प्राणमूचुः, मनो वाचं प्राणं तान्यात्मन्यकुरुत' (बृ-१-३-२) इत्यादि श्रुत्या वागादिभ्य प्राणस्य भेदव्यपदेशाच्च। वागादिषु इन्द्रियेषु जीवस्य सुषुप्तिकाले शक्तिर्न दृष्टा। मुख्यप्राणः एक एव जीवशरीरे जागर्त्ति। तस्माच्चान्येभ्यः मुख्यप्राणः श्रेष्ठ एव॥

---

## ७ इन्द्रियाधिकरणम्। (६७) विशिष्टाद्वैतम्

१५ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्। (२८३)
१६ भेदश्रुते वैलक्षण्याच्च। (२८४)

**श्रेष्ठप्राणातिरिक्तानि दश चैकं प्रकथ्यते।**
**इन्द्रियाणीति न प्राणः पृथगुत्पत्तिदर्शनात्॥**

**अधिकरणार्थः** किं प्राणशब्दवाच्यानि सर्वाण्यपीन्द्रियाणि उत श्रेष्ठप्राणव्यतिरिक्तानीति संशये श्रेष्ठप्राणव्यतिरिक्तान्येव इन्द्रियाणि। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु-२-१ ३) 'मनष्षष्ठानीन्द्रियाणि' (गी-१५-७) इत्यादिना श्रेष्ठप्राणव्यतिरिक्तस्यैव इन्द्रियशब्दवाच्यत्वं श्रूयते। सुषुप्तिकाले मुख्यप्राणस्यैव स्थितिदर्शनात् 'त एतस्यैव सर्वे रूपमभवन् तस्मादेव एतेनाख्यायन्ते' इति मुख्यप्राणस्यैव इतराणीन्द्रियाणि शरीराण्यभवन्नित्युक्तेश्च। शरीरेन्द्रियधारणरूपा उपकृतिः मुख्यप्राणाधीनेति तस्य मुख्यत्वं अनिन्द्रियत्वं चोपपद्यते ॥

---

## ११ इन्द्रियाधिकरणम्। (९३) द्वैतम्

**१८ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् (२८९)**
**१९ ओं भेदश्रुतेः। (२९०)**
**२० ओं वैलक्षण्याच्च। (२९१)**

**द्वादशानामिन्द्रियाणामन्यः प्राणो ह्यनिन्द्रियम्।**
**वृत्तिरात्मेच्छयाऽन्येषां पुरे जागर्त्ययं सदा ॥**

**अधिकरणार्थः** इन्द्रियाणि द्वादशैव। मुख्यप्राणस्तु अनिन्द्रियमेकं।
'श्रोत्रादीनि तु पञ्चैव तथा वागादि पञ्चकम्।
मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ॥
विषयद्रवणात्तेषां इन्द्रियत्वमुदाहृतम्।
तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः ॥'

इति प्रमाणात्, 'प्राणाग्नय एव एतस्मिन् पुरे जाग्रति' (ष-प्र-४-३) इति श्रुत्या प्राणस्यैव सुषुप्तिकाले शरीरधारणादिश्रवणात् प्राणस्य मुख्यत्वं अनिन्द्रियत्वं च॥

---

## ९ संज्ञामूर्तिक्लृप्त्यधिकरणम्। (८३)–अद्वैतम्

**२० संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्। (२८९)**

२१ मांसादिभौमं यथाशब्दमितरयोश्च। (२९०)
२२ वैशेष्यात्तु तद्वादस्तद्वादः। (२९१)

**यन्नामरूपादि विशेषसृष्टिः प्रतीयते जीवगतैव सेति।**
**चारेण राजेतिवदेव तन्न यद्देवताकर्तृकमत्र भाति॥**

**अधिकरणार्थः** 'अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि' (छा-६-३-२) इत्यत्र नामरूपसृष्टिः जीवकर्तृका उत परमेश्वरकर्तृकेति विशये 'चारेणाहं परसैन्यमनुप्रविश्य संकलयानि' इति प्रयोगे यथा वा परसैन्यसंकलनं चारकर्तृकं राज्ञः प्रेरयितृत्वम् तद्वत 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता' (छा-६-३-२) इति पूर्वत्र विद्यमानदेवता राजस्थानीया। 'अनेन जीवेने'ति चारस्थानीयो जीव इति जीवकर्तृकैव सृष्टिरिति प्राप्ते परमेश्वरकर्तृक इति सिद्धान्तः। 'व्याकरवाणि' इत्युत्तमपुरुषप्रयोगेण परमेश्वरस्यैव व्याकर्तृत्वं ज्ञायते। 'जीवेन' इत्येतत् समनन्तरस्थितेन 'प्रविश्य' इत्यनेन संबध्यते। 'व्याकरवाणि' इत्युत्तमपुरुषश्च परमेश्वर एव युज्यते। एतादृशप्रपञ्च-निर्माणे जीवस्य शक्तिर्नास्तीति। त्रिवृत्करणं परमेश्वरकर्तृकमेव। तदनन्तरं ब्रह्मादिसृष्टिरिति सिद्धान्तात॥

---

**८ संज्ञामूर्तिक्लृप्त्यधिकरणम्। (६८) विशिष्टाद्वैतम्**

**१७ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।** (२८५)
१८ मांसादिभौमं यथाशब्दमितरयोश्च। (२८६)
१९ वैशेष्यात्तु तद्वादस्तद्वादः। (२८७)

**'अनेन जीवेन' च सृष्टिरुक्ता हिरण्यगर्भोऽत्र स जीववाच्यः।**
**अण्डान्तसृष्टेरनु पद्मयोनिस्रष्टृत्वमायाति परोऽत्र जीवः॥**

**अधिकरणार्थः** नामरूपव्याकरणं जीवसमष्टिरूप हिरण्यगर्भस्य वा, हिरण्यगर्भशरीरस्य परब्रह्मण एव वेति विशये, 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतमेकैकां

करवाणि' (छा-६-३-२) इति श्रुतौ 'समानकर्तृकयोः पूर्वकाल' इति व्याकरण-सूत्रानुगुण्यात् परब्रह्मण एव सृष्टिः। अनेन जीवशरीरकेण मया इत्यर्थः। अण्डसृष्ट्युत्तरमेव चतुर्मुखस्य स्रष्टृत्वं भगवता प्रदीयत इति सिद्धान्तात् ॥

बाह्योक्तयुक्तिपरिहारमुखेन चात्र
स्थूणाप्रतिष्ठितिनयेन निजोक्तिदार्ढ्यम्।
चक्रेऽथ सञ्जयमुखे भगवान् महर्षिः
शार्ङ्गिन् स एव विवृतोऽत्र मया द्वितीये।

---

१२ संज्ञाधिकरणम्। (१४)—द्वैतम्

२१ ओं संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् (२९२)

नामरूपादि सृष्टिश्च हरेर्वा पद्मजस्य वा।
हरिरेव जगत्कर्ता ब्रह्माद्यास्तदवान्तराः ॥

अधिकरणार्थः नामरूपकॢप्तिः त्रिवृत्कुर्वतः विष्णोरेव। चतुर्मुखादीनां स्रष्टृत्वं तदवान्तरत्वादेव।

'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः।
एक एव यतस्स्रष्टा ब्रह्माद्यास्तदवान्तराः ॥' इति प्रमाणात् ॥

---

१३ मांसाधिकरणम्। (९५)—द्वैतम्

२२ ओं मांसादिभौमं यथाशब्दमितरयोश्च। (२९३)

२३ ओं वैशेष्यात्तु तद्वादस्तद्वादः। (२९४)

अद्भ्यो हीदमिति श्रुत्या जलमेव तनु र्भवेत्।
काठिन्यं द्रवमुष्णं च क्षित्यप्तेजः क्रमादिदम् ॥
त्रिवृत्कृतं हि सर्वं चेत् व्यवहारः कथं भवेत्।
यत्र यस्याधिकं क्लृप्तं तेन तेन तदिष्यते ॥

**अधिकरणार्थः** 'आपोवा मांसमस्थि च' इत्यादि श्रुत्या शरीरस्य भूतत्रयं कारणं उत पृथक पृथक् वा इति संशये, आपोहीदं सर्वमिति श्रुत्या जलमेकमेवेति प्राप्ते समुदितमेव कारणं 'पृथिवीशरोरम्' इत्यादि श्रुत्या पृथिवीभागो मांसम् अम्मयं तेजोमयं अन्नमयमिति व्यवहारः त्रिवृत्करणे यस्य यो भागः अधिको वर्तते तत्र अधिकभागेन व्यवहार इति । 'यत् कठिनं सा पृथिवी, यद्द्रवं तदापः, यदुष्णं तत्तेजः' इति श्रुत्या शरीरे मांसभागो भौम एव । न सर्वं शरीरमिति सर्वमुपपन्नम् ॥

द्वितीयाध्यायसंग्रहरूपं अणुभाष्यमत्र लिख्यते—

"श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः ।
निषेद्धुं शक्नुयुर्वेदान् नित्यत्वान्मानमुत्तमम् ॥
देवतावचनादापो वदन्तीत्यादिकं वचः ।
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ॥
असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ।
वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ॥
स्वातन्त्र्यात् सर्वकर्तृत्वात् नायुक्तं तद्वदेच्छ्रुतिः ।
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ॥
न तद्विरोधाद्वचनं वैदिकं शंक्यतां व्रजेत् ।
आकाशादि समस्तं च तज्जं तेनैव लीयते ॥
सोनुत्पत्ति लयः कर्ता जीवस्तद्वशगस्सदा ॥
तदाभासो हरिस्सर्वरूपेष्वपि समस्सदा ।
मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः ।
मुख्यप्राणवशे सर्वं सविष्णोर्वशगस्सदा ॥
सर्वदोषोज्झितस्तस्मात् भगवान् पुरुषोत्तमः ।
उक्ता गुणाश्चाविरुद्धाः तस्य वेदेन सर्वशः ॥" इति ॥

शार्ङ्गिन् मतत्रितयसारसमाह्वयेऽस्मिन्
ग्रन्थे द्वितीयमपि लक्षणमाप पूर्तिम् ।
निर्बाधनामकमिदं भवतः कटाक्षात्
शेषस्य पूर्तिविषये भवदंघ्रिमेमि ॥

इति भारद्वाजकुलतिलकानां 'विद्वन्मण्डल मण्डन', 'विद्यावारिधि'
बिरुदालंकृतानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां
**काळि. वङ्गीपुरं रङ्गाचार्याणां** कृतिषु
मतत्रयसारसंग्रहे द्वितीयाध्याये चतुर्थः पादः ॥

समाप्तश्चाध्यायः ॥

श्रीः

# मतत्रयसारसंग्रहे तृतीयाध्याये प्रथमः पादः ॥

देहाप्तितद्विरहदुःखसुखादिभाजां
संसारिणां विषयशोधनपूर्वमत्र ।
ब्रह्माप्तिसाधनगुणादिविचिन्तनादि
शार्ङ्गिन् तृतीयगतमित्यवदन्महर्षिः ॥

१ तदन्तरप्रतिपत्त्यधिकरणम् । (८७)–अद्वैतं

१ ओं तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ।
२ त्र्यात्मकत्वात्तु भूयस्त्वात् । (२९३)
३ प्राणगतेश्च । (२९४)
४ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् । (२९५)
५ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः । (२९६)
६ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः । (२९७)
७ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति । (२९८)

वैराग्यं परमेशानुग्रहस्सगुणबोधनम् ।
कर्मसन्यासशान्त्यादि तृतीयेऽस्मिन् विचार्यते ॥
तनुं विहायोत्क्रमणे स सूक्ष्मभूतानुषक्तो व्रजतीति युक्तम् ।
योऽग्न्यादिलीनश्रुतिरिन्द्रियाणां तदोपकारत्यजनार्थिका सा ॥
प्राणेन यातीति न भूतमन्यत् नैवं त्रिवृत्सर्वमिति श्रुतेश्च ।
देवान्नमाह श्रुतिरत्र जीवं नाश्नन्ति देवाः स हि नात्मवित्तु ॥

अधिकरणार्थः । अत्र पादे मुमुक्षोः वैराग्योत्पादनार्थं संसारगति-प्रभेदः चिन्त्यते । जीवः सेन्द्रियादिः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते'(बृ-४ ४-१४)इत्यादिना पूर्वशरीरं विहाय अन्यशरीरपरिग्रहसमये देहनिदानभूतसूक्ष्मैः

सम्परिष्वक्तः किं गच्छति, उत तद्रहित इति चिन्त्यते। असंपरिष्वक्तो यातीति पूर्वपक्षे प्राप्ते, परिष्वक्त एव गच्छतीति सूत्रकारो वक्ति। 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा-५-३-३)इति प्रश्नेन 'इति तु पञ्चम्यमाहुतावापः'(छा-५-९-१) इति प्रतिवचनेन च सभूतसूक्ष्म एव गच्छतीति गम्यते। श्रुतौ आप इत्युपलक्षणं इतरभूतानामपि। सर्वस्य त्रिवृत्कृतत्वात्। 'ते चन्द्रं प्राप्य अन्नं भवन्ति, तांस्तत्र देवाः यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति'(बृ-६-२-१६)इति श्रुत्या देवैः भक्ष्यमाणस्य जीवस्य पुनरप्यागतिर्नेति चेन्न। 'न ह वै देवा अश्नन्ति, न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति' इति (छा-३-६-१) श्रुत्या देवानां चर्वणादिव्यापारावबोधनात् 'न स वेद यथा पशुः एवं स देवानां' (बृ-१-४-१२)इति श्रुत्या अनात्मविदः देवानां पशुत्वेन बोधनमेव। अतः भूतसूक्ष्मसंपरिष्वक्तस्य एव गत्यागती इति निर्णीयते॥

---

१ तदन्तरप्रतिपत्त्यधिकरणम्। (६९)--विशिष्टाद्वैतम्

१ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्।
२ त्र्यात्मकत्वात्तु भूयस्त्वात्। (२८९)
३ प्राणगतेश्च। (२९०)
४ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्। (२९१)
५ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः। (२९२)
६ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः (२९३)
७ भाक्तं वा नात्मवित्त्वात्तथा हि दर्शयति। (२९४)

**जीवस्य सुखदुःखादि ब्रह्मणश्च सुखैकता।**
**उपासना च तच्छेषः तृतीयेऽत्र विचार्यते॥**
**देहान्तरं गच्छत आत्मनस्तु सूक्ष्मैश्च भूतैरनुषङ्गमेव।**
**वेत्थेति पञ्चाग्निकवाक्यमेव विविच्य वक्तीति विरम्यतेऽत्र॥**

**अधिकरणार्थः**। जीवस्य देहान्तरगमने तेजोऽबन्नरूपैः भूतसूक्ष्मैः अनुषक्तः स गच्छति उत नेति विचारे परिष्वक्त एव गच्छतीति सिद्धान्तः।

'मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥'

इत्यादि स्मृतिभ्यः॥

---

१ तदन्तरप्रतिपत्त्यधिकरणम्। (९६)—द्वैतम्

**१ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्। (२९५)**

**शरीरान्तर संप्राप्तौ भूतसक्तस्स गच्छति।**
**पञ्चाग्निविद्यावाक्ये सः प्रश्नपूर्वं प्रतीयते॥**

**अधिकरणार्थः** प्रायेण साधनविचारोऽयमध्यायः। मुमुक्षोः वैराग्योत्पादनार्थं जीवस्य गत्यादिचिन्तनमत्र क्रियते। भूतबन्धस्तु संसारः मुक्तिस्तेभ्यो विमोचनम्।' 'भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्॥' इति पुराणेश्रवणात् साधनभूतैः भूतसूक्ष्मैः जीवस्य उत्क्रान्तिकाले किं प्रयोजनमित्याक्षेपे समाधानं 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः' इति। जीवः देहान्तरप्रतिपत्तौ भूतपरिष्वक्त एव गच्छति; एवं पञ्चाग्निविद्यायामुक्तत्वात्॥

---

२ त्र्यात्मकाधिकरणम्। (९७)—द्वैतम्

**२ त्र्यात्मकत्वात्तु भूयस्त्वात्। (२९६)**

**अद्भिस्सह श्रुतिस्त्वत्र परभूतोपलक्षणम्।**
**त्र्यात्मकत्वात्तु भूयस्त्वादद्भिरित्युच्यते तथा॥**

**अधिकरणर्थः** 'आपः पुरुषवचसो भवन्ति' इति अद्भिस्सह जीवगमनं अपां भूयस्त्वात् उपपद्यते। अतः अब्शब्दः तेजःपृथिव्योरप्युपलक्षणम्॥

---

## ३ प्राणगत्यधिकरणम्। (९८)–द्वैतम्

३ ओं प्राणगतेश्च। (२९७)

प्राणा गच्छन्ति भूतैश्च भूतानि करणानि च।
न कदाचिद्वियुज्यन्ते भाल्लवेयश्रुतेरिति॥

अधिकरणार्थः भूतसूक्ष्मैस्सह इन्द्रियाण्यपि जीवमनुगच्छन्तीति॥

---

## ४ अग्न्यादिगत्यधिकरणम्। (९९)–द्वैतम्

४ ओं अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्। (२९८)

मृतस्य याति वागग्निं प्राणा भूतेन यान्ति तु।
'अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्॥'

अधिकरणार्थः प्राणानां जीवेन सह न गमनमिति 'अग्निं वागप्येति' इत्यादि श्रुत्या अवगम्यत इति चेन्न;

'मृतिकाले जहात्येनं प्राणा भूतानि पञ्च च।
भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः॥'

इति ब्रह्माण्डपुराणात् भागतः अधिदैवं गच्छन्ति; भागतो जीवेनसह गच्छन्तीति गम्यते। 'अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तं' इति प्रमाणात्।

---

## ५ प्रथमेऽश्रवणाधिकरणम्। (१००)–द्वैतम्

५ ओं प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः। (२९९)

देवाः श्रद्धां जुह्वतीति ह्यपां होमो हि कथ्यते।
आपः पुरुषवाच्या हि सर्वभूतानि तास्स्मृताः॥

अधिकरणार्थः 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्यत्र भूतानां होमादर्शनात् कथं भूतसूक्ष्मैः गच्छतीत्याक्षेपे, श्रद्धाशब्दस्य जलपरत्वात्, 'इति तु पञ्चम्यामापः पुरुषवचसो भवन्ती'ति, उपसंहारे च 'आपः' इति श्रवणात्

प्रथमाग्नावपि होम्यत्वेन श्रुतश्रद्धाशब्देन अब्सहित पुरुष एव लक्षणया विवक्षितः। तस्मात् 'अप्' पदं भूतोपलक्षणमित्युक्तत्वाच्च भूतसूक्ष्मैस्सह गमनं युक्तमेव ॥

---

### ६ अश्रुतत्वाधिकरणम्। (१०१)—द्वैतम्

**६ ओं अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः। (३००)**

**प्रत्यक्षमग्निवन्नेति भूतानां गमनं न हि।**
**भूतैर्गच्छति जीवश्च भूतैर्विचरति श्रुतेः ॥**

**अधिकरणार्थः** अग्न्यादिगतिरिव भूतगमनं प्रत्यक्षतः न श्रूयते इत्याक्षेपे समाधिः; "भूतैश्चरति भूतैर्विचरति' इति कौण्ठरव्यश्रुतौ यजमानेन सह भूतगमनं दृष्टमेव ॥

---

### ७ भाक्ताधिकरणम्। (१०२)—द्वैतम्

**७ ओं भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति। (३०१)**

**अपामसोमममृता अभूमश्रुतिरोधतः।**
**नायान्ति जीवा इति चेत् ज्ञानहीना प्रयान्ति वै ॥**

**अधिकरणार्थः** यागादिकर्तुः जीवस्य अमृतत्वप्रापकश्रुतिविरोधात् जीवस्य स्वर्गात् पुनरागमनं न युक्तमितिचेन्न। स्वर्गं प्राप्तस्य जीवस्य अमृतत्ववचनं गौणम्। 'नान्यः पन्था अयनाय विद्यते' इति श्रुत्या आत्मविद एव मुख्यामृतत्वप्राप्तिः। 'अस्य कर्म क्षीयते', कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति' इत्यादि श्रुत्या ज्ञानस्यैव मुक्तिसाधनत्वोक्तेः ॥

---

### २ कृतात्ययाधिकरणम्। (८८)—अद्वैतम्

**८ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च। (२९९)**

**९ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजनिः। (३००)**

**१० आनर्थक्यमिति चेन्न तदपेक्षत्वात्। (३०१)**

११ सुकृतदुष्कृते एवेति तु बादरिः। (३०२)

**अभुक्तकर्मशेषोऽयं जीवो गामवरोहति।**
**कर्मणे पुनरायाति यथेतं च तथान्यथा॥**

**अधिकरणार्थः** 'तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' (छा-५-१०-५) इत्यादि श्रुतौ विचार्यते। जीवाः भुक्तकर्माणः अवरोहन्ति, उत अननुभुक्त ईषत्कर्माणः अवरोहन्तीति विशये, यावत्कर्माऽनुभूय पुनर्निवर्तन्त इत्युक्तया अननुभुक्तकर्मणामभावात् निरनुशया एव अवरोहन्तीति प्राप्ते, 'कपूयचरणा कपूयां योनिमापद्येरन्, रमणीय चरणाः रमणीययोनि मापद्येरन्' इति श्रुत्या पुनर्जननहेतुभूताननुभुक्त ईषत्कर्मविशिष्टाएव यथागतं किंचिदन्यथा चावरोहन्तीति ज्ञायते॥

---

## २ कृतात्ययाधिकरणम्। (७०)–विशिष्टाद्वैतम्

८ **कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च।** (२९५)
९ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजनिः। (२९६)
१० आनर्थक्यमिति चेन्न तदपेक्षत्वात्। (२९७)
११ सुकृतदुष्कृते एवेति तु बादरिः। (२९८)

**कुत्सिताः कुत्सितां योनिं रमणीयाश्च साधुताम्।**
**गच्छन्तीति श्रुतेर्जीवाः यान्ति सानुशयाः क्षितिम्॥**

**अधिकरणार्थः** 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरैति अस्मै लोकाय कर्मणे।' (बृ-४-४-६) इति श्रुत्या स्वर्गादौ फलमनुभूय पुनरागच्छतीति श्रुतेरनुशयरहित एवागच्छतीति गम्यते इति चेन्न। 'तद्य इह रमणीयचरणा अभ्याशः' इत्यादिना किञ्चित् भुक्तशिष्टकर्माणएव अवरोहन्तीति ज्ञायते। 'ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं' इत्यादिना अननुभुक्तकर्मशेषः कश्चन अस्तीत्येव दर्शनाच्च॥

---

## ८ कृतात्ययाधिकरणम्। (१०३)–द्वैतम्

**८ ओं कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्। (३०२)**

**भुक्तकर्माऽपि जीवोऽयं पुनश्शेषेण कर्मणा।**
**फलं भोक्तुं सानुशयः भुवमायाति नित्यशः ॥**

**अधिकरणार्थः** 'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते।' इति श्रुतेः भुक्तशेषानुशयवानेव आगच्छति। एवं द्वित्रावर्तनेषु अशेषकर्मसमाप्तिः स्यादिति चेन्न। 'पुन कर्म कुरुते' इति आगतस्य पुनः कर्मसंपादनोक्तेः। अल्पकर्मानुभवेन कर्मसमाप्तिर्न स्यात्।

'आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु
दशावराणां देहानां कारणानि करोत्ययम्।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ॥'

इत्यादि स्मृतेश्च अनुशयवानेवायाति ॥

---

## ९ यथेताधिकरणम्। (१०४)–द्वैतम्

**९ ओं यथेतमनेवं च। (३०३)**

**स्वर्गं यथा गच्छतीतः पथा तेनान्यथापि च।**
**पुनरायाति भोक्ता स चन्द्रवाय्वादि मार्गतः ॥**

**अधिकरणार्थः** जीवाः यथा परलोकं गच्छन्ति तथा पुनरायान्ति। प्रत्यागमनकाले मार्गान्तरेण किंचिदन्यथा चायान्ति ॥

---

## १० चरणाधिकरणम्। (१०५)–द्वैतम्

**१० ओं चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः। (३०४)**

११ ओं आनर्थक्यमिति चेन्न तदपेक्षत्वात्। (३०५)

१२ ओं सुकृतदुष्कृते एवेति तु बादरिः। (३०६)

सत्कर्मकर्ता सद्योनिं कपूयः कुत्सितामपि ।
चरणार्थश्च कर्मैव चरणेनोपलक्षितम् ॥

**अधिकरणार्थः** 'रमणीयचरणाः रमणीयां योनिमापद्येरन्' इत्यादौ चरणशब्दः न केवलाचारपरः, किन्तु यज्ञादिकर्मपर इति पुनरागमनहेत्वपि कर्मैवेति ॥

---

### ३ अनिष्टादिकार्यधिकरणम् । (८९)—अद्वैतम्

१२ अनिष्टादिकारिणामपि च श्रुतम् । (३०३)
१३ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् । (३०४)
१४ स्मरन्ति च । (३०५)
१५ अपि च सप्त । (३०६)
१६ तत्रापि च तद्व्यापारादविरोधः । (३०७)
१७ विद्याकर्मणोरिति तु प्रकृतत्वात् । (३०८)
१८ न तृतीये तथोपलब्धेः । (३०९)
१९ स्मर्यतेऽपि च लोके । (३१०)
२० दर्शनाच्च । (३११)
२१ तृतीयशब्दावरोधस्संशोकजस्य । (३१२)

यज्ञादिकर्मरहितेष्वपि चन्द्रसंगो गच्छन्ति चन्द्रमसमेव च तेऽपि सर्वे ।
मैवं स्मृतिर्ज्ञानिन एव दैवी ह्यन्था तु कर्मिण इति श्रुतिरेव वक्ति ॥
चन्द्राप्त्यभावेऽपि च पापकर्तुः पञ्चाग्निसंगत्यनपेक्षमेव ।
जन्मापि सिद्धं तत एव धृष्टद्युम्नादयोऽयोनिभवाः प्रसिद्धाः ॥

**अधिकरणार्थः** यागादि कर्तारः चन्द्रमसं गच्छन्ति । यागाद्य कर्तारः न गच्छन्तीति वक्तुं न शक्यते। 'ये वै के चास्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ १-२) इति सर्वेषां चन्द्रप्राप्तिदर्शनात् पञ्चमाहुत्यनपेक्षया देहारम्भाभावाच्च चन्द्रप्राप्तिस्सर्वेषामेवेति चेन्न, पापकृतः यमाज्ञया रौरवादि-

नरकाननुभूय मार्गान्तरेण पुनरागच्छन्ति कर्म कर्तुं। देहारम्भाय पापकृतां चन्द्रप्राप्तिरनावश्यकी। धृष्टद्युम्नादीनां सीताप्रभृतीनां च पञ्चमाहुत्यनपेक्षया उत्पत्तिदर्शनात्। देवयानपितृयाणे विद्यानिष्ठकर्मनिष्ठयोरेवेति पापकृतां तादृशमार्गेण गमनमेव नास्तीति पापिनां चन्द्रप्राप्तिर्नास्ति ॥

---

३ अनिष्टादिकार्यधिकरणम्। (७१)–विशिष्टाद्वैतं

१२ अनिष्टादिकारिणामपि च श्रुतम्। (२९९)

१३ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्। (३००)

१४ स्मरन्ति च। (३०१)

१५ अपि सप्त। (३०२)

१६ तत्रापि तद्व्यापारादविरोधः। (३०३)

१७ विद्याकर्मणोरिति तु प्रकृतत्वात्। (३०४)

१८ न तृतीये तथोपलब्धेः। (३०५)

१९ स्मर्यतेऽपि च लोके। (३०६)

२० दर्शनाच्च। (३०७)

२१ तृतीयशब्दावरोधस्संशोकजस्य। (३०८)

**अनिष्टकर्तुश्च हिमांशुसङ्गो न विद्यते चेज्जनिरेव न स्यात्।**
**अयोनिजा द्रोणमुखाः प्रसिद्धाः पञ्चाग्न्यपेक्षारहिताश्च कीटाः ॥**
**यद्देवयानं पितृयाणमन्यत् विद्यावतः कर्मिण एतदित्थम्।**
**तृतीयमार्गस्थितपापिनैव लोको न संपूर्यत इत्यतश्च ॥**

अधिकरणार्थः। विहितकर्माकर्तारः निषिद्धकर्मकर्तारश्च मार्गान्तरेण यमानुज्ञया रौरवाद्यनुभूय पुनरवरोहन्ति। तेषां चन्द्रप्राप्त्यभावेऽपि पञ्चमाहुत्यनपेक्षया तत्कर्माण्येव देहारम्भाय प्रभवन्ति। तेषां 'अथैतयोः पथोर्न कतरेण च' इत्यारभ्य 'तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा-५-८-१०) इति देवयान पितृयाण गमनाभावदर्शनात्। द्रोणद्रौपद्यादीनामिव पापिनामपि पञ्चमाहुत्यनपेक्षयैव शरीरोत्पत्तिर्ज्ञायत एव ॥

अत एव श्रुतावपि 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति; अण्डजं जीवजं उद्भिज्ज'(छा-६-३-१)मिति। उद्भिज्जशब्देन स्वेदजउद्भिज्जयोः पञ्चमाहुत्यनपेक्षया देहारम्भो भवतीति श्रुतं। अत एव द्रोण-कृप-मान्धातृ-वेन धृष्टद्युम्न-सीता-द्रौपदीप्रभृतीनां देहारम्भाय कारणापेक्षैव नेति पुराणादिषु दृश्यते। स्थावरात् अरणीतः शुकाचार्यस्योत्पत्तिरपि श्रूयते। प्रायिकी रेतोपेक्षा देहारम्भायेतिभावः। मेघध्वनिश्रवणेन बलाका गर्भं धत्ते। वृक्षाग्रस्थित चमरपृच्छध्वनिना कूपान्तःस्थकूर्मः गर्भं धत्ते। (चमरपृच्छ=அணில்—Squirrel) अत एव ज्योतिश्शास्त्रे अण्डजाः जरायुजाः स्वेदजाः औद्भिज्जा इति चतुर्धा विभागं कृत्वा चतुरशीतिलक्षयोनयः प्रजास्सन्तीति

"जलजा नवलक्षं तु स्थावरं विंशलक्षकम्।
त्रिंशल्लक्षाणि पशवः चतुर्लक्षं तु मानवाः॥
जलजा नवलक्षं च स्थलजा लक्षविंशतिः।
क्रिमिकं रुद्र संख्याकं पक्षिणो दशलक्षकम्॥
त्रिंशल्लक्षकमब्जाश्च * चतुर्लक्षं तु मानवाः।
ब्रह्मयोनिशतं गत्वा देवत्वमाप्ते गच्छति॥
मनुष्याणां शतायुष्यं वृक्षाणां च सहस्रकम्।
द्वात्रिंशत्तु तुरङ्गाणां गजानां विंशतिश्शतम्॥
व्याघ्राणां च चतुष्षष्टिः काकव्याल सहस्रकम्।
भल्लूकानां वानराणां मण्डूकानां शतत्रयम्॥
विंशद्वर्षं विहङ्गानां वर्षमेकं पिपीलिका।
गर्दभानां चतुर्विंशत अजानां च तथा दश॥
शुनां द्वादशवर्षाणि मृगाणां सप्तविंशतिः॥
चतुश्शतमुलकानां पिङ्गलानां शतत्रयम्॥
मद्गूनां सप्तवर्षाणि मार्जाराणां तथा दश।
चतुर्विंशतिर्गोमहिषि जम्बूकाष्षोडशस्तथा॥

* अब्जाश्च=पशवश्च॥

माक्षिका नवमासं च उष्ट्राणां शतसंख्यकः ।
चतुश्शतं राक्षसानां सूकरा विंशतिस्तथा ॥
कुक्कुटा षट् च वर्षाणि मत्स्यानामयुतं तथा ॥"

इति चतुर्विधाः जीवाः तेषां च जातिसंख्या, तेषां आयुष्यं च स्पष्टमुक्तम् ॥

---

११ अनिष्टादिकार्यधिकरणम् । (१०६)–द्वैतम्

**१२ ओं अनिष्टादिकारिणामपि च श्रुतम् । (२०७)**

१३ ओं संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् । (२०८)

१४ ओं स्मरन्ति च । (२०९)

**पापिनश्च कृतान्तस्य वश्या लोकान्तरं गताः ।**
**तत्रानुभूय कष्टानि तमसि प्रपतन्ति ते ॥**

**अधिकरणार्थः ।** परलोकगमनागमने पुण्यकृतामिव अनिष्टादिकारिणामपि भवतः । परलोके यमकृतदण्डनादिकं अनुभूय महातमसि निमग्ना वर्तन्ते ॥

---

सप्तनरकाधिकरणम् । (१०७)–द्वैतम्

**ओं अपि सप्त । (२१०)**

**रौरवादीन् सप्त लोकान् गत्वा भुक्त्वा पुनर्भुवम् ।**
**कष्टायैवावरोहन्ति पापिनश्शास्त्रमानतः ॥**

**अधिकरणार्थः**

रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि च ॥
तामिस्रश्चांधतामिस्रो द्वौ नित्यौ संप्रकीर्तितौ ।
इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ॥

इति शास्त्रात् पापिनामपि आरोहावरोहौ भवत एव ॥

---

## १३ तत्त्रप्यधिकरणम् । (१०८)—द्वैतं

**१७ ओं तत्रापि च तद्व्यापारादविरोधः । (३११)**

**सर्वत्र विष्णोर्वासश्चेत् एतेषु नरकेषु सः ।**
**प्रभुत्वाच्च नियन्तृत्वात् अदुःखी प्रेरयत्यसौ ॥**

**अधिकरणार्थः** विष्णोः सर्वत्र स्थित्युक्तेः नरकेऽपि भोगार्थं वासो भवतु इत्याक्षेपे समाधानम्, नरकेऽपि अदुःखी गुणपूर्णः प्रेरितैव वर्तते ।

'नरकेऽपि वसन्नीशः नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेः भोग इत्यभिधीयते ।
नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः ॥"

इत्यादि प्रमाणात् ॥

---

## १४ विद्याधिकरणम् । (१०९)—द्वैतम्

**१८ ओं विद्याकर्मणोरिति प्रकृतत्वात् । (३१२)**

**अथैतयोः पथोर्नेति विद्यया कर्मणापिवा ।**
**जीवः स्वतन्त्रो यात्येव तृतीयमितरस्य तु ॥**

**अधिकरणार्थः** 'अथैतयोः पथोर्न कतरेण....एतत्तृतीयं स्थानं' इति विद्यानिष्ठस्य सत्कर्मिणश्च देवयानस्य पितृयाणस्य च गमनं स्वतन्त्रमेव । तदितरसामान्यजीवानां तृतीयं स्थानं युक्तमेवेत्यर्थः ॥

---

## १५ नतृतीयधिकरणम् । (११०)—द्वैतम्

**१९ ओं न तृतीये तथोपलब्धेः (३१३)**
२० ओं स्मर्यतेऽपि च लोके । (३१४)
२१ ओं दर्शनाच्च । (३१५)
२२ ओं तृतीये शब्दावरोधः संशोकजस्य । (३१६)

२३ ओं स्मरणाच्च । (३१७)

**यत्र दुःखं सुखं तत्र महातमसि संभवेत् ।**
**अन्धे तमसि लेशोऽपि सुखस्य न च युज्यते ॥**

**अधिकरणार्थः** । जीवस्य तृतीयमार्गेण अवाक् गतौ सत्यां दुःखमेव न सुखम् । 'तिर्यक्षु नरके चैव सुखलेशो विधीयते । नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन' इति प्रमाणात् ॥

---

४ **साभाव्यापत्त्यधिकरणम्** । (९०)—**अद्वैतम्**

२२ **साभाव्यापत्तिरुपपत्तेः** । (३१३)

**अवरोहन् सानुशयः गगनादिसमानताम् ।**
**आप्नुवन्ति तदैक्यं न तथा तदुपपद्यते ॥**

**अधिकरणार्थः** 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशं आकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवत्यभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति' (छा-५-१०-५) इत्यादिना अवरोहतः जीवस्य आकाशादिभावापत्तिरुच्यते । सा च तदैक्यं वा तत्साम्यं वेति विशये, तत्साम्यापत्तिरेवेति सिद्धान्तः । न तदैक्यापत्तिः । अन्यस्य अन्यथाभावानुपपत्तेः गौण्या वृत्त्या तत्साम्यापत्तिरेवेति ॥

---

४ **तत्स्वाभाव्यापत्त्यधिकरणम्** । (७२) **विशिष्टाद्वैतम्**

२४ **तत्स्वाभाव्यापत्तिरुपपत्तेः** । (३०९)

**क्षीणे पुण्ये मर्त्यलोकं प्रविष्टाः मध्ये मार्गे खादिसाम्यं भजन्ते ।**
**भोगाभावादन्तरिक्षादिभावं नैते जीवा यान्ति तत्रोपपत्तेः ॥**

**अधिकरणार्थः** 'वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति' इत्यादिनाश्रुता अवरोहतः जीवस्य धूमादिभावापत्तिः किं तद्रूपापत्तिर्वा तत्साम्या-

पत्तिर्वेति संशये, तत्सादृश्यापत्तिरेव लक्षणया स्वीक्रियते। तद्भावापत्तिश्च धूमादौ जीवस्य सुखदुःखभोगाभावात न युज्यते ॥

---

## तत्स्वाभाव्यापत्त्यधिकरणम्। (१११)—द्वैतम्

२४ ओं तत्स्वाभाव्यापत्तिरुपपत्तेः। (३१८)

**धूमादिभावो जीवानां एकदेशाप्तिरेव सः।**
**न परस्य परो भावः युज्यते तत्स्थितौ स्थितिः॥**

**अधिकरणार्थः** जीवस्य भूलोकप्राप्तिकाले धूमादि प्रवेशः श्रूयते 'धूमो भूत्वा अभ्रं भवति' इत्यादिना। तत्र धूमाद्यापत्तिः ऐक्यं वा एकदेशो वेति विशये,

"एकदेशस्वभावेन वागभेदापि युज्यते।
यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि॥"

इत्यादिना धूमादिभावः, धूमादिगतौ एतद्गमनं, धूमादि स्थितौ एतत्स्थितिः, इत्यर्थौ वा, साम्यापत्तिर्वा एकदेशस्वभावेन ; न तु ऐक्यमित्यर्थः ॥

---

## ५ नातिचिराधिकरणम्। (९१)—अद्वैतम्

२४ नातिचिरेण विशेषात्। (३१४)

**जीवस्य खादि संप्राप्तौ स्वल्पकालस्थितिर्मता।**
**प्राग्व्रीह्यादेः कष्टतरनिर्गमादि श्रुतेरिति॥**

**अधिकरणार्थः** व्रीह्यादिप्रतिपत्तेःप्राक् आकाशादि प्राप्तौ च कर्मिणः जीवस्य तत्र तत्र दीर्घकालस्थितिर्वा स्वल्पकालस्थितिर्वेति विशये, 'अतो वै खलु दुर्निष्प्रपतरम्' (छा-५-१०-६) इति श्रुत्या 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति व्याकरणसूत्रेण व्रीह्यादिभावानन्तरं कृच्छ्रनिष्क्रमणस्योक्तेः ततः पूर्वनिष्क्रमणं स्वल्पकालावसेयमिति गम्यते ॥

---

### ५ नातिचिराधिकरणम्। (७३)–विशिष्टाद्वैतम्

२३ नातिचिरेण विशेषात्। (३१०)

खादिभावं प्राप्तजीवः निष्कामत्यचिरात्ततः।
व्रीह्यादिभावसंप्राप्तौ चिरमित्यवगम्यते ॥

**अधिकरणार्थः** कर्मिणः अवरोहसमये आकाशादिप्राप्तौ स्वल्पकालं स्थितिः; व्रीह्यादिप्राप्तौ विलम्बेन स्थितिरित्यवगम्यते ॥

---

### ७ नातिचिराधिकरणम्। (११२)–द्वैतम्

२५ ओं नातिचिरेण विशेषात्। (३१९)

जीवस्य खादिसंप्राप्तिः कल्पान्तमपि संभवेत्।
साधुजन्मप्राप्तिरूपविशेषान्नातिदीर्घता ॥

**अधिकरणार्थः** 'रमणीयचरणाः रमणीयां योनिमापद्यन्ते' इति विशेषश्रुत्या प्रत्यवरोहतः जीवस्य आकाशादि बहुस्थानगमनेऽपि कदाचित् कल्पान्तमपि तत्र तत्र स्थितिः स्यादिति नाशङ्कनीयम्।

'स्वर्गाल्लोकादर्वाक् प्राप्तो वत्सरात् पूर्वमेव तु।
मातुश्शरीरमाप्नोति पर्यटन् यत्र तत्र च ॥'

इति प्रमाणात् नातिचिरेण निष्क्रमणमिति गम्यते ॥

---

### ६ अन्याधिष्ठिताधिकरणम्। (९२)–अद्वैतम्

२५ अन्याधिष्ठितेषु पूर्ववदभिलापात्। (३१५)
२६ अशुद्धमिति चेन्न शब्दात्। (३१६)
२७ रेतसिग्योगोऽथ। (६१७)
२८ योनेश्शरीरम्। (३१८)

दुष्कर्मसंप्राप्त यवादि देहे जीवे पुनर्जीवयुतिर्न युक्ता।
संश्लेषमात्रं न तु भोग इष्टः भोगाप्तिबीजं न च कर्म तत्र ॥

**यागादि कर्मापि सपापमेव व्रीह्यादि भावेषु तदेव चेन्न।**
**यत्कर्म यज्ञार्थमिहातनोति श्रेयस्करं तत् सकलं च कर्म ॥**

**अधिकरणार्थः** अनुशयवतां जीवानां व्रीह्यादि भावः उक्तः- 'त इह व्रीहियवा ओषधिवनस्पतयः तिलामाषा इति जायन्ते, (५·१०-६) इत्यादिना। तत्र यवादिभावः संश्लेषमात्रं उत यवादि कृत सुखदुःखानुभवो वेति विशये, 'जायन्ते' इति श्रुतेः जीवान्तराधिष्ठित व्रीह्यादौ अनुप्रविश्य तद्गतसुखदुःखादिभाज एव भवितुमर्हन्तीति न संश्लेषमात्रमेवेति पूर्वपक्षे संश्लेषमात्रमेवेति सिद्धान्तः। न तु तद्गत सुखदुःखभाक्त्वादिकं। तादृशकर्मणः अनुभूतत्वात। यद्यपि इष्टादिकारिणः यागादिकं पशुहिंसापूर्वकमेव कुर्वन्ति। प्रधानयागफलभूत स्वर्गस्य अनुभवेऽपि पशुहिंसाफलस्य अननुभूतत्वात् तत्फलमेव व्रीह्यादिभाव इति वक्तुं शक्यं; तथापि 'तस्माद्यज्ञे वधोऽवधः।' 'अहिंसन् सर्व भूतानि अन्यत्र तीर्थेभ्यः'' इत्युपनिषदा च, 'न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिस्सुगेभिः यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवस्सविता दधातु' इत्यादिना उत्सर्गापवादन्यायात यज्ञकर्मणि दोषस्यैवाभावात हिंसाया एवाभावात दोषो नेति सिद्धान्तात ॥

---

### १६ अन्याधिष्ठिताधिकरणं (७४)—विशिष्टाद्वैतम्

**२४ अन्याधिष्ठिते पूर्ववदभिलापात्। (३११)**
२५ अशुद्धमिति चेन्न शब्दात। (३१२)
२६ रेतास्सिग्योगोऽथ। (३१३)
२७ योनेश्शरीरम्। (३१४)

**व्रीह्यधिष्टित जीवेऽस्मिन् श्लिष्यत्यात्मान्तरः क्वचित्।**
**तद्भावापत्तिबीजं तु कर्म पुण्यकृतो न हि ॥**

**अधिकरणार्थः** 'मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इत्यादिना जीवान्तराधिष्ठितान् व्रीह्यादीन् अनुशयिनो

जीवाः आश्लिष्यन्ति; न तु तत्तच्छरीराः । भोगायतनभूत शरीरप्राप्तिनिदानभूत-कर्माभावादेव । अग्नीषोमीयादि हिंसा न हिंसैव । अपि तु रोगिणः भैषज्यमिव साधुकर्मैव । 'पशुना यजेत' इत्यादि विधिविषयव्यतिरक्तैव 'न हिंस्यात्' इति विधिरित्यर्थात् ॥

---

१८ अन्याधिकरणम् । (११३)—द्वैतम्

२६ ओं अन्याधिष्ठिते पूर्ववदभिलापात् । (३२०)

२७ ओं अशुद्धमिति चेन्न शब्दात् । (३२१)

**इष्टादिकारिणो व्रीहियवमाषादिना गताः ।**
**न दुःखसुखभाजस्ते संश्लिष्टा एव निर्गताः ॥**

**अधिकरणार्थः** । व्रीह्यादिप्राप्तिः यागफलं अनिष्टमिति पूर्वपक्षे समाधानमाह; 'अन्याधिष्ठिते पूर्ववदभिलापात्' इति । स्थावरजन्मप्राप्त जीवान्तराधिष्ठिते जीवान्तःप्रवेशः केवलम्, न तु तत्र भोगः ।

स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः ।
अभुंजंस्तु क्रमेणैव देहमाप्नोति कालतः ॥"

इति वराहपुराणात् व्रीह्यादिप्रवेशकाले भोगाभाव एव । 'वेदोक्तया हिंसया तु नैवानर्थः कथंचन' इति प्रमाणात् इष्टादिकारिणः पापमेव नहि ॥

---

१९ रेतोऽधिकरणम् । (११४)—द्वैतम्

२८ ओं रेतस्सिग्योगोऽथ । (३२२)

**स्वर्गादवाग्गतो रेतः सिञ्चतीति श्रुतिस्तु यः ।**
**रेतस्सिञ्चं प्रविश्याथ मातरं प्रविशेदिति ॥**

**अधिकरणार्थः** । 'अवरोहन् मातुरुदरं व्रजेत' इति वचनं च रेतस्सिञ्चति' इति वचनं च कथमविरुद्धं भवेत् इति चेत्; रेतस्सिक्शरीरं प्रविश्य अनन्तरं मातुरुदरं प्रविशति इति श्रुत्यन्तरात् ज्ञायते इति न विरोधः ॥

---

## २० योनेश्शरीराधिकरणम् । (११५)—द्वैतम्

### २९ ओं योनेश्शरीरम् । (३०३)

**प्रथमं पितृदेहे स्यात् मातृयोनावनन्तरम् ।**
**स्थावरत्वमनुप्राप्य पुरुषं मातरं तथा ॥**

**अधिकरणार्थः** । अवरोहन् जीवः प्रथमं स्थावरशरीरं प्राप्तः अनन्तरं पुरुषशरीरं प्राप्तः अनन्तरं, स्त्रीशरीरं, ततो यथाक्रमं जायते ।

"स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा।
गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च ॥"

इत्यादि प्रमाणात स्थावरादिजन्मप्राप्तिः अवरोहतां जीवानां; स्थास्नुषु शुकादयः पुरुषे मान्धातृमुखाः, प्रमदायां आस्तिकप्रभृतयः, जरत्कार्वाद्यनुग्रहात । केचित गर्भे पूर्वसिद्धमेव शरीरं भजन्ते । बहिः द्रुपदादयः पितृसापेक्षाः । स्थानान्तरे धृष्टद्युम्नादयः पित्रादिनिरपेक्षाः, इति ज्ञातव्यम् ॥

अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः ।
अभ्राभिमानिरूपं तु ज्ञानिप्राप्यं यतो भवेत् ॥

इति छान्दोग्यभाष्यात अवरोहतां जीवानामभ्रादिस्थितिरेवेत्यर्थः, पञ्चमाहुत्य-पेक्षानिर्बन्धः प्राण्युत्पत्तेः नास्तीति तात्पर्यम् ॥

योनिद्वारेण देहं च प्राप्नोति प्रायशो नरः ।
विशेषकारणादेव विशेषाज्जनिरिष्यते ॥
सामान्यजननं चैव नृणां सामान्यहेतुतः ।"

इति न्यायविवरणप्रमाणात,

"बीजपूरुषयोनीनां संगातिनियमोज्झितिम् ।
अथशब्देन भगवानाह कारणतश्च ताम् ॥"

इत्यनुव्याख्यानाच्च देहारम्भस्य कारणसापेक्षा सामान्येति ज्ञायते ॥

---

इति मतत्रयसारसंग्रहे तृतीयाध्याये प्रथमः पादः ॥

---

श्रीः

# मतत्रयसारसंग्रहे

## तृतीयाध्याये द्वितीयः पादः ॥

### १ सन्ध्याधिकरणम्। (९३)–अद्वैतम्

१ सन्ध्ये सृष्टिराह हि। (३१९)
२ निर्मातारं चैके पुत्रादयश्च। (३२०)
३ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। (३२१)
४ सूचकश्च हि श्रुतेराचक्षते च तद्विदः। (३२२)
५ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ। (३२३)
६ देहयोगाद्वासोऽपि। (३२४)

**स्वप्ने रथादिसृष्टिश्च परमार्था नचेष्यते।**
**निखिलस्याप्रकाशेन मिथ्याभूता प्रकीर्तिता ॥**
**शुभाशुभद्योतकोपि वस्तु मिथ्यैव बाधनात्।**
**ब्रह्माभेदेऽपि जीवस्य ह्यविद्यावशतोऽस्ति सः ॥**

**अधिकरणार्थः** जीवस्य स्वप्नाद्यवस्थाभेदः प्रपंच्यते। 'स यत्र प्रस्वपिति' इत्यारभ्य 'अथ रथान् रथयोगान् पथस्सृजते' (बृ-४-३-१०) इत्यादौ जीवस्य स्वप्ने जातं सर्वं पारमार्थिकं वा मायामात्रं वेति विशये, मायामात्रमेवेति सिद्धान्तः। पारमार्थिकत्वे वस्तुजातस्य स्वप्नदृष्टस्य प्रबोधकाले कृत्स्नाभिव्य-व्यक्त्यभावात् मिथ्याभूतमेवेति ॥

---

### १ सन्ध्याधिकरणम्। (७५)–विशिष्टाद्वैतम्

१ सन्ध्ये सृष्टिराह हि। (३१९)
२ निर्मातारञ्चैके पुत्रादयश्च। (३२०)
३ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। (३२१)

४ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ । (३२२)
५ देहयोगाद्वासोऽपि । (३२३)
६ सूचकश्च हि श्रुतेराचक्षते च तद्विदः । (३२४)

**रथादिसृष्टिश्च सुषुप्तिकाले भोगाय जीवस्य परात्मसृष्टा ।**
**सौषुप्तिकज्ञानमपीह तथ्यं शुभाशुभद्योतकता ततश्च ॥**

**अधिकरणार्थः** । 'अथ रथान् रथयोगान् पथस्सृजते; न तत्रानन्दा मुदः प्रमुदो भवन्ति' इत्यादिका जीवस्य स्वप्नविषया श्रुतिः । तत्र सन्ध्याख्य-स्वप्नस्थाने वर्तमानस्य जीवस्य रथादि सृष्टिः श्रूयते । सा परमात्मकर्तृका उत जीवकर्तृकेति विशये परमात्मकर्तृकेति सिद्धान्तः । स्वप्नदृष्टवस्तुजातं च तत्काले चोत्पन्नं तत्काले च नष्टं भगवतैव सृष्टमिति तथ्यमेव । भगवतः आश्चर्यशक्त्या इयमुपपद्यते । अत एव 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥' (छा- ५-२-८) 'अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति।' इत्यादि श्रुत्या स्वप्नस्य शुभाशुभसूचकत्व-मुपपाद्यते ॥

---

## १ सन्ध्याधिकरणं । (११६)–द्वैतम्

१ **ओं सन्ध्ये सृष्टिराह हि** । (३२४)
२ ओं निर्मातारं चैके पुत्रादयश्च ।
३ ओं मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । (३२६)
४ ओं सूचकश्च हि श्रुतेराचक्षते च तद्विदः । (३२७)

**विष्णूरथादि स्रष्टैषः स्वप्ने जीवाय दर्शितम् ।**
**विष्णोर्निस्साधनत्वेऽपि स्वप्ने स्वेच्छैव कारणम् ॥**

**अधिकरणार्थः** । 'न तत्र रथा न रथयोगाः', 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः'(का-५-८) इत्यादि श्रुत्या जीवस्य स्वप्नदर्शनमपि

विष्णुकर्तृकमेव । स्वप्नदृश्यमानवस्तु मायामात्रम् - भगवदिच्छा जीवमनोगतसंस्काराभ्यां निर्मितं त्रातंच सत्यमेव । कात्स्न्येनानभिव्यक्तस्वरूपत्वात् बहिरिवा प्रकाशमानत्वात् इति सूत्रार्थः । अत एव 'अतः प्रज्ञातृमायोक्ता जैव्युपादानमेव सा । निमित्तमैश्वरी मुख्या निर्मितं त्रातमेवच' इत्यनुव्याख्यानं सगच्छते । मिथ्यावादे दूषणं तत्रैव कृतमिति नेह तन्यते ।'यद्वाव ब्राह्मणो ब्रूयाद्देवतावृषभोऽपि वा। स्वप्नस्थमथ वा राजा तत्तथैव भविष्यति' इति शुभाशुभसूचकत्वोक्तश्च ॥

---

२ पराभिध्यानाधिकरणं । (११७)–द्वैतं

५ ओं पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ । (३२८)

**स्वप्नादिबुद्धिकर्ताऽस्य तिरस्कर्ता हरिस्स्मृतः ।**
**परेच्छया बन्धमोक्षौ जीवस्य कथितौ श्रुतौ ॥**

**अधिकरणार्थः** विष्णोरेव जीवबन्धमोक्षप्रदत्वात् तदिच्छयैव स्वप्नबुद्धिस्वप्नतिरस्करादि भवतीति ॥

---

३ देहयोगाधिकरणम् । (११८)–द्वैतम्

६ ओं देहयोगाद्वा सोऽपि । (३२९)

**जीवस्य देहसंबन्धं यथा विष्णुरकारयत् ।**
**स एव जागरं स्वप्नं स्थापनं च करोत्ययम् ॥**

**अधिकरणार्थः** । विष्णुरेव जीवस्य शरीरसंबन्धं स्वप्नं जाग्रदवस्थां च निर्मातीति ॥

---

२ तदभावाधिकरणम् । (९४)–अद्वैतं

७ तदभावो नाडीषु तच्छ्रुतेरात्मनि च । (३२५)

८ अतः प्रबोधोऽस्मात् । (३२६)

**नाडीप्राणपुरीतदादि कथितं जीवस्य सौषुप्तिकं**
**स्थानं तच्च समुच्चयो हि यमुना गङ्गागता सागरम् ।**
**खट्वातल्पसुसौधवच्च कथितं प्राज्ञे परे पूरुषे**
**सर्वप्राणिविनिर्गतिश्च कथिता वह्नेस्स्फुलिङ्गा यथा ॥**

**अधिकरणार्थः** । जीवस्य सुषुप्तिस्थानत्वेन नाडी-पुरीतत्-रश्मि-हृदय-प्राज्ञाः- श्रुतिषु श्रूयन्ते । स च व्रीहियवादिवत् विकल्पः उत समुच्चय-इति विशये, तेषां सप्तमीविभक्तया भिन्नस्थानत्वेन प्रतीयमानत्वात् विकल्प-इति प्राप्ते, प्रासादे खट्वायां तल्पे राजा शेते इतिवत् यमुना गङ्गया सह सागरं गच्छति इत्यादिवच्च समुच्चय एव । न तु विकल्पः सप्तमी विभक्तेः खट्वा-प्रासादवत् उपपत्तेः । 'अग्नेर्विष्फुलिङ्गा इव व्युच्चरन्ति एतस्मादात्मनस्सर्वे प्राणाः' '(बृ-२-१-२०)' सत आगम्य न विदुः सत आगच्छामहे' (छा-६-१०-२) इत्यादि श्रुत्या प्राज्ञ एव जीवस्य सुषुप्तिस्थानमिति निर्णीयते ॥

---

## २ तदभावाधिकरणम् । (७६)—विशिष्टाद्वैतम्

**७ तदभावो नाडीषु तच्छ्रुतेरात्मनि च । (३२५)**

८ अतः प्रबोधोऽस्मात् । (३२६)

**नाड्यः पुरीतद्ब्रह्मेति सुप्तिस्थानमिहोच्यते ।**
**प्रासादखट्वापर्यङ्कन्यायात् स्थानसमुच्चयः ॥**

**अधिकरणार्थः** । 'अथ यत्रैतत्सुप्तस्समस्तस्संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति' (छा-८-६-३) इति—'सता सोम्यतदा सम्पन्नो भवति' (छा-६-८-१) इत्यादि श्रुत्या जीवस्य सुषुप्तिः नाडी-पुरीतत्-ब्रह्मसु श्रूयते । तत्र स्थानसमुच्चयो वा स्थानविकल्पो वेति विशये अष्टदोषदुष्ट-विकल्पापेक्षया प्रासादखट्वापर्यङ्कन्यायेन समुच्चयेनैव तत्रापि ब्रह्मण्येव सुषुप्ति-स्थानमिति निश्चीयते ॥

---

४ तद्भावाधिकरणम् । (११९)—द्वैतम्

७ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह । (३३०

नाडीस्थपरमात्माऽस्य सुप्तिस्थानतयोच्यते ।
'सता संम्पन्न' इत्येषा श्रुतिर्वक्तीति विश्रुतम् ॥

अधिकरणार्थः । जीवस्य सुप्तिस्थानं परमात्मैवेति ॥

५ प्रबोधाधिकरणम् । (१२०)—द्वैतम्

८ ओं अतः प्रबोधोऽस्मात् । (३३१)

सुप्तिस्थानं यथा ब्रह्म बोधस्थानं च तत्तथा।
एष प्रमातैष परः सुप्तं बोधयतीत्यतः ॥

अधिकरणार्थः यस्माज्जीवस्य सुप्तिर्भवति, प्रबोधोऽपि तस्मात् भवतीत्यर्थः॥

३ कर्मानुस्मृत्यधिकरणम् । (९५)—अद्वैतं

९ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ (३२)

परात्मसम्पत्तिरिहाम्बुराशावब्बिन्दुवच्चेत् स्मरणादिभिस्सः ।
स्मृत्वैव सर्वं कुरुते स्वकर्म सुप्तोत्थितोऽज्ञानवशो न चान्यः ॥
हंसो यथा क्षीरगतं तु नीरमीशस्तथाऽज्ञानविमिश्रजीवम् ।
प्राज्ञात् पृथक्कृत्य पुनश्च नैजकर्मादिकं कारयतीह जीवम् ॥

अधिकरणार्थः । सुप्तोत्थितः पुरुषः स्वकीयकर्मादि पूर्वमारब्धं मध्ये विहाय सुप्त्वा प्रबुद्धः अवशिष्टं कर्म कुरुते । अतश्च सुप्त एव प्रबुद्ध इति ज्ञायते ।

ननु—स्वापकाले सता सम्पत्त्या जलराशौ जलबिन्दुवत् जीवस्य परमात्मसम्पत्त्या परमात्माभिन्न एव जीवो भवेत । अथवा जलबिन्दुस्थानापन्नस्य जीवस्य पृथङ्ज्ञानाभावापत्त्या सुप्त एव प्रबुद्धः इत्यत्र न मानमिति चेन्न । 'सुखमहमस्वाप्सं, पूर्वपठितपाठानन्तरमिदानीं पठामि' इत्याद्यनुभवात् कर्मानुस्मृतिशब्दविधिभ्यः सुप्त एव प्रबुध्यतीति ज्ञायते । सामान्यशक्तियुक्तः तिर्यक्जातीयः हंसोपि क्षीरमिश्रजलात् जलं विहाय केवलक्षीरमेव पिबति । तद्वत् परमेश्वरः अविद्याविशिष्टं जीवं पुनः कर्मकरणाय स्वसंबद्धमपि पृथक्कृत्य प्रबोधयतीति न कोपि दोषः ॥

---

३ **कर्मानुस्मृतिशब्दविध्यधिकरणम् । (७७)–विशिष्टाद्वैतं**

९ **स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ।** (३२७)

**स्वापादुत्थः पूर्वजीवः परो वा प्राज्ञसंगतः ।**
**स एवाहं प्रबुद्धास्मीत्यादिना सुप्त एव सः ॥**

**अधिकरणार्थः** । प्रबोधसमये सुप्त एवोत्तिष्ठति, उत अन्य इति विशये 'सता सोम्य तदा संपन्नो भवति' इत्यादि श्रुत्या परमात्मानं प्राप्तस्य पुनरसंसृतिः न युक्तेति अन्य एवोत्तिष्ठति, इति प्राप्ते, कर्म-अनुस्मृति-शब्द-विधिभ्यः सुप्त एव उत्तिष्ठतीति निश्चीयते । स्वापकाले परमात्मसम्पत्तिः जीवानां सौख्यायैव । जीवस्यावशिष्टकर्मानुभवाय स एव पुनस्संसरति इति ॥

---

६ **कर्मानुस्मृतिशब्दविध्यधिकरणम् । (१२१)–द्वैतम्**

९ **ओं स एव च कर्मानुस्मृतिशब्दविधिभ्यः ।** (३३२)

**कर्मकारयतीत्यादि श्रुतेस्तदनुसारिभिः ॥**
**स्मृत्यादिभिः हरिर्जीवान् सुप्तान् बुद्धान् करोति हि ॥**

**अधिकरणार्थः** । विष्णुरेव जीवानां स्वप्नदर्शनं कारयति । सः साधुकर्म कारयति, आत्मानमेव लोकमुपासीतेति विधानं च करोतीति विष्णुरेव

सर्वजीवकर्मकारयिता इति निश्चीयते । 'एष स्वप्नान् दर्शयति एष प्रबोधयति, 'एषह्येव साधुकर्म कारयति' इत्यादि कर्मानुसारिवाक्यादिभिः ॥

४ मुग्धाधिकरणम् । (९६)–अद्वैतं

१० मुग्धेऽर्धसम्पत्तिः परिशेषात् । (३२८)

**स्वप्नो जगरितं सुप्तिः जीवावस्था त्रिधैव न ।**
**मुग्धावस्था चतुर्थीह मृत्यर्धदशया समा ॥**

**अधिकरणार्थः** । मूर्छितः मुग्ध इति व्यवहारात् जाग्रत्स्वप्नसुषुप्त्यपेक्षया वैलक्षण्यात् मरणार्धसदृशी मुग्धावस्था च जीवस्य काचिदस्तीति ज्ञायते ॥

४ मुग्धाधिकरणम् । (७८)–विशिष्टाद्वैतं

मुग्धेऽर्धसम्पत्तिः परिशेषात् । (३२८)

**मूर्च्छासुषुप्तिस्वप्नेभ्यः मुग्धावस्थेतरा स्मृता ।**
**त्रिभ्यस्तेभ्यः परं तद्धि मूर्च्छा घातादि संभवा ॥**

**अधिकरणार्थः**। जीवस्य शरीरे मूर्च्छाकाले प्राणमात्रस्य वर्तमानत्वदर्शनात् सूक्ष्मप्राणदेहसंबन्धावस्थितिः मूर्च्छेति काचिदवस्था वर्तत इति ॥

७ मुग्धाधिकरणम् । (१२२)–द्वैतं

१० ओं मुग्धेऽर्धसम्पत्तिः परिशेषात् । (३३३)

**जीवस्य मोहावस्था च विष्ण्वर्धप्राप्तिरेव सा ।**
**अवस्थाभ्यस्त्रिसृभ्यश्च परो मोहः प्रकीर्तितः ॥**

**अधिकरणार्थः** ।

'यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः ।
अर्धप्राप्तिरिति ज्ञेयो दुःखमात्र प्रतिस्मृतेः ॥'

इति प्रमाणात् विष्णुसमीपस्थः स्वप्नं पश्यतीति स्वप्नावस्था । हृदयवर्ती

विष्णोः दूरस्थः जीवः जागर्ति इति जाग्रदवस्था; विष्णौ जीवस्य लये सति स्वपिति इति सुषुप्त्यवस्था, परिशेषात् मोहावस्था विष्णोरर्धप्राप्तिरिति निश्चीयते ॥

मोहावस्था च रुद्रस्य भीमसेनप्रहारेण मूर्च्छा; अश्वत्थाम्नोपि युद्धकाले भीमप्रहारेण मूर्च्छा; लक्ष्मणस्य रावणशक्तिप्रहारेण मूर्च्छा; बलरामस्यापि जरासन्धयुद्धे मूर्च्छा; इन्द्रस्य देवासुरयुद्धे मूर्च्छा; अर्जुनस्य स्वपुत्रेण बभ्रुवाहनेन मूर्च्छा; पुराणेषु दृश्यत इति मूर्छावस्था अन्या अङ्गीकरणीयैव। तदा दुःखमात्रानुभवः। तत्प्रवर्तकोपि भगवानेव ॥

"मूर्छा प्रबोधनं चैव यत एव प्रवर्तते ।
स ईशः परमो ज्ञेयः परमानन्द लक्षणः ॥

इत्यादि शास्त्रात् ॥

---

## ५ उभयलिङ्गाधिकरणम्। (९७)—अद्वैतं

११ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि। (३२९)
१२ भेदादिति चेन्न प्रत्येकमतद्वचनात्। (३३०)
१३ अपिचैव मेके। (३३१)
१४ अरूपवदेव हि तत्प्रधानत्वात्। (३३२)
१५ प्रकाशवच्चावैयर्थ्यात्। (३३३)
१६ आह च तन्मात्रं। (३३४)
१७ दर्शयति चाथो अपि स्मर्यते। (३३५)
१८ अत एव चोपमा सूर्यकादिवत्। (३३६)
१९ अम्बुवदग्रहणात्तु न तथात्वम्। (३३७)
२० वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्। (३३८)
२१ दर्शनाच्च। (३३९)

**यस्सर्वकर्मा तदनण्वहृस्वं स्वच्छे परेब्रह्मणि नोभये स्यात्।**
**उपाधितो ब्रह्मगुणैस्समेतं स्वच्छं परं ब्रह्म तु निर्विशेषम्।**

उपासनार्थो हि भिदोपदेशः मृत्युं समाप्नोति विभेददर्शी ।
'अशब्दमस्पर्श'मिति श्रुतिस्तत् प्रधानतोऽरूपवदेव वक्ति ॥
यथा प्रकाशोऽनृजुस्वभाव मुपाधिनाचाङ्गुलिना प्रयाति ।
आत्मा स विज्ञानघनश्च कृत्स्नः नेतीत्युपादिक्षदतो न रूपी ।
एकोऽयमात्मा जलचन्द्रवत्तु क्षेत्रेषु भेदेन च दृश्यतेऽत्र ।
ह्रासश्च वृद्धिर्जलतारतम्ये रवेस्तथाऽज्ञानगता विशेषाः ॥
'अनेन जीवेन' 'पुरस्सपक्षी भूत्वा पुरः पूरुष आविशत्' सः ।
इत्यादिनोपाधिशरीरसङ्गः प्रोक्तः परंब्रह्म च निर्विशेषम् ॥

अधिकरणार्थः । ब्रह्मविषयाः 'सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसः', 'अस्थूलमनण्वह्रस्वं', 'अशब्दमस्पर्शमरूपमव्ययम्', 'मनसैवेदमाप्तव्यम्', 'नेह नानास्ति किञ्चन', 'मृत्योःस मृत्युमाप्नोति य इह नानेव पश्यति', एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव', 'अथातो अदेशो नेति नेति', 'अवचनेनैव ब्रह्म प्रोवाच'; 'सहोवाचाधीहि भो इति स तूष्णीं बभूव; तं ह द्वितीये वा तृतीये वा वचने उवाचब्रूमः खलु त्वं तु न विजानासि' उपशान्तोऽयमात्मा इति'; 'अनादिमत् परं ब्रह्म न सत्तत् नासदुच्यते','माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद, एष एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इत्याद्याः सगुणनिर्गुणपराः श्रुतयः बहुशो वर्तन्ते । उभयविधं ब्रह्म भवितुं नार्हति —सगुणं निर्गुणं च । अन्यतराङ्गीकारे अन्यतरस्य वैयर्थ्यं भवति । निर्गुणश्रुतिमात्राङ्गीकृतौ अर्धजरतीयन्यायापत्तिश्च । अतः उभयावैयर्थ्याय 'तमसा गूढं', 'अज्ञानेनावृत्तं ज्ञानं' इत्यादि श्रुतिस्मृतिभिः अविद्यारूपोपाधिविशिष्टं ब्रह्म सकलविशेषसंयुक्तं प्रपञ्चरूपं विभाति । 'भूयश्चान्ते विश्वमायानिवृत्तिः', 'ब्रह्मवित् ब्रह्मैव भवति', इत्यादि श्रुतिभिः अविद्यारहितं ब्रह्म निर्गुणं निर्विशेषं स्वयं प्रकाशते । यथा जले चन्द्रप्रतिबिम्बाः जलचाञ्चल्यात् बहुशो दृश्यन्ते, न तु चन्द्रे, तद्वत् उपाधिरूप शरीरेन्द्रियादि संबन्धात् सुखदुःखादयः उपाधिगताः, न तु ब्रह्मगता इति सदा विशुद्धमेव ब्रह्म । अतः नोभयलिङ्गं ब्रह्म ॥

---

## ५ उभयलिङ्गाधिकरणम् । (७९)-विशिष्टाद्वैतं

**११ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । (३२९)**
१२ भेदादिति चेन्न प्रत्येकमतद्वचनात् । (३३०)
१३ अपि चैवमेके । (३३१)
१४ अरूपवदेव हि तत्प्रधानत्वात् । (३३२)
१५ प्रकाशवच्चावैयर्थ्यात् । (३३३)
१६ आह च तन्मात्रम् । (३३४)
१७ दर्शयति चाथो अपि स्मर्यते । (३३५)
१८ अत एव चोपमा सूर्यकादिवत् । (३३६)
१९ अम्बुवदग्रहणात्तु न तथात्वम् । (३३७)
२० वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च । (३३८)
२१ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः । (३३९)
२२ तदव्यक्तमाह हि । (३४०)
२३ अपि संराधने प्रत्यक्षानुमानाभ्याम् (३४१)
२४ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । (३४२)
२५ अतोऽनन्तेन तथा हि लिङ्गम् । (३४३)

**जीवान्तरस्थस्य परस्य दोषाः मूर्च्छाद्यवस्थासु भवेयुरेव ।**
**न ब्रह्म कल्याणगुणं विदोषं यस्सत्यकामोऽपहताघ एषः ॥**
**आत्मान्तरस्थोपि नियन्तृभावात् जीवानुगो दोष इतीह युक्तम् ।**
**'अन्योह्यनश्नन्नभिचाकशीति' ह्यरूपवद्ब्रह्म चकास्ति तत्र ॥**
**तमीश्वराणां परमं च निष्कलं निरञ्जनं सर्वमिदं ब्रवीति ।**
**'कीलालगेऽस्ति प्रतिबिम्बरूपे दोषो न बिम्बेऽपहताघ एषः ॥**

---

* कीलालं=जलमित्यर्थः

गुणाननूद्यात्र निषेधतीति 'नेति' श्रुतिर्वक्ति न चैव किन्तु ।
उक्ता गुणाः केवलमत्र नेति सर्वज्ञताद्यं गुणजातमस्ति ॥

(इति वक्ति इति शेषः)

ब्रह्मेदं सगुणं यस्मान्निर्गुणं नास्ति चेतरत् ।
त्रय्यन्तेषु तथा भाति तद्ध्यानं मुक्तिसाधनम् ॥

**अधिकरणार्थः** । जीवान्तर्यामिणः परब्रह्मणः चतसृषु अवस्थासु विद्यमानस्य दोषाः सन्ति वा न वेति ब्रह्मप्राप्तिकामनासिद्धये विचार्यते । सर्वत्र स्थितस्य परमात्मनः तत्प्राप्तिरस्त्येवेति पूर्वपक्षे समाधानं 'न स्थानतोऽपिपरस्य' इत्यादि । ब्रह्मणः तत्तदन्तर्यामित्वेऽपि तद्गतदोषाभावः तत प्रतिभट कल्याणगुणजातं चास्तीति उभयविध श्रुतिस्मृतिभ्यः अवगम्यते । नियन्तृनियाम्यभावरूपशरीरलक्षणाङ्गीकारात् नियन्तुः शरीरिणः प्रेरकत्वमेव; न दोषभाक्त्वम् । देवतिर्यङ्मनुष्यस्थावरादिशरीरप्रवेशोऽपि ब्रह्मणः रूपरहिततुल्यतैव । 'पराऽस्य शक्तिर्विविधैव श्रूयते,' 'अपहत पाप्मा, 'निष्कलं निष्क्रियं,' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादि प्रमाणात्, सर्वत्रावस्थितस्यापि ब्रह्मणः तद्गतदोषराहित्यं नियन्तृत्वादि कल्याणगुणजातं चास्तीति उभयलिङ्गत्वं ब्रह्मणो युक्तमेव । यथा अम्बुदर्पणादिषु सूर्यमुखादयः भ्रान्त्या गृह्यन्ते, तद्वत् पृथिव्यादिषु तिष्ठतः ब्रह्मणः भ्रान्त्या ग्रहणं न; अपि तु परमार्थत एव । दर्पणादिगतदोषाननुषङ्गश्च तत्र तत्र स्थित्यभावादेव । नियन्तृनियाम्यभावादेवेत्यर्थः ॥

"आकाशमेकं हि यथा घटादिषु पृथक् भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥"
"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥"

इत्यादि प्रमाणात् परमात्मा पृथिव्यादिषु चेतनाचेतनेषु स्थितोपि तद्गतवृद्धिह्रासादिदोषैः असंसृष्ट एव वर्तते । आकाशः यथा सर्वत्रावस्थितोऽपि तद्गतदोषासंसृष्टो भवति; जले वस्तुतः अनवस्थितः चन्द्रः, जलगतचाञ्चल्यप्रतिमाबहुत्वरूप दोषभाक् न भवति, तद्वत् परमात्मा सर्वत्रावस्थितोपि न दोषभागिति

'आथात आदेशो नेति नेति' इति प्रतिषेधः,पूर्वपठित 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इत्यादि प्रकृत मूर्तामूर्तद्वयनिषेधपर इति परोक्तार्थो न । ब्रह्मणः गुणजातमुक्त्वा पुनश्च तन्नेत्युक्तिः उन्मत्तवाक्यवत् भवेत् । अतः 'नेति नेति' नैवं नैवं इत्यर्थः । तथा च पूर्वोक्त प्रकृतमूर्तामूर्तद्वयरूपविशिष्टमात्रं न भवति ब्रह्म । अपि तु पूर्वोक्तात् गुणजातात् अधिकगुणविशिष्टं ब्रह्मेति ब्रवीतीति तात्पर्यम् । अतः अनन्तगुणविशिष्टं हेयप्रतिभटं चेति उभयलिङ्गं ब्रह्म ॥

अत एव "यद्ब्रह्मणो गुणविकारशरीरभेदकर्मादिगोचरविधिप्रतिषेधवाचः।

अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः॥
अग्नीषोमीयहिंसा निजविधिविहिता किं निषिद्धा न हिंस्यात्,
भूतानीत्येतयोक्त्या पशुपदविषयः च्छाग एव न्यरूपि ।
छागो वा मन्त्रवर्णादिति च तदुभयन्यायतो हेयधर्म-
क्षेपाथा निर्गुणोक्तिःश्रुतशुभगुणके निर्मले ब्रह्मणि स्यात् "

इति तत्वसारे सगुणनिर्गुणश्रुतीनां व्यवस्था उक्ता ॥

**श्रीबादरिर्जैमिनिकाशकृत्स्नौ व्यासार्यचित्तेन समास्त्रयोपि ।**
**प्रायेण दृष्टा इति भाष्यसिद्धं ते निर्गुणं ब्रह्म वदन्ति नात्र ॥**
**कार्यं परं ब्रह्म समेति विद्वानित्येव चोचुः न तु निर्गुणं तत् ।**
**ब्रह्माप्तिबीजं तदुपासनं स्यादप्राकृतस्थानविशेष आप्यः ।**
**इत्यागमान्तास्सकला वदन्ति सूत्राणि सर्वाणि गुणैर्विशिष्टम् ।**
**ब्रह्मैव मुक्तो भवतीति वाक्यं तत्तुल्यधर्मो भवतीति रीत्या ॥**
**निर्दोष मित्यर्थसमाश्रयान्नः किन्निर्गुणब्रह्मसमाश्रयेण ।**
**मुक्तं परं ब्रह्म चतुर्मुखं वा धनञ्जयादिर्नयतीति चिन्ता ॥**
**धनंजयादिः = अर्चिरादिरित्यर्थः ॥**

'साक्षादप्यविरोधं जैमिनिः' 'अवस्थितेरिति काशकृत्स्नः' 'कार्यं बादरिरस्य गत्युपपत्तेः' 'परं जैमिनिर्मुख्यत्वात्' 'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' इत्यादिषु भाष्यद्वयेपि तेषामुक्तिः समीचीनेति वर्णिता । तेषामभिप्रायश्च फलाध्याये आतिवाहिकगणः चतुर्मुखं कार्यरूपं ब्रह्म मुक्तात्मनो नयति ।

तत्रैव किञ्चित्कालं स्थित्वा चतुर्मुखेन सह परं ब्रह्म प्राप्नुवन्ति । अत एव अनावृत्तिरप्युपपद्यत इति । परं ब्रह्मैव नयतीति च कस्यचित् मतं इत्येव चिन्तितं । न तु निर्गुणं ब्रह्म किञ्चिदस्ति ; तत्प्राप्तिश्च इत्थमिति न विचारितं। एतद्भाष्यवर्णितरीत्या सर्वा उपनिषदः सर्वाणि च सूत्राणि परं ब्रह्म सगुणमेव प्रतिपादयन्ति इति ज्ञायते । क्वचित् 'ब्रह्मवेद ब्रह्मैव भवति, अत्र ब्रह्म समश्नुते', अमृत इह भवति' इत्यादि श्रुतीनामपि ब्रह्मसदृशः मुक्त सदृशश्च भवतीति अर्थाश्रयणेन न कुत्रचिच्छ्रुतिषु विरुद्धार्थवर्णनं दृष्टं इति ॥

---

८ उभयलिङ्गाधिकरणम् । (१२३)–द्वैतम्

११ ओं न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि । (३३४)

१२ ओं न भेदादिति चेन्न प्रत्येकमतद्वचनात् । (३३५)

१३ ओं अपि चैव मेके । (३३६)

विष्णुर्जीवान्तरस्थः स्यात् तत्स्थाना पेक्षया भिदा ।
नैवं सूर्यो ह्येक एव स्वैश्वर्यात् बहुधा हरिः ॥
प्राज्ञतैजसविश्वादि भेदाद्विष्णोर्भिदाऽऽत्मनाम् ।
अमात्रोऽनन्तमात्रश्चेत्यादिना सर्वगो हरिः ॥

**अधिकरणार्थः** । सर्वत्र स्थितस्यापि विष्णोः आधारधेयभावप्रतीत्यापि न भिन्न रूपम् ।

"एक रूपः परो विष्णुः सर्वत्रापि न संशयः ।
ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते ॥"

'अमृतमिदं ब्रह्मेदं सर्वं' अन्तर्याम्यमृतः 'अयं वै हरयः अयं वै दश च सहस्राणि च' इत्यादि श्रुतिभ्यः अनन्तरूपत्वं विष्णोरेवेति अभेदेऽपि भेदव्यपदेशः स्थानभेदात् ऐश्वर्ययोगाच्च युज्यत इति ॥

---

## ९ अरूपवदधिकरणं। (१२४)—द्वैतम्

१४ ओं अरूपवदेव हि तत्प्रधानत्वात्। (३३७)
१५ ओं प्रकाशवच्चावैयर्थ्यम्। (३३८)
१६ ओं आह च तन्मात्रम्। (३३९)
१७ ओं दर्शयति चाथो अपि स्मर्यते। (३४०)

**अस्थूलादि त्रयीमानात् ब्रह्मारूपवदेव हि।**
**ब्रह्मणो रुक्मवर्णादि प्रकाशादिवदिष्यते॥**
**सर्वेभ्यो ब्रह्मरूपं तु विलक्षणमिहोच्यते।**
**विज्ञानानन्दमात्रत्वं ज्ञानरूपं हरेरिति॥**

**अधिकरणार्थः** सर्वेभ्यो उत्तमत्वात् ब्रह्म अरूपवदेव। 'अरूपवानतः प्रोक्तः व्यक्ताव्यक्ततः परः' इति मात्स्यपुराणप्रमाणात्। अरूपवत्त्वे सति विष्णोः 'यदा पश्यः पश्यते रुक्मवर्णं' इत्यादि कथमुपपद्यत इति चेन्न, विलक्षणरूपवत्त्वादुपपद्यते। यथा चक्षुरादि प्रकाशे विद्यमानेऽपि वैलक्षण्याद-प्रकाशादि व्यवहारः, तथा विष्णोः अरूपवत्त्वेपि अप्राकृतविलक्षणरूपवत्त्वसत्वात्। गृहादौ दीपे सत्यपि, नास्ति प्रकाशः इति व्यवहारः यथा भवति, तथा रूपि-त्वेऽपि ब्रह्मणः विलक्षणरूपित्वात् अरूपित्वात् अरूपित्वश्रुतेरवैयर्थ्यमिति भावः। आनन्दरूपत्वं ध्येयं। 'चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः' इति मात्स्यपुराणात् अप्राकृतत्वं विष्णोरस्त्येवेति ज्ञायते॥

---

## १० सूर्यकादिवदधिकरणम्। (१२५)—द्वैतम्

१८ ओं अत एव चोपमा सूर्यकादिवत्। (३४१)

**रूपं रूपं प्रतीत्यादि श्रुत्या कीलालसूर्यवत्।**
**तन्निघ्नभिन्नसदृशाः सर्वे जीवा इतीरिताः॥**

**अधिकरणार्थः**। जीवात्मानः विष्णोर्भिन्नाः विष्णुसदृशाः विष्ण्वधीना इति 'रूपं रूपं प्रतिरूपो बभूव'

"बहवस्सूर्यका यद्वत् सूर्यस्य सदृशा जले ।
एवमेवात्मका लोके परात्मसदृशा मताः ॥"
इत्यादिना सूर्यकाद्युपमया च ज्ञायते । नोपाध्यधीना इति ॥

११ अम्बुवदधिकरणम् । (१२६)–द्वैतम्

१९ ओं अम्बुवदग्रहणात्तु न तथात्वम् । (३४२)

**नित्यानन्दस्य विष्णोश्च सिद्धत्वात् भक्तिरेव न ।**
**भक्तिं विना विष्णुसाम्यं व्यज्यते नेति शास्त्रतः ॥**

अधिकरणार्थः नित्यानन्दरूप विष्णोः सादृश्यस्य नित्यानन्दज्ञानादेश्च नित्य सिद्धत्वात् भक्तिज्ञानविधायकानि शास्त्राणि व्यर्थानि भवेयु रित्याक्षेपे 'अम्बुवदग्रहणात्तु न तथात्वम्' इति समाधानम्' । अम्बुवत्=स्नेहेन; ग्रहणं =ज्ञानं; भक्तिं विना न तत्सादृश्यं अभिव्यज्यते । 'यमेवैष वृणुते तेन लभ्यः' इत्यादि श्रुतेः ।

"महत्त्ववृद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।
तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम् ॥"

इति पाद्मपुराणात् भगवत्सादृश्यस्य नित्यसिद्धत्वेऽपि सुप्तिकाले वर्तमानायाः भगवत्सादृश्याभिव्यक्तेः अधिकसादृश्याभिव्यक्तिः भक्तिं विना न संभवतीत्यर्थः। अतः विष्णौ भक्तिः कार्यैव ॥

१२ वृद्धिह्रासभाक्त्वाधिकरणम् । (१२७)—द्वैतम्

ओं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामंजस्यादेवम् । (३४३
ओं दर्शनाच्च । (३४४)

**भक्तिज्ञानादि वृद्ध्यादेः मोक्षे तरतमा भवेत् ।**
**ब्रह्मादयश्चोत्तमा हि विष्णुपूर्णगुणान्विताः ॥**

**अधिकरणार्थः** । विष्णौ जीवस्य यादृशी भक्तिः, यादृशं ज्ञानं तत्तु-ल्य वृद्धिह्रासादितारतम्यं मुक्तौ भवति । उत्तमाधिकारिणः ब्रह्मादयः तु पूर्ण-भक्तिपूर्णज्ञानाभ्यां पूर्णगुणा भवेयुरिति उभयसामञ्जस्यं भवेदेव । आनन्दमीमां-सायां ब्रह्मपर्यन्तेषु आनन्दे तारतम्यदर्शनात् ।

"यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥"

इति 'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः' इत्यादि श्रुतिभिः भक्तितारतम्यात् आ-नन्दतारतम्यं सिद्ध्यतीति ॥

---

## ६ प्रकृतैतावत्त्वाधिकरणम् । (९०)–अद्वैतं

**२२ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।**
२३ तदव्यक्तमाह हि । (३४१)
२४ अपि संराधने प्रत्यक्षानुमानाभ्याम् । (३४२)
२५ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । (३४३)
२६ अतोऽनन्तेन तथा हि लिङ्गम् । (३४४)
२७ उभय व्यपदेशात्त्वहि कुण्डलवत् । (३४५)
२८ प्रकाशाश्रयवद्वा तेजस्त्वात् । (३४६)
२९ पूर्ववद्वा । (३४७)
३० प्रतिषेधाच्च । (३४८)

**अथात आदेश इति श्रुतिस्तु प्रपञ्चरूपं प्रतिषेधतीह ।
लोकप्रसिद्धद्वितयात्मरूपं न ब्रह्मणोऽस्तीति तदेव सत्यम् ॥
न चक्षुषा ग्राह्यमतो न वाचा तं प्रत्यगात्मानमपश्यदेकः ।
प्रकाशसाहस्करवद्ध्युपाधि भेदाद्विशेषास्तत एक आत्मा ॥
घटादि भेदादाकाशो तथात्माऽज्ञानसंगतः ।
बहुधा भाति तद्ब्रह्म सत्यमेतन्मृषेतरत् ॥**

अधिकरणार्थः । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इत्यादि विषयवाक्यं । 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति श्रूयते । अत्र नेतीति किं प्रतिषिद्धयते । पूर्वोक्तं ब्रह्मणो रूपद्वयं ब्रह्म च निषिद्धयते उत रूपद्वयमात्रं इति विशये निषेधस्य प्रतियोगिसापेक्षत्वात् 'निषेधाश्च बलीयांसः' इति पाणिनीयन्यायेन च प्रकरणोक्तं ब्रह्मणो रूपद्वयमात्रं निषिद्धयते । पारिशेष्यात् ब्रह्ममात्रं सिद्धयति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिना ब्रह्मप्रतिपादनात् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिना वाङ्मनसाऽतीतं ईदृशं ब्रह्मस्वरूपमिति विविच्य वक्तुमनर्हं इत्येतदर्थकं नेति नेतीति वाक्यमिति ज्ञायते । पूर्वोक्तसर्व निषेधे सति 'प्रक्षाळनाद्धि पङ्कस्य दूरादस्पर्शनं वरं' इति न्यायेन महता प्रबन्धेन ब्रह्म सत्तावर्णनं व्यर्थं स्यात् । सर्वाभावावसानार्थकेतु, उत्तरत्र 'सत्यस्य सत्यं' इत्यादि वाक्यविरोधापत्तेः ब्रह्मैव सत्यमिति ज्ञायते न तु रूपद्वयवत्त्वं । अत एव 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्त चक्षुरमृतत्वमिच्छन्' इत्यादि श्रुतिरुपपद्यते । यथा प्रकाशाकाशसवितृ प्रभृतयः अङ्गुलिकरकोदकप्रभृतिषु उपाधिषु सविशेषा इव अवभासन्ते तथाऽपि स्वाभाविकीं अविशेषात्मतां न जहति; तद्वत् ब्रह्मापि उपाधिभेदात् आत्मशरीरादिभेदवदिव दृश्यते । 'ब्रह्मवेद ब्रह्मैव भवति' 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिना जीवप्राज्ञयोरभेद एव सिद्धयति । अहिकुण्डलन्यायेन जीवब्रह्माभेद इति केचित् । यथा अहिरित्यभेदः, कुण्डल-आभोग-प्रांशुत्वादीनि भेद इति । 'नान्योऽतोऽस्ति द्रष्टा', 'अथात आदेशो नेति नेति', तदेतद्ब्रह्मापूर्व मनपरमनन्तरमबाह्यं' इत्यादि श्रुतिभ्यः ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणात् ब्रह्ममात्रशेषं नेतीत्यादिवाक्यं बोधयति । इति ॥

---

## १३ प्रकृतैतावत्त्वाधिकरणम् । (१२८)–द्वैतम्

२२ ओं प्रकृतैतावत्त्वं हि प्रतिषेधति ततोब्रवीति च भूयः(२४५)

सृष्टिसंहारकर्तृत्वं विष्णोरस्ति न पालने।
नैतावदिति वेदेन प्रोच्यते पालनं हरेः ॥

**अधिकरणार्थः** । विष्णोः सृष्टिसंहारकर्तृत्वं श्रूयते । पालनकर्तृत्वं नेत्याक्षेपे प्राप्ते 'नैतावदेनापरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' इति श्रुत्या,

सृष्टिं च पालनं चैव संहारं नियमं तथा ।
एक एव करोतीशः सर्वस्य जगतो हरिः ॥"

इति ब्रह्माण्डपुराणात विष्णोः सर्वकर्तृत्वमस्त्येव । इति ॥

---

१४ अव्यक्ताधिकरणम् । (३२९)-द्वैतम्

२३ ओं तदव्यक्तमाह हि । (३४६)
२४ ओं अपि संराधने प्रत्यक्षानुमानाभ्याम् । (३४७)
२५ ओं प्रकाशवच्चावैशेष्यम् । (३४८)
२६ ओं प्रकाशश्च कर्मण्यभ्यासात । (३४९)
२७ ओं अतोऽनन्तेन तथा हि लिङ्गम् । (३५०)

**अरूपमक्षरं ब्रह्म तज्ज्ञानान्मुक्तिरिष्यते ।**
**तदापरोक्ष्यं तज्ज्ञानान्नतु जीवस्य शक्तितः ॥**
**व्यक्ताव्यक्तस्वभावोऽयं नित्यं द्वितयमानतः ।**
**तस्य ध्यानात् योजनाच्च प्रकाशो युज्यते हरेः ॥**

**अधिकरणार्थः** । विष्णुः अरूपः, अव्यक्तः, व्यक्तः, नित्यमित्युच्यते तत्राव्यक्तमेव ब्रह्म । तथाऽपि व्यक्ताव्यक्तस्वरूपत्वकथनात तत प्रसादादेव ब्रह्मापरोक्ष्यज्ञानं जायते ।

"नित्याव्यक्तोऽपि भगवान् ईक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येताऽमितं प्रभुम् ॥"

इति प्रमाणात परमात्मशक्त्यैव विष्णुरीक्ष्यत इति तस्य अनन्तशक्तित्वं युक्तम् इति ॥

---

## ६ अहिकुण्डलाधिकरणम् । (८०)–विशिष्टाद्वैतं

२६ उभयव्यपदेशात्त्वहिकुण्डलवत् । (३४०)
२७ प्रकाशाश्रयवद्वा तेजस्त्वात् । (३४१)
२८ पूर्ववद्वा । (३४२)
२९ प्रतिषेधाच्च । (३४३)

**ब्रह्मसंस्थानमेवाचिदहिकुण्डलवत्तथा ।**
**प्रकाशाश्रयवद्वेदं ब्रह्मांशोऽयमचित् स्मृतः ॥**

**अधिकरणार्थः ।** अचिद्वस्तुनः ब्रह्मरूपत्वं अहिकुण्डल न्यायेन, उत जीवस्येव विशेषण विशेष्यभावेन, उत प्रभाप्रभावतोरिव इति संशये 'ब्रह्मैवेदं सर्वं', 'आत्मैवेदं सर्वं' इत्यादिना ब्रह्मतादात्म्यव्यपदेशः अचितः ज्ञायते। 'हन्ताहमिमास्तिस्रो देवता' इत्यादिना अचितः पृथक् व्यपदेशोऽपि श्रूयत इति उभयव्यपदेशात् यथा वा कुण्डलिनः एकस्य ऋजुभाव वक्रभाववत् ब्रह्मणः सूक्ष्मवस्थायां कुण्डलिवत् प्रपञ्चावस्थायां दीर्घवच्च उपपद्यत इति ॥

अथवा ब्रह्मणः परिणामित्वनिषेधात् रत्यादीनां तेजस्त्वेन तदाश्रयत्वेन च भिन्नयोरपि यथा तादात्म्यं तद्वदेव अचितः ब्रह्मणो रूपत्वमुपपद्यते । तेजस्तदाश्रयवदित्युक्ते ब्रह्मापि अचितो अनुवर्तमान सामान्यमिति विशेषणविशेष्यस्वरूप अंशांशिभावेन अचितः पृथक्सिद्ध्यनर्हविशेषणत्वेन ब्रह्मांश इति सिद्धान्तः ॥

---

## १५ अहिकुण्डलाधिकरणम् । (१३०)–द्वैतम्

२८ **ओं उभयव्यपदेशात्त्वहि कुण्डलवत् ।** (३५१)
२९ **ओं प्रकाशाश्रयवद्वा तेजस्त्वात् ।** (३५२)
३० **ओं पूर्ववद्वा ।** (३५३)

३१ ओं प्रतिषेधाच्च ।　(३५४)

कुण्डली कुण्डलं चाहिरानन्दो हरिरुच्यते ।
आनन्दीति च विज्ञेयः श्रुतौ द्वेधापि बोधनात् ।
प्रकाशवत्कालवद्वाऽऽनन्दीत्यानन्द इत्यपि ।
तेजः कालेऽनवच्छिन्नेऽवच्छिन्ने च यथा तथा ॥

अधिकरणार्थः । 'आनन्दं ब्रह्मणो विद्वान्', 'अथैष परम आनन्दः' इति भेदाभेदाभ्यां अहिकुण्डलवदेव विष्णोः भेदाभेदनिर्देशः । यथा सूर्यस्य तेजोरूपत्वात् प्रकाशित्वं च तद्वद्वेत्यर्थः । कालस्य एकत्वेऽपि पूर्वापरादिभेदेन यथा वा निर्देशः तद्वदित्यर्थः । सूक्ष्मरूपत्वेनायं दृष्टान्तः वर्णितः । अहिकुण्डल-दृष्टान्तस्तु मन्दगतीनां प्रदर्शनार्थः ।

"प्रकाशवत्कालवद्वा * यथाङ्गे शयनादिकम् ।
ब्रह्मणश्चैव मुक्तानामानन्दो भिन्न एव तु ॥"
"आनन्देनत्वभिन्नेन व्यवहारः प्रकाशवत् ।
कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेत् ॥"

अङ्गादभिन्नोपि अङ्गे शयनमिति अङ्गविशेषणं भवति । 'आदि'पदेन कर्मकर्तृ-भावः, 'शेते' इत्यादिना अभिन्न एव ब्रह्मणः मुक्तानामित्युच्यते इत्यर्थः । 'व्यवहारो विशेषण विशेष्यभावेन इत्यर्थः', इति तत्त्वप्रकाशिका । अभेदेऽपि भेदव्यवहार इति यावत् ॥

---

७ पराधिकरणम् ।　(९९)—अद्वैतम्

३१ परमतस्सेतून्मानसंबन्ध भेदव्यपदेशेभ्यः ।　(३४९)
३२ सामान्यात्तु ।　(३५०)
३३ बुद्ध्यर्थः पादवत् ।　(३५१)

---

* यथाङ्गेशयनादिकं —शयनं-अवस्थाविशेषः ।

३४ स्थानविशेषात्प्रकाशादिवत् । (३५२)

३५ उपपत्तेश्च । (३५३)

३६ तथाऽन्यप्रतिषेधात् । (३५४)

३७ अनेन सर्वगतत्वमायामशब्दादिभ्यः । (३५५)

**आत्मा स सेतुः करणं चतुष्पात् सता परिष्वक्त इहाक्षिनिष्ठः ।**
**इत्यादिनाऽन्यत्परमात्मनः स्यात् न सेतु शब्दः परमेव वक्ति ॥**
**तीर्णो लघुव्याकरणं विपश्चित् इत्यत्र तत्प्राप्तिपरो यथा वा ।**
**संप्राप्य सेतुं परमात्मरूपमित्यर्थतोऽन्यन्न सदेकमेव ॥**

**अधिकरणार्थः** । 'य आत्मा स सेतुर्विधृतिः ।' 'सेतुं तीर्त्वा' 'सता सोम्य तदा सम्पन्नो भवति', 'तदेतद्ब्रह्म चतुष्पात् अष्टाशफं षोडशकपालं' इत्यादिना मृद्दार्वादिना निर्मित नौकादिषु प्रसिद्धसेतुशब्दात्' 'अष्टाशफं षोडशकपालं' इति उन्मितिदर्शनात् 'सता सोम्येति' सम्बन्धव्यपदेशात्, 'य एषो अक्षिणि पुरुषः' इति भेदव्यपदेशाच्च परस्माद्ब्रह्मणो अन्यद्वस्तु किञ्चिदस्तीति गम्यते इति पूर्वपक्षे, 'अहमेवाधस्तात्', आत्मैवाधस्तात्' 'यस्मात्परं नापरमस्ति किंचित्' 'नेह नानास्ति किञ्चन' तदेतद्ब्रह्म अपूर्वमनपरमनन्तरमबाह्यं' इत्यादिना परब्रह्मव्यतिरिक्तमन्यत् नास्तीति स्पष्टप्रतीतेः सेत्वादि व्यपदेशानां अन्यथोपपत्तेश्च परं ब्रह्मैव एकमद्वितीयं वस्तु, न त्वन्यदिति ॥

---

## ७ पराधिकरणम् । (८)—विशिष्टाद्वैतं

३० **परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ।** (३४४)

३१ सामान्यात्तु । (३४५)

३२ बुद्ध्यर्थः पादवत् । (३४६) (३४६)

३३ स्थानविशेषात्प्रकाशादिवत् । (३४८)

३४ उपपत्तेश्च । (३४८)

३५ तथान्यप्रतिषेधात् । (३४९)

३६ अनेन सर्वगतत्वमायामशब्दादिभ्यः । (३५०)

सेतुस्तीर्त्वा चतुष्पात् परमपि च परादेवमादि श्रुतिस्तत्
श्रेष्ठं तत्वं समस्तीत्यभिवदति न हि ब्रह्मणोऽन्यत्परं न ।
अत्रायं सेतुशब्दः परपुरुषपरः चिन्तनार्थोन्मितिस्यात्
ब्रह्मैवेदं परस्मात् परमपि पुरुषं दिव्यमेतीति वेदात् ॥

**अधिकरणार्थः** । सेत्वादिव्यपदेशात् परमकारणात् परब्रह्मणः अन्यदपि किञ्चिद्वस्त्वस्तीति प्रतिभाति इति चेन्न । सेतुशब्दश्च परमात्मवाचक एव । तृ-प्लवन-तरणयोरिति धातुपाठे तरणशब्दः प्राप्त्यर्थकः । यथा 'वेदान्तं तरति इतिवत् । चतुष्पात् षोडशकलमिति उन्मानव्यपदेशः उपासनार्थः । 'परात्परं पुरुषं, अक्षरात्परतः परः' इत्यादिना भेदव्यपदेशस्य, 'यस्मात् परं नापरमस्ति किञ्चित्,' 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इत्यादिना ब्रह्मणो अन्यस्य निषेधाच्च सेतुशब्दः परमात्मपर इति सर्वमुपपन्नमेव । इति ॥

---

## १६ पराधिकरणम् । (१३१)—द्वैतं

३२ ओं परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः । (३५५)

३३ ओं दर्शनात् । (३५६)

३४ ओं बुद्ध्यर्थः पादवत् । (३५७)

उन्मानसेतुसंबन्धभेदानां दर्शनाच्छ्रुतौ ।
आनन्दिनो हरेर्भेदो ह्यानन्दो ज्ञायते स्फुटं ॥
पादोऽस्य विश्वेति यथा यथा राजेव देवराट् ।
संबन्ध ज्ञापनार्थाय जीवविष्ण्वोरिदं वचः ॥

**अधिकरणार्थः** । 'एष सेतुर्विधृतिः एष आनन्दः', यतो वाचो निवर्तन्ते', एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति, नित्यानन्दा-

व्ययं पूर्णं परज्ञानं विधीयते । अन्यज्ज्ञानं तु जीवानां अन्यज्ज्ञानं परस्य च ॥ इति सेतून्मान भेदव्यपदेशेभ्यः परमात्मनोऽन्यदेव जीवज्ञानानन्दादिकमिति गम्यते । जीवेश्वरसंबन्धज्ञापनार्थं सेतून्मानादि व्यपदेशः ॥ इति ॥

---

१७ स्थानविशेषाधिकरणम् । (१३३)—द्वैतम्

३५ ओं स्थानविशेषात्प्रकाशादिवत् । (३५८)

३६ ओं उपपत्तेश्च । (३५९)

**सूर्यस्य दर्पणस्थानविशेषात् प्रतिमासु च ।**
**विरिञ्चादिगुणाधिक्यात् सविशेषा हरेर्मुदः ॥**

**अधिकरणार्थः** । अत्र हरौ भक्तिसिद्ध्यर्थं ब्रह्माद्यानन्दादीनां भगवदानन्दादीनां च तारतम्यं वक्तव्यं । विष्ण्वानन्दाद्यपेक्षया चतुर्मुखानन्दादयः सूर्यस्य दर्पणजलादिस्थानविशेषात प्रतिबिम्बविशेषो यथा वा दृश्यते, तथा विष्ण्वानन्दादयः चतुर्मुखादिगत स्थानगुणवैशेष्यात विष्ण्वानन्दप्रतिबिम्बभूताः मध्योच्चादि तारतम्यविशेषयुक्ता भवन्ति । अत एव बिम्बभूत परमानन्दे विष्णौ चतुर्मुखादीनां भक्तिर्युज्यते ।

ऐश्वर्यात्परमाद्विष्णोः भक्त्यादीनामनादितः ।
ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता ॥'

इति पाद्म पुराणवचनात ॥

अतः अलौकिकत्वाद्विष्ण्वानन्दादेः श्रुतिपुराणादिषु आनन्दादिप्रयोगः "पादोऽस्य विश्वाभूतानी' तिवत् विष्ण्वंशत्वं जीवानमिति ज्ञापनाय । तथा अलौकिकानन्दविशिष्ट ब्रह्मणि लौकिकानन्दशब्दप्रयोगो स्वर्णघटे घटशब्दस्येव किञ्चित्साद्दश्येनोपपद्यते । इति ॥

---

१८ तथान्यत्राधिकरणम् । (१३३)—द्वैतम्

३७ ओं तथान्यत्प्रतिषेधात् । (३४०)

चित्ते दृश्यं विष्णुरूपं कथमव्यक्तशब्दितम् ।
उपासते च यदिदं न ब्रह्म स्वान्तगोचरम् ॥
उपसना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः ।
तदेव ब्रह्म फलदं चित्ते यत्प्रतिबिम्बितम् ॥

अधिकरणार्थः । ध्यानविषयीभूत हरिः व्यक्तो अव्यक्तो वेति सन्देहे व्यक्तत्वे भक्तिवैयर्थ्यापातात्, अव्यक्त इति वक्तव्यः । तथा सति ध्यानकाले चित्ते दृश्यस्य विष्णोः कथमव्यक्तत्व सम्भवः इत्याक्षेपे समाधानं-चित्ते दृश्यमानः विष्णुः अन्य एव । 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते' इति श्रुत्या उपासनकाले चित्ते दृश्यमानः विष्णुः व्यक्तोऽपि, अव्यक्त एव । उपासना तु आपरोक्ष्यज्ञानजनकमेव । अतः विष्णोः व्यक्ताव्यक्तरूपमुभयं भवत्येव ॥

---

## १९. अनेन सर्वगतत्वाधिकरणम् ।(१३४)—द्वैतम्

**३८ ओं अनेन सर्वगतत्वमायामयशब्दादिभ्यः । (३६१)**

सर्वकाले सर्वदेशे सर्ववस्तुषु सृष्टिकृत् ।
विष्णुरेव चतुर्वेदशिखायामुच्यते स्मृतौ ॥

अधिकरणार्थः । अत्र जगत्कर्तृत्वे संशयमापाततः उत्पाद्य समाधीयते । विष्णुः सर्वदेश सर्वकाल-सर्ववस्तुसृष्ट्यादि कर्ता भवितुं नार्हति । लोके तथा अदृष्टत्वात् । बहवो राजानः बहुदेशाधिपाः भिन्ना एव नगरसृष्ट्यादिकं पालनसंहारादिकं च कुर्वन्ति । तद्वदिति पूर्वपक्षे समाधानमाहा; 'अनेन सर्वगतत्वं' इत्यादिना ।

"सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु ।
स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ॥"

'अतो मायामयं विष्णुं प्रवदन्ति सनातनम् ।' इति चतुर्वेदशिखाप्रामाण्यात् विष्णुरेव सार्वकालिक कर्ता । इति ॥

---

८ फलाधिकरणम् । (१००)—अद्वैतम्

३८ फलमत उपपत्तेः । (३५६)
३९ श्रुतत्वाच्च । (३५७)
४० धर्मं जैमिनिरत एव । (३५८)
४१ पूर्वन्तु बादरायणो हेतुव्यपदेशात् । (३५९)

यः कर्मणा तृप्यति तृप्त एव फलप्रदाता परमेश एव ।
फलप्रदं धर्ममिहाह पूर्वः फलप्रदं ब्रह्मपरो मुनिस्सः ॥

**अधिकरणार्थः** । जैमिनिः यागादि कर्तुः फलप्रदं यागादिकर्म वा, कर्मणा आराधितो देवो वा, आर्थापत्तिप्रमाणसिद्धं अपूर्वं वेति संशय्य,

"विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥"

इत्याङ्गीकृत्य अपूर्वाद्याश्रयणे क्लेशं च मत्वा कर्मैव फलप्रदमित्यवोचत् ।

'एषह्येव साधुकर्म कारयति, तं यमेभ्यः लोकेभ्यः उन्निनीषते एष उ एवासाधुकर्म कारयति, तं यमधो निनीषते' इति श्रुत्या, 'लभते च ततः कामान् मयैव विहितान् हितान्' इति गीतोक्त्या च परमेश्वर एव फलप्रद इति बादरायणो अवादीत् । इति ॥

---

८ फलाधिकरणम् । (८२)—विशिष्टाद्वैतं

३७ फलमत उपपत्तेः । (३५१)
३८ श्रुतत्वाच्च । (३५२)
३९ धर्मं जैमिनिरत एव । (३५३)
४० पूर्वं तु बादरायणो हेतुव्यपदेशात् । (३५३)

ऐहिकामुष्मिकं मोक्षं जायते परमात्मनः ।
कर्मणो जैमिनिः पूर्वं बादरायणसम्मतम् ॥

**अधिकरणार्थः** । इदानीं भगवत एव फलप्रदत्वं न तु कर्मणः; तदाराधितदेवतानां अपूर्वस्य च इति वक्तुमिदमधिकरणम् । तत्र जैमिनिः यागदानहोमोपासनरूप धर्मएव फलप्रदः; यथा वा 'कृषितो नास्ति दुर्भिक्षं' इत्यादि प्रमाणात्, द्वादशंसु सीतासु वपति* (* பன்னிரண்டு சால் உழுது விரைக்க வேணும்.) इत्यादि शास्त्रात् कृष्यादि कर्मैव फलप्रदं । यथा वा शरीरक्लेशे सति मर्दन संवाहनादि कर्मैव क्लेशापनोदकं भवति, तथा यागदानहोमोपासनादि धर्म एव फलप्रद इति जैमिनिर्मन्यते । बादरायणस्तु 'इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः'

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥"

इति श्रुतिस्मृतिभ्यां परमात्मैव सर्वफलप्रद इति मन्यते । इति ॥

---

## २० फलाधिकरणम् । (१३५)—द्वैतम्

३९ फलमत उपपत्तेः । (३६२)
४० ओं श्रुतत्वाच्च । (३६३)
४१ ओं धर्मं जैमिनिरत एव । (३६४)
४२ ओं पूर्वं तु बादरायणो हेतुव्यपदेशात् । (३६५)

**अचेतनत्वात्फलदं कर्मादेर्न हि युज्यते ।**
**फलप्रदो विष्णुरेव 'रातिर्दातु'रिति श्रुतेः ॥**
**कर्मणा प्रेरिताद्विष्णोः फलं स्यादिति जैमिनिः ।**
**फलदत्वं हरेरेव बादरायणसम्मतम् ॥**

**अधिकरणार्थः** । अत्र फलप्रदत्वं विष्णोरेवेत्युच्यते । विष्णुरेव कर्म कारयति ततश्च कर्मैव फलप्रदमिति जैमिनिः । कर्मणः ईश्वरस्य च फलप्रदत्वमभ्युपगम्य तत्रापि प्राधान्येन विष्णोरेव फलप्रदत्वमिति बादरायणो जगाद ।

विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणं=दातुः=यजमानस्य; परायणं विष्णुः, रातिः—फलप्रदः इत्यर्थः ॥ इति ॥

---

इति भारद्वाजकुलतिलकानां 'विद्वन्मण्डन', 'विद्यावारिधि'
बिरदालंकृतानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां
दानाधिकारिणां मतत्रयनिरूपकाणां
**कालि वङ्गीपुरं रङ्गाचार्याणां कृतिषु**
मतत्रयसारसंग्रहे तृतीयाध्याये द्वितीयः पादः ॥

---




Printed at the
Sri Janardana Printing works Ltd.,
Town High School Road, Kumbakonam.

॥ श्रीः ॥

# ॥ मतत्रयसारसंग्रहे ॥

## ॥ तृतीयाध्याये—तृतीयः पादः ॥

### अद्वैतम् सर्ववेदान्तप्रत्ययाधिकरणम् । (१०१)

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । (३६०)
भेदान्नेतिचेदेकस्यामपि । (३६१)
स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च
दर्शयति च । (३६३) तन्नियमः । (३६२)

एतावता च व्याख्यातं ज्ञेयं ब्रह्म ततः परम् ।
तद्विज्ञानानि भिन्नानि न वेत्यत्र विचार्यते ॥ १ ॥

यद्यप्येकरसं ब्रह्म प्रज्ञानघनमेव तत् ।
विध्यभावेन विज्ञानं तथाऽपि सगुणं त्विदम् ॥ २ ॥

दृष्टादृष्टफलप्रबोधविषयाः भिन्नासु शाखासु याः
श्रूयन्ते विधयः तदैक्यमुत वा भिन्नाः कथं चिन्तिताः ।
विध्याख्ये फलरूपके च सदृशे तत्राभिदा धीरिति
त्र्य्यन्तेषु विनिश्चितेति गुणसङ्गासङ्गचिन्ताफलाः ॥ ३ ॥

एकस्यामपिविद्यायां किंचिद्भेदाद्भिदेति न ।
फलादीनां समत्वाच्च विध्यैक्यं ज्ञायते ध्रुवम् ॥ ४ ॥

कस्यांचिदङ्गं तु शिरोव्रताख्यं दृष्टं तथाऽन्यत्र न दृष्टमित्थम् ।
शिरोव्रतं चाध्ययनाङ्गमेव न ब्रह्मविद्याङ्गमतो न भेदः ॥ ५ ॥

**अ-र्थः ।** अत्र सगुणब्रह्मविषया प्राणादिविषयाचेयं विज्ञानभेदाभेद-चिन्ता प्रसूयते । प्रतिवेदान्तं विज्ञानभेदः, आहोस्विन्नेति विशये, वेदान्तान्तरे विहितविज्ञानात् वेदान्तान्तरे विहितं विज्ञानमन्यदेवेति प्राप्ते, सर्ववेदान्तविज्ञानानि एकमेव । विधिफलदेवताख्याऽविशेषात् । 'नामरूप-धर्म-विशेष-पुनरुक्ति-निन्दा-ऽशक्ति-समाप्तिवचन-प्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे

कर्मभेदस्यात्' (पूर्वमीमांसा. २-४-२) इत्यनेन सूत्रेण पूर्वपक्षं कृत्वा 'एकं वा सम्योगरूपचोदनाख्याविशेषात्' इत्यादि सूत्रैः शाखान्तरस्थकर्माण्यपि अन्यशाखाविहितैः कर्मभिः अभिन्नान्येवेति सिद्धान्तितम् । तद्वदत्र ज्ञानकाण्डेऽपि भिन्नशाखासु प्रतीयमानमपि ज्ञानमभिन्नमेव । एकस्यामपि विद्यायां पञ्चाग्निविद्ययोः गुणभेदेप्यभेदो दृश्यते । आथर्वणिकानां शाखासु शिरोव्रताख्यं कञ्चन व्रतं श्रूयते । अन्यत्र न । तत्र कथं एकविद्यात्वमिति चेत् 'नैतदचीर्णव्रतोऽधीते' इति श्रुत्या शिरोव्रतं वेदाध्ययनाङ्गमेवेति ज्ञायते । 'तेषामेवैतां ब्रह्मविद्यां वदेत, शिरोव्रतं विधिवद्यैस्तु चीर्णं' इत्यत्र ब्रह्मविद्येत्यस्य वेदाख्यविद्येत्यर्थः, न तु परब्रह्मविद्येत्यर्थः । 'ब्रह्म तत्वं तपोवेदे न द्वयोः पुंसि वेधसि' इति ब्रह्मशब्दस्य वेदे प्रयोगदृष्टेः । 'सर्वे वेदाः यत्पदमामनन्ति इति श्रुत्या च सर्ववेदान्तप्रतीयमानं ज्ञानं एकमेवेति निश्चीयते । इति ॥

---

### विशिष्टाद्वैतम् सर्ववेदान्तप्रत्ययाधिकरणम् ।

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । (३५५)
भेदान्नेति चेदेकस्यामपि । (३५६)
स्वाध्यायस्य तथात्वे हि समाचारोऽधिकाराच्च सववच्च
दर्शयति च । (३५८) तन्नियमः । (३५७)
उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । (३५९)

गुणोपसंहारविबोधकेंघ्रौ सद्ब्रह्मचिन्ताफलवत्त्वसिद्ध्यै ।
गुणानुषङ्गाननुषङ्गबोधः कुत्रेति विद्यासु विचार्यतेस्मिन् ॥ ६ ॥

नानाशाखासु दृष्टा गुणसहितपरब्रह्मचिन्ताविशेषाः
आख्यारूपं विधानं फलमपि च समं तत्र विद्यैक्यमिष्टम् ।
तेषां भेदे च भिन्नाः इति च नयविदां संप्रदायोऽत्र दृष्टः
विद्यैकत्वे गुणानाम्*उपहरणमथोऽन्यथा नेति वक्ति ॥ ७ ॥

शिरोव्रतं च विद्याङ्गमथवाध्ययनाङ्गकम् ।
न कुर्यादव्रतोऽध्यायमित्यतोऽध्ययनाङ्गकम् ॥ ८ ॥

---

* उपहरणम् = उपसम्हार इत्यर्थः ॥

अ - र्थः । अस्मिन् पादे उपासनाप्रकारः चिन्त्यते । अनेकशाखासु श्रूयमाणाया वैश्वानरविद्यादिकायाः एकविद्यात्वं उत विद्याभेद इति विचार्यते । यथा 'समिधो यजति इडो यजति' इत्यादिषु "यजति" श्रवणाभ्यासात् अविशेषपुनश्रवणस्येव अत्रापि विद्यासु सत्वात् विद्याभेद इति प्राप्ते, फल-देवता-विधि-नाम भेदात् सैवेयं विद्येति शाखान्तरेपि प्रत्यभिज्ञायते । प्रतिपत्तृभेदात् पुनश्रुत्यादिकं ब्रह्मविद्यायामुपपद्यत एव । आथर्वणिकशिरोव्रतं चाध्ययनाङ्गमेव । न ब्रह्मविद्याङ्गमिति तत्रापि विद्यैक्यमेवेति सर्ववेदान्तप्रत्ययं ज्ञानमेकमेव । पूर्वकाण्डसिद्धमपि स्थिरीकरणार्थं पुनराशंक्य समाधानं कृतमिति न शास्त्रैकत्व-विरोधः ।

" आक्षिप्यस्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीताः
केचित् व्युत्पादनीयाः क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्य ।
इत्थं सर्वत्रचिन्ताक्रम इति समतां वीक्ष्य मध्यस्थदृष्ट्या
शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिस्सावधानैर्विभाव्या ॥

इति श्लोकेन ऐकशास्त्र्यखण्डनयुक्तिविरोधपरिहारः पूर्वाचार्यैरेवोक्त इति नेह तन्यते ॥ शिरोव्रतं नाम " अग्निरित्यादिभिः मन्त्रैः षड्भिरशुद्धेन भस्मना ।
सर्वांगोधूलनं कुर्यात् शिरोव्रतसमाह्वयम् ॥ " इति सौरपुराणात्
भस्मोद्धूलनमेव । इति ॥

---

## द्वैतम् सर्ववेदान्तप्रत्ययाधिकरणम् । (१३६)

**ओं सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । (३६६)**
**ओं भेदान्नेति चेदेकस्यामपि । (३६७)**
**ओं स्वाध्यायस्य तथात्वे न हि समचारोऽधिकाराच्च । (३६८)**
**ओं सलिलवच्चतन्नियमः । (३६९)**
**ओं दर्शयति च । (३७०)**

**सर्वागमप्राप्तविनिर्णयोत्थ ज्ञानं परंब्रह्म फलाद्यभेदात् ।**
**स्वाध्यायसामान्यविधिप्रमातः विष्ण्वर्थकान्येव वचांसि वेदे ॥ ९**

**अम्भांसि सर्वाणि यथाऽब्धिगानि तथा समाचारयुताश्च सर्वे ।**
**स पञ्चरात्रागमसेतिहासवेदैर्हरिर्ज्ञेय इति श्रुतेश्च ॥ १० ॥**

**अ - र्थः** । अस्मिन् पादे उपासना उच्यते । सर्ववेदान्तप्रत्ययं सर्ववेद-निर्णयोत्पाद्यज्ञानं ब्रह्म । सर्ववेदेषु आत्मोपासनाद्यविशेषदृष्टेः । अन्तशब्दः निर्णयपरः । 'उभयोरपि दृष्टोन्तः' इत्यादौ अन्तशब्दस्य निर्णयार्थक दर्शनात् । न च प्रतिशाखं 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्युक्तिभेदात् एकाधिकारिविषयाः सर्वशाखाः न भवन्तीति वाच्यम् । एकस्यामपि शाखायां 'आत्मेत्येवोपासीत', 'कं ब्रह्म खं ब्रह्म' इत्यादि भेदनिर्देशात् । सर्व-शाखा एकाधिकारिविषयाः भवेयुरेव । 'स्वाध्यायोऽध्येतव्यः' इति सर्ववेदा-ध्ययनस्यैव विधानात् सर्ववेदोक्तकर्माचरणे सर्वेषामधिकारात् सर्ववेदोक्तात्मो-पासनायामपि सर्वेषामधिकार एव ।

"यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।
एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये ॥"

इति यथा सलिलं समुद्रं गच्छति, एवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति ॥

'सर्वैश्च वेदैः परमो हि देवः जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत् ।' इत्यादिना सर्ववेदवेद्यत्वं ब्रह्मणः उक्तम् । सर्ववेदाध्ययनस्य शक्त्यभावादेव एको वेदः पठ्यते । शक्तौ सत्यां सर्ववेदाः अभ्यस्यन्त एव ।

अत्राधिकरणे ब्रम्हेति पदमध्याहृत्य, ब्रह्म सर्ववेदान्तप्रत्ययं, सर्ववेदान्त-निर्णयोत्पाद्यज्ञानवत् । यथाशक्ति स्वस्ववेदनिर्णयजन्यज्ञानवतां सर्वेषामप्युपास्यम् ।

"यथाशक्त्याखिलान् वेदान्विज्ञायोपासनं भवेत् ।
तत्राखिलस्य विज्ञप्तिः सम्यक्ब्रह्मण एव हि ॥
तदन्येषां यथायोग्यमखिलज्ञप्तिरिष्यते ।
तावतोपासनेयोग्यो भवेदेवाखिलः पुमान् ॥"

इत्यणुव्याख्यानात् यथाशक्ति स्वस्वाधीतवेदनिर्णयजन्य ज्ञानवतामपि ब्रह्म उपास्यमित्यर्थः । सूत्रस्थसर्वपदं लुप्तषष्ठीकम् । सर्वेषां ब्रह्मोपास्यमिति तात्पर्यम् । चोदनाद्यविशेषात् विधिफलाद्यविशेषात् । 'प्रत्ययोऽधीनशपथ-ज्ञानविश्वासहेतुषु' इति निघण्टूक्तेः प्रत्ययशब्दस्य ज्ञानमित्यर्थः । प्रत्ययं= प्रत्ययवत्—अर्शाद्यच् इति अच्प्रत्ययान्तम् । इति ॥

---

## अद्वैतम् उपसंहाराधिकरणम् । (१०२)

### उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । (३६४)

**ज्ञानानि सर्वागमशीर्षजानि तुल्यानि चेत्तत्र गुणोपहारः ।**
**विद्याविभेदे सति तत्र तत्र प्रोक्ता गुणाः केवलमत्र चिन्त्याः ॥११॥**

अ-र्थः । सर्ववेदान्तज्ञाने समाने सति अन्यत्रोक्तगुणानामन्यत्राप्युपसंहारः । अग्निहोत्रादिधर्माणां भिन्नशाखोक्तानामपि तदेवैकं अग्निहोत्रादिकर्मेति मत्वा अन्यत्रोक्तं अङ्गजातं अन्यत्राप्यनुष्ठीयते तद्वत् अत्राप्युपसंहारः एकमिति । विज्ञानभेदे सति नोपसंहार इत्यर्थः । इति ॥

---

## द्वैतम् उपसंहाराधिकरणम् । (१३७)

ओं उपसंहारोर्थभेदाद्विधिशेषवत्समाने च । (३७१)
ओं अन्यथात्वं च शब्दादिति चेन्नाविशेषात् । (३७२)
ओं न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् । (३७३)
ओं संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । (३७४)

**वेदोदितान् गुणान् सर्वान् दोषाभावांश्च यत्नतः ।**
**उपसंहृत्य चिन्त्योऽसौ सन्ध्यावन्दनकर्मवत् ॥ १२ ॥**
**अनात्मत्वनिवृत्त्यर्थं आत्मेत्येवेत्युपक्रमः ।**
**वरोवरीयस्त्वाद्येषु न कार्या चोपसंहृतिः ॥ १३ ॥**

अ-र्थः । ब्रह्मोपास्तौ सर्ववेदोक्तान् गुणान् दोषाभावं च उपसंहृत्य एकः विष्णुरुपास्यः । "विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि ।
यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः ॥"
इत्यादिना समानविषये गुणोपसंहारः कर्तव्यः । वेदे क्वचित् दृष्ट 'सोऽरोदीत्' इत्यादि दोषाणां नोपसंहारः । अयमर्थः — अर्थाभेदात्—गुणानां दोषाभावानां च उपसंहारः कर्तव्यः, अविशेषात् । विधिशेषवत्—'अहरहस्सन्ध्यामुपासीत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि विधेः अङ्गभूत स्नानाचमनप्रयाजादिवत् उपास्यस्य=विष्णोः गुणोपसंहारः कर्तव्य इत्यर्थः, समानविषये, न तु दोषविषये= 'सोऽरोदीत्' इत्यादौ इत्यर्थः. । एते गुणाः नोपास्या इति विशेषवचनाभावात् सर्वगुणविशिष्टः आत्मा उपास्य इत्यर्थः । 'आत्मेत्येव' इत्यवधारणं तु अनात्मत्वनिवृत्त्यर्थमेव, न गुणनिवृत्त्यर्थः । यदि प्रकरणभेदोऽस्ति परोवरीयस्त्वादिगुणभेदात् भेद एव । परोवरीयस्त्वादि गुणमात्रविशिष्टं ब्रह्म उपास्यं तत्र । न सर्वगुणविशिष्टम् । 'तस्मादेकस्सर्वगुणैर्विचिन्त्यः' इति कौण्डिन्यश्रुत्या सर्वगुणविशिष्टमेव ब्रह्म उपास्यम् । इति ॥

---

अद्वैतम् अन्यथात्वाधिकरणम् । (१०३)

अन्यथात्वं शब्दादिति चेन्नाविशेषात् । (३६५)
न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् । (३६६)
संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । (३६७)

उद्गीथावयवं तदक्षरमुपासीतेति काचिच्छ्रुतिः
उद्गीथं खलु दैत्यमारणपराः आजग्मुरेते परा ।
तस्मात्प्रक्रमभेद एव विदितः तत्प्राणविद्या भिदा
नेत्रादित्यगवेदनादितरदाकाशादि विद्या यथा ॥ १४ ॥

परोवरीयस्त्वगुणादिभेदात् संज्ञैक्यसत्त्वेऽपि यथा विभेदः ।
उद्गाय नस्त्वं त्विति कर्तृकर्म भेदादियं वाजिकसामगा च ॥१५

अ-र्थः । वाजसनेयके 'ते ह देवा ऊचुः, हन्तासुरान् यज्ञे उद्गीथेनात्ययाम' (बृ.) ते ह वाचमूचुः त्वं न उद्गायेति' (बृ.) इत्यादि छान्दोग्ये तद्ध देवा उद्गीथमाजह्रुः अनेनैनानभिहनिष्यामः' 'तमुद्गीथमुपासां चक्रिरे' (बृ) इत्यादि । अत्र छान्दोग्यवाजसनेयकयोः प्राणविद्ययोः भेदाभेद संशये प्रकरणभेदात् 'स एष परोवरीयान् उद्गीथः, स एषोऽनन्तः' इति परोवरीयस्त्वगुणविशिष्टं उद्गीथोपासनं, यथा अक्ष्यादित्यादिगत हिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनात् भिन्नं, तद्वत् छान्दोग्यगतप्राणविद्यायाः बृहदारण्यकपठितप्राणविद्या भिन्नैव । उपक्रमानुरोधेन उपसंहारनयनमिति सिद्धान्तात्, अत्र कस्यांचिद्विद्यायां उद्गीथावयव-ओंकारे प्राणदृष्टिः । अन्यस्यां तु उद्गीथ एव प्राणदृष्टिः । 'त्वं न उद्गाय' इति कर्मकर्तृभेदश्च दृश्यत इति न विद्यैक्यम् । इति ॥

---

विशिष्टाद्वैतम् अन्यथात्वाधिकरणम् । (८४)

अन्यथात्वं शब्दादिति चेन्नाविशेषात् । (३६०)
न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् । (३६१)
संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । (३६२)
व्याप्तेश्च समञ्जसम् । (३६३)

परोवरीयस्त्वादिगुणादक्षिविद्य यथेतरा ।
उद्गीथविद्या भिन्नैव प्रतीकोद्गीथभक्तितः ॥ १६ ॥

नित्याग्निहोत्रेऽप्ययनाग्निहोत्रे संज्ञा समानाऽपि यथा विभेदः ।
उद्गीथविद्याऽपि तथैव भिन्ना छन्दोगवाजिश्रुतिकोटि दृष्टा ॥ १७ ॥

अ-र्थः । छन्दोगानां वाजिनां च उद्गीथविद्या दृष्टा । तत्र विद्यैक्यं, उत नेति विशये संज्ञाद्यविशेषात् विद्यैक्यमिति पूर्वपक्षे प्रकरणभेदात् परोवरीयस्त्वादिगुणभेदात् आकाशादिविद्यायाः, अक्ष्यादित्वादि विद्या यथा वा भिन्ना तथैव अत्रापि उद्गीथावयवभूत ओंकारोपास्त्या कृत्स्नोद्गीथभक्तिरूपोपास्त्या च रूपभेदात् भिन्नैव विद्या । संज्ञैक्यसत्वात् विद्याऽभेद उक्त इति चेन्न । यथा अग्निहोत्रसंज्ञा 'यावज्जीवमग्निहोत्रं जुहोति' इति नित्याग्निहोत्रे, मासमात्रहोमसमाप्तिक अयनाग्निहोत्रे च समाना वर्तते, तथापि तत्राग्निहोत्रं भिन्नमेव, तद्वत् । अत्र उद्गीथावयवभूतप्रणवः प्राणदृष्ट्या उपास्यः छन्दोगानां, वाजसनेयिनां तु कृत्स्नोद्गीथविषयः उद्गीथः प्राणदृष्ट्योपास्यः इति रूपभेदात् भिन्नैव । उद्गीथावयवभूतप्रणवस्यैव बह्वीषु विद्यासु व्याप्तिसत्त्वात् छान्दोग्ये, तत्प्रायपाठानुसारात् 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यपि उद्गीथावयवभूत प्रणव एव उपास्य इति अर्थबोधकमिति ज्ञायते । अतः छान्दोग्योद्गीथविद्यायाः भिन्नैव वाजिशाखागतोद्गीथविद्या ।

अत्र पक्षे "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्र उद्गीथमित्यस्य उद्गीथावयवभूत ओंकाररूपार्थाश्रयणे गौणमेव स्यात् उद्गीथपदमिति चेन्न, समुदाये प्रयुज्यमानशब्दः अवयवेऽपि भवत्येव । 'ग्रामो दग्धः', 'पटो दग्धः' इत्यादाविव उद्गीथशब्दः उद्गीथावयवबोधार्थको भवत्येव । तत्र गौणार्थ इति नेष्यते । इति ॥

---

## अद्वैतम् व्याप्त्यधिकरणम् । (१०४)

### व्याप्तेश्च समञ्जसम् । (३६८)

आत्मेत्यक्षरमुद्गीथमत्र भाति चतुष्टयम् ।
अभ्यासश्चापवदनमेकत्वं च विशेषणम् ॥ १८ ॥

सामानाधिकरण्यं तत् तत्र कोऽर्थ इहेति चेत् ।
एकत्वाध्यासापवादाः सावद्यास्तद्विशेषणम् ॥ १९ ॥

**उद्गीथावयवोङ्कारव्याप्तेर्हेतोरुपासना ।**
**कृत्स्नोद्गीथं वाजिशाखा वक्तियुपास्यं ततो भिदा ॥ २० ॥**

**अ - र्थः** । 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.) इत्यत्र समानविभक्तिश्रवणात् सामानाधिकरण्यं चतुर्धा शास्त्रे भाति । अध्यासः, अपवादः, एकत्वं, विशेषणमिति ।

तत्र 'सिंहो माणवकः', 'नामब्रम्हेत्युपासीत' बिम्बादिषु विष्ण्वादि बुद्धिः इत्यध्यासः । देहेन्द्रियसंघाते आत्मबुद्धिः, आत्मन्येव 'तत्त्वमसी'ति पश्चाद्भाविन्या आत्मबुद्धया निवर्त्यत इत्यपवादः । 'द्विजोत्तमो ब्राह्मणो भूदेवः' इति एकत्वं । विशेषणं तु 'नीलं यत् उत्फलं तदानय' इति । अत्र चतुष्टये विशेषणरूपसामानाधिकरण्यमेव आश्रीयते । सर्ववेदव्यापिनः ओमित्यस्य अक्षरस्य ग्रहणप्रसक्तौ, उद्गीथशब्दविशेषणेन औद्गात्रविशेषितस्य ओंकारस्यैव उपास्यतया ग्रहणमित्यर्थः । इतरपक्षास्तु प्रकृते अनुपयुक्ततया, व्यावर्तनरूपप्रयोजनाभावाच्च नाश्रीयन्ते । छान्दोग्योपनिषदि उद्गीथावयवभूतोंकारबाहुल्यदर्शनात् उद्गीथावयवभूतोंकार एवोपास्य इति निर्णीयते । इति ॥

---

**द्वैतम् प्राप्त्यधिकरणम् । (१३८)**

**ओं प्राप्तेश्च समञ्जसम् । (३७५)**

**विरिञ्चिस्तु गुणैस्सर्वैः जुष्टं ब्रह्म विचिन्तयेत् ।**
**यथाक्रमं मनुष्यास्तु चिन्तयेयुर्हरिं गुणैः ॥ २१ ॥**

**अ - र्थः** । ''गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।
अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु ॥''

इति प्रमाणात् चतुर्मुखस्यैव सर्वगुणविशिष्टब्रह्मोपासनम् । अन्येषां तु यथासंभवं गुणोपसंहारः अनुपसंहारश्च भवति । अधिकारिकभेदेन गुणोपसंहारानुपसंहारयोः प्राप्तिसंभवात् उभयमपि समञ्जसमेव । इति ॥

---

**अद्वैतम् सर्वाभेदाधिकरणम् । (१०५)**

**सर्वाभेदादन्यत्रेमे । (३६९)**

**क्वचिद्वसिष्ठत्वगुणाद्यनूक्त्या सा प्राणविद्या पृथगेव मैवम् ।**
**विद्याद्वये सर्वगुणे समाने परत्र सिद्धस्य परत्र सङ्गः ॥ २२ ॥**

**पाण्डित्यशौर्यादिगुणोपपन्ने प्राज्ञे च देशान्तरगे तदीयाः ।**
**सद्यो गुणाः केचन न प्रतीताः स एव पश्चाद्गुणवानमौ तु ॥२३॥**

**वसिष्ठताद्याश्च गुणास्तथाऽत्र ज्यैष्ठ्यादिनोक्ता इति ते परत्र ।**
**सर्वत्र सर्वे च गुणा विचिन्त्याः तत्प्राणविद्यैक्यमवेहि विद्वन् ॥ २४ ॥**

अ-र्थः । छान्दोग्ये वाजसनेयके च कौषीतकिप्रभृतिषु च प्राणविद्यासंवादे एकत्र 'त्वं तद्वसिष्ठोऽसि' ( बृ. ) इत्यादिगुणा उक्ताः । परत्र श्रैष्ठ्यादिगुणा उक्ताः । तत्र विद्यैक्ये अनुक्ताः वसिष्ठत्वादिगुणा अपि समस्येरन् , विद्याभेदे नास्येरन्निति विशये वसिष्ठत्वादिगुणाद्यनुक्तेः नैक्यमिति प्राप्ते श्रेष्ठत्वादिगुणान्तर्भूताः वसिष्ठत्वादय इति सर्वाभेदात् सर्वत्र प्राणविद्यासु सर्वे गुणा उपसंहर्तव्या इति विद्यैक्यमेव । यथा वा शौर्यादिगुणविशिष्टदेवदत्तः देशान्तरं गतः तद्देश्यैः अज्ञातगुणोऽपि देवदत्तः नातद्गुणो भवति । परिचयविशेषात् तद्देशस्थैः देवदत्तगुणाः पश्चाद्विभाव्यन्त एव । तद्वदित्यर्थः । इति ॥

---

## विशिष्टाद्वैतम् सर्वाभेदाधिकरणम् । (८५)

### सर्वाभेदादन्यत्रेमे । (३६४)

**छन्दोगकौषीतकिवाक्यदृष्टे प्राणाख्यविद्ये सकला गुणास्ते ।**
**अभेदरूपश्च वसिष्ठताद्याः तदन्तरस्था इति ते समाने ॥ २५ ॥**

अ-र्थः । 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इत्यादिना छान्दोग्ये वाजसनेयके च ज्यैष्ठ्यगुणकः प्राणः उपास्यः प्रतीतः । कौषीतकिप्राणविद्यायां तथैव । पूर्वत्र तु वसिष्ठत्वादयो अधिकाः पठिताः । तत्र संशयः वसिष्ठत्वादिगुणरहितविद्यायाः अन्या भिन्नेति प्राप्ते सर्वत्र सर्वगुणाभेदात् वसिष्ठत्वादि गुणोपि श्रेष्ठत्वादिगुणान्तर्भूत इति विद्यैक्यमिति सर्वेगुणास्सर्वत्र प्राणविद्यासु उपसंहर्तव्या एव । इति ॥

---

## द्वैतम् सर्वाभेदाधिकरणम् । (१३९)

### ओं सर्वाभेदादन्यत्रेमे । (३७६)

**गुणोपसंहृतिस्त्वन्या युज्यते हरिचिन्तने ।**
**ये गुणाः प्रतिभासन्ते ते चिन्त्या नेतरे बुधैः ॥ २६ ॥**

अ - र्थः । अत्र चतुर्मुखादीनां विष्णुध्याने बहुगुणोपसंहारः कर्तव्यः, अधिकफलवत्त्वदर्शनात् । इतरेषां तु अल्पशक्तिकानां यथासंभवं गुणोपसंहारः कर्तव्यः, फलतारतम्यदर्शनात् ।

"सम्पूर्णोपासनाद्ब्रह्म सम्पूर्णानन्दभाक् भवेत् ।
इतरेऽपि यथा योगं सम्यङ् मुक्तौ भवन्ति हि ॥" इति प्रमाणात् ।

सूत्रार्थः – इमे=ब्रह्मादयः, सर्वाभेदात्=सर्वगुणोपसंहारविशिष्टध्यानात्, अन्यत्र = अल्पगुणोपसंहारफलात् अन्यमहत्फले (भवन्ति) इति । ब्रह्मादयः तादृशफलभाजो भवन्तीत्यर्थः । सर्वगुणोपसंहारविशिष्टब्रह्मोपास्ति फलभाजो भवन्तीत्यर्थः । इति ॥

---

## अद्वैतम् आनन्दाद्यधिकरणम् । (१०६)

**आनन्दादयः प्रधानस्य । (३७०)**
**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । (३७१)**
**इतरेत्वर्थसामान्यात् । (३७२)**

**आनन्दविज्ञानविभुत्वमुख्याः सर्वत्र तुल्याः परमात्मधर्माः ।**
**न सत्यकामप्रियमोदमुख्याः यत्र श्रुतास्तत्र तु नेतरत्र ॥ २७ ॥**

अ - र्थः । ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु ब्रह्मणः आनन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वमित्यादि धर्माः क्वचित् दृश्यन्ते । क्वचिन्न । तत्र आनन्दरूपत्वादि धर्माः यत्र विद्यासु अश्रुता अपि तत्र ते अवश्यं प्रतिपत्तव्याः । सर्वत्र प्रधानरूपब्रह्मोपास्त्यभेदादेव । इतरे 'तस्य प्रियमेव शिरः' इत्यादयो गुणाः यत्र श्रुतास्तत्रैव ते । तेषां गुणानां ब्रह्मप्रतिपत्त्यर्थं कल्पनाभूताः । इतरे आनन्दादयस्तु ब्रह्मस्वरूपप्रतिपादनायैव उच्यमानाः सर्वत्र प्रतीयेरन्नेवेति ॥

---

## अद्वैतम् आध्यानाधिकरणम् । (१०७)

**आध्यानाय प्रयोजनाभावात् । (३७३)**
**आत्मशब्दाच्च । (३७४)**

**परं न किञ्चित् पुरुषादितीह कृत्स्नात्परत्वोक्तिरथात्मनि स्यात् ।**
**विमुक्तबन्धप्रतिपादनाय पृथक् परत्वाश्रयणे तु नार्थः ॥ २८ ॥**

अ - र्थः । 'इन्द्रियेभ्यः पराह्यर्थाः' इत्यारभ्य 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः' इत्यत्र इमे सर्वे अर्थादयः ततः परत्वेन प्रतिपाद्यन्ते,

उत पुरुष एव एभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति संशये सर्वेषमेषां परत्वेन पुरुषशब्दवाच्यो आत्मा पर इत्यर्थ इति ज्ञायते । 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं' इत्यादिना आत्मज्ञानस्य बन्धनिवृत्तिरूपप्रयोजन सत्त्वात् आध्यानपूर्वक सम्यग्दर्शनमेव हि प्रयोजनम् । सम्यग्दर्शनं चात्मज्ञानमेव । तत्तत्परत्वप्रतिपादकार्थाश्रयणे तु न किञ्चित् प्रयोजनमिति ॥

---

अद्वैतम् आत्मगृहीत्यधिकरणम् । (१०८)

आत्मगृहीतिरितरवदुत्तरात् । (३७५)

अन्वयादिति चेत्स्यादवधारणात् । (३७६)

**'आत्मा वा इदमेक एव' समभूत् इत्यत्र धाताऽथवा ।**
**ब्रह्मैवायमनूद्यते नु विशये ब्रह्मैव पापठ्यते ॥ २९ ॥**

**सृष्ट्यादिप्रतिपादकप्रकरणे बह्वीषु विद्यास्वसौ ।**
**साक्षादात्मविबोधकश्च बहुशो दृष्टस्तथात्मा*ऽयकम् ॥ ३० ॥**

**आत्मेति योऽयं कतमस्सदेव सोम्येदमित्यत्र सदात्मशब्दौ ।**
**अमू समानाविति सत्पदार्थः आत्मैव वाक्यार्थवशाद्धि बुद्धः ॥३१॥**

अ - र्थः । 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.) इत्यत्र आत्मशब्दः विरिञ्चादिपरः, 'नान्यत्किंचन मिषत्, स ईक्षत लोकान्नु सृजा' इति (ऐ) इति लोकसृष्ट्याद्युक्तेः, इति प्राप्ते, आत्मगृहीतिः परमात्मग्रहणम् । अत्र आत्मशब्देन परमात्मैव गृह्यत इत्यर्थः । ईक्षापूर्वकस्रष्टृत्ववचनात् । यथा सृष्टिश्रवणेषु इतरेषु 'तस्माद्वा एतस्मात् आत्मन आकाशस्संभूतः' इत्यादिषु आत्मशब्देन परमात्मन एव ग्रहणं तद्वदित्यर्थः । लोकसृष्ट्यादिकं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयितव्यम् । ईक्षापूर्विकासृष्टिः परमात्मन एवेति सर्वत्र प्रसिद्धत्वात् अत्रापि 'स ईक्षत' इति प्रक्रम्य सृष्टिवचनात् आत्मशब्दः परमात्मपर एवेति ॥

यद्वा वाजसनेयके 'कतम आत्मा' इति 'योऽयं विज्ञानमयः' (बृ.) इत्यारम्य 'स वा एष महानज आत्मा अजरोऽमरोऽमृतोऽभयो ब्रह्म' इत्युपसंह्रियते ।

* अयकम् = असावित्यर्थः ।

छान्दोग्ये सदेव सोम्येदमग्र आसीत्' (वृ.) इत्यारभ्य 'स आत्मा तत्त्वमसि' इत्युपदिश्यते । तत्र उभयोः श्रुत्योः तुल्यार्थत्वं, उत अतुल्यार्थत्वमिति विशये अतुल्यार्थत्वमित्येव प्रतिभाति । क्वचित् आत्मशब्दोपक्रमात् आत्मतत्वोपदेश इति गम्यते । छान्दोग्ये तु सदेवेति उपक्रमोपदेशविपर्यय इति अतुल्यार्थत्वमिति प्राप्ते 'सदेव' इत्यत्र सच्छब्देन 'कतम आत्मा' इति बृहदारण्यकोक्त आत्मैव गृह्यते । उत्तरवाक्यावगतात्मोपदेशात् तुल्यार्थत्वमित्येव । यद्यपि उपक्रमानुगुण एवोपसंहारो वक्तव्यः । तथाऽपि सच्छब्देन आत्मैवोपक्रान्त इति नोपक्रमाधिकरणविरोधः । यद्यपि प्रकारभेदः उभयत्रास्ति । तथापि प्रतिपाद्यार्थाभेदात् सदात्मशब्दौ तुल्यार्थकौ परमात्मपरावेवेति ॥

---

## विशिष्टाद्वैतम् आनन्दाद्यधिकरणम् । (८६)

आनन्दादयः प्रधानस्य । (३६५)
प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । (३६६)
इतरेत्वर्थसामान्यात् । (३६७)
आध्यानायप्रयोजनाभावात् । (३६८)
आत्मशब्दाच्च । (३६९)
आत्मगृहीतिरितरवदुत्तरात् । (३७०)
अन्वयादिति चेत्स्यादवधारणात् । (३७१)

**सर्वासु परविद्यासु परमात्मा गुणीति सः ।**
**आनन्दादिविशिष्टोत्र ध्येयः प्रियमुखा न हि ॥ ३२ ॥**
**आत्मानन्दमयोप्यत्र शिरःपुच्छादि कल्पना ।**
**आध्यानायेति निर्णीतं ब्रह्मैवात्मेति निश्चयात् ॥ ३३ ॥**

**अ - र्थः** । सर्वासु परविद्यासु ब्रह्मस्वरूपप्रतिपादकाः गुणाः उपसंहर्तव्या न वेति विचार्यते । प्रकरणानधीतगुणानां ब्रह्मोपास्तौ असंभवात् यत्र श्रुताः तत्रैव ते ग्राह्या इति पूर्वपक्षे प्रधानस्य ब्रह्मणः सर्वेष्वुपासनेषु अभेदात् गुणानां गुणिनमन्तरास्थित्यभावात् क्वचित् अनधीता अपि ब्रह्मस्वरूपभूताः आनन्दादयो गुणाः सर्वत्रोपसंहर्तव्याः ।

'तस्य प्रियमेव शिरः' इत्यादयस्तु न सर्वत्र । मन्दबुद्धीनां ब्रह्मज्ञानसिद्ध्यर्थं शिरःपक्षादिकल्पना । 'अन्योऽन्तर आत्मा आनन्दमयः' इत्यत्र आत्मशब्देन परमात्मन एव ग्रहणात् तस्य च शिरःपक्षपुछाद्यसंभवाच्च । इति ॥

---

## द्वैतम् आनन्दाद्यधिकरणम् । (१४०)

**ओं आनन्दादयः प्रधानस्य । (३७७)**

**ज्ञानं सदात्मानन्दश्च हरिश्चिन्त्यो मुमुक्षुभिः ।**
**फलान्तरार्थिभिस्तत्र प्रोक्ताश्चिन्त्या गुणा हरेः ॥ ३४ ॥**

अ-र्थः । प्रधानफलमोक्षकामी विष्णुं आनन्दो ज्ञानं सदात्मेत्युपासीतेत्यर्थः । "सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ॥"
इति ब्रह्मतर्कात् फलान्तरार्थिभिः इतरे गुणाः उपास्या इत्यर्थः । इति ॥

---

## द्वैतम् प्रियशिरस्त्वाद्यधिकरणम् । (१४१)

**ओं प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । (३७८)**

**अजस्य पूर्णोपास्ति स्यान्नेतरेषामिति श्रुतेः ।**
**प्रियमेव शिरो मोदः इत्याद्या न गुणास्स्मृताः ॥ ३५ ॥**

अ-र्थः । फलान्तरार्थिभिः सर्वैः प्रियशिरस्त्वादयः गुणाः नोपास्याः । सर्वगुणविशिष्टोपासनं चतुर्मुखस्यैव । नेतरेषामिति ॥

"नैव सर्वगुणास्सर्वैरुपास्या मुक्तिभेदतः ।
विरिञ्चस्यैव यन्मुक्तौ आनन्दस्य सुपूर्णता ॥" इति वराहपुराणात् ॥

---

## द्वैतम् इतराधिकरणम् । (१४२)

**ओं इतरेत्वर्थसामान्यात् । (३७९)**

**आनन्दादि चतुर्भ्योऽन्ये मध्यमा ये गुणास्स्मृताः ।**
**ते सर्वे फलसाम्याय सूपास्या निर्जरादिभिः ॥ ३६ ॥**

अ-र्थः । सच्चिदानन्दात्मभ्यः इतरे गुणाः फलसाम्यलाभाय देवादिभिरुपास्या इत्यर्थः । इति ॥

---

## द्वैतम् आध्यानाधिकरणम् । (१४३)

**ओं आध्यानाय प्रयोजनाभावात् । (३८०)**
**ओं आत्मशब्दाच्च । (३८१)**

ध्यानार्थं ज्ञानलाभार्थं गुणास्सर्वे समाहृताः ।
ध्यानज्ञानेतरार्थस्तु गुणध्याने न चेष्यते ।
आत्मेत्येवेति विधिना गुणध्यान फलं न हि ॥ ३७ ॥

अ - र्थः । "ज्ञानार्थमथध्यानार्थं गुणानां समुदीरणा ।
ज्ञातव्याश्चैव ध्यातव्याः गुणास्सर्वेऽप्यतो हरेः ।
नान्यत्प्रयोजनं ज्ञानात् ध्यानात् कर्मकृतैरपि ॥"

इति प्रमाणात् हरेः सर्वगुणाः ध्यातव्या एव । फलं तु ज्ञानलाभ एव । न तु साक्षान्मोक्षः । 'आत्मेत्येवोपासीत' इति गुणानुपसंहारेण उपासनोक्तेः । इति ॥

---

द्वैतम् आत्मगृहीत्यधिकरणम् । (१४४)

ओं आत्मगृहीतिरितरवदुत्तरात् । (३८२)

आत्मेत्येवेत्युपास्योक्तौ आनन्दादिग्रहो न हि ।
सर्व एकी भवन्तीति चात्मशब्दोन्यलक्षणम् ॥ ३८ ॥

अ - र्थः । गुणानुपसंहारेण केवलमात्मोपास्तौ विवक्षितायां पूर्वोक्त-सच्चिदानन्दानामपि उपास्तौ ग्रहणं न भवेत् इत्याक्षेपे 'अत्रह्येते सर्वे एकी भवन्ति' इत्युत्तरवाक्यात् तेऽपि गुणाः आत्मशब्देन उच्यत एव । इति ॥

---

द्वैतम् अन्वयाधिकरणम् । (१४५)

ओं अन्वयादिति चेत्स्यादवधारणात् । (३८३)

सच्चिदानन्दरूपाणामात्मशब्दे समन्वयात् ।
व्युत्पत्त्या चात्मशब्दस्य चत्वारोऽर्थास्स्मृता बुधैः ॥३९॥

अ - र्थः । आनन्दादिसर्वगुणानां आत्मशब्दे समन्वयात् पूर्वोक्तं आनन्दादिगुणानन्वयबोधकात्मशब्दाच्चेति सूत्रोक्त 'आत्मेत्येवेत्युपासीत' इति वाक्यं न युक्तमिति चेत् सत्यं, आत्मेत्येवेत्यवधारणात् एवं स्यादेव । तथाऽपि सर्वोपसंहारविरोधवचनात् आत्मेत्येवेत्यत्र आत्मशब्देन सच्चिदानन्दात्मरूपमेव ध्येयमिति बोधनात् । इति ॥

---

अद्वैतम् कार्याख्यानाधिकरणम् । (१०९)

कार्याख्यानादपूर्वम् । (३७७)

**आचम्यमानेषु जलेष्वनग्नसंकीर्तनाद्प्परिधानबोधात् ।**
**प्राणाख्यविद्यास्थमनुष्यकार्योपस्पर्शतीर्थेषु पटत्वबुद्धिः ॥४०॥**

अ - र्थः । छन्दोगवाजसनेयिप्राणसंवादे 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाचाद्भिः परिदधति ।' (छा.) 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वाचाचामन्ति, एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (वाज.) इति । बृहदारण्यके तु 'तस्मादेवं वित् अशिष्यन्नाचामेत् अशित्वाचाचामेत् एतमेव तनमनग्नं कुरुते' इति । अत्र सर्वत्र प्राणविदः आचमनं विधेयं, उत आचमनीयास्वप्सु पटत्वानुसन्धानविधानं इति सन्दिह्य 'आचान्तेन कर्तव्यम्, शुचिना कर्तव्यम्' इति परिशुद्ध्यर्थं शास्त्राप्राप्ताचमनीयास्वप्सु वासस्त्वानुसन्धानमेव अप्राप्तत्वात् विधेयम् । 'किं मे वासः, अद्भिः परिदधति इति श्रुत्योरानुगुण्यात् । इति ॥

---

## विशिष्टाद्वैतम् कार्याख्यानाधिकरणम् । (८७)

### कार्याख्यानादपूर्वम् । (५७२)

**किं मे वासः पुष्करं वस्त्रमेतं प्राणं त्वेतं नग्नदोषेणहीनम् ।**
**इत्याद्युक्त्या प्राणविद्यास्थितस्य स्त्रोपस्पर्शे वस्त्रबुद्धिर्हि कार्या ॥४१॥**

अ - र्थः । 'किं मे वासः' इति प्राणेन पृष्टाः वागादयः 'आपो वास इत्यूचुः' । 'अशित्वा चाचामन्ति, एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति क्वचित्, क्वचित् 'अद्भिः परिदधति, लम्भुको ह वासो भवति, अनग्नो भवति ।' इति । अत्र प्राणविद्यानिष्ठस्य स्मृतिप्राप्ताचमनान्तरात् अपूर्वाचमनविधानं वा, प्राप्ताचमनीयास्वप्सु वासोऽनुसन्धानं वेति विशये वासस्त्वानुसन्धानमेव अप्राप्तत्वात् विधेयम् । 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' इति परिधानोक्तेः । इति ॥

---

## द्वैतम् कार्याख्यानाधिकरणम् । (१४६)

### ओं कार्याख्यानादपूर्वम् । (३८४)

**अलौकिकाद्ब्रह्मगुणाः ध्यातव्यास्ते मुमुक्षुभिः ।**
**अलौकिकं मुक्तिकार्यं यतोऽस्येति श्रुतेरिह ॥ ४२ ॥**
**नालौकिकाः प्रसिद्धाश्चेन् इन्द्रादावुपदेशतः ।**
**यथा ज्ञातो गुणास्तद्वत् ज्ञायन्ते वेदशब्दतः ॥ ४३ ॥**

अ - र्थः । *'अलौकिकास्तस्य गुणाह्युपास्याः अलौकिकं मुक्तिकार्यं यतोऽस्य' इति प्रमाणात् मोक्षार्थिभिः वेदोक्ताः विष्णुगुणा एव ध्यातव्याः । अलौकिकगुणाः न प्रसिद्धा इति न । 'वज्रहस्तः पुरन्दरः' इत्यादिना इन्द्रादीनां गुणाः वेदशब्दात् यथा ज्ञायन्ते तथा सर्ववेदैरपि विष्णुगुणाः ज्ञायन्त एव ।

सूत्रार्थः । कार्याख्यानात् = मोक्षस्याख्यानात्, अपूर्वं = अलौकिकं, अलौकिकं बहुगुणजातमुपसंहृत्य विष्णुर्ध्येय इत्यर्थः । इति ॥

---

### अद्वैतम् समानाधिकरणम् । (११०)

### समान एवं चाभेदात् । (३७८)

**"मनोमयं प्राणशरीर"मित्थं संयोगरूपाद्युभयत्र तुल्यम् ।**
**शाण्डिल्यविद्यैक्यमतश्च तस्मिन्नीशानतारूपगुणस्य लाभात् ॥४४**

अ - र्थः । शाण्डिल्यविद्याप्रकरणे 'स आत्मानमुपासीत, मनोमयं प्राणशरीरं भारूपं' इति क्वचित् मनोमयोऽयं पुरुषो भास्सत्यः, तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः' इति क्वचित् दृश्यते । तत्र इयं शाण्डिल्यविद्या एका भिन्ना वेति विशये एकस्यामपि शाखायां वशित्वादिरूपगुणभेदसत्त्वात् भिन्नैवेति प्राप्ते, यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति एवं एकस्यामपि शाखायां स्थलद्वये पठितापि शाण्डिल्यविद्या उपास्याभेदात् एकविद्या भवितुमर्हति । उभयत्र समानगुणाम्नानात् । विप्रकृष्टदेशपठित शाण्डिल्यविद्यामनूद्य प्राप्तांशं विहाय अप्राप्तांशे शानत्वादिगुणविधानार्थमन्येति विद्यैक्यात् परस्परगुणोपसंहार एवेति ॥

---

### विशिष्टाद्वैतम् समानाधिकरणम् । (८८)

### समान एवञ्चाभेदात् ।

**मनोमयोऽयं पुरुषस्तु सत्यं वशीति सर्वस्य गुणप्रभेदात् ।**
**शाण्डिल्यविद्या विविधेति चेन्न सर्वस्य साम्याद्वशितास्ति सत्ये ॥४५**

* अलौकिकेति = अस्योपासनस्य यतः मुक्तिरूपफलं लोकविलक्षणं अतः तस्य विष्णोः सर्ववेदोक्तगुणाः उपास्याः ।

अ-र्थः । 'सत्यं ब्रम्हेत्युपासीत', इत्यारभ्य 'सत्यसङ्कल्पं आकाशात्मानं' इत्यन्तं पठितम् । स्थलान्तरे तद्वत्सर्वं पठित्वा 'सर्वस्य वशी, सर्वस्येशानः' इत्यादिकं पठितम् । देशद्वये पठिता शाण्डिल्यविद्या एका वा भिन्ना वेति संशये उभयत्र समानगुणाम्नानात् सम्योगचोदनाख्यानामविशेषेऽपि वशित्वाद्युपास्यगुणभेदेन रूपभेदाद्विद्याभेद इति प्राप्ते वशित्वादिगुणस्य अन्यत्र स्पष्टतया प्रतीत्यभावेऽपि सत्यसङ्कल्पत्वरूप गुणान्तर्गतत्वात् वशित्वादेः रूपभेदाभावात् विद्यैक्यमेव । इति ॥

---

द्वैतम् समानाधिकरणम् । (१४७)
ओं समान एवं चाभेदात् । (३८५)
ओं सम्बन्धादेवमन्यत्रापि । (३८६)

**स्वार्हवैदिकगुणोपसंहृतौ विक्रमादिगुणचिन्तनं नृणां ।**
**नास्ति धातुरखिलाश्च सद्गुणाः वाण्युपास्तिरपि विक्रमं विना ॥४६**

अ-र्थः । अलौकिकगुणोपसंहारेऽपि चतुर्मुखव्यतिरिक्तानां सर्वेषां स्वस्वार्हलौकिकगुणानामेवोपसंहारः । कादाचित्कानां त्रिविक्रमत्वादीनां गुणानां चतुर्मुखादन्यत्र असंभवात् । सरस्वत्या अपि त्रिविक्रमत्वादिव्यतिरिक्तालौकिकगुणानुपसंहृत्य विष्णुध्यानविधानाच्च । इति ॥

समान एवं चाभेदात्–समाने=स्वयोग्यगुणविषय एव उपसंहारः, न त्वयोग्ये, न समाने च, अयोग्यविषये तु अभेदादैक्ये उपसंहार एव ॥

सम्बन्धादेवमन्यत्रापि–अन्यत्रापि=त्रिविक्रमत्वादि क्रियास्वपि एवं गुणोपसंहारवत्, सम्बन्धात्=परमात्मसम्बन्धात् त्रिविक्रमत्वादीनां गुणोपसंहारः चतुर्मुख एव युज्यते ॥

---

अद्वैतम् सम्बन्धाधिकरणम् । (१११)
सम्बन्धादेवमन्यत्रापि । (३७९)
न वा विशेषात् । (३८०)
दर्शयति च । (३८१)

**आदित्यनेत्रस्थितसत्यरूपध्याने तदङ्गोपनिषच्च दृष्टा ।**
**स्थानादिभेदादतिदेशतश्च भिन्नार्कविद्या च तथाक्षि विद्या ॥४७॥**

अ - र्थः । 'तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्' इति सत्यं ब्रह्म पठित्वा 'तस्योपनिषदहरित्यधिदैवतम्', 'तस्योपनिषदहमित्यध्यात्मम्' इति तदङ्गभूतं उपनिषद्द्वयं पठितम् । तत्र अक्षिविद्या आदित्यविद्या च भिन्नैव । उपासनस्थानविशेषसत्त्वात् । एक विद्यात्वे 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इत्यतिदेशवैयर्थ्यात् । अतः विद्याभेदात् व्यवस्थितगुणे एव विद्ये । इति ॥

---

## विशिष्टाद्वैतम् सम्बन्धाधिकरणम् । (८९)

**सम्बन्धादेवमन्यत्रापि । (३७४)**
**न वा विशेषात् । (३७५)**
**दर्शयति च । (३७६)**

**रव्यक्षिस्थितसत्यस्य ध्यानेचोपनिषद्द्वयम् ।**
**यथाक्रमं तदङ्गं वा विद्यैक्ये च द्वयं द्वये ॥ ४८ ॥**
**स्थानभेदात् पृथग्विद्या तन्नास्येरन् गुणा इमे ।**
**तदेवामुष्यरूपं त्वित्यतिदेशात् प्रतीयते ॥ ४९ ॥**

अ - र्थः । 'तद्यत्सत्यमसौ स आदित्यः य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्' इत्यादिना सूर्यमण्डले अक्षिणि च सत्यस्य ब्रह्मण उपास्यत्वमुक्त्वा 'तस्योपनिषदहरित्यधिदैवतम्', 'तस्योपनिषदहमित्यध्यात्मम्' इति द्वे उपनिषदौ आम्नायेते । ते यथासंख्यं रवौ अक्षिणि च उपनिषदौ अन्वयं प्राप्नुतः, उत उभयत्र उभे अनियमेनेति संशये उपास्यब्रह्मणः रूपैक्यात् फलाद्यभेदाच्च विद्यैक्यात् अनियमेनोभयत्र उभौ प्राप्नुतः 'सम्बन्धादेवमन्यत्रापि' इति पूर्वपक्षे प्राप्ते, रव्यक्ष्याधारतया उपास्यस्थानभेदात् 'तस्यैतस्य तदेवरूपं यदमुष्य रूपम्' इति अतिदेशाच्च न विद्यैक्यम् । उभयोः उभयत्र प्राप्तौ अतिदेशवैयर्थ्यात् । इति ॥

---

## द्वैतम् न वा विशेषाधिकरणम् । (१४८)

**ओं न वा विशेषात् । (३८७)**
**ओं दर्शयति च । (३८८)**

**आत्मशब्देन सर्वेषां गुणानां ग्रहणं न हि ।**
**अजातिरिक्तसर्वेषां स्वस्वयोग्यगुणप्रदः ॥ ५० ॥** (आत्मशब्द इति शेषः)

अ-र्थः । सर्वेषां आत्मशब्देनोपासने साम्येऽपि आत्मशब्दस्य सर्वगुणाभिधायित्वनिर्वचनेन सर्वे गुणाः सर्वेषां प्राप्नुयुरेवेति प्राप्ते अधिकारितारतम्येन स्वस्वार्हसर्वगुणा एव आत्मशब्देनोच्यन्त इति चतुर्मुखादिव्यतिरिक्तानां सर्वगुणाप्राप्तिरेव । इतरेषां न चैवेति श्रुतेः । इति ॥

न वा विशेषात्=आत्मशब्देन सर्वगुणग्रहणं नैव भवति । विशेषात्=अधिकारितारतम्यात् ॥

---

## अद्वैतम् सम्भृत्यधिकरणम् । (११२)

### सम्भृति द्युव्याप्त्यपि चातः । (३८२)

**यत्सम्भृतिप्रभृतयश्च खिलेषु दृष्टाः तत्रैव ते स्युरपरत्र न चिन्तनीयाः ।**
**तुल्येगुणेऽपि हृदयायतनादिभेदात् भिन्ना परादिगुणतो विविधापि विद्या ॥५१॥**

अ-र्थः । 'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि, ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्यादयः राणायणीयानां खिलेषु ब्रह्मणो विभूतित्वेन दृष्टाः । ते सर्वब्रह्मविद्यासु उपसंह्रियेरन् नवेति विचारे सम्भृतिद्युव्याप्त्यादि विभूतयः सर्वब्रह्मविद्यासु नोपसंहर्तव्याः । तत्र द्युव्याप्त्याद्यभावात् । भिन्नप्रदेशस्थविद्यासु यत्र तादृशगुणद्योतकाः शब्दाः वर्तन्ते तत्रैव विद्यासु उपसंहार इति ॥

---

## विशिष्टाद्वैतम् सम्भृत्यधिकरणम् । (९०)

### सम्भृतिद्युव्याप्ति चातः । (३७७)

**ज्येष्ठावीर्यासम्भृतानीति ये स्युः तेषां द्युव्याप्त्यादिविद्यासु यासु ।**
**संहर्तव्या नेतरत्राल्पदेशविद्यास्वित्थं सुव्यवस्थाप्यमेव ॥ ५२ ॥**

अ-र्थः । 'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि, ब्रह्माग्रे ज्येष्ठं दिवमाततान, ब्रह्म भूतानां प्रथमोथ जज्ञे, तेनार्हति ब्रह्मणा स्पर्धितुं कः' इत्येवमादि गुणाः अल्पस्थानगोचरासु विद्यासु नोपसंहर्तव्याः । यत्र सम्भृत्यादिगुणविशिष्टं ब्रह्म उपास्यं वर्तते तत्रैव । स्वप्रकरणे उपसंहारस्यायोग्येऽपि विप्रकृष्टदेशे उपसंहारो भवत्येव । इति ॥

---

## द्वैतम् सम्भृत्यधिकरणम् । (१४९)

## ओं सम्भृतिद्युव्याप्त्यपि चातः । (३८९)

**द्युव्याप्तिस्सम्भृतिश्चापि गुणौ चिन्त्यौ सुरादिभिः ।**
**आनन्दाद्यागुणास्सर्वैः उपास्या योग्यतावशात् ॥ ५३ ॥**

अ - र्थः । 'उक्षा स द्यावा पृथिवी सर्वेषु लोकेषु भाति' इत्यादि श्रुत्युक्तसम्भृतिद्युव्याप्ती गुणौ देवादिभिरेवोपास्यौ । नान्यैः ।

" देवादीनामुपास्यस्तु भृतिव्याप्त्यादयो गुणाः ।
आनन्दाद्यास्तु सर्वेषामन्यथानर्थकृत् भवेत् ॥" इति प्रमाणात् । इति ॥

सम्भृतिद्युव्याप्त्यपि चातः =(सम्भृतिद्युव्याप्ति अपि च अतः) सम्भृति=सम्यक् भरणं, द्युव्याप्तिः=दिवा कान्त्या व्याप्तिः, 'दिवु क्रीडा विजिगीषा व्यवहार द्युतिस्तुति-मोदमदस्वप्नकान्तिगतिषु' इति दिवु धातोः कान्त्यर्थकत्वात् । सम्भृतिश्च द्युव्याप्तिश्च एतयोस्समाहारः सम्भृतिद्युव्याप्ति, एतौ गुणौ, अपि चातः=उपसंहारयोग्यताविशेषा-पेक्षत्वादेव देवादिभिरेवोपास्यौ इत्यर्थः ।
देवाद्युपासनाप्रकारः -

" कामभक्त्याऽप्सरस्त्रीणामन्येषां नैव कामतः ।
उपास्यश्वशुरत्वेन देवस्त्रीणां जनार्दनः ॥
जारत्वेनाप्सरस्त्रीणां कासाञ्चिदिति योग्यता ।
योग्योपासां विना नैव मुक्तिः कस्यापि सेत्स्यति ॥
अयोग्योपासनाकर्तुः अनर्थश्च भविष्यति ।
तस्मात्तु योग्यतां ज्ञात्वा हरेः कार्यमुपासनम् ॥
पतित्वेन श्रियोपास्यो ब्रह्मणा मे पितेति च ।
पितामहतयाऽन्येषां त्रिदशानां जनार्दनः ।
प्रपितामहो मे भगवान् इति सर्वजनस्य तु ॥" इत्यादि प्रमाणात् ज्ञेयः ॥

---

## अद्वैतम् पुरुषविद्याधिकरणम् । (११३)

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् । (३८३)

**यत्ताण्डिपैङ्ग्यादिषु तैत्तिरेये मनुष्यविद्या पठिता *समाख्या ।**
**क्वचित्फलं वर्षशताधिकायुः ब्रह्माप्तिरेकत्र ततो विभिन्ना ॥ ५४ ॥**

अ - र्थः । पुरुषविद्या बहुत्र श्रुता । सर्वा समाख्या तुल्याऽपि, क्वचित् 'ब्रह्मणो महिमानमाप्नोति' इति ब्रह्मप्राप्तिरूपफलं, उपासकपुरुषस्य स्वात्मशरी-रादीनां यजमानयज्ञादीनां कल्पनं, अन्यत्र तु 'षोडशं वर्षशतं जीवति' इति

* समाख्या = तुल्यसंज्ञेत्यर्थः ।

(११६ वर्षाणीति) षोडशाधिकशतायुष्ट्वफलं स्वाऽयुषः, चतुर्विंशतिवर्षाणि प्रातस्सवनत्वेन चतुश्चत्वरिंशद्वर्षाणि माध्यन्दिन सवनत्वेन, अष्टाचत्वारिंशद्वर्षाणि तृतीयसवनत्वेन परिकल्प्य त्रेधाविभागादिप्रकल्पनं इत्युपास्तिप्रकारभेदात् फलभेदाच्च पुरुषविद्या भिन्ना । इति ॥

---

## विशिष्टाद्वैतम् पुरुषविद्याधिकरणम् । (९१)

### पुरुषविद्यायामपि चेतरेषामनाम्नानात् । (३७८)

**यद्ब्रह्मणोयं महिमातदाप्तिः यत् षोडशं वर्षशतं फलं च ।**
**त्रेधाविभागोऽध्वरकल्पनं च तस्मान्नृविद्या द्वयमत्र भिन्नम् ॥५५॥**

**अ - र्थः** । 'तस्यैवं विदुषः' इत्यारभ्य 'ब्रह्मणो महिमानमाप्नोति' इत्यन्तं ब्रह्मप्राप्तिरूपफलस्य आत्मनः यजमानरूपत्वस्य शरीरस्य च यागाङ्गभूत-करणत्वस्य च उक्तिः क्वचित् श्रूयते । परत्र षोडशवर्षाधिकशतायुः फलस्य, चतुर्विंशतिवर्षाणि चत्वारिंशद्वर्षाणि, अष्टचत्वारिंशद्वर्षाणि त्रेधा विभज्य प्रातस्सवनादिरूपकल्पनोक्तिः श्रूयते इति पुरुषविद्यायाः समाख्यैक्येऽपि संयोगभेदात् रूपभेदाच्च भिन्नैव पुरुषविद्या । 'फलवत्सन्निधावफलं तदङ्गं' इति पूर्वानुवाकपठितब्रह्मविद्याया अनन्तरपठित 'तस्यैवं विदुषः' इति विद्या पूर्वोक्त-ब्रह्मविद्याङ्गभूतेति निश्चीयते । इति ॥

---

## द्वैतम् पुरुषविद्याधिकरणम् । (१५०)

### ओं पुरुषविद्यायामपि चेतरेषामनाम्नानात् । (३९०)

**महागुणानां सर्वेषामनाम्नानात् नृसूक्तके ।**
**गुणोपसंहृतिः कार्या नृसूक्तिगुणचिन्तने ॥ ५६ ॥**

**अ - र्थः** । पुरुषसूक्तेऽपि उपास्य सर्वगुणानाम्नानात् सर्वगुणाम्नानविशिष्ट-विद्याया अप्रसिद्धत्वाच्च पुरुषसूक्ते अनुक्ता अपि सर्वगुणाः उपसंहर्तव्याः ।

" सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ।
तत्रापि नैव सर्वेऽपि तस्मात् कार्योपसंहृतिः ॥" इति प्रमाणात् ।

उत्तममध्यमाधिकारिणां पुरुषसूक्ते स्वस्वयोग्यसर्वगुणोपसंहारः कर्तव्यः । इति ॥

विद्योत्तमत्वेन प्रसिद्धपुरुषसूक्तविद्यायां केषांचिदेव गुणानामाम्नानेऽपि अपेक्षितेतर-गुणानां अपठितत्वात् सर्वगुणोपसंहारः कर्तव्यः इति सूत्रार्थः ॥

---

## अद्वैतम् वेधाद्यधिकरणम् । (११४)

### वेधाद्यर्थभेदात् । (३८४)

विद्यासमीपपठिता अपि केऽपि मन्त्राः
"सर्वं प्रविध्य हृदयं धमनीः प्रवृज्य" ।
इत्येवमादय इहापि न संह्रियेरन्
किन्त्वाभिचारिक समन्वय एव तेषां ॥ ५७ ॥

अ - र्थः । उपनिषदामारम्भे क्वचित् 'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः' इत्यादिः क्वचित् 'शं नो मित्रश्शं वरुणः' 'देवा ह वै सत्रं निषेदुः' इत्यादि प्रवर्ग्यब्राह्मणं श्रूयते । तत्र वेधादयो मन्त्राः प्रवर्ग्यादिब्राह्मणं च विद्यासु उपसंह्रियेरन् उत न वेति विचारे उपनिषत्समीपपाठात् उपसंहर्तव्या इति प्राप्ते हृदयप्रभेदादि मुमुक्षुस्मरणानर्हार्थभेददृष्टेः विद्यासु नोपसंहर्तव्याः । आभिचारिककर्मण्येव एषां विनियोग इति अर्थसामर्थ्यात् ज्ञायते । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां मध्ये स्थानापेक्षया श्रुतिलिङ्गवाक्यानामेव प्रमाणत्वात् अत्र श्रुत्यादिप्रमाणेन न विद्याशेषा एते मन्त्राः । 'सर्वत्र समदर्शिनः', 'नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात्' इत्यादि प्रमाणात् मुमुक्षूणां कस्मिंश्चिदपि द्वेषाभावेन उपासकस्य वेधादि मन्त्रोच्चारणानुपपत्तेः, आभिचारिककर्मण्युपपत्तेश्च । मन्त्रान्तराणामपि अर्थसामर्थ्यात् अन्यत्र विनियोगदृष्टेश्च इति ॥

---

## विशिष्टाद्वैतम् वेधाद्यधिकरणम् । (९२)

### वेधाद्यर्थभेदात् । (३७९)

विद्यारम्भे समाम्नाताः शन्नोमित्रादयोगुणाः ।
ब्रह्मध्याने नोपयुक्ताः तदर्थानुगुणेषु ते ॥ ५८ ॥
आरण्यकान्तः पातित्वादेषां पाठोत्र युज्यते ।
नोपसंहृतिरेवैषां श्येनादिवदिमे स्मृताः ॥ ५९ ॥

अ - र्थः । 'उपनिषदारम्भे केचित् 'शुक्रं प्रविध्य' इत्यादि मन्त्रान् पठन्ति, केचित् 'देवस्सवितः प्रसुव' इत्यादि केचित् 'देवा ह वै सत्रं निषेदुः' इत्यादि । तत्र मन्त्रगतार्थसामर्थ्यात् तत्तदनुगुणकर्मादिषु ते प्रयोक्तव्याः । ब्रह्मविद्यासु नोपसंहर्तव्याः । तेषां विद्यारम्भसमीपपाठस्तु

"करीर्यश्वाथ पित्र्यश्च दिवा कीर्त्यैति यत्र च ।
रुद्रस्सन्ततिरित्येतावानुवाकौ च सात्रिके ॥"
"होतॄन् प्रवर्ग्यकाण्डं च याश्चोपनिषदो विदुः ।
अरुणाम्नायविधी चैव काठके परिकीर्तितौ ॥"
"रुद्रो नारायणश्चैव मेधा यश्चैष पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥"
"काठकानि च सर्वाणि सर्वाण्यारण्यकानि च ।
दिवाकीर्त्यानिशाखायां एतावन्तीति धारणा ॥" इति काण्डानुक्रमणिकोक्त-प्रकारेण दिवैवकीर्त्यत्वे अरण्य एव कीर्त्यत्वप्रयुक्ते इति ॥

---

## द्वैतम् वेधाद्यधिकरणम् । (१५१)

### ओं वेधाद्यर्थभेदात् । (३९१)

**प्रत्यंचमर्चिषाविध्य मर्मन्नित्यादि मन्त्रगाः ।**
**सर्वोपास्या न विज्ञेयाः यत्यनर्हास्तु ते स्मृताः ॥ ६० ॥**

**अ र्थः** । 'अग्ने त्वं च यातुधानस्य भिन्द्धि, तं प्रत्यञ्चमर्चिषा विध्य-मर्मन्, पराश्टणीहि तपसा यातुधानान्' इत्यादि मन्त्रगा गुणाः ब्रह्मनिष्ठैः नोपसंहर्तव्याः । तदुक्तगुणानां यत्यनर्हत्वात् ।

"भिन्द्धि विद्धि श्टणीहीति फलभेदेन सर्वशः ।
यत्यादीनां तेष्वयोगान्नाधिकारैकता भवेत् ॥
अयोग्योपासनादीयुरनर्थंचार्थनाशनम् ॥" इति प्रमाणात् । इति ॥

---

## अद्वैतम् हान्याधिकरणम् । (११५)

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दः स्तुत्युपगानवत्तदुक्तं ।** ३८५

**विधूयपापं सुकृतं सुताश्च दायं प्रयातीति च यत्प्रहाणम ।**
**उपायनोक्त्यर्थकमेव हानं औदुम्बरीवाक्यगता कुशेव ॥ ६१ ॥**
**वाजीव रोमाणि विधूय पापं चाश्वल्यमेवात्र न पापहानिः ।**
**तथापि धातोर्बहुलार्थकत्वात् त्यागार्थको धूञिति हानवाक्यात् ॥६२॥**

**अ - र्थः** । 'अश्व इव रोमाणि विधूय पापं' इत्यादिभिः सुकृतदुष्कृत-हानिः कचित्, तयोरेव विभागेन प्रियैरप्रियैश्च उपायनं, कचित् हानं उपायनं च पठ्यते । तत्र सुकृतदुष्कृतहानानन्तरभाव्युपायनस्य कचिच्छ्रुतत्वात् केवल

हानिश्रुतावपि उपायनानुवृत्तिरेवेत्यर्थः । शाखान्तरपठितोपायनस्य खाखान्तर-पठित हान्यन्वये दृष्टान्ताः कुशाच्छन्दस्तुत्युपगानवदित्युक्ताः । यथा कुशाः वानस्पत्याः इत्युक्त कुशानां सामान्य वनस्पतिविकारत्वेऽपि औदुम्बर्यः कुशा इति शाखान्तरपठितौदुम्बरीरूप विशेषवनस्पतिरूपार्थः आश्रियते तद्वत् हानमात्रश्रवणप्रकरणेऽपि प्रियाऽप्रियेषु उपायनमप्यङ्गीकृत्य गुणोपसंहारः कर्तव्यः । इति ॥

यद्वा विधूय पापमित्यत्र 'धूञ् कम्पने' इति धात्वर्थपाठात् 'दोधूयन्ते ध्वजाग्राणि' इत्यादौ 'धूञ्' धातोः चञ्चलमेवार्थः । 'अश्व इव रोमाणी'ति दृष्टान्तेऽपि रोम्णां चालन मेवार्थः । न तु रोमहानिरिति कथं पापहानिरूपोर्थः इति चेत् धातूनां अनेकार्थत्वात् भू सत्तायां इत्यादौ सत्तार्थश्च उपलक्षणम् । प्रभवति, सम्भवति, उद्भवति–'प्रहाराहार-संहारविहारपरिहारवत्', 'अनुलापो मुहुर्भाषा विलापः परिदेवनम्' इत्यादि प्रयोगाच्च अत्र 'वि' इत्युपसर्गसहित धूञ् धातोः हान्यर्थस्वीकारे न दोषः । 'उपसर्गेण धात्वर्थे बला-दन्यत्प्रतीयते' इत्यादि वैयाकरणप्रमाणात् । तस्मात् हानार्थ एव अत्र युक्त इत्यर्थः । शेषं पूर्ववत् । इति ॥

---

## विशिष्टाद्वैतम् हान्याधिकरणम् । (९३)

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् । ३८०**

**उपायनं हानिरथ द्वयं वा त्रेधास्ति शाखासु वृषादि हानौ ।**
**उपायनं तत्र च हानिशेषं कुशादिदृष्टान्तबलात् पराप्तुः ॥ ६३ ॥**

**अ - र्थः** । 'धूत्वा शरीरं अकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि' तथा विद्वान् पुण्यपापे विधूय', तस्य पुत्रा दायमुपयन्ति सुहृदस्सादुकृत्या द्विषन्तः पापकृत्यां' 'सुकृतदुष्कृते धूनुते, तस्य प्रिया ज्ञातयः सुकृतमुपयान्ति, अप्रिया दुष्कृतम्' इति श्रुतिषु उपासकस्य ब्रह्मप्राप्तिसमये पुण्यपापहानिः मित्रशत्रुषु पुण्यपापसंक्रमणं, पुण्यपापहानिमात्रं च श्रूयते । तद्ध्यानं सर्वविद्याङ्गमर्हति । तत्र यथाश्रुति सर्वमनुसन्धेयं उत विकल्पः इति संशये सर्वत्र पुण्यपापहानेः प्रियाप्रियसंक्रमणशेषत्वेन अनुसन्धेयम् । शाखान्तरोक्तहानिवाक्यस्य शाखा-न्तरोक्त उपायनश्रवणं कथं शेषभूतमिति चेत् पूर्वमीमांसान्यायेन शेषभूतं भवेदिति दृष्टान्ता उपन्यस्यन्ते । यागे सामगानकाले स्तोत्रशस्त्रादिपरिगण-नार्थं निर्मितानि काष्ठशकलानि कुशा इत्युच्यन्ते । तत्र 'कुशा वानस्पत्याः' इति क्वचिच्छाखायां वनस्पति सामान्यविकार इति प्राप्ते, 'औदुम्बर्यः कुशाः'

इति शाखान्तरवाक्यगतोदुम्बरवृक्षविकारा इत्याश्रीयन्ते । 'ऋत्विज उपगायन्ति' इति ऋत्विक्सामान्यप्राप्तोपगानस्य 'अध्वर्योद्गातृहोतारो यजुस्सामर्ग्विदः क्रमात्' इति प्रमाणात् 'नाध्वर्युरुपगायेत्' इति शाखान्तरगतवाक्येन याजुर्वेदिकभिन्न ऋत्विजामेव उपगानमिति शाखान्तरीयार्थस्य शाखान्तरीयार्थः शेषभूत इति ॥

## द्वैतम् हान्यधिकरणम् । (१५२)

**ओं हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् । ३९२**
**ओं साम्पराये तर्तव्याभावात्तथाह्यन्ये । ३९३**

**पापप्रहाणेन विमोक्षभाजि स्वेच्छावशादस्ति हरेरुपास्ता ।**
**विधाय कर्माणि निजानि कामात् सामादि चिन्तेव च *गायनात्ते ६४**
**सन्तीर्णसर्वशोकोपि मुक्तः स्वेच्छावशाद्धरिम् ।**
**उपास्ते ब्रह्मलोकस्थः तीर्णोहीत्यादि शाखया ॥ ६५ ॥**

**अ - र्थः** । अत्र मुक्तस्य उपासना भवति वा नवेति विशये स्वेच्छया भवत्येव । 'एतत्सामगायन्नास्ते',

"मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः ।
नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते ॥"

'तीर्णो हि तदा सर्वान् शोकान्' । इत्यादिप्रमाणात् निष्पन्नफलत्वेन मुक्तौ कृताया उपासनायाः आनन्द एव फलं, उपासनाभावे प्रत्यवायो न अतः मुक्तानां कर्मोपासनानियमो न भवति इति ॥

सूत्रार्थः । हानौ तु = सकलदुःखहानिरूपमोक्षेऽपि, तत्=उपासनं, उक्तम्='एतत्सामगायन्नास्ते' इति श्रुत्युक्तं भवति । उपायनशब्दशेषत्वात्=मोक्षवाक्यशेषत्वात् हानेरित्यर्थः । कुशाच्छन्दस्तुत्युपगानवत्=नियतब्रह्मयज्ञानन्तरं, कुशेन=कुशग्रहणेन, आच्छन्देन=स्वेच्छया, स्तुत्युपगानवत्=मन्त्रसामाध्ययनवत् इत्यर्थः ॥ साम्पराये तर्तव्याभावात्तथाह्यन्ये = साम्पराये = मुक्तौ तर्तव्याभावात् = निवर्तनीयानिष्टाभावात् , स्वेच्छया उपासनं क्रियते । 'तीर्णो हि तदा सर्वान् शोकान्' इत्यादि श्रुतीः अन्ये शाखिनः पठन्तीत्यर्थः ॥

---

* 'सान्द्रमित्येतेषु यणादिकं न' इति कौमुदी प्रयोगात् , 'उणादयो बहुलम्' इत्यादि सूत्रनिर्देशाच्च 'ङमुडागमो नात्र भवति' ।

अद्वैतम् साम्परायाधिकरणम् । (११६)

साम्पराये कर्तव्याभावात्तथाह्यन्ये । (३८६)
छन्दत उभयाविरोधात् । (३८७)

**शरीरपातेऽध्वनि कर्मनाशः यथागमं देहवियोग एव ।**
**शरीरपाते सति कृत्स्ननाशः वर्त्मन्यभावाच्च तयोः फलस्य ॥६६॥**

अ - र्थः । 'स एतं देवयानं पन्थानमासाद्य अग्निलोकमागच्छति' 'स आगच्छति विरजां नदीं, तां मनसैवात्येति, तत्सुकृतदुष्कृते विधूनुते' इति श्रुतिषु पर्यङ्कस्थं ब्रह्म देवयानाध्वना अभिप्रस्थितस्य पुण्यपापहानिः शरीरपाते अध्वनि च श्रूयते । तथापि शरीरपात एव कृत्स्न पापहानिः, तदैव 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्यां' इति पुत्रे दायसंक्रमणमिव पुण्यपापसंक्रमणं सुहृत्सु द्विषत्सु च श्रूयते । पुण्यपापावशेषे सति अध्वनि तत्फलाभावाच्च । इति ॥

---

अद्वैतम् गतेरर्थवत्त्वाधिकरणम् । (११७)

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः । (३८८)
उपपन्नस्तल्लक्षणार्थोपलब्धेः लोकवत् । (३८९)

**या देवयानाख्यसृतिः प्रहाणसमीपवर्ती क्वचिदेव नेति ।**
**उपास्य आत्मा सगुणो गतिश्च सार्था विशुद्धे गतिरेव नेति ॥६७॥**

अ - र्थः । देवयानाध्वगमनं क्वचित्छ्रुतावस्ति । क्वचिन्न । तथापि सगुणब्रह्मोपासकस्य पर्यङ्कारोहार्थं गमनमावश्यकमिति देवयानगतिः सार्थैव । निर्गुणब्रह्मप्राप्तौ 'अत्र ब्रह्म समश्नुते' इत्यादि श्रुत्या गतिः नार्थवती । यथा लोके ग्रामप्राप्तौ पन्था अपेक्षते । आरोग्यप्राप्तौ नापेक्षते, तद्वदित्यर्थः ॥

---

अद्वैतम् अनियमाधिकरणम् । (११८)

अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् । (३९०)

**ब्रह्मप्राप्नुवतां च सर्वविदुषां यो देवयानश्रुतः**
**विद्यासु क्वचिदश्रुतोऽपि विपिने श्रद्धा तपोभ्यामयम् ।**

**संलक्ष्य श्रुतिभिः स्मृतिप्रभृतिभिर्विद्यासु सर्वासु यः**
**ब्रह्मोपास्तिमता तु सर्वविदुषां तुल्या गतिः श्रूयते ॥ ६८ ॥**

अ - र्थः । पर्यङ्कविद्याप्रभृतिषु देवयानगतिः श्रूयते । मधुविद्या-शाण्डिल्यविद्याप्रभृतिषु न श्रूयते । तत्र सगुणब्रह्मोपासकानामपि गतिश्रवणं यत्र तन्निष्ठानामेव देवयानगतिः, अन्येषां तु नेति प्राप्ते, श्रुतिस्मृतिभ्यां सगुणब्रह्मोपासकानां सर्वेषां गतिरस्त्येव । कासुचिद्विद्यासु देवयानाध्वपठनाभावेऽपि 'तद्य इत्थं विदुः' इत्यादि श्रुतिः पञ्चाग्निविद्यानिष्ठदेवयानं, 'ये चेमे अरण्ये श्रद्धा तप इत्युपासते' इति विद्यान्तरशालिनामपि पञ्चाग्निविद्यावद्भिः समानमार्गतां गमयति । सर्वेषां उपासकानां

"शुक्लकृष्णे गतीह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥" इति स्मृतिः देवयानाध्व-चिन्तनं ब्रवीति । "श्रद्धां सत्यमुपासते" इति श्रुतौ सत्यशब्देन ब्रह्मोपास्तेरुक्तत्वात् ब्रह्मोपास्तिः सर्वत्र समानेति सर्वविद्यासु गतिचिन्तनमुपसंहर्तव्यमेव । अतः सर्वेषां विद्यानिष्ठानां गतिचिन्तनं भवत्येव । इति ॥

---

## विशिष्टाद्वैतम् साम्परायाधिकरणम् । (९४)

**साम्पराये तर्तव्याभावात् तथाह्यन्ये । (३८१)**
**छन्दत उभयाविरोधात् । (३८२)**
**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः । (३८३)**
**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् । (३८४)**
**यावदधिकारमवस्थितिराधिकारिकाणाम् । (३८५)**

**उत्क्रान्तस्य च पापहानिरयने ह्युत्क्रान्तिकालेऽथवा**
**द्वेधापि श्रवणं त्रयीषु विदितं नैवायने तत्फलम् ।**
**सूक्ष्माङ्गस्य च सत्त्व एव गमनं योयुज्यते नान्यथा**
**मैवं ब्रह्मविचिन्तनस्य महिमा सूक्ष्माङ्गहेतुर्भवेत् ॥ ६९ ॥**

**न सर्वविदुषां पाते हानिः पुण्यस्य कर्मणः ।**
**आधिकारिकभिन्नानां ज्ञानिनां कर्मनाशनम् ॥ ७० ॥**

अ - र्थः । पुण्यपापहानं उपासकस्य देहवियोगकाले उत देहादुत्क्रान्तस्याध्वनि, उत देहवियोगकाल एव । उभयथा श्रुतत्वात् वियोगकाले अध्वनि

चेति प्राप्ते, उपासकानुभाव्य पुण्यपापफलस्य अध्वन्यभावात् 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्यां' इति पुत्रदायसंक्रान्तिसमकालपुण्यपापहानिश्रवणाच्च देहवियोगकाल एवेति सिद्धान्तः ।

ननु आतिवाहिकपुरुषवहनसंवादादिश्रवणात् तदर्थं सूक्ष्मशरीरमवश्यमास्थेयम् । तद्धेतुभूतस्य कस्यचित् पुण्यस्य सत्त्व एव तदुपपन्नं स्यादिति चेन्न । विद्यामाहात्म्यादेव तत्सिद्धेः । विद्या हि स्वफलभूतब्रह्मप्राप्त्यर्थं किञ्चित् सूक्ष्मशरीरं स्थापयितुं समर्थैव । यथा लोके सस्यादिसमृध्यर्थं आरब्धे तटाकादिके, तदिच्छानाशेऽपि तदेव तटाकारामादिकं अशिथिलं कुर्वन्तः पानीयसस्यसेचनादिकं कुर्वन्ति । तद्वत् । शाल्यर्थं कृत कुल्यायाः पानीयादावुपयोगवत् ब्रह्मप्राप्त्यर्थं कृता उपासना देवयानाध्वगमनसूक्ष्मशरीरस्थापनादावप्युपयुज्यते इत्यादिवच्च । देहपातसमये पुण्यपापहानिश्च न सर्वविदुषां, अपि तु सूर्यव्यासवसिष्ठावान्तर तपःप्रभृत्याधिकारिकभिन्नानामेव । तेषां केनचिन्निमित्तेन देहपाते सत्यपि पुनर्देहान्तरप्राप्तिदृष्टेः । इति ॥

---

## द्वैतम् छन्दाधिकरणम् । (१५३)

**ओं छन्दत उभयाविरोधात् । (३९४)**
**ओं गतेरर्थवत्वमुभयथान्यथा हि विरोधः । (३९५)**
**ओं उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् । (३९६)**

**मुक्ताः कदाचित्कुर्वन्ति कर्मभक्तिं निजेच्छया ।**
**बन्धश्च प्रत्यवायश्च नास्ति मोक्षेऽविरोधतः ॥ ७१ ॥**
**ज्ञानं कर्म च मोक्षाय प्राप्तमोक्षस्य कामतः ।**
**कदाचित् करणं तस्य कदाचिन्नेति चोच्यते ॥ ७२ ॥**

**अ-र्थः ।** प्राप्तमोक्षः विद्वान् स्वेच्छया भक्तिं कर्म च करोति न करोति वा, करणाकरणयोः बन्धप्रत्यवाययोरभावात् । यथा 'विष्णुक्रमान् क्रमते' इति श्रुत्या यागाङ्गभूत विष्णुक्रमानुष्ठानं कृत्वा यागपूर्तिं कृत्वापि तादृशं विष्णुक्रमादिकं इच्छया कुर्वन्ति न कुर्वन्ति च तद्वत् इति ॥

छन्दत उभयाविरोधात्-(मुक्तौ कर्मकरणं) छन्दतः=इष्टतः-भवति, उभयाविरोधात्=कर्मकरणे कर्माकरणे च विधिप्रत्यवाययोरभावात् इत्यर्थः ॥ गतेरर्थवत्वमुभयथान्यथा हि विरोधः-गतेः=मोक्षस्य, अर्थवत्वं=इच्छाविषयत्वं पुरुषार्थत्वं, उभयथा=बन्धप्रत्यवाययोरभावादेवं भवति, अन्यथा=मुक्तौ च विधिप्रत्यवायसत्त्वे, विरोधः=पुरुषार्थत्वहानिरूपविरोधस्स्यात् इत्यर्थः ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्-उपपन्नः=(मोक्षे कदाचित् कर्मकरणं कदाचिन्न इत्ययमर्थः) युक्तः, तल्लक्षणार्थोपलब्धेः=ज्ञानद्वारककर्मफलरूपमोक्षस्य

प्राप्तत्वात्, लोकवत्=यागादिसमाप्तिफलकं विष्णुक्रमणाख्यं विष्णुप्रीतिकरं कर्म, यागादि-समाप्त्यनन्तरमपि इच्छया केचित् कुर्वन्ति, केचिन्न । तद्वत् । तल्लक्षणार्थोपलब्धेः= तत् लक्षणं यस्य सः तल्लक्षणः, तल्लक्षणश्चासौ अर्थश्च तल्लक्षणार्थः, तस्योपलब्धिः= तल्लक्षणार्थोपलब्धिः, तस्मात् । 'तत्' इत्यस्य ज्ञानद्वारकं कर्मेत्यर्थः ॥

---

## विशिष्टाद्वैतम्　अनियमाधिकरणम् । (९५)

### अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् । (३८६)

**विद्यासु यास्वेव सुराध्वदृष्टिः तासुस्थितानां तु तदध्वयानम् ।**
**"ये चेम" इत्थं विदुरेवमादेः विद्यासु सर्वासु सुराध्वयानम् ॥७३॥**

**अ-र्थः** । उपकोसलादिषु केषुचिदुपासनेषु अर्चिरादिगतिः श्रूयते । सा च गतिः तन्निष्ठानामेव उत सर्वब्रह्मोपासननिष्ठानामिति विशये गतिश्रवणं यत्र तन्निष्ठानामेवेति नियमो न । अपि तु सर्वविद्यानिष्ठानां देवयानाध्वगमनं । 'तद्य इत्थं विदुः, ये चेमे अरण्ये श्रद्धा तप इत्युपासते, ते अर्चिषमभि-संभवन्ति' (छा. ५-१०-१) इति श्रुतौ 'ये च' इति श्रुत्या पञ्चाग्निविद्या-निष्ठानां च अर्चिरादिगतिश्रवणात् ।

"अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥" (गीता. ८-२)

इत्यादि स्मृतिभ्यः सर्वेषां ब्रह्मविदां देवयानाध्वप्रतीतेः । इति ॥

---

## द्वैतम्　अनियमाधिकरणम् । (१५४)

### ओं अनियमस्सर्वेषामविरोधाच्छब्दानुमानाभ्याम् । (३९७)

**धातुस्सर्वगुणध्याननियमो नेतरस्य सः ।**
**सर्वेषां ज्ञानिनां मोक्षः श्रुतेरनुमितेः स्मृतः ॥ ७४ ॥**

**अ-र्थः** । ब्रह्मोपासननिष्ठानां केषांचित् मुक्तिः, केषांचिन्नेति न । 'न कश्चिद्ब्रह्मवित् सृतिमनुभवति, मुक्तोह्येव भवति तस्मादाहुः सृतिहेती'ति कौण्डिन्यश्रुतेः ज्ञानिनां सर्वेषां मोक्ष एव । सर्वगुणविशिष्टब्रह्मोपासनं केवलं चतुर्मुखस्यैव । यथा एकेषां ज्ञानिनां मोक्षः एवमन्येषां ज्ञानिनामपि मोक्षो भवत्येवेति अनुमानाच्च ।

अनियमस्सर्वेषां इत्यादि–अनियमः=मोक्षविषये केषांचिदेव ज्ञानिनां मोक्षः, न सर्वज्ञानिनामिति नियमो नास्ति । सर्वेषामविरोधात्=सर्वेषां मध्ये कस्यचिदपि ज्ञानिनः मोक्षनिषेधाभावात् । शब्दानुमानाभ्यां='न कश्चिदब्रह्मवित्' इति श्रुतेः । ज्ञानिनो नियतमोक्षाः अपरोक्षज्ञानित्वात् चतुर्मुखवत् इत्यनुमानाच्च । चतुर्मुखस्यैव सर्वगुणोपसंहारकत्व नियमोऽस्ति । नान्येषां ज्ञानिनां इत्यर्थः ॥

---

अद्वैतम् यावदधिकरणम् । (११९)

यावदधिकारमवस्थितिराधिकारिकाणाम् । (३९१)

**सनत्कुमारादिषु देहपातादनन्तरं देहसमागमोक्तेः ।**
**विपश्चितो ह्यस्ति शरीरसङ्गः न तेऽधिकारस्थितिमन्त एव ॥७५॥**

**अ - र्थः ।** विदुषः देहपातानन्तरं कैवल्यनिर्वृत्तिः, उत देहान्तरप्राप्तिः सनत्कुमारः उत्तमज्ञान्यपि स्कन्दरूपत्वेन प्रादुर्बभूव । एवं दक्षनारदप्रभृतीनां ज्ञानिनामपि देहान्तरप्राप्तिः दृश्यते । तद्वत् विदुषां वर्तमानदेहपातानन्तरं शरीरान्तरप्राप्तिरस्त्येवेति प्राप्ते ज्ञानिनां देहपातानन्तरं शरीरान्तरप्राप्तिर्न भवति । 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये, अथ सम्पत्स्ये' इति विश्वमायानिवर्तनरूपब्रह्मज्ञानोत्पादकशरीरपातानन्तरं ब्रह्मप्राप्तिश्रवणात् । 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा. ७-२६-२) इति श्रुतेश्च । 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणां' (बृ. १-४-१०) इत्यादिना ज्ञानिनां ब्रह्माभेदश्रवणात् च । सनत्कुमारादीनां देहपातानन्तरं देहप्राप्तिस्तु परमेश्वरेण अधिकारे नियुक्ताः प्राप्तज्ञाना अपि अधिकारावसानपर्यन्तं शरीरसंबन्धयोग्या एवेति न दोष इति ॥

---

द्वैतम् यावदधिकरणम् । (१५५)

ओं यावदधिकारमवस्थितिराधिकारिकाणाम् । (३९८)

ओं अक्षरधियांत्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ।

**स्वयोग्यतानुसारेण मुक्तावानन्दसुस्थितिः । (३९९)**
**गुरुशिष्यवदेवेयं ज्ञानिनां तारतम्यता ॥ ७६ ॥**

**अ - र्थः ।** मुक्तौ उपासकानां आनन्दतारतम्यं ज्ञायते । यथाधिकारं स्वयोग्यतानुगुण्येनेत्यर्थः । यथा मनुष्येभ्यो गन्धर्वाणां आनन्दविशेषः तेभ्यो ऋषीणां तेभ्यो देवानां तेभ्य इन्द्रस्य तस्माद्रुद्रस्य तस्माद्ब्रह्मण इति 'एषह्येव शतानन्द' इति चतुर्मुखस्यैव शतानन्दोक्तेः अन्यस्य तारतम्योक्तेश्च ।

" ज्ञानंचोपासनं चैव मुक्तावानन्द एव च ।
*यथाधिकारं देवानां भवत्येवोत्तरोत्तरम् ॥" इति प्रमाणात् घ ।

ब्रह्मज्ञानिनां आनन्दे समत्वेऽपि गुरुशिष्ययोरिव ब्रह्मज्ञानविरोधो न ।

" नानाविद्या जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः ।
दोषाभावात् गुरुशिष्यादिभावात् लोकेऽपि नासौ किमु तेषां विमुक्तेः ॥"
इति चतुरश्रुत्युक्तेः इति ॥

यावदधिकारमित्यादि–यावदधिकारम् =('यावत्तावच्च साकल्येऽवधौमानेऽवधारणे' इति निखण्टूक्तेः यावच्छब्दस्य अवधारणमर्थः । अवधारणं च परिच्छेदः) योग्यतानुगुण्येन तरतमभाव इति । (मोक्षे) आधिकारिकाणां=स्वस्वयोग्यतानुसार्यनुष्ठानशीलवतां ब्रह्मादीनां, अवस्थितिः = आनन्दाद्यनुभवरूपावस्तिः भवति ।

" आचारे तारतम्याच्च आनन्दे तारतम्यता ॥
मुक्तिं ज्ञात्वापि विष्णुं स्यात् शास्त्रं श्रुत्वा ततोऽधिकम् ।
मुक्तौ सुखं तत्पठतः ततोप्यधिकमिष्यते ॥
व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोधिकं तु देवानां मुख्या व्याख्याकृतो यतः ॥
अक्षण्वन्तः कर्णवन्तस्सखायः मनोजवेष्वसमा बभूवुः ॥
न समो ब्रह्मणः कश्चित् मुक्तावपि कथञ्चन ॥" इत्यादि श्रुतिस्मृतिप्रमाणात् यथायोग्यं मुक्तौ तारतम्यता सिद्ध्यत्येव । इति ॥

अक्षरधियांत्वविरोध इत्यादि–अक्षरधियां = ब्रह्मज्ञानिनां, मोक्षे तारतम्यभावेऽपि अविरोधः = विरोधाभावः, सर्वेषां ब्रह्मज्ञानित्वात् । सामान्यतद्भावाभ्यां = मात्सर्यादिदोषाभावोपकार्योपकारकभावरूपसत्त्वाभ्यां, औपसदवत् = गुरुशिष्यवत् , तत् पूर्वोक्त प्रमेयजातं तारतम्यादिकं, उक्तं=श्रुतावुक्तम् ॥ 'नानाविद्या जीवसङ्घाविमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः' इत्यादि श्रुतावित्यर्थः ॥

---

## अद्वैतम् अक्षराद्यधिकरणम् । (१२०)

**अक्षरधियान्स्त्ववरोधस्सामान्य तद्भावाभ्यामौपसदवत्तदुक्तम् । ३९२**

**अस्थूलमित्यादि निषिद्धधर्माः सर्वासु विद्यासु विशेषितव्याः ।**
**ब्रह्माक्षरं सर्वत एव तुल्यं तदक्षरत्वादि गुणावरोधः ॥ ७७ ॥**
**गुणा निषेधरूपाश्च विचिन्त्या ब्रह्मणस्तथा ।**
**यथानन्दादयो ब्रह्म ध्याने सर्वत्र चिन्तिताः ॥ ७८ ॥**

**अ-र्थः ।** 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्' (३-८-८.) 'अथ परा यया तदक्षरमधि-

---

* यथाधिकारं = यथा योग्यमित्यर्थः ॥

गम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णं' (मु. १-१-५) इत्यादि श्रुतिषु अक्षरं परं ब्रह्म अस्थूलत्वादि विशेषितं दृश्यते । तत्र 'आनन्दादयः प्रधानस्य' इति सूत्रेण ब्रह्मणि यथा विधिरूपाणि विशेषणानि ब्रह्मज्ञानसिद्ध्यर्थं चिन्तितानि तद्वत् निषेधरूपाणि विशेषणान्यपि चिन्तयितव्यानीत्यत्रोच्यते ।

ननु उपनिषदन्तरे पठितविशेषणानां उपनिषदन्तरे कथमुपसंहार इति चेत्, औपसदवत् तदवरोध इत्युक्तम् । तदर्थश्च कचियागे मध्ये उपसद्यागेषु विहितेषु पुरोडाशप्रदानमन्त्राणां 'अग्नेर्वैहोत्रं वेरध्वरं' इत्यादि वाक्यानां सामवेदोत्पन्नानामपि याजुर्वेदिकैः अध्वर्युभिः अभिसम्बन्धो भवति । पुरोडाशप्रदानस्य अध्वर्युकर्तृकत्वात् । 'प्रधानानुसारीणि अङ्गानीति' न्यायात् । तद्वत् सर्वविशेषणानां अक्षरब्रह्मतन्त्रत्वात् प्रधानाक्षरब्रह्मानुवर्तिनः विधिरूपान् गुणान् निषेधरूपगुणांश्चोपसंहृत्य चिन्तनीया इत्यर्थः । अत एव 'गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसम्योगः' इति पूर्वकाण्डे (३-३-८.) उक्तमिति ॥

## विशिष्टाद्वैतम् अक्षरध्यधिकरणम् । (९६)

**अक्षरधियांत्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् । (३८७)**

**इयदामननात् । (३८८)**

**अक्षरब्रह्मसंबद्धाः अस्थूलत्वादयो गुणाः ।**
**परविद्यासु सर्वासु ज्ञेया मुख्यानुसारतः ॥ ७९ ॥**

**गुणिनो मुख्यता स्मृत्या गुणास्तदनुसारिणः ।**
**गुणव्यवस्था न स्याच्चेदिययदामननं श्रुतम् ॥ ८० ॥**

अ - र्थः । 'एतद्वै तदक्षरं गार्गि अस्नेहमच्छायं अतमोवाय्वनाकाशम्' इत्यादि बृहदारण्यके (३-८-८) मुण्डके 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्' इत्यादि । अत्र अक्षरविद्यानिष्ठा अस्थूलत्वादिगुणाः सर्वब्रह्मविद्यासु अनुसन्धेया उत तत्रैवेति विशये ब्रह्मस्वरूपज्ञानार्थगुणाः द्विविधा वर्तन्ते । निषेधरूपाश्च विधिरूपाश्च । तत्रोभयविधगुणानामपि ब्रह्मस्वरूपानुसन्धानयोग्यत्वात् सर्वविद्यासु उपसंहर्तव्या इति । 'गुणाः प्रधानानुवर्तिनः' इति न्यायात् । उपसद्यागे सामवेदपठितमन्त्रः प्रधानयाजुर्वेदिकाध्वर्युणा उपांशुत्वेनैव पठ्यते । न तु उच्चैस्साम्नेत्युक्तोच्चस्वरेण । "उपांसु यजुषा" इति न्यायात् । प्रधानानुसारिणः मन्त्रस्य उच्चस्वरप्राप्तावपि उपांशुत्वेन उच्चारणम् तद्वत्

तर्हि, सर्वब्रह्मविद्यासु गुणिनः ब्रह्मणः मुख्यत्वात् सर्वेषां गुणानां उपसम्हारप्रसङ्ग इति चेन्न । इतरव्यावृत्तब्रह्मस्वरूपस्यानुसन्धानं यद्गुणजातमपेक्षते तदेव उपसंहर्तव्यं । इतरे गुणास्तु प्रधानानुवर्तिनोपि प्रतिविद्यं व्यवस्थिता एव । इति ॥

---

## अद्वैतम् इयदधिकरणम् । (१२१)

### इयदामननात् । (३९३)

**'ऋतं पिबन्तावि'ति मन्त्र एकः परोह्यनश्नन्निति तद्भिदा स्यात् ।**
**मैवं द्वयं जीवपरार्थमेव विद्यैक्यमेवेति गुणानुषङ्गः ॥ ८१ ॥**

अ - र्थः । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' (मु. ३-१-१) 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' (क. ३-१) इति मुण्डककाठकगत वाक्ययोः अर्थैक्ये विद्यैक्यं, तदभावे विद्यानानात्वमिति विशये एकत्र एकस्य भोक्तृत्वं दृश्यते । अन्यत्र तु उभयोरपि भोक्तृत्वमेव । वेद्यरूपस्य भिद्यमानत्वात् विद्याभेद इति प्राप्ते विद्यैकत्वमिति सिद्धान्तः ।

तथाहि, उभयोरपि मन्त्रयोः परमात्मप्रकरणपाठात् वाक्यशेषाच्च जीवद्वितीयं ईश्वरं प्रतिपादयतोः वेद्यरूपभेदाभावात् । छत्रिणो गच्छन्तीति छत्र्यच्छत्रिग्रहणवत् पानकर्तृभिस्सह एकस्य अपिबतोऽपि साहचर्यात् ऋतं पिबन्ताविति परमात्मनः भोक्तृत्वाभावेऽपि भोक्तृत्वमुच्यत इति न भोक्तृत्वं परमात्मनः भवतीति उभयत्र अर्थैक्याद्विद्यैक्यमेव इति॥

---

## अद्वैतम् अन्तरत्वाधिकरणम् । (१२२)

### अन्तराभूतग्रामवत् स्वात्मनः । (३९४)
### अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् । (३९५)

**उषस्तनाम्नश्च कहोलनाम्नः प्रश्नद्वयेऽभ्यास निदर्शनात्ते ।**
**विद्ये विभिन्ने इति मैवमत्र सर्वान्तरात्मैव गुरूपदिष्टः ॥ ८२ ॥**
**आवृत्तिभेदेऽपि च नात्मभेदः यस्तत्त्वमस्यादिषु दृष्ट एव ।**
**समाप्तिरारम्भ इहापि तुल्यौ यदेव साक्षादिति चैक्यबोधात् ॥८३॥**

अ - र्थः । 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः (बृ. ३-४-१, ३-५-१) इति बृहदारण्यके उषस्तकहोलप्रश्नयोः नैरन्तर्यप्रश्नसमाधाने वर्तेते ।

तत्र विद्यैकत्वं उत नानात्वमिति विशये विद्याभ्याससामर्थ्यात् विद्यानानात्वम् । यथा 'समिधौ यजति' इत्यादौ यजतिपदाभ्यासात् प्रयाजादिभेदः, तद्वत् अत्र विद्याभ्यासात् भेद इति प्राप्ते समाधानम् ।

उभयत्र सर्वान्तर एव आत्मा पृष्टः प्रत्युक्तश्च । 'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।' इति अस्मिन्मन्त्रे समस्तेषु भूतग्रामेषु एक एव सर्वान्तर आत्मा आम्नायते । एवमनयोरपि ब्राह्मणयोरिति वेद्यैक्यात् विद्यैक्यम् ।

'तत्त्वमसि' इति नवकृत्वोप्युपदेशः श्वेतकेतोः दृश्यते । तत्र विद्याभेदो न, तद्वत् अत्र उपदेशभेदेऽपि विद्यैकत्वं प्रकृते भवत्येवेति । उभयोरपि प्रश्नप्रतिवचने समाने एव दृश्येते । यदेव साक्षादिति च एवकारेण विद्यैक्यबोधाच्च इति ॥

---

## विशिष्टाद्वैतम् अन्तरत्वाधिकरणम् । (९७)

**अन्तराभूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरितिचेन्नोपदेश-व्यतिहारो विशिंषन्ति हीतरवत् । (३९०) भेदात् । (३८९)**
**सैव हि सत्यादयः । (३९१)**

**यदेव साक्षादिति यच्च साक्षात् विद्ये कहोलेतर संगृहीते ।**
**ऐक्यं तयोः प्रश्नतदुत्तराभ्यां सर्वान्तरात्माद्युपदेशसाम्यात् ॥ ८४ ॥**

**प्रश्नप्रत्युक्तिभेदेऽपि सद्विद्यैक्यं यथेष्यते ।**
**ऐतदात्म्यनवाभ्यासादेकोषस्तकहोलयोः ॥ ८५ ॥**

**अर्थः** । बृहदारण्यके 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व' (बृ. ५-४-१) इत्युषस्तप्रश्नस्य प्रतिवचनं 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' (बृ. ५-४-१) इत्यादि । 'यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व' (बृ. ५-५-१) इति कहोलप्रश्नस्य प्रतिवचनं 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ. ५-५-१) तत्र विद्याभेदो अस्ति नवेति चिन्तायां प्रश्नस्य ऐक्यरूपेऽपि पूर्वत्र प्राणनादीनां कर्ता 'सः सर्वान्तरात्मा' इति परत्र अशनायापिपासादि-रहितः इति पूर्वत्र जीवात्मा, परत्र परमात्मेति प्रतिभासात् रूपं भिद्यते अतः विद्यानानात्वमिति पूर्वपक्षः ।

सिद्धान्तस्तु न विद्याभेदः । यत्साक्षादिति प्रश्नार्थस्यैव यदेवसाक्षादिति पुनःप्रश्नेन प्रश्नैक्यं भासते । प्रतिवचने भूतग्रामवत्स्वात्मनः सर्वान्तरत्वेनोपदेशात् प्रतिवचनमपि तुल्यमेव । निरुपाधिकप्राणितृत्वं परमात्मन एवेति पूर्वमुक्तत्वात् । 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इत्यादि श्रुतेः । अतः उभयत्र परमात्मैवेति रूपाभेदाद्विद्यैक्यम् । तथा सति उभयत्र कहोलप्रश्नेऽपि सर्वप्राणिप्राणनहेतुत्वरूपगुणः अनुसन्धेयः । उषस्तेनापि अशनायापिपासराहित्यरूपगुणो अनुसन्धेय इति सद्विद्यादिवत् उपदेशाभेदेऽपि विद्याऽभेदस्सिद्धः इति ॥

---

## द्वैतम् इयदामननाधिकरणम् । (१५६)

**ओं इयदामननात् ।　(४००)**

**ओं अन्तराभूतग्रामादिति चेत्तदुक्तम् ।　(४०१)**

**ओं अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत् । (४०२)**

**नामादिभ्यस्तूत्तमत्वं प्राणस्य परिदृश्यते ।**
**श्रियं विष्णुं विना प्राणवाच्यः सर्वेभ्यः उत्तमः ॥ ८६ ॥**
**प्राणावधिकसर्वेषां तारतम्यं समीरितम् ।**
**अजायतात्मनः प्राणः सत्येनातीति मानतः ॥ ८७ ॥**

**अ - र्थः ।** छान्दोग्ये नामोपास्वेत्यारभ्य प्राणोपास्तिपर्यन्तं उत्तरोत्तरं उत्तमत्वमुक्तम् । प्राणशब्दवाच्यश्च चतुर्मुखः । तादृशप्राणात् किञ्चिद्भूयः नोक्तम् । तथाप्यनुमानात् चतुर्मुखस्यापि जनकः उत्तमः विष्णुरस्तीति सिद्धान्तात् । प्रमाणान्तराच्च श्रियं विष्णुं विना प्राणशब्दवाच्यः चतुर्मुखः सर्वेभ्योऽधिकारिभ्यः उत्तम इति श्रुत्याम्नानात् इत्यर्थः ।

इयदामननात्–आधिकारिकाणां छन्दोगश्रुत्युक्त नामादि देवानां तारतम्यम् , इयत्= प्राणावधिकमेव । आमननात्='प्राणो वाव सर्वेभ्यो भूयान्' इत्यादि श्रुतेः । 'नामादि-देवतास्तु "उषा स्वाहा च पर्जन्यो मित्रोग्निर्वरुणो विदुः ।
प्रवहोऽनिरुद्ध इन्द्रो मे रुद्रो वाणी च मारुतः ॥" इति प्रमाणात्
नाम–वाक्–मनः–सङ्कल्प–चित्–ध्यान–विज्ञान–बल-अन्न-अप्-तेज-आकाश-स्मर - आशा–प्राणानां यथासङ्ख्यमधिदेवताः ।

सूत्रार्थः । इयदामननात्–आधिकारिकाणां छन्दोगश्रुत्युक्त नामादि देवतानां तारतम्यम् , इयत्=प्राणावधिकमेव । आमननात्='प्राणो वाव सर्वेभ्यो भूयान्' इत्यादि श्रुतेः । नामादि देवतास्तु "उषा स्वाहा च पर्जन्यो मित्रोग्निर्वरुणो विदुः ।
प्रवहोऽनिरुद्ध इन्द्रो मे रुद्रो वाणी च मारुतः ॥"

इति प्रमाणात् नाम-वाक्-मनः-सङ्कल्प-चित्त-ध्यान-विज्ञान-बल-अन्न-अप्-तेज-आकाश-स्मर-आशा-प्राणानामधिदेवताः । अत्र अधिकं तु अणुव्याख्याने द्रष्टव्यम् ॥ अन्तराभूतग्रामवदिति चेत्तदुक्तम्=प्राणशब्दवाच्यः चतुर्मुखः-अन्तरा=विष्णुं श्रियं च विना, भूतग्रमवत्=नामाद्याशान्तभूतसमूहवत् स्वोत्तमयुक्तः, आधिकारित्वात् इत्यनुमानं न भवति । तदुक्तम्='प्राणो वाव सर्वेभ्यो भूयान्' इति प्राणस्यैव अधिकारिभ्यः उत्तमत्वमुक्तम् । प्राणादुपरि न कश्चनोत्तम इति श्रुत्यर्थात् तदनुमानं बाधितमित्यर्थः ॥ अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत्-अन्यथा=पूर्वोक्त सर्वोत्तमत्वे भेदानुपपत्तिरिति चेत् 'आत्मा एष प्राणो जायत' इति श्रुतिसिद्धभेदस्य अनुपपत्तिरिति चेन्न । उपदेशवत्='एष तु वा अतिवदति यस्सत्येनातिवदति' इत्युपदेशवत् चतुर्मुखादपि पुरुषोत्तमस्य विष्णोः सिद्धत्वात् इत्यर्थः । प्राणस्य सर्वोत्तमत्वे प्राणपरमात्मनोः एक्यापत्त्या भेदो न स्यादिति पूर्वपक्षः । सिद्धान्तार्थस्तु 'यस्सत्येनातिवदति' इति प्राणादुपरि सत्यशब्दवाच्यस्य विष्णोरुत्तमत्वं सिद्धमित्यर्थः ।

"उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् ।
तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः ॥"

इति प्रमाणात् चतुर्मुखादपि नित्यमुक्तहरेरेवोत्तमत्वम् । नान्यस्य । इति ॥

---

## अद्वैतम् व्यतिहाराधिकरणम् । (१२३)

### व्यतिहारो विशिंषन्ति हीतरवत् । (३९६)

**"योऽसौ सोऽसौ सोऽहमस्मित्वमा"दौ**
**जीवो ब्रह्मध्यानमुत्कर्षकृत् स्यात् ।**
**ब्रह्मण्याहुर्जीवदृष्टिं निकृष्टां**
**मैवं ध्यानायेति सत्यादिवत् सः ॥ ८८ ॥**

अ-र्थः । 'तद्योऽहं सोऽसौ, योऽसौ सोऽहं', 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि' इत्यादि श्रुतिषु परस्परव्यतिहारेण उभयरूपा बुद्धिः कर्तव्या, एकरूपैव वा कर्तव्येति संशये चिन्तनाय परस्परं व्यतिहारः कर्तव्य एवेति सिद्धान्तः । इतरवत् यथा सर्वात्मत्वप्रभृतयो गुणाः आध्यानायाम्नायन्ते तद्वदित्यर्थः । अत एव वैदिकाः 'त्वमहमस्मि अहं च त्वमसि' इत्युभयरूपां मतिं कुर्वन्ति ॥

ननु, उत्कृष्टदृष्टिः निकृष्टे कर्तव्या, सा च श्रेयस्करी इति च न्यायः । जीवात्मनि परमात्मदृष्टिः श्रेयस्करी भवतु, परमात्मनि जीवदृष्टिः न श्रेयस्करीति कथं व्यतिहारेण उभयमतिरिति चेत् वचनप्रामाण्यात् उभयमतिः

कर्तव्येत्युच्यते । अत्र उभयविधध्यानेऽपि ऐकात्म्यस्यैव अनेन प्रकारेण अनुचिन्त्यमानत्वबोधनात् न दोष इति ॥

---

## द्वैतम् व्यतिहाराधिकरणम् । (१५७)

### ओं व्यतिहारो विशिंषन्ति हीरवत् । (४०३)

**विष्णोः प्राणादुत्तमत्वं प्रश्नप्रत्युक्त्यभावतः ।**
**नेति चेन्नातिवादीति सत्यब्रह्मोक्तितस्ततः ॥ ८९ ॥**
**प्राणाद्भूयोस्ति सत्यं वाऽदोभूय इति कल्पनात् ।**
**हिरण्यगर्भपर्याय प्राणादुत्तमता हरेः ॥ ९० ॥**

अ - र्थः । प्राणादपि परमात्मनः उत्तमत्वमुक्तम् । तच्चेतरवत् सिद्ध्यातीत्याह । 'एष तु वा अतिवदति' इति सत्यातिवादिनः विशेषणमुक्तम् । तस्मात् चतुर्मुखादपि सर्वोत्तमत्वं विष्णोरेवेति 'तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः ।' इति प्रमाणात् इति ।

व्यतिहारो विशिंषन्ति—छन्दोगाः इतरवत्='वाग्वाव नाम्नो भूयसी'त्यादि विशेषणेन नामादिभ्यो वागादिकमिव प्राणातिवादितः सत्यातिवादिनम्' 'यस्सत्येनातिवदती'ति, विशिंषन्ति='एष तु वा अतिवदति' इति तु शब्देन व्यावर्तयन्तीत्यर्थः । व्यतिहारः= अध्याहारः 'अस्ति भगवः प्राणात् भूयः' इति 'प्राणाद्वाव भूयोऽस्तीति' 'तन्मे भवान् ब्रवीतु' इति 'सत्यं वाव प्राणाद्भूयः' इति प्रश्नपरिहारयोः सत्यप्रकरणे कर्तव्य इत्यर्थः ॥

---

## अद्वैतम् सत्याद्यधिकरणम् । (१२३)

### सैव हि सत्यादयः । (३९७)

**सत्याख्यविद्यान्तरगार्कचक्षुस्थितात्म निध्यान विधानतो द्वे ।**
**भिन्ने हि विद्ये इति नैवमेव तद्यत्तदित्याद्यनुकर्षणात् सा ॥ ९१ ॥**
**एकत्र पाप्मापहतिः फलं तत् क्वचित्त्रिलोकी जय एव कथ्यते ।**
**फलद्वयं चाङ्गमेव विद्याऽभेदाच्च सत्यादिगुणानुषङ्गः ॥ ९२ ॥**

अ - र्थः । 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' (बृ. ५-४ १) इति सत्याख्यविद्यामभिधाय 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एत-

स्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' (बृ. ५-५-२) इति विद्या श्रूयते । तत्र सत्यविद्ये द्वे उत एकैवेति संशये फलभेदात् 'जयतीमाँ लोकान्' (बृ. ५-४-१) 'हन्ति पाप्मानं जहाति च' (बृ. ५, ५-३-४) इति फलभेदात् भिन्ने इति प्राप्ते फलद्वयमप्यङ्गगतमेवेति अर्थवाद एव उभयोः विद्ययोः । 'द्रव्यगुणसंस्कारकर्मसु फलश्रुतिरर्थवादस्स्यात्' इति न्यायात् । उभयोर्विद्ययोः विद्यैक्यमेवेति गुणोपसंहारः कर्तव्य इति ॥

---

## द्वैतम् सत्याधिकरणम् । (१५८)

### ओं सैव हि सत्यादयः । (४०४)

**श्रद्धानिष्ठाकृतिर्ज्ञानं सुखं भूमादयस्तथा ।**
**उत्तमास्तत्र सन्तीति न ते विष्णुगुणास्स्मृताः ॥ ९३ ॥**

अ - र्थः । प्राणादुत्तमः छान्दोग्ये न दृष्ट इति पूर्वोक्तं न युज्यते । 'कृतिस्त्वेव विजिज्ञासितव्या' इति कृत्यादीनामुपरि दृष्टत्वात् इत्याक्षेपे समाधानमाह । कृत्यादयः परदेवतायाः स्वरूपभूता गुणाः ।

"नामादिप्राणपर्यन्तात् यो हि सत्यादिरूपवान् ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णवे ॥"

"सत्याद्या अहमात्मान्ताः यद्गुणास्समुदीरिताः ।
तस्मै नमो भगवते यस्मादेव विमुच्यते ॥" इति प्रमाणात् ॥

सूत्रार्थः । सैव हि सत्यादयः-सत्यादयः=सत्यं आदिः एषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः, 'जक्षित्यादयष्षट्' इति पाणिनिसूत्रवत् सत्यशब्दस्य विष्ण्वर्थकत्वस्य पूर्वोक्तत्वात् तद्भिन्नविज्ञानादिशब्दवाच्याः । विज्ञानादयः सैव = विष्ण्वाख्यपरदेवतैव । नान्ये इत्यर्थः । नामादिप्राणपर्यन्तात् इति प्रमाणात् । सूत्रे सैवेति स्त्रीलिङ्गनिर्देशः कृतिनिष्ठाश्रद्धा इत्यादि स्त्रीलिङ्गशब्दबाहुल्यस्यश्रुतौ दृष्टत्वात् तदपेक्षया इत्यर्थः ॥

---

## अद्वैतम् कामाद्यधिकरणम् । (१२५)

### कामादीतरत्र तत्र चायतनादिभ्यः । (३९८)

**यस्सत्यकामादि गुणीत्युपास्यः आकाशशायीति स निर्गुणात्मा ।**
**तयोरभेदेऽपि गुणानुषङ्गः नोपासनार्थः किमु भूतिबुद्ध्यै ॥ ९४ ॥**

अ - र्थः । छान्दोग्ये 'एष आत्मे'त्यारभ्य (८-१-५) दहविद्या पठिता । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु, य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी' (बृ. ४-४-२२) इत्यादि निर्गुणविद्या पठिता । तयोरैक्येन परस्परं गुणोपसंहारः कर्तव्यः । निर्गुणविद्यायां गुणोपसंहारे किं फलमिति न शङ्कनीयम् । निर्गुणब्रह्मण एव विभूतिप्रदर्शनाय अयमुपसंहारः । नोपासनाय । गुणवद्ब्रह्मैव निर्गुणमिति प्रदर्शनायेत्यर्थः । उभयत्रापि हृदयायतनत्वादि सामान्यात् विद्यैक्यमित्यर्थः । यद्यपि दहविद्या सगुणमेव । वाजसनेयकविद्या तु 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' (बृ. ४-३-१४) 'स एष नेति नेत्यात्मा' (३-९-२६) इत्यादिना निर्गुणमेव ब्रह्म कथयति । तथाऽपि ब्रह्मणः विभूतिप्रदर्शनायेत्युक्तत्वात् उपासनार्थाभावेऽपि तत्रोक्त सत्यकामत्वादयः अत्र, अन्यत्रोक्त वशित्वादयः तत्र इति परस्परमुपसंहार एव इति ॥

---

## अद्वैतम् आदराधिकरणम् । (१२६)

**आदरादलोपः ।**　　(३९९)
**उपस्थितेऽतस्तद्वचनात् ।**　　(४००)

**प्राणाग्निहोत्रस्य समादरेण भक्तस्य लोपोऽपि स होम एव ।**
**भक्तं समुद्दिश्य च होमदृष्टेः भक्तस्य लोपे न च होम इष्टः ॥ ९५ ॥**

अ - र्थः । 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात्प्राणाय स्वाहा' (छा. ५-१९-१) 'य एतदेवं विद्वानग्निहोत्रं जुहोति' (छा. ५-२४-२) इत्यादि प्राणाग्निहोत्रप्रकरणे मन्त्रपुरस्सरं होमो दृष्टः । तत्र अन्नभोजनाभावेऽपि अन्नपर्यायस्य जलेन वा अन्येन द्रव्येण वा प्रतिनिधिन्यायेन भोजनं स्वीकृत्य तदङ्गभूतः होमः कर्तव्य इति प्राप्ते उपस्थिते भोजने एव होमविधानात् अन्नभोजनाऽभावे होमलोप एव । न प्रातिनिधिमाश्रित्य होमः कर्तव्य इति ॥

---

## विशिष्टाद्वैतम् कामाद्यधिकरणम् । (९८)

**कामादीतरत्र तत्र चायतनादिभ्यः ।**　　(३९२)
**आदरादलोपः ।**　　(३९३)

**उपस्थितेऽतस्तद्वचनात् । (३९४)**

**क्वचिच्चकामादिगुणाष्टकाङ्गि क्वचित् खशायी वशितादि जुष्टः ।**
**पूर्वत्र कामादिगुणाः प्रतीताः परत्र चेशानमुखा गुणास्तु ॥ ९६ ॥**
**तद्रूपभेदाद्विविधैव विद्या मैवं द्वयोस्साम्यगुण प्रतीतेः ।**
**सर्वासु विद्यासु गुणैर्विशिष्टं ब्रह्मेति कामादिगुणाद्यलोपः ॥ ९७ ॥**

अ - र्थः । 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छा. ८-१-१) इत्यादि । वाजसनेयके 'स वा एष' इत्यारभ्य 'य एषो अन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इत्यादि (छा. ६-४-२२) तत्र विद्याभेदः, एकत्र अपहतपाप्मत्वादिगुणाष्टकविशिष्ट आकाशः उपास्यः, एकत्र तु आकाशे शयानः वशित्वादिगुणविशिष्टः उपास्य इति, रूपभेदात् प्रतीयत इति पूर्वपक्षे समाधानम् । हृदयायतनत्व-सेतुत्व-वितरणत्वादिभिः उभयत्र विद्या तुल्येति प्रत्यभिज्ञायते । वशित्वादयः सत्यसङ्कल्पन्तर्भूता एवेति सत्यसङ्कल्पसहित-सत्यकामत्वादिगुणानामपि सद्भावमन्यत्रावगमयन्ति । अतः रूपं न भिद्यते । ब्रह्मप्राप्तिरूपं च फलमपि न भिन्नमिति विद्यैक्यादुभयत्र उभये गुणाः उपसंहर्तव्याः ॥

ननु, दहराकाशः एकत्र परमात्मपर एव, वाजसनेयक आकाशे शयानस्य वशित्वादिगुणश्रवणान्यथानुपपत्त्या परमात्मपरत्वाश्रयणेन वाजसनेयकगताकाश-शब्दस्य 'तस्यान्ते सुषिरं सूक्ष्मं' (तै-ना. ११.) इति हृदयान्तर्गत सुषिर-शब्दवाच्य आकाशोऽर्थ इति आयतनभेदोऽस्तीति चेन्न । उभयत्र सर्वगुणसत्वात् 'भूयसां स्यात् बलीयस्त्वं' इति मीमांसा न्यायेन हृदयायतनत्वादि बहुगुणाधिक्यात् अभिन्नेव विद्येत्यङ्गीकार्या ॥

ननु, 'य इहात्मानमनुविद्यव्रजन्ति, एतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. ८-१-५) इत्यादिना पितृलोकसञ्चारादि सांसारिकफलश्रवणात् सत्यकामत्वादि गुणाः फलान्तरकामानामेव उपास्याः न ब्रह्मप्रेप्सोः, निर्गुणमेव ब्रह्म प्राप्यमुच्यते । 'परंज्योतिरुपसंपद्य स्वेन रूपेणा-भिनिष्पद्यते' इत्यादि श्रुतेः इति चेन्न । सगुणमेव ब्रह्म, न तु निर्गुण-मित्यसकृदुक्तत्वात् सत्यकामत्वादि गुणविशिष्टब्रह्मोपासनेनैव सर्वबन्धविनिर्मुक्ति-पूर्वक स्वस्वरूपाविर्भाव इति, लोकसञ्चारादिकं च मुक्तस्य 'सङ्कल्पादेव तच्छ्रुतेः'

इत्यादिना वक्ष्यमाणरीत्या युक्तमिति । उपास्तिश्च सर्वगुणविशिष्टस्यैव । प्रकृतविद्ये अपि सगुणे एवेति सत्यकामत्वादिगुणाः उभयत्रोपसंहार्या एवेति ॥

---

## द्वैतम् कामाद्यधिकरणम् । (१५९)

**ओं कामादितरत्र तत्र चायतनादिभ्यः । (४०५)**
**ओं आदरादलोपः । (४०६)**
**ओं उपस्थितेस्तद्वचनात् । (४०७)**

**प्राणादुपरि लक्ष्मीश्चेत् पाठाभावः कथं श्रुतौ ।**
**सदा विष्णोस्समीपस्थाप्युपास्ते विष्णुमादरात् ॥ ९८ ॥**
**प्रकृतिर्नित्यमुक्तेति स्वेच्छया विष्णुवत् क्षितौ ।**
**अवतीर्य स्वभक्तानां बन्धमोक्षौ करोति सा ॥ ९९ ॥**

**अ - र्थः** । छान्दोग्ये ' नामादि प्राणपर्यन्तपाठे सत्यपि लक्ष्म्याः प्राणादुपरि पाठाभावः जन्मादिश्रवणञ्च कथमित्याक्षेपे लक्ष्मीः स्वेच्छया विष्णुस्थाने स्थित्वा अन्यत्र भूम्यादौ " राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि " इत्यादि प्रमाणात् बहून् अवतारान् करोति । प्राणादुपरि लक्ष्म्याः पाठाभावस्तु संसारयोग्यानामेव तत्र पाठः, इयं तु प्रकृतिशब्दवाच्या लक्ष्मीः नित्यमुक्ता । सर्वदा विष्णुसमीपस्था । विष्णौ अधिकप्रीत्या उपास्तिमपि करोति ।

" नामादयस्तु बद्धत्वात् मोचकत्वात् परोपि च ।
उभयोरप्यभावेन यथाव्यक्तं न तूदितम् ॥
श्रुतौ तथा जीवपरौ उच्यते किञ्चनेतरत् ।
नोच्यते च तदा तत्त्व द्वयं वै समुदाहृतम् ॥
यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्वदा ।
उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत् ॥"

'द्वावेवानादि नित्यौ' इत्यारभ्य 'एनमाहुः परम' इति गौपवनश्रुत्यादयः अत्र प्रमाणमिति ॥

कामादितरत्र तत्र चायतनादिभ्यः—श्रीः=कामात्=स्वेच्छया, इतरत्र=भूम्यादौ—अवतरति । आयतनादिभ्यः=सर्वत्र आयतनत्वादि सत्त्वात् इत्यर्थः । श्रियः जन्माद्यभावेन संसाराभावात् संसारयोग्य नामादिषु अपाठ इत्यर्थः ॥ आदरादलोपः—आदरात्=विष्णौ भक्त्याधिक्यात्, लक्ष्म्याः अलोपः=उपासनादेरलोपो युज्यते इत्यर्थः । उपस्थितेस्तद्वचनात् उपस्थितेः=भगवत्समीपस्तिेः, वचनात्—'द्वावेतौ, अनादिनित्यौ, अनादियुक्तौ, नित्यमुक्तौ, नित्यक्तौ, योऽयं परमो या च प्रकृती, रमते ह्यस्यां परमो रमते ह्यस्मिन् प्रकृतिः, स्वस्मिन् हि रमते परमः, न स्वस्मिन् प्रकृतिः, अत एवमाहुः परम' इत्यादि श्रुतिवचनात् । मायाः परः—परम इति विष्णुरित्यर्थः ॥

---

## अद्वैतम् तन्निर्धारणाधिकरणम् । (१२७)

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् । (४०१)**

**उद्गीथविद्या नियमेन कर्मव्यपाश्रया नेन्द्रियकामवत् सा ।**
**यो वेद यश्चापि न वेद तौ द्वौ कर्मश्रयेते इति वेदवाक्यात् ॥ १०० ॥**
**विद्याविहीनं च तदेव कर्म वीर्येण युक्तं तरवेव वक्ति ।**
**तस्मादुपास्तेः फलमन्यदेव विलम्बराहित्यमिहोच्यतेऽस्याः ॥ १०१ ॥**

अ - र्थः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादीनि (छा. १-१-१) कर्माङ्गाश्रयाणि विज्ञानानि कर्मसु नियमेन न कर्तव्यानि । 'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद (छा. १-१-१०) इति उद्गीथोपासकस्य उद्गीथानुपासकस्य च कर्मविधानात् । 'आपयिता ह वै कामानां भवति' इति उपास्तिफलश्रवणं तु 'दध्नेन्द्रियकामस्य जुहुयात्' इतिवत् 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति कर्मफलापेक्षया विलम्बराहित्यरूपफलायोपास्तिविधिरिति प्रतीयते । वीर्यवत्तरमिति तरप्प्रत्ययेन कर्मणः स्वभावतः वीर्यवत्वबोधनात्, तरप्प्रत्ययेन अधिकफलद्योतनाच्च ।

---

## विशिष्टाद्वैतम् तन्निर्धारणनियमाधिकरणम् । (९९)

**तन्निर्धारणनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् । (३९५)**

**उद्गीथाश्रयकर्मणीह नियमेनोद्गीथविद्या न वा**
**जुह्वाद्याश्रयपर्णतेव नियमेनेत्थं नियम्येत न ।**
**गोदोहादिवदेव यज्ञियफलादन्यच्च शैघ्र्यं फलं**
**प्रोक्तं तत्फलकामुके भवति सा नान्यत्र विद्या श्रुता ॥१०२॥**

अ - र्थः । कर्माङ्गाश्रयाणि उपासनानि कर्माङ्गत्वेन नियमेन अनुष्टेयानि । 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यत्र जुह्वाः पर्णतादिनियमवत् इति प्राप्ते कर्माङ्गत्वेन नोपासनानियमः । 'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद' इति (छा. १-१-१०) विदुष इव अविदुषोपि कर्मानुष्ठानविधानात् । उपासनाया यदि कर्माङ्गत्वं तदा 'सकलाङ्गोपसंहारे काम्यं कर्म प्रसिद्ध्यतीति' अविदुषः कर्मविधानं व्यर्थं स्यात् । कर्मानुष्ठाने च फलसिद्ध्यभावप्रसङ्गाच्च । प्रकृतकर्मणः फलप्रदत्वे सत्यपि प्रबलकर्मान्तरफलेन

विलम्बराहित्यरूप वीर्यवत्तरत्वफलार्थं हि कर्मसु उपासना विधीयते । 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् । इति ॥

---

## द्वैतम् तन्निर्धारणाधिकरणम् । (१००)

### ओं तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् । (४०८)

**श्रवणं मननं ध्यानं त्रयं कार्यं मुमुक्षुभिः ।**
**ब्रह्मापरोक्ष्यविज्ञानविरोधिविनिवृत्तये ॥ १०३ ॥**
**तत्वनिश्चयवेदार्थदार्ढ्याभ्यामितरत् फलम् ।**
**प्रतिबन्धाभावरूपं ब्रह्मज्ञानस्य गीयते ॥ १०४ ॥**

**अ - र्थः** । "श्रोतव्यो मन्तव्यो निधिध्यासितव्यः" इत्यादि श्रुतौ ब्रह्मापरोक्ष्यज्ञाने उपासनं साधनम् । तच्च श्रवणादिना सम्भवतीति किमर्थमुपासनमित्यक्षेपे श्रवणादिफलं अज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिरिति उपासनफलात् भिन्नमेवेति श्रवणादिकमपि अनुष्टेयमेव ।

"श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥" इति प्रमाणात् ॥

सूत्रार्थः । तन्निर्धारणं च अर्थनियमश्च एतयोस्समाहारः—तन्निर्धारणार्थनियमः । छन्दोवत् सूत्राणि भवन्तीति वैयाकरणपरिभाषया सौत्रं पुंस्त्वम् । तन्निर्धारणनियमः= तत्वविषयनिश्चयः, अर्थनियमश्च वेदार्थदार्ढ्यरूपः । एतत् फलद्वयमपि श्रवणमननयोः । फलम्=मुख्यफलं तु तद्दृष्टेः=ब्रह्मापरोक्ष्यज्ञानात् , पृथग्घ्यप्रतिबन्धः=ब्रह्मापरोक्षप्रतिबन्धकीभूत अज्ञानसम्शयविपर्ययाणां निवृत्तिः । श्रवणेन तत्वनिश्चयो जायते । तेनाज्ञाननिवृत्तिः फलति । मननेन वेदार्थनिश्चयः । तेन संशयविपर्ययनिवृत्तिः फलति । उपासनायाः फलं ब्रह्मापरोक्षम् ॥

---

## अद्वैतम् प्रदानाधिकरणम् । (१२८)

### प्रदानवदेव तदुक्तम् । (४०२)

**यत्प्राणवाय्वोरनुचिन्तनं तत् विद्यैक्यभानेऽपि *दशादिभेदात् ।**
**'राज्ञेऽधिराजाय' यथा प्रदानं प्राणस्य वायोः पृथगेव चिन्ता ॥१०५**
**तौ वेति सैषेति च भिन्नशाखा पाठादिभेदात् पृथगेव विद्ये ।**
**उपक्रमेणाप्युपसंहृतेश्च विद्यैक्यभावेऽपि पृथक्त्वचिन्ता ॥ १०६ ॥**

* राजादिगुणभेदात्

**अ - र्थः** । वागादीनां प्राणः श्रेष्ठः, अग्न्यादीनां वायुः, 'प्राणो वाव संवर्गः' (छा. ४-३-२) 'वायुर्वाव संवर्गः' (छा. ४-३-१) इति । तत्र वायुप्राणविद्ये भिन्ने उपास्ये उताऽभिन्ने इति शङ्कायां अभिन्ने इति प्राप्ते वायुप्राणौ भिन्नावेवोपास्यौ । ध्यानार्थमेव अध्यात्माधिदैवतभेदेनोपदिष्टम् । 'स यथैषां प्राणानां मध्यमः प्राणः एवमेतासां देवतानां वायुः' (बृ. १-५-२२) इत्युपमानोपमेयप्रदर्शनसामर्थ्यात् । 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ. १-५-२२) 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणेषु' (छा. ४-३-८) इत्यादिना विद्याभेदस्यैव ज्ञायमानत्वात् । यथा 'त्रिपुरोडाशिन्यामिष्टौ इन्द्राय राज्ञे पुरोडाशमेकादशकपालं', 'इन्द्रायाधिराजाय', 'इन्द्राय स्वराज्ञे' इत्यत्र राजादिगुणभेदात् 'प्रथमामनूच्य मध्यमया यजेत्, मध्यमामनूच्य उत्तमया यजेत्, उत्तमामनूच्य प्रथमया यजेत्, एवं सर्वा अनुवाक्याः सर्वा याज्या भवन्ति' इति कल्पश्रौत सूत्राभ्यां याज्यानुवाक्याव्यत्यासविधानाच्च देवता पृथक्त्वात् प्रदानपृथक्त्वमनुष्ठीयते, तद्वत् अत्रापि विशेषणभेदाद्वायुप्राणयोः ध्यानार्थं देवतापृथक्त्वमङ्गीकरणीयमिति 'नाना वा देवता पृथक्त्वादिति' सङ्कर्षणसूत्रप्रमाणात् ज्ञायते ॥

ननु द्रव्यदेवताभेदेन यागभेदः तत्र विद्यते । नैवमिह विद्याभेदेऽस्ति । उपक्रमोपसंहाराभ्यां अध्यात्माधिदैवोपदेशेषु एकविद्याविधानप्रतीतेश्च इति चेन्न । विद्यैक्येऽपि अध्यात्माधिदैवभेदात् प्रवृत्तिभेदमङ्गीकृत्य पृथक्त्वचिन्ता, यथा अग्निहोत्रे सायंप्रातःकालभेदात् अग्निहोत्रभेद इत्याश्रीयते तद्वत् एतावन्मात्रं भेदमभिप्रेत्य प्रदानवदित्युक्तम् ॥

अत्र विषयवाक्ये बृहदारण्यके त्रयोदशं ब्राह्मणं 'उक्थं प्राणो वा उक्थं प्राणो हीदम्' इत्यारभ्य 'सायुज्यँ सलोकतां जयति य एवं वेद' इत्यन्तम् । छान्दोग्ये चतुर्थाध्याये तृतीयखण्डे वायुर्वाव संवर्गो यदा वा अग्निरुद्वाय वायुमेवाप्येति, यदा सूर्योऽस्तमेति वायुमेवाप्येति, यदा चन्द्रोऽस्तमेति वायुमेवाप्येति । यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् । 'अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति, प्राणं चक्षुः, प्राणश्रोत्रं, प्राणं मनः प्राणोह्येवैतान् सर्वान् संवृङ्क्त इति । तौ वा एतौ द्वै संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति ॥

## विशिष्टाद्वैतम् प्रदानाधिकरणम् । (१००)

### प्रदानवदेव तदुक्तम् । (३९६)

**ज्ञात्वात्मानं च सत्यांश्च कामान् विद्यादिति श्रुतौ ।**
**गुण्यावृत्तिर्गुणध्याने त्रिपुरोडाशदानवत् ॥ १०७ ॥**

अ - र्थः । छान्दोग्ये 'तद्य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इति दहरविद्यायां गुणिचिन्तनं गुणचिन्तनं चोक्तम् । तत्र गुणचिन्तन-समये गुण्यावृत्तिः भवति वा नवेति विशये गुणचिन्तनार्थं गुण्यावृत्तिः कर्तव्या । यथा त्रैधातवीयेष्ट्यां 'इन्द्राय राज्ञे, 'इन्द्रायाधिराजाय', 'इन्द्राय स्वराज्ञे' इति त्रिपुरोडाशिन्यां इन्द्रायेति पदस्य राजाधिराजस्वराट्त्वादिरूपभेदेन याग-त्रये इन्द्रपदावृत्तिरिव अपहतपाप्मेत्यादिगुणविशिष्टध्यानार्थं दहराकाशरूप पर-ब्रह्मण आवृत्तिरेव इति ॥

---

## द्वैतम् प्रदानाधिकरणम् । (१६१)

### ओं प्रदानवदेव हि तदुक्तम् । (४०९)

**गुरुप्रसादपूर्वं तु फलवच्छ्रवणादिकम् ।**
**'आचार्यवानि'ति श्रुत्या गुरुदत्तं प्रकाशते ॥ १०८ ॥**

अ - र्थः । केवल श्रवणादिमात्रेण ब्रह्मज्ञानं न भवति । 'आचार्य-वान् पुरुषो वेद' इति श्रुत्या गुरूपदिष्टज्ञानसहितेन श्रवणादिना ब्रह्मज्ञानं भवति ।

प्रदानवदेव हि तदुक्तम् = प्रदानवत्–एव–हि–तत्–उक्तम् = तत् = श्रवणादिकम् (फलवदेव) हि=यतः, प्रदानवदेव=गुरूपदेशयुक्तमेव । उक्तम्–'आचार्यवान् पुरुषो वेद' इति श्रुत्या प्रतिपादितमित्यर्थः । अत्र प्रदानशब्दः गुरूपदेशार्थकः । धातूनां अनेकार्थ-त्वात् । उपसर्गेण धात्वर्थः बलादन्यत्र नीयते प्रहाराहारेवं इत्यादि प्रमाणात् ॥

---

## अद्वैतम् लिङ्गभूयस्त्वाधिकरणम् । (१२९)

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ।** (४०३)
**पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ।** (४०४)
**अतिदेशाच्च ।** (४०५)
**विद्यैव तु निर्धारणात् ।** (४०६)
**दर्शनाच्च ।** (४०७)
**श्रुत्यादिबलीयस्त्वाच्च न बाधः ।** (४०८)

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् । (४०९)**
**न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः । (४१०)**
**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः । (४११)**

**मनश्चिदाद्या मनसा प्रक्लृप्ता स्वतन्त्रविद्योत सर्वाङ्गभूता ।**
**स्वतन्त्रविद्येति विनिश्चिनोति लिङ्गादिसूत्रैः श्रुतियुक्तिभिश्च ॥ १०९**

अ - र्थः । वाजसनेयके 'षट्त्रिंशत्सहस्राणि अपश्यत् आत्मनोऽग्नीन् अर्कान् मनोमयान् मनश्चितः' इत्यादि । तथैव 'वाक्चितः प्राणचितः चक्षुश्चितः श्रोत्रचितः कर्मचितो अग्निचितः' इति साम्पादिकाग्निं पृथगामनन्ति वाजसनेयिनः । तत्र एते स्वतन्त्राः केवलविद्यात्मका उत क्रियानुप्रवेशिनः तच्छेषभूता इति विशये 'तान् हैतान् एवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इत्येवं जातीयकानां भूयसां लिङ्गानां क्रतुप्रकरणात् बलियस्त्वात् केवलविद्यात्मका एवेति ज्ञायन्ते । इति ॥

शतायुः पुरुषस्य दिनसंख्या षट्त्रिंशत्सहस्राणि (36,000 நாள்) तेषु कर्तव्यानां कर्मणां अर्च्याग्नित्वेन कल्पनं, तदवान्तरभूताः मनश्चिदादय इति विषयवाक्यार्थसंग्रहः ॥

'ते हैते विद्याचित एव' इति श्रुत्या 'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ।' 'सोऽमृतो भवति' इत्याद्यैश्च विद्याफलमेवोच्यते इति स्वतन्त्वविद्या एव एताः इति ॥

किञ्च मानसवदित्युक्ते मनश्चिदादीनां क्रियाशेषत्वमपि न कल्प्यम् । मृत्युवत् । यथा 'स वा एष एव मृत्युः, य एष एतस्मिन् मण्डले पुरुषः' इति, 'अग्निर्वै मृत्युः' इति च पुरुषस्य च अग्नेश्च मृत्युवद्भावातिदेशोऽपि मृत्युगत क्रौर्यत्वसंहर्तृत्वादिकं सामान्यमेवातिदिश्यते । न तु मृत्युलोक मृत्युस्थान मृत्युशरीरादिकमतिदिश्यते । 'सामान्यातिदेशो विशेषानतिदेशः' इति परिभाषायां 'आशम्सायां भूतवच्च' इति (पा. ३-३-१३२) सूत्रेण लुङ इव लङ्लिटोरपि 'अनद्यतने लङ्', 'परोक्षे लिट्' इति सूत्रद्वयेन अनद्यतनरूप भूतकाले विहितयोरपि अतिदेशस्स्यात् । 'आशम्सायां भूतवच्चे'ति सूत्रे भूतवदित्यतिदेशात् इत्याक्षिप्य 'सामान्यातिदेशो विशेषानतिदेशः' इति परिभाषया (१०८) अनद्यतनभूतरूपे विशेषे विहितयोः लङ् लिटोः नातिदेशः । अपि तु 'लुङ्' (पा. ३-२-११०) इति सूत्रेण केवलभूतार्थविहित लुङ एवातिदेशः आशंसारूपार्थविवक्षायां इति वैयाकरणोक्तेः । उपमेये उपमानगतं

विशेषधर्मस्याप्यतिदेशो न युज्यते इति । अत्र सामान्य धर्मावच्छिन्ननिमित्त कार्यातिदेशो संभवति विशेषधर्मावच्छिन्ननिमित्त कार्यातिदेशो नेति परिभाषार्थ इति । 'अतीतायाः रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन सहितः दिवसः अद्यतनः । तद्भिन्नकालः अनद्यतनः इत्यर्थः । एषएव भूतविशेषधर्मः । इति ॥

---

## विशिष्टाद्वैतम् लिङ्गभूयस्त्वाधिकरणम् । (१०१)

### लिङ्गभूयस्त्वात्तद्धिबलीयस्तदपि । (३९७)

**सर्वासु विद्यासु च वेद्य एषः नारायणश्शम्भुशिवाक्षसाद्यैः ।**
**विशेष्यते छागपशुप्रमाणात् प्राप्नोति दह्रेऽपि न दह्रमात्रे ॥ ११० ॥**
**सहस्रशीर्षमित्यादि द्वितीया प्रथमार्थिका ।**
**उपासितव्यमित्यत्र प्रथमा न हि युज्यते ॥ १११ ॥**

अ - र्थः । नारायणोपनिषदि 'दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्य सँस्थं, तत्रापि दह्रं गगनं विशोकः तस्मिन्यदन्तस्तदुपासितव्यम्, यद्वेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः, तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः', इति अनुवाकान्तरं 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं, विश्वं नारायणं देवं अक्षरं परमं प्रभुम्' इत्यादि पठित्वा, 'नारायण परो ज्योतिरात्मा-नारायणः परः' इत्यदि पठितम् । तत्र पूर्वानुवाकान्ते श्रुत दह्रविद्याशेषत्वेन उपास्य नारायणरूपदेवताविशेष निर्धारणार्थं 'सहस्रशीर्षं' इत्यादि वाक्यं उत सर्वविद्योपास्य-नारायणरूपविशेष निर्धारणार्थं इति संशये प्रकरणस्थ दह्रं विपाप्ममित्युक्तदहराकाशोपास्तिविशेषनिर्धारणार्थं 'सहस्र शीर्षं देवं' इत्यादि इति पूर्वपक्षे प्राप्ते सर्वपरविद्योपास्य नारायणरूप विशेषनिर्धारणार्थमेव अयमनुवाकः इतरपरविद्योपास्य शम्भुशिवाक्षरादीननूद्य 'स ब्रह्मा, स शिवः, सेन्द्रः' इत्यादिना तेषां नारायणत्वोक्तिरूप-लिङ्गभूयस्त्वसत्त्वात् । प्रकरणात् लिङ्गस्य बलीयस्त्वात् ॥

न च, अयं 'सहस्रशीर्षं' इत्यनुवावकः पूर्वानुवाकान्तोक्त उपास्तेः कर्मापेक्षत्वात् अत्रापि द्वितीयान्तपदश्रवणात् तेनैव सम्बन्धुमर्हति । न सर्वशाखागतध्येयविशेषनिर्धारणे समर्थ इति वाच्यम् । 'सहस्रशीर्षं' इत्यादि पदेषु 'व्यत्ययो बहुलं' 'छन्दस्युभयथा' 'दृष्टानुविधिश्छन्दसि' इत्यादि वैयाकरणन्यायात् 'तत्वं नारायणः परः' 'स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमस्स्वराट्'

इत्यादि प्रथमान्तपदबाहुल्यसाहचर्याच्च सर्वत्र प्रथमेति निश्चीयते । पूर्वानुवाकोक्त उपास्तेः कर्मापेक्षया इदं द्वितीयान्तमित्युक्तं तु न युक्तम् । 'तस्मिन्यदन्तस्तदुपासितव्यम्' इति उपास्तिगततव्यप्रत्ययेन उपास्त्यपेक्षितकर्मण उक्तत्वात् 'अनभिहिते' इत्यधिकृत्य 'कर्मणि द्वितीया' (पा. २-३-२) इति सूत्रेण 'तिङ्' 'कृत्' 'तद्धित' समास' 'निपातैः' कारकार्थे उक्ते प्रथमैव भवति इत्युक्तत्वात् पूर्वानुवाकापेक्षित प्रथमान्त एवात्र निर्दिष्ट इति ज्ञायमानत्वाच्च । सर्वविद्योपास्य निर्धारणार्थत्वे सिद्धे दहृविद्यापि तदन्तर्भूतैवेति दहरविद्यायामपि नारायण एव उपास्य इति त्वदुक्त इष्टसिद्धेश्च ॥

अत्र नारायणशब्दार्थः पूर्वाचार्यैरनेन श्लोकेन संग्रहीतः ।

" अकारार्थायैव स्वमहमथ मह्यं न निवहाः
नराणां नित्यानामयमिति नारायणपदम् ।
यमाहास्मै कालं सकलमपि सर्वत्र सकला-
स्ववस्थास्वाविस्युः मम सहजकैङ्कर्यविध्यः ॥" इति ॥

ननु ब्रह्मसूत्रार्थप्रकाशक नीलकण्ठभाष्य-शिवार्कमणिदीपिका-शिवतत्व-विवेक-श्रुतिसूक्तिमाला—शिवोत्कर्षपञ्चक—हरिहरतारतम्यशतश्लोकीप्रभृतिभिः शिवस्यैव श्रुतिषु पारम्यमुक्तिप्रदत्वादिकमुक्तम् ।

न तु नारायणस्येति भवदुक्तिर्न समीचीनेति चेन्न ।

'कस्त्वं तत्त्वविदस्मि वस्तु परमं किन्तर्हि विष्णुः कथं
तत्वेदं परतैत्तिरीयकमुखत्रैय्यन्तसंदर्शनात् ।
अन्यास्तर्हि गिरः कथं गुणवशादत्राह रुद्रः कथं
तद्दृष्ट्या कथमुद्भवत्यवतरत्यत्यत्कथं नीयताम् ॥'

'आद्यं रामायणं तत् स च निगमगणः पञ्चमं पञ्चरात्रं
सत्वोपज्ञं पुराणं मनुमुखमुनिभिः निर्मितं धर्मशास्त्रम् ।
त्यक्तान्यो मूलवेदः कठपरिपठिता वलिकास्तापनीयं
सौबाल-ब्रह्मविन्दुप्रभृतिकमपि नः तत्परं तत्परत्वे ॥'

'आत्मैक्यं देवतैक्यं त्रिकसमधिगता तुल्यतैक्यं त्रयाणां-
अन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराश्रियन्ते न सन्तः ।
त्रैय्यन्तै रेककण्ठैः तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान्नारायणो नः पतिरखिलतनुः मुक्तिदो मुक्तिभोग्यः ॥'

इति तत्वसार-तत्वमुक्ताकलाप-विशिष्टाद्वैत-वेदान्तकौस्तुभादिग्रन्थेषु पूर्वोक्तशिव-पारम्यप्रतिपादक-शास्त्रयुक्तीनां दूषणस्य बहुधाश्रुतत्वात् नारायण एव परतत्वं इत्यत्र न कस्यापि संशयस्संभवति । अपि च आदिशङ्कराचार्यप्रभृतिभिः स्वकीयशिष्येभ्यः नारायणस्मृतिपूर्विका श्रीमुखपत्रिका प्रेष्यत इति सर्वसंप्रतिपन्नम् । अपि च अद्वैते तात्पर्यमित्यभ्युपगच्छतां ज्ञानस्वरूपे ब्रह्मणि शिवविष्ण्वादि तारतम्यशङ्कैव न संभवति ; अत एव

"ब्रह्मैव सर्वमिति यन्मतमस्ति लोके विष्णुश्शिवोद्रुहिण इत्यभिदैव तत्र ।
सर्वं च तथ्यमिति यन्मतमत्र भाति तत्रैव चोत्तमनिकृष्टपदार्थचिन्ता ॥"

इति अस्मदीयलक्ष्मीनृसिंहस्तवेप्युक्तमिति ॥

---

## द्वैतम् लिङ्गभूयस्त्वाधिकरणम् । (१६२)

### लिङ्गभूयस्त्वात्तद्धिबलीयस्तदपि । (४१०)

**वृषाग्निहंसमद्गुभ्यः ज्ञातविद्यो जबालतः ।
गौतमाचार्योपदेशाद्विद्यावान् ज्ञायते ततः ॥ ११२ ॥
आचार्याद्देव विदिता विद्या साधिष्ठमाप्नुयात् ।
गुरुप्रसादो बलवान् भूयो लिङ्गात्प्रतीयते ॥ ११३ ॥**

**अर्थः ।** साधनपरिकरे सत्यपि आधिकारिकाणां गुरुप्रसादस्य सत्त्व एव विद्या सिद्ध्यतीत्यत्रोच्यते ।

"गुरुप्रसादो बलवान् न तस्मात् बलवत्तरम् ।
तथापि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये ॥"

इति वचनात् 'सत्यकामोह जाबालो जबालां मातरमामन्त्रयांचक्रे' (छा. ४-४-१) इत्यारभ्य 'तस्मै हैतदेवोवाच अत्र ह न किञ्चन वीयायेति' इत्यन्तं पठितम् । तदर्थः सत्यकामः गौतमाचार्यसमीपं गत्वा उपनयनादिकं कर्तव्यमिति प्रार्थ्य तेन गौतमेन चतुश्शताः गाः जाबालाय संरक्षणार्थं दत्वा 'नासहस्रेणावर्तय' इत्युक्तवान् वने गोसंरक्षणं कुर्वन् वर्षगणं प्रोवास । तस्मिन् समये (सहस्रपूर्त्यनन्तरं) ऋषभ-अग्नि-हंस-मुद्गुभिः प्रसन्नैः जाबालाय ब्रह्मविद्योपदेशः कृतः । ततः सत्यकामः गोसहस्रेणसाकं आचार्यसमीपं गत्वा आचार्यं ननाम । तस्मिन् समये गौतमेन, ब्रह्मविदिव त्वं भासि, कस्तुभ्यं उपदिदेश? इति पृष्टः, मनुष्येभ्यो अन्ये ममोपदेकाः नासन् । भगवद्दृशेभ्य आचार्याद्धेव विद्या

विदिता, साधिष्ठं प्रापयति, इति श्रुतं। अतः पुनः मे उपदेशं कुर्विति जाबालेन प्रार्थितः गौतमः तस्मै जाबालाय पूर्वं ऋषभाद्युपदिष्टमेव पुनरुपदिश्य अत्र न किञ्चन वीयायेत्युवाच । एतेन वृत्तान्तेन गुरुप्रसादस्यैव विद्यासाधकतमत्वं दृष्टमित्यर्थः ।

सूत्रार्थः । तत्=गुरुप्रसन्नत्वं, बलीयः=अतिशयेन बलवत्, लिङ्गभूयस्त्वात्= गुर्वनुग्रहप्राबल्यज्ञापकप्रमाणरूपलिङ्गानां बहुत्वदर्शनात्, तदपि=श्रवणमनननिदिध्यासना-दिकमपि सम्पादनीयमिति शेषः ।

" वायुः ऋषभरूपस्सन्नग्निर्हंसश्चतुर्मुखः ।
मद्गुरूपश्च वरुणः सत्यकामाय चोचिरे ॥"

इति छान्दोग्यवचनात् तेभ्य उपदिष्टैव विद्या बलवतीति ॥

---

## विशिष्टाद्वैतम् पूर्वविकल्पाधिकरणम् । (१०२)

पूर्वविकल्पः प्रकरणात्स्यात् क्रिया मानसवत् । (३९८)
अतिदेशाच्च । (३९९)
विद्यैव तु निर्धारणाद्दर्शनाच्च । (४००)
श्रुत्यादिबलीयस्त्वाच्च न बाधः । (४०१)
अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् । (४०२)
न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः । (४०३)
परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः । (४०४)

**क्रतौ यथा मानसिकग्रहादि तथा मनश्चित्प्रमुखाग्नयश्च ।**
**कर्माङ्गभूता न तु वीर्यवत्त्वं फलं श्रुतं यागफलात् पृथक् हि ॥११४॥**
**दहरादिविद्या पृथगेव विद्या श्रुत्यादिना ज्ञायत एवमेते ।**
**एते हि विद्या चित एवमादि श्रुत्यादिना ज्ञानमया स्वतन्त्राः ॥११५॥**
**षट्त्रिंशच्च सहस्राणि नरायुर्दिवसा नृभिः ।**
**सांपादिकाग्निरूपेण चिन्त्या इत्यत्र पठ्यते ॥ ११६ ॥**
**अतो विद्याग्नयस्त्वेते न क्रतोरत्र संभवः ।**
**अग्न्यङ्गकत्वभूयस्त्वादिह पाठश्च युज्यते ॥ ११७ ॥**

अ-र्थः । अग्निरहस्ये 'मनश्चितो वाक्चितः प्राणचितः चक्षुश्चितः' इत्यादयः पठिताः । एते विद्यामया उत क्रत्वनुप्रवेशेन क्रियामया इति संशये इष्टकचितस्याग्नेः समीपपाठात् क्रत्वनुप्रवेशेन क्रियारूपः । यथा द्वादशाहे

मानसग्रहस्य मनोनिष्पाद्य ग्रहण—आसादन—स्तोत्र—शस्त्र—प्रत्याहरण—भक्षणत्वेन कल्पितस्य विद्यारूपस्यापि क्रत्वङ्गभूतत्वं, तद्वत् मनसा यागसंपादनं मानसग्रहः। ग्रहणं नाम सोमरसस्य पात्रे ग्रहणं, आसादनं, स्थापनं, प्रत्याहरणं हुतशेषस्याहरणं इत्यादि पूर्वमीमांसायां प्रसिद्धम्। 'षट्त्रिंशतसहस्राण्यग्नयोर्काः तेषामेकैक एव तावान् यावानसौ पूर्वः' इति श्रुत्या इष्टकचितस्याग्नेः यावत्फलं तावत् फलं मनश्चिदादीनां इत्यादिदेशाच्च मनश्चिदादयः क्रत्वङ्गभूताः क्रियारूपा एवेति प्राप्ते 'विद्याचित एव' इति अवधारणेन स्वतन्त्रो विद्यामयः क्रतुरिति प्रतीयते। श्रुतिलिङ्गवाक्यैश्च 'ते हैते विद्याचित एव' इति श्रुतिः, तान् हैतान् एवं विदे सर्वदा सर्वाणि भूतानि 'चिन्वन्त्यपि स्वपते' इति लिङ्गम्, 'एवं विदे चिन्वन्ती'ति वाक्यं. एवं विदे विद्यामाय क्रतुमते जाग्रते स्वपते च सर्वाणि भूतानि चिन्वन्तीत्यर्थः। सर्वभूतकर्तृक मनोव्यापाराः विद्यावत्पुरुषशेषभूता भवन्ति इत्यर्थः॥

यथा दह्रादिविद्या क्रियामयात् क्रतोः पृथगेवेति श्रुत्यादिभिरवगम्यते तद्वत्। 'सामान्यातिदेशो विशेषानतिदेशः' इति वैयाकरणन्यायात्, 'स एष एव मृत्युः, 'य एष एतस्मिन् मण्डले पुरुषः' इत्यादिषु अतिदेशस्थले आदित्यमण्डलस्थपुरुषे मृत्योरतिदेशोऽपि संहर्तृत्वादि सामान्यधर्मस्यैवातिदेशः अभ्युपगम्यते, मृत्युवदिति तल्लोकापत्तेः तद्देशप्राप्तेरपि अतिदेशो न दृश्यते, तद्वत् 'यावानसौ पूर्वः' इति इष्टकचिताग्नेरिव मनश्चिदादिषु चित्याग्निवद्भावातिदेशोऽपि इष्टकचिताग्नेः यत् फलं, तत्फलं मनश्चिदादीनामपि भवतीति फलसामान्यातिदेश एव अत्राभ्युपगम्यते। न तु इष्टकचिदाग्निनिष्ठ क्रियामत्वमपि। उत्तरवाक्येन च स्वतन्त्राः विद्यामय एव मनश्चिदादय इति ज्ञायन्ते। केवलोपास्तिप्रकरणे पठितव्या इमाः किमर्थं चित्याग्निसमीपे पठिता इति चेत्, अत्र काल्पनिकानां अग्न्यङ्गानां भूयस्त्वात् इह पठिता इति॥

---

## द्वैतम् पूर्वविकल्पाधिकरणम्। (१६३)

**ओं पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत्। (४११)**
**ओं अतिदेशाच्च। (४१२)**

**गुरूपदेशं प्राप्तोऽपि प्राप्तश्चेत् गुरुरुत्तमः।**
**तस्मादपि ज्ञेयमेव कामतो ध्यानवद्गुरू॥ ११८॥**

**समोत्तमाचार्ययोश्च प्राप्तयोरतिदेशतः ।**
**उपचारस्य करणात् स्वीकार्यो गुरुरुत्तमः ॥ ११९ ॥**

**अ - र्थः** । एकस्माद्गुरोः ब्रह्मज्ञानं प्राप्तोऽपि अन्यो गुरुः यदृच्छया आगतश्चेत् तयोरपि नमस्कारादिकं कर्तव्यम् । पूर्वस्माद्गुरोः पश्चादागतो गुरुरुत्तमश्चेत् तस्मादपि ब्रह्मज्ञानं सम्पादनीयम् । सत्यकामकलायां ऋषभादिगुरूपदिष्टोपि स्वकीयादुत्तमाचार्यात् पुनरपि ब्रह्मज्ञानं संपादितं सत्यकामेनेति । 'ब्रह्मोपास्व, ब्रह्मोपचरस्व, तच्छृणुहि, तत्त्वामवतु' इत्यादि श्रुत्या उत्तमगुरोरपि नमस्कारादिकं कृत्वा ब्रह्मज्ञानं संपादनीयमित्युक्तेश्च ॥

सूत्रार्थः । प्रकरणात्=प्रकर्षेण ज्ञानसाधनमपेक्ष्य, पूर्वविकल्पः=पूर्वगुरुविषये विकल्पः, क्रियामानसवत्=समानफलकध्यानविषये पूर्वध्यानं विहाय स्वेच्छया ध्यानान्तरस्वीकर इव अन्यगुरुः स्वयमेव प्राप्तश्चेत्, विकल्पः=पूर्वगुरोरनुज्ञया वा स्वेच्छया वा स्वीकार्य इत्यर्थः । न तु स्वीकार्य एवेति नियमः । अधमश्चेन्न स्वीकार्यः, उत्तमश्चेत् प्राप्तः पूर्वगुरोः अनुज्ञां विनापि स्वीकार्य इत्यर्थः । अतिदेशाच्च=पूर्वगुरुविषये यादृशोपचारादिकं तादृशं प्राप्तगुरावपि कर्तव्यमिति ब्रह्मोपास्वेत्यादि श्रुतौ अतिदेशाच्च । इति ॥

---

## द्वैतम् विद्याधिकरणम् । (१६४)

**ओं विद्यैव तु निर्धारणात् । (४१३)**
**ओं दर्शनाच्च । (४१४)**

**विद्यैव मोक्षकरणं 'नान्यः पन्था' इति श्रुतेः ।**
**आपरोक्ष्यं ज्ञानमेतद्दृष्ट्वा तं मुच्यते श्रुतेः ॥१२०॥** इतीति शेषः

**अ - र्थः** । 'कर्मणैव हि संसिद्धिं आस्थिता जनकादयः' इत्यादिना मोक्षसाधनं कर्मेत्याक्षेपे, समाधानं, 'तमेतं विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिना ज्ञानादन्यस्य मोक्षसाधनत्वनिषेधात् । विद्यैव मोक्षसाधनमित्युक्तेश्च विद्यैव मोक्षसाधनम् । "सर्वान् परो माययाऽयं सिनीते, दृष्ट्वैव तं मुच्यते नापरेण" इति कौशिकश्रुतेः । विद्याकेवलं मोक्षसाधनं न, अपि तु आपरोक्ष्यज्ञानमेव ॥

सूत्रार्थः । विद्यैव तु निर्धारणात्=विद्यैव=ब्रह्मज्ञानमेव मोक्षसाधनं न कर्मादि । निर्धारणात्="तमेवं विदित्वा" "नान्यः पन्था" इत्यादि श्रुतिभ्यो निर्धारणात् ॥ दर्शनाच्च=दर्शनं च=अपरोक्षज्ञानमपि मोक्षसाधनं इत्यर्थः । ब्रह्मज्ञानं आपरोक्ष्यद्वारा मोक्षसाधनमित्यर्थः ॥

## द्वैतम् श्रुत्यधिकरणम् । (१६५)

### ओं श्रुत्यादिबलीयस्त्वाच्च न बाधः । (४१५)

**'कर्मणैव' 'तमेवे'ति तुल्यमेवावधारणम् ।**
**श्रुत्यादीनां बलीयस्त्वात् ज्ञानमेव विमुक्तिदम् ॥ १२१ ॥**
**श्रुत्या स्मृतेर्न वादोऽत्र स्वायोगस्य निषेधतः ।**
**कर्मयोगश्च मोक्षातिशयार्थो न च बाध्यते ॥ १२२ ॥**

अ-र्थः । स्मृतौ कर्मण एव मोक्षसाधनत्वप्रतीतिः । श्रुतौ "तमेव विदित्वा" इति यज्ञमानस्यैव मोक्षसाधनत्वप्रतीतिः । तयोर्विरोधे कस्य प्राबल्यमिति चेत् "न कर्मभिः, न धनैः, नैव चान्यैः पश्येत्सुखं, तेन तत्वं ब्रवीहि, इन्द्रोऽश्वमेधान् शतमिष्ट्वापि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः" इति इन्द्र ब्रह्मण संवादात्, "कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते" इत्यादिना विद्याया एव मोक्षसाधनत्वप्रतीतेः । तर्हि श्रुत्या स्मृतेः बाधस्स्यात इति चेन्न, "कर्मणैव" इत्येवकारेण स्वायोगव्यवच्छेद एव ॥

सूत्रार्थः । श्रुत्यादिबलीयस्त्वाच्च न बाधः=ज्ञानस्यैव मोक्षसाधनत्वेऽपि, बाधः= कर्मणैवेति स्मृतिविरोधः, न=नास्ति, श्रुत्यादिबलीयस्त्वात्='तमेतं विदित्वा' इत्यादि श्रुतिबलीयस्त्वात् । कर्मणैवेत्यत्र एवकारस्य

" विशेषणविशेष्याभ्यां क्रियया च समन्वितः ।
अयोगं योगमपरैः अत्यन्तायोगमेव च ।
व्यवच्छिनत्तिधर्मस्य निपातोव्यतिरेकतः ॥"

इति त्रिविधार्थत्वेऽपि अत्र स्वायोगमेव कर्मसम्बन्धाभावमेव व्यवच्छिनत्ति, न तु अन्य-योगं-ज्ञानसाधनत्वं व्यवच्छिनत्ति इत्यर्थः ॥

---

## द्वैतम् अनुबन्धाधिकरणम् । (११६)

### ओं अनुबन्धादिभ्यः । (४१६)

**गुरुप्रसादश्रवणप्रमुखं मोक्षसाधनम् ।**
**तथा भक्तिश्शमादिश्च मोक्षसाधनमिष्यते ॥ १२३ ॥**

अ-र्थः । ब्रह्मसाक्षात्कारकरणं पूर्वोक्तगुरुप्रसादश्रवणमननादिकं केवलं न । अपि तु

" भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नता ।
दद्याच्छमदमादिश्च केन चैते गुणाः पुनः ॥
तैस्सर्वैः दर्शनं विष्णोः श्रवणादिकृतं भवेत् ॥" इति नारायणतन्त्र-वचनेन "शान्तोदान्त उपरतस्तितिक्षुः" इत्यादि श्रुत्या च शमदमादिश्च अपरोक्षज्ञानसाधनमिति ॥

सूत्रार्थः । अनुबन्धादिभ्यः=हरिभक्तिगुरुभक्ति शान्तिदान्तिश्रवणमनननिदिध्यासनादिभिः अपरोक्षज्ञानं सम्भवति । इति ॥

---

## द्वैतम् प्राज्ञाधिकरणम् । (१६७)

### ओं प्राज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् । (४१७)

**उपासनातारतम्यादुपास्यब्रह्मदर्शने ।**
**तारतम्यं युक्तमेव ह्यन्तर्दृष्ट्य इति श्रुतेः ॥ १२४ ॥**

**अ - र्थः** । उपासनानां यथा भेदः तथा ब्रह्मदर्शनेऽपि भेदस्संभवति । "अन्तर्दृष्टय" इत्यारभ्य "देवा वा सर्वदृष्टयः, तेषु चोत्तरोत्तरं, आब्रह्मणो अन्येषु यथा योगं यथा ह्याचार्या आचक्षत" इति कमठश्रुतेः । इति ॥

सूत्रार्थः । प्राज्ञान्तरपृथक्त्ववत्=अविच्छिन्नपरोक्षसन्ततिरूप ध्यानानां प्रज्ञान्तराणां पृथक्त्ववत्=नानात्ववत्, दृष्टिश्च=ब्रह्मदर्शनमपि, पृथक्=नानाविधा–अधिकारिभेदेन तारतम्योपेता च । तत्=ब्रह्मदर्शननानात्वं, उक्तम्='अन्तर्दृष्टयो बहिर्दृष्टयो अवतारदृष्टयः सर्वदृष्टयः' इति श्रुतेः ।

" दृष्टैवह्यवताराणां मुच्यन्ते केचिदञ्जसा ।
दर्शनेनान्तरेणान्ये देवास्सर्वप्रदर्शनात् ॥"
" तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः ॥" इत्यध्यात्मे चोक्तमित्यर्थः ॥

---

## द्वैतम् न सामान्याधिकरणम् । (१६८)

### ओं न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः । (४१८)

**साक्षात्काराच्च रामादेः न मुक्तिर्ज्ञानिनां स्मृता ।**
**स्वात्मार्हदर्शनान्मुक्तिः न महर्लोकलाभतः ॥ १२५ ॥**

**अ - र्थः** । रामकृष्णाद्यवतारदर्शनमात्रेण न मुक्तिः । यथा साधारण-मरणानन्तरं मुक्त्यभाववत् । महर्लोकादि प्राप्तिमात्रे च न मुक्तिः । अपि तु स्वयोग्याऽत्मदर्शनादेव मुक्तीत्यर्थः ।

"मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यया ॥"
"दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केनचित् ॥" इति प्रमाणात् ॥

सूत्रार्थः । न सामान्यादित्यादि–सामान्यात्=सर्वसाधारणात् रामकृष्णादि विषयक-साक्षात्कारात्, न=न मुक्तिः । मृत्युवत्=साधारणमरणानन्तरं मुक्तिभाववत् । किन्तु उपलब्धेर्हि=स्वार्हबिम्बापरोक्ष्यरूपविशेषादेव मुक्तिः । ब्रह्मनाड्युत्क्रमणपूर्वकमरणविशेषानन्तरमेव मुक्तिः । न लोकापत्तिः=महर्लोकादिप्राप्तिमात्रं न मुक्तिरित्यर्थः । रामकृष्णादि दर्शनात् महर्लोकादिप्राप्तिरेव, न साक्षान्मुक्तिरित्यर्थः ॥

---

## द्वैतम् परेणाधिकरणम् । (१६९)

### ओं परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः । (४११)

**भूयो भक्त्या परेणैव ब्रह्मदर्शनसम्भवः ।**
**तस्यैष आत्मा विशते भक्तिरेवैनमित्यतः ॥ १२६ ॥**

अ - र्थः । भक्तिरेव ब्रह्मसाक्षात्कारहेतुरिति श्रुतेः कथं परमात्मदर्शनं मुक्तिसाधनमिति चेत् परमात्मैव मुख्यं साधनम् । भक्तिस्तु अवान्तरसाधनत्वेन उच्यते । "भक्तिस्थः परमो विष्णुः तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥"
"स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः ।
भक्तिरित्युच्यते सैव करणं परमीशितुः ॥" इति प्रमाणात्
'तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुतेश्च परमात्मैव स्वभक्तस्य भक्तिवृद्धिं कृत्वा तादृश भक्त्या एनं स्ववशं नयतीत्यर्थः ॥

सूत्रार्थः । परेणेत्यादि–परेण=परमात्मनैव, ताद्विध्यम्=ब्रह्मापरोक्षिकं–भवति शब्दस्य=शब्दात्–'एतैरुपायैः यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम' इति, श्रुतिरूपशब्दस्य, भूयस्त्वात्=भक्तिभूयस्त्वात्, अनुबन्धः=भक्तिः–भवति । ताद्विध्यं=सा विधा यस्य सः तद्विधः तद्विधस्य भावः–ताद्विध्यं ॥

---

## अद्वैतम् ऐकात्म्याधिकरणम् । (१३०)

### एक आत्मनश्शरीरे भावात् । (४१२)
### व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् । (४१३)

**भूवारितेजोमरुतां च सङ्घात् चैतन्यशक्तिर्मदिरादिवच्च ।**
**स्थूलोहमादिव्यवहारदृष्टेः आत्मा शरीरं तु न चातिरिक्तम् ॥१२७॥**

ममैव देहोयमिति प्रतीतेः सङ्घातरूपे च महीरुहादौ ।
चैतन्यराहित्यधिया शरीरात् आत्मातिरिक्तो न स देहधर्मी ॥१२८॥
चार्वाकपक्षोयमसत्प्रलापः वर्णाश्रमाचारविरुद्धवादी ।
अत्यन्तबाह्योऽपि च नारकीति 'यज्ञायुधी'ति श्रुतिरेव वक्ति ॥१२९॥

रूपादयो देहधर्माः यावद्देहं चकासति ।
मृतस्य देहसत्त्वेऽपि प्राणचेष्टा न दृश्यते ॥ १३० ॥
चत्वार्येव हि तत्वानि तन्मते नान्यदिष्यते ।
चैतन्यस्य जनिस्तस्मादस्तिचेत्स्वमतच्युतिः ॥ १३१ ॥
रूपादिवद्देहधर्मे चैतन्ये रूपतुल्यता ।
स्वरूपं पररूपं वा ग्रहीतुं शक्नुयान्न तत् ॥ १३२ ॥

अ - र्थः । इदानीं देहातिरिक्तः आत्मा अस्ति वा नवेति विचार्यते । यद्यपि देहातिरिक्तस्थिर आत्मा इति अनभ्युपगमे पूर्वमीमांसादि सर्वं शास्त्रं व्यर्थं स्यात् । अतः आत्मविचारः पूर्वमेव कर्तव्यः । स च कृत एवेति तादृशात्मशोधनं शरीरकमीमांसायां क्रियत इति अयं विचारः न युक्त इति । तथापि भगवता उपवर्षेण प्रथमे तन्त्रे "आत्मास्तित्वाभिधानप्रसक्तौ शारीरके एव वक्ष्यामः इत्युक्तत्वात् अस्मिन् शास्त्रे मध्ये रत्नपेटिकायां रत्नमिव आत्मविचारः व्यासार्येण कृत इति युक्तो विचारः । तथाहि शरीराद्व्यतिरिक्तो आत्मा न । किण्वादिभ्यो मदशक्तिवत् भूतचतुष्टयसङ्घात एव चैतन्यात्मना परिणमते अत एव स्थूलोऽहमित्यादि व्यवहारः भस्मान्तमेव शरीरं,

"त्याज्यं सुखं विषयसङ्गमजन्मपुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोः तुषकणोपहितान् हितार्थी ॥"

इत्यादिवत् लौकिकसुखभूयस्त्वे अल्पश्रमसद्भावः न दोषाय ।

"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिब ॥"

इत्यादिना देह एवात्मा, देहनाशो मोक्षः, अत एव कण्वमहर्षेराश्रमे एतन्मतस्था शिष्याः बहवस्सन्तीति ज्ञायते । दशरथ रामादि सदस्यपि चार्वाकमतनिष्ठाः जाबालिप्रभृतयः सन्तीति च श्रूयन्ते । अतः वेदान्तविचारो न कर्तव्य इति ।

तदपि "एक आत्मनः शरीरे भावात्" इत्याक्षिप्य "व्यतिरेक" इति सूत्रेण समाधीयते ।

"न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुमत्यैकसिद्धः तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥"

देहः नात्मा । देहधर्मवैलक्षण्यात् । भूतचतुष्टयसङ्घातजन्यत्वे चैतन्यस्य एक शरीरे भूतचतुष्टयसत्वात् प्रत्यणु अनेक चैतन्योपलब्धिप्रसङ्गात् स्वापाद्यनन्तरं मम शरीरं स्थूलमिति व्यतिरेकनिर्देशाच्च स्मरणाद्यनुपपत्तेश्च आत्मा स्थिरः नित्यः अस्तीति सर्वशास्त्र लौकिकादि सिद्धः इत्यर्थः । तदुक्तयुक्तयस्सर्वा अपि सव्यभिचारा एवेति शास्त्रान्तरस्थैः तन्मतस्य बहुधा दूषितत्वात् तन्मतनिष्ठानां नरकप्राप्तिरेवेति बहुभिरुक्तत्वात् तन्मतयुक्तिनिरासः नेह तन्यते ॥ शाबरभाष्ये 'औपत्तिकस्तु शब्दस्यार्थेन' इति सूत्रे 'यज्ञायुधी यजमानः स्वर्गं लोकं अञ्जसा याति' इति श्रुत्यर्थविचारकाले आत्मास्तीति उपनिषद्द्वारा निर्णीय शास्त्रं प्रवृत्तमित्युक्तम् अत एव

"इत्याह नास्तिक्यनिराकरिष्णुः आत्मास्तितां भाष्यकृदत्रसूक्त्या ।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन ॥ इत्यभिज्ञोक्तं सङ्गच्छत इति ॥

---

## विशिष्टाद्वैतम्　शरीरेभावाधिकरणम् । (१०३)

**एक आत्मनश्शरीरे भावात् ।　(४०५)**

**व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ।　(४०६)**

**ज्ञातृत्वकर्तृत्वगुणोयमात्मा विधूतपाप्मादि गुणोऽनुचिन्त्यः ।**
**यथाक्रतुन्यायत एष आत्मा निर्धूतपाप्मादिगुणस्तु चिन्त्यः ॥१३३**

अ-र्थः । ब्रह्मविद्यासु उपास्यब्रह्मोपासकजीवोपासनस्वरूपादिकं च ब्रह्मजिज्ञासेत्याद्य सूत्र एव ब्रह्मसम्बन्धिजिज्ञासा इत्यर्थप्रतीतेः जिज्ञास्यमुक्तम् । तत्र ब्रह्मस्वरूपशोधनं, उपासनास्वरूपशोधनं च कृतम् । इदानीं उपासकस्वरूपशोधनं क्रियते ।

तथाहि उपासकोऽयं प्रत्यगात्मा ज्ञाता, कर्ता, भोक्ता, इहामुत्रसञ्चारक्षमः अनुसन्धेयः, उत प्रजापतिवाक्योदितोपहतपाप्मादिस्वरूपः इति विशये शरीरे वर्तमानस्योपासकस्य तादृशमेव स्वरूपमनुसन्धेयमिति प्राप्ते मोक्षे उपासकस्य यादृशरूपाविर्भावः अपहतपाप्मत्वादिकः स एवोपासनाकाले अनुसन्धेयः । 'यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति यथोपासनं प्राप्तेः श्रूयमाणत्वात् । परमात्मोपासनेऽपि प्रत्यगात्मशरीरत्वेन उपास्य इत्यसकृदुक्तेः चिदचिद्विशिष्टमेव ब्रह्मस्वरूपमिति सिद्धान्तात्, स्वात्मस्वरूपचिन्तने आविर्भाविष्यदपहतपाप्मत्वादिगुणकः परमात्मशरीरोऽहं इत्येव चिन्त्य इत्यर्थः

उपासनाकाले बद्धस्वरूपस्यैव वर्तमानत्वात् तथा उपासने तथैव प्राप्त्यापत्तेः यथा सकलकल्याणगुणोपेतः परमात्मा उपास्यः तथा सत्यत्व-ज्ञानात्व-आनन्दत्वामलत्वाणुत्व-शेषत्वापहतपाप्मत्वादिगुणकः प्रत्यगात्मा उपास्य इति ॥

---

## द्वैतम् एकाधिकरणम् । (१७०)

**ओं एक आत्मनश्शरीरे भावात् । (४२०)**
**ओं व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् । (४२१)**

**सुग्रीवश्चार्जुनश्चोभौ सूर्येन्द्रांशावपि क्षितौ ।**
**कर्मावसाने तत्पित्रोरैक्यमाप्नुयुरंशिनोः ॥ १३४ ॥**
**अंशांशिज्ञानसुखयोः भेदसत्त्वेऽपि कर्मणा ।**
**उपासनादिभोगाच्च पुनरैक्यं न दुष्यति ॥ १३५ ॥**

**अ-र्थः ।** सूर्यांशो सुग्रीवः, इन्द्रांशो अर्जुनः, इत्यादि पुराणेषु श्रूयते । तत्र अंशानां अनादियोग्यता नास्तीति उपासनादिकं न तेषामिति पूर्वपक्षे अंशांशिनोः एकत्वमेव । अंशिकर्मविनिर्मिते शरीर एव अंशस्य भावात् अंशस्याप्यनादिसिद्धत्वेन उपासनायोग्यताया अपि अनादिसिद्धत्वात् अंशजीवैरप्युपासनं कार्यमेव । अंशांशिनोः ज्ञानसुखादिभेदस्य दृष्टत्वात् अंशांशिनोः भेद एव । 'अंशिनस्तु पृथक् जाताः अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा ॥' इति ॥

सूत्रार्थः । एकात्मेत्यादि–आत्मनः = अंशांशिनोः, एकः = ऐक्यमेव । शरीरे = अंशशरीरे, भावात् = अंशस्य तदभिमानित्वेन स्थितेः । आत्मन इत्येकवचनेऽपि आवृत्ति विपरिणामादिना षष्ठीद्विवचनमाश्रितम् । अंशस्याप्यनादिसिद्धत्वेन उपासनस्यापि अनादियोग्यतापेक्षत्वं वर्तत इति भावः । व्यतिरेकेत्यादि–उपलब्धिवत् = अंशांशिजीवयोः ज्ञानसुखादाविव व्यतिरेकः, न = स्वरूपभेदो अंशात्मनः न, तद्भावभावित्वात्–तद्भावः = अंशांशिभावः, तद्भावस्य = उपासनाजन्यफलस्य, भावित्वात् = अनुभवितृत्वात् इत्यर्थः । ज्ञानसुखादिविषये भेदस्तु विष्णोरचिन्त्यशक्त्या उपपन्न इति ॥

---

## अद्वैतम् अङ्गावबद्धाधिकरणम् । (१३१)

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् । (४१४)**
**मन्त्रादिवद्वा विरोधः । (४१५)**

**अङ्गाश्रयोद्गीथविचिन्तनादि वेदेषु दृष्टा प्रतिवेदमेषा ।**
**श्रुत्या सदेशस्य च बाध उक्तः सर्वासु शाखासु समैव चिन्ता ॥१३६॥**

अ - र्थः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१) 'लोकेषु पञ्चविधं सामोपासीत' (छा. २-२-१) इत्येवमाद्याः कर्माङ्गावबद्धाः उद्गीथोपास्तयः प्रतिवेदं प्रतिशाखं च स्वरादिभेदेन पठिताः । तत्र स्वशाखागतेषु उद्गीथादिषु उपास्तयः, उतान्यशाखागतेष्वप्युपास्तय इति चिन्तायां सन्निकृष्टेन समानदेशस्थितेन स्वशाखागतविशेषेण उपास्याकांक्षादिनिवृत्तेः स्वशाखागतकर्मस्वेव स्वशाखागतोद्गीथोपास्तय इति प्राप्ते, सर्वशाखास्वनुवर्तेरन्, उद्गीथादि श्रुतिविशेषात् । स्थानप्रमाणापेक्षया 'उद्गीतमुपासीत' इत्यादि श्रुत्यादेर्बलीयस्त्वात् । किञ्च वेदान्तरोत्पन्न कर्मणां गुणानां मन्त्राणां च वेदान्तरेषु अभ्युपगम इव उपास्तयोऽपि सर्वत्र अनुवर्तेरन्निति ॥

---

विशिष्टाद्वैतम् अङ्गावबद्धाधिकरणम् । (१०४)

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् । (४०७)**
**मन्त्रादिवद्वा विरोधः । (४०८)**

**उद्गीथमोमुक्त्थमुपासितव्यं इत्यादि वेदेषु विभिन्नमेव ।**
**उपास्य उद्गीथ इति श्रुतेर्हि समानदेशस्य विबाध इष्टः ॥१३७**

**श्रुत्यन्तरे दृष्टमन्त्रः यथा यागेषु सज्जते ।**
**सामान्योद्गीथचिन्तेयं सम्बध्येत त्रयीष्वपि ॥ १३८ ॥**

अ - र्थः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादि क्रत्वङ्गाश्रयाः उपासनाः सर्ववेदान्तप्रत्ययन्यायेन प्रतिवेदं प्रतिशाखं व्यवस्थां हित्वा सर्वासु शाखासु सम्बध्येरन्, सर्वासु शाखासु क्रतोरेकस्यैव सत्त्वात् । शाखान्तरोक्त मन्त्र-जाति-गुण-संख्या-सादृश्य-क्रम-द्रव्य-कर्माणि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन भिन्नशाखापठितानि पूर्वोक्तानि यथा वा अङ्गीक्रियन्ते तद्वत् इहापि क्रतोरेकत्वात् तदाश्रयाः उपासनाश्च समाना एवेति उद्गीथाद्युपासनाः सर्वत्र संबध्येरन्नेव । इति ॥

---

द्वैतम् अङ्गावबद्धाधिकरणम् । (१७१)

**ओं अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् । (४२२)**
**ओं मन्त्रादिवद्वा विरोधः । (४२३)**

**अङ्गदेवावबद्धोपासनायां नोपसंहृतिः ।**
**अङ्गदेवगुणानां तु मन्त्रवत्तूपसंहृतिः ॥ १३९ ॥**
**ब्रह्मादीनामुपास्यादि कार्यं ब्रह्मविचिन्तकैः ।**
**'तमेवैकमि'ति श्रुत्या प्रधानोपास्तिरेव न ॥ १४० ॥**

अ - र्थः । प्रतिवेदं भगवदुपासनस्य अङ्गदेवोपासना युक्तत्वेऽपि अङ्गदेवसंबन्धिनः उपासनापरिचर्यादयः प्रतिशाखं व्यवस्थिता एव ।

"समत्वाद्वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।
उपसम्हार्यमित्याहुः वेदसिद्धान्तवेदिनः ॥" इति ब्रह्मतर्कवचनात् ।

'तमेवैकं जानथ, अन्या वाचो विमुञ्चथ' इति श्रुतेश्च । अङ्गदेवसम्बन्ध्युपासनविषयगुणजातस्य अन्यत्राप्युपसंहारे उत्तमगुणानामधमेषु, अधमगुणानां चोत्तमेषु उपसंहारापत्तिस्स्यात् ; अङ्गभूताधमदेवतागुणानां उत्तमदेवे उपसंहारो न दोषाय । अग्न्यादिदेवतावाची मन्त्रादीनामिव उत्तमदेवतोपासने अधमदेवतागुणानां उपसंहारो भवत्येव, शते पञ्चाशन्न्यायात् ॥

---

## अद्वैतम् भूमज्यायस्त्वाधिकरणम् । (१३२)

**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति । (४१६)**

**वैश्वानरात्मीयमुपासनं तत् व्यस्तं समस्तं तु समस्तमेव ।**
**साङ्गस्य यागस्य यथा प्रयोगः वैश्वानरात्मापि तथैव साङ्गः ॥१४१॥**

अ - र्थः । छान्दोग्ये वैश्वानरविद्यायां वैश्वानरोपासनं व्यस्तं समस्तं च श्रूयते । तत्र उभयथाप्युपासनं उत समस्तस्यैवेति संशये समस्तस्यैवेति सिद्धान्तः । पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य प्राधान्यं अस्मिन् वाक्ये प्रतीयते । यथा दर्शपूर्णमासादिषु यागेषु साङ्गप्रधानप्रयोगः एक एव विवक्ष्यते, न प्रयाजादीनां यागानां पृथक्त्वेन । तथैवात्रापि । यद्यपि व्यस्तोपासने फलश्रवणमस्ति । तथापि साङ्गप्रधानोपास्ति फलान्तर्भूतमेव तदिति न पृथगुपासनम् ।

अत्र समस्तोपासनस्य ज्यायस्त्वोक्तेः व्यस्तोपासनमपि साध्विति केचित् । तन्नेति भाष्यकृतामाशयः । 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इत्येकवाक्यत्वस्यैव सम्भवे 'मूर्धा तेव्यपतिष्यत्' इत्यादि निन्दासहित व्यस्तोपासनाङ्गीकृतिः न युक्तेति ॥

---

## विशिष्टाद्वैतम्　भूमज्यायस्त्वाधिकरणम् । (१०५)

### भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति । (४०९)

**वैश्वानरात्मा त्रिदिवादिलोकशरीरकत्वेन विचिन्तनीयः ।
अङ्गाद्युपासा फलमप्यदुष्टं शरीरिचिन्ताजफलाविरोधात् ॥ १४४ ॥
अष्टाकपालादिफलं यथा वा वैश्वानरेष्टिस्तुतिकीर्तनार्था ।
वैश्वानरात्मा च समस्त एव ध्येयः पृथङ्नेति विनिर्णयोऽत्र ॥१४५॥**

**अ - र्थः ।** वैश्वानरविद्यायां त्रैलोक्यशरीरकः वैश्वानरात्मा उपास्यः । तत्र द्यौर्मूर्धेत्यादिना वैश्वानरात्मनः व्यस्तोपासनं तत्फलमपि श्रुतम् । तत्र व्यस्तोपासनं वा, समस्तोपासनं वा, उत उभयं वेति विशये 'अत्त्यन्नं पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवात्मानं वैश्वानरमुपास्ते, मूर्धात्वेष आत्मनः' इत्यादिना व्यस्तोपासनस्य फलश्रवणात् व्यस्तोपासनं समस्तोपासनञ्च कर्तव्यमिति प्राप्ते, क्रतुवत् 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति जातेष्टौ, 'यदष्टाकपालो भवति' इत्यादि फलश्रवणसहित यागविधिसम्भवेऽपि यथा जातेष्टेरेव श्रुत्यर्थाः अष्टाकपालादय इति जातेष्टिरेव प्रधानतया अङ्गीक्रियते तथा वैश्वानरात्मनः अङ्गेषु मूर्धादिषु उपासनं तत्फलश्रवणमपि त्रैलोक्यशरीरक-परमात्मोपास्तिस्तुत्यर्थकमेवेति समस्तोपासनमेव कर्तव्यमिति ॥

---

## द्वैतम्　भूमज्यायस्त्वाधिकरणम् । (१७२)

### ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति । (४२४)

**भूमरूपगुणस्सर्वैरुपास्यो ब्रह्मचिन्तकैः ।
क्रतुर्यथा कर्ममध्ये श्रेष्ठो भूमगुणी तथा ॥ १४६ ॥**

**अ - र्थः ।** ब्रह्मणः चिन्त्येषु सर्वगुणेषु मध्ये भूमरूपगुणस्य ध्येयत्वे ज्यायस्त्वं भवति । सोमयागस्य दीक्षाप्रायणीयाद्यारभ्य अवभृथान्ताङ्गात्मकस्य क्रतोः सर्वयागेषु 'प्रकृतिवद्विकृतिः कर्तव्या' इति मीमांसा न्यायात् सर्वयागस्य प्रकृतिभूत सोमयागस्य यथा प्राधान्यं तद्वत् भूमरूपगुणस्य सर्वत्र आनन्दादि-सहभावेन उपासन एव फलसिद्धेः भूमगुणस्य ज्यायस्त्वमित्यर्थः ।

सूत्रार्थः । भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति–क्रतुवत्=दीक्षाप्रायणीय-उदयनीय-प्रातस्सवन-माध्यन्दिनसवन-अवभृथरूप यागीयाङ्गफलस्येव, भूम्नः=पूर्णत्व-

गुणस्य, ज्यायस्त्वं=श्रेष्ठत्वमस्ति, तथा च दर्शयति=श्रुतिश्च तथैव दर्शयति ।

"भूमैव देवः परमो ह्युपास्यः नैवाभूमा फलमेषां विधत्ते ॥
तस्माद्भूमा गुणतो वै विशिष्टः यथाक्रतुः कर्ममध्ये विशिष्टः ।"

इति गौपवनश्रुतेः सर्वाङ्गविशिष्टक्रतोरेव ज्यायस्त्वं । तद्वत् ब्रह्मणः भूमगुणविशिष्टत्वध्याने ज्यायस्त्वं । आनन्दादिसहभावेनैव भूमगुणध्याने फलं सिद्ध्यतीत्यर्थः ॥

---

## अद्वैतम् शब्दादिभेदाधिकरणम् । (१३३)

## नानाशब्दादिभेदात् । (४१७)

**शाण्डिल्यविद्या दहरादिविद्या शब्दान्तराभ्यासगुणादिभेदात् ।
नानेतिसिद्धैव ततश्च सर्ववेदान्तजप्रत्ययसङ्गचिन्ता ॥ १४७ ॥**

**अ - र्थः** । अत्र वेद्यस्य ब्रह्मण एकत्वात् सर्वत्र विद्यासु ब्रह्मण एव ध्येयत्वात् स्वपरशाखाविहितं वेद्यं एकमेवेति तदाश्रयं गुणजातं उपसंहर्तव्यं, विद्याकात्स्न्याय इति प्राप्ते वेद्यब्रह्मणः सर्वत्र एकत्वेऽपि भिन्नगुणविशिष्टं ब्रह्म तत्र तत्र उपास्यमिति 'वेद' 'उपासीत' 'क्रतुं कुर्वीत' इत्यादिशब्दादिगुणादिभेदात् विद्यानानैवेति ।

"शब्दान्तराभ्यासगुणैस्ससंख्यैः नाना च दूरेण च सापवादः ।
भेदः क्रियाणामिति साधितोयं अतःपरं तद्विनियोगचिन्ता ॥"

इति पूर्वमीमांसान्यायमनुसृत्य विद्या नानैवेति सिद्धम् ॥

---

## विशिष्टाद्वैतम् शब्दादिभेदाधिकरणम् । (१०६)

## नानाशब्दादिभेदात् । (४१०)

**वेद्यब्रह्मैक्यबोधेऽपि विद्या नानेति गद्यते ।
प्रतिविद्यं गुणादीनां भेदात् स्वर्गे सत्रादिवत् ॥१४८॥
मुमुक्षुर्वै न्यासमेषामित्यादि न्यासबोधकः ।
एतच्छरीरान्तमुक्तिकामस्यात्र प्रदर्श्यते ॥१४९॥**

**अ - र्थः** । सर्वाः ब्रह्मविद्याः फलान्तरप्रतिपादिकाः प्राणादिविद्याश्च अत्र विषयवाक्यम् । अत्र विद्यैक्यं उत विद्याभेद इति संशय्य सर्वत्र वेद्यब्रह्मणः एकत्वात् विद्यैक्यमिति प्राप्ते शब्दान्तराभ्यासादिभेदात् विद्या नानैवेति ॥

अत्र सूत्रे शब्दान्तरे कर्मभेद इत्यादि पूर्वकाण्डोदितैः सूत्रैः भेदे सिद्धेऽपि पुनरिह प्रतिपादनं विधेयज्ञानस्यैव मोक्षसाधनत्वं 'विद्यात्' 'उपासीत' इत्यादिशास्त्रैरवगम्यत इति बोधनार्थम् ॥

" यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्-
　　न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् ।
आख्यारूपादिभेदश्श्रुत इतरसमः किञ्चभिन्नोऽधिकारः
　　शीघ्रप्राप्त्यादिभिस्स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥"

" उपायस्स्वप्राप्तेरुपनिषदधीतस्स भगवान्
　　प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती ।
तदारोहः पुंसस्सुकृतपरीपाकेन महता
　　निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः ॥"

" प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदं
　　प्रपन्नश्च द्वेधा सुचरितपरीपाकभिदया ।
विलम्बेनप्राप्तिर्भजनसुखमेकस्य विपुलं
　　परस्याशुप्राप्तिः परिमितरसा जीवित दशा ॥"

" कर्मज्ञानमुपासनं च शरणं व्रज्येति चावस्थितान्
　　सन्मार्गानपवर्गसाधनविधौ सद्वारकाद्वारकान् ।
एकद्वयाकृतियोगसंभृतपृथग्भावानुभावानिमान्
　　सम्यक् प्रेक्ष्य शरण्यसारथिगिरामन्ते रमन्ते बुधाः ॥"

इत्यादिना न्यासविद्येति काचित् सर्वविलक्षणा वर्तत इति 'नानाशब्दादिभेदात्' इति सूत्रस्य वर्णकान्तरं श्रीमद्वेदान्तदेशिकाचार्याः ऊचुः । प्रपत्तिः, न्यासः, शरणागतिः, प्रपदनं, आत्मनिक्षेपः इत्यादयः न्यासशब्दपर्यायाः । घटकलशादिवत् । एतादृशन्यासविद्या-स्वरूपादिकं तैरेव निक्षेपरक्षाप्रभृतिभिः, द्राविडभाषामिश्रैः रहस्यत्रयसारादिग्रन्थैश्च तदीयैरेव स्थूणानिघनन्यायेन पूर्वपक्षोपन्यास तत्समाधानपूर्वकं दृढीकृतम् । तथापि अत्र तदर्थसंग्रः विद्यास्वरूपदर्शनाय क्रियते ॥

तथाहि श्वेताश्वतरोपनिषदि 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥" (श्वे. ६-१८) "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुर्वसुरण्वो विभूरसि" इत्यारभ्य "ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीत" "सर्वस्य शरणं सुहृत्" इति श्रुतिः । "सकृदेव प्रपन्नाय तवास्मीति च याचते ।
　　अभयं सर्वभूतेभ्यः ददाम्येतद्व्रतं मम ॥" इति श्रीमद्राम-भद्रवचनादिकं शरणागतिशास्त्रे प्रमाणम् ।

" सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
　　अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥" इति गीतावचनमेव एतच्छास्त्रस्य मुख्यं प्रमाणमिति आचार्याशयः ॥

एतत् स्वरूपं एतदङ्गञ्च । "आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासः गोप्तृत्ववरणं तथा ।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥"

इत्यादिना आत्मनिक्षेप अङ्गी, अन्यानि पञ्च अङ्गानि । श्लोके षड्विधेत्युक्तिः, यथा अष्टाङ्गयोगव्यवहारे, व्यवहारः अङ्गाङ्गिसमुच्चयेन भवति तद्वत् । 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इति ज्ञानादन्यस्य मोक्षसाधनत्वाभावेन अयमपि प्रपत्तिशब्दवाच्यः ज्ञानविकासविशेष एव । आनुकूल्यादि पञ्चाङ्गव्यतिरिक्तं न किञ्चिदपेक्षते इयं शरणागतिः । उपास्तिरिवास्याः प्रपत्तेः आवृत्त्याद्यपेक्षा न । यदा विरक्तिः तदैव सकृदेव आचार्योपदिष्टकरणमन्त्रपूर्वकं भगवच्छरणारविन्दयोः आत्मभरसमर्पणमेव । एतदर्थं वर्णाश्रमाचाराद्यपेक्षा न ।

तथाहि—द्रौपदी, रजस्वलैव भगवन्तं प्रपन्ना, दमयन्ती स्वयंवररङ्गे देवान् प्रपन्ना, त्रिजटानाम राक्षसी सुप्तोत्थितैव सीतां प्रपन्ना, विभीषणः आगच्छन्नेव आकाशे तिष्ठन्नेव श्रीरामं प्रपन्नः, क्षत्रबन्धुः अर्धरात्रे आगच्छन्नेव कृष्णम् प्रपन्नः, मुचुकुन्दः सुप्तोत्थित एव श्रीकृष्णं प्रपन्नः, गजेन्द्रः नक्रेण युद्ध्यन्नेव नारायणं प्रपन्नः, पाण्डवाश्च मार्कण्डेयोक्त्यनन्तरमेव प्रपन्नाः, देवाश्च दशरथयज्ञमध्ये विष्णुं प्रपन्नाः, सुमुख इति कश्चन सर्पराजः गरुडेनाभिद्रुत एव देवलोके उपेन्द्रं शरणं गतः, त्रिशङ्कुश्शुनश्शेपौ विश्वामित्रं शरणं गतौ, किरातः कपोतं शरणं गतः, काकः जयन्तः राघवं शरणं गतः, कपोतः शिबिचक्रवर्तिनं शरणं गतः, तथा च प्रपत्तेः देशकालादिनियमः वर्णाश्रमादिनियमः नास्तीति पूर्वोक्तप्रमाणैरेव ज्ञायते । न्यासविद्यायाः मन्त्रस्तु स्वस्वाचार्योपदिष्टप्रकारेण ज्ञातव्यः ।

हे भगवन्! मां मदीयं च त्वमेव त्वदीयमिति स्वीकृत्य रक्ष । त्वच्छेषभूतमिमं आत्मानं स्वतन्त्रोऽहमिति मत्वा संसारे भ्रान्तोस्मि, इदानीमेव भवदनुग्रहात् आचार्यानुग्रहाच्च लब्धज्ञानः त्वच्छेषभूत इति त्वां प्रपन्नोस्मि, इतःपरं मद्रक्षणविधौ ममान्वयो नास्ति, त्वमेवोपायभूतस्सन् मां रक्ष । इति प्रार्थनारूपामतिरेव ॥

अत्र केचित् आचार्याः श्रीशठारिसूक्त्यादि द्राविडग्रन्थतात्पर्यज्ञाः आचार्याः प्रपत्तिविषये जीवात्मनः स्वातन्त्र्याभावात् जीवेन भगवन्तं प्रति प्रार्थनादिकं कर्तुं योग्यताऽभावात् प्रपत्तिशब्दार्थः ।

"स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदा स्मर ॥"

"यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः ।
शेषवृत्तिविधानेऽपि किं सुप्तस्सोऽथवा मृतः ॥"

"स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य देहिनः ।
अज्ञोजन्तुरनीशोऽयं आत्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥"

इत्यादि शास्त्रात् भगवतः जीवात्मनश्च स्वरूपयाथात्म्यज्ञानमेव प्रपत्तिः । अतः विधेयतया कर्तव्यमन्यन्न । "स्वज्ञानं प्रापकज्ञानं प्राप्यज्ञानं मुमुक्षुभिः ।
ज्ञानत्रयमुपादेयं एतदन्यं न किञ्चन ॥"

पाञ्चरात्रतन्त्रे प्रपत्तिप्रकरणे शेषशेषिज्ञानमेव प्रपत्तिरित्युक्तमित्याहुः । उपास्त्यपेक्षया शरणागतिफलं अत्यन्ताधिकं शास्त्रेषु दृश्यते ।

"उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥"

इति एतच्छरीरावसान एव (वर्तमानशरीरावसान एवेत्यर्थः) सर्वपापविनिर्मोकपूर्वक पुनर्जन्मरहित ब्रह्मप्राप्तिरूपमोक्षः सिद्ध्यतीति "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इत्युपासकफलापेक्षया विलम्बराहित्यरूपं फलमधिकमिति एतत्प्रपदनमेव विशिष्टाद्वैतिभिः सर्वैरनुष्ठीयते ॥ ब्रह्मविद्याविभागश्च द्वात्रिंशत् । काम्यविद्या चतस्रः । सर्वोत्तमा शरणागतिविद्या एका । एतत्सर्वं श्रीभाष्ये विचरितम् ।

"सद्विद्यानन्दविद्यान्तराकाशप्राणसंज्ञिकाः ।
गायत्रीज्योतिराख्येन्द्रप्राणशाण्डिल्यविद्यके ॥

अत्तृविद्या तथान्योपकोसलाह्वा तथैव च ।
अन्तर्याम्यक्षरपरविद्ये वैश्वानरात्मिका ॥

भूमगार्ग्यक्षराख्ये द्वे प्रणवोपास्यसंज्ञिका ।
दह्रविद्याऽङ्गुष्ठविद्या ज्योतिर्मध्वाह्वया तथा ॥

संवर्गविद्याऽजाब्रह्मविद्या बालाकिसंज्ञिका ।
मैत्रेयीद्रुहिणब्रह्मपञ्चाग्न्याख्या तथैव च ॥

आदित्यविद्याऽक्षिविद्या तथा पुरुषसंज्ञिका ।
ईशावास्योषस्तविद्ये व्याहृत्याख्येति तास्स्मृताः ॥

काम्यविद्याः । उद्गीथनामब्रह्मेति मनश्चित्संज्ञिका तथा ।
रसानामेष इत्यादि दृष्टिविद्याश्च काम्यकाः ॥

सर्वासामुत्तमा विद्या शरणागतिरिष्यते ।
एतन्निष्ठस्य मुक्तिस्स्यादेतद्देहावसानके ॥"

इति विद्यासंग्रहकारिका । आहत्य विद्यासंख्या सप्तत्रिंशत् (३७)

प्रपन्नाश्च रामायणे—अमर्त्यरामानुजदण्डकर्षि काकार्कजाः पुण्यजनस्त्रियश्च ।
विभीषणो ब्राह्मण इत्यमी ते रामं प्रपन्नाः फलसिद्धिभाजः ॥

मुचुकुन्द क्षत्रबन्धुः गजेन्द्रः पाण्डवस्तथा ।
सुमुखश्च त्रिशङ्कुश्च शुनश्शेपः किरातकः ॥
कपोतो दमयन्ती च द्रौपद्यन्यः कपोतभृक् ।
फलवन्तः प्रपन्नास्ते पञ्चमे वेद ईरिताः ॥

तादृशशरणागतिश्च लक्ष्मीविशिष्टनारायणचरणयोरेव कर्तव्या ।

"श्रिया सह तु दाम्पत्यं शाश्वतं तत एव तु ।
तयोस्साम्यैक्यशक्तित्वं तद्वत्वादिगिरां गतिः ॥ इति न्यायसिद्धाञ्जनोक्तरीत्या
"त्वं यादृशोऽसि कमलापति तादृशीं ते दारान् वदन्ति युवयोर्न तु भेदगन्धः ।
मायाविभक्तयुवती तनुमेकमेव त्वां मातरं च पितरं च युवानमाहुः ॥"

'नरनारीमयो हरिः', 'आनीदवातँ स्वधयातदेकम्' इत्यादि बहुप्रमाणानुरोधेन लक्ष्मीविशिष्ट ब्रह्मैव 'एकमेवाद्वितीयं' इत्यादि श्रुतिभिरुच्यते । एकत्ववादा अपि अत्यन्तसमतया प्रकार इत्यादिना उपपद्यन्ते । उपासकापेक्षया शरणागतिनिष्ठस्यायं विशेषः ।

"ज्ञानसमकालमुक्त्वा कैवल्यं याति गत शोकः ।
तीर्थेश्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ॥
स्थिरे मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥
ततस्तं म्रियमाणं तं काष्ठापाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥ इत्यादि प्रमाणात् शरीर-
वियोगकाले भगवदनुग्रहात् अतिप्रबुद्धस्य प्रपन्नस्य मोक्षस्सिद्ध्यति । उपासकस्य तु
"यं योगिनः प्राणवियोगकाले यत्नेन चित्ते विनिवेशयन्ति ॥"
"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥" इत्यादिना उपदिष्टः अन्तिम-
भगवत्स्मरणनिर्बन्धः वर्तत इति ।

'सर्वधर्मान् परित्यज्य' इति श्लोके आवृत्या तन्त्रेण वा सात्विकत्यागपरः एको अर्थः । अन्योर्थः भक्तिनिष्पत्त्यर्थं अङ्गप्रपत्तिविधायकपरः अपरो अर्थस्तु साक्षात् प्रत्तिविधायकपर इति 'सकृदुच्चरितश्शब्दः सकृदेवार्थं गमयति' 'अन्यायश्चानेकार्थत्वं' इति व्याकरणमीमांसान्यायविरोधो नेति सुष्ठूक्ता प्रपत्तिविद्या ॥

एतद्विषयकसम्प्रदायश्च—

"श्रीविष्णुमारभ्य निजार्यवर्यपर्यन्तचित्तैव गरीयसीति ।
स्वाचार्यमारभ्य रमाधिनाथपर्यन्तचिन्तानियमो न चैव ॥
सूत्रभाष्ये मध्वभाष्ये श्रीभाष्ये यतिराट् स्तुतौ ।
अवरोहणरीत्यैव गुरुध्यानं प्रदृश्यते ॥
आरोहणप्रकारश्च क्वचिद्ग्रन्थेषु दृश्यते ।
क्रमद्वयाविरोधाय रीतिद्वयमुदाहृतम् ॥"

"पद्ये' 'मे' 'स्यां' 'भवेयं' 'त्वम्' 'अहं' इति पदाध्याहृतेर्मन्त्रपूगे
'त्वाऽहं' 'मा' माशुचस्त्वं त्विति हरिकथितश्लोकवाक्येषु दृष्टेः ।
काकादावार्यनिष्ठा क्वचिदपि न मतेत्याप्तवाक्यात् स्मृतेश्च
न्यासार्थो ह्युक्तिनिष्ठा जयति बहुमता वेदनिष्ठेति गीता ॥"

"ध्यात्वा' 'विदित्वा' च 'निचाय्यमृत्युं अत्येति विद्वान् इति वेदभागाः
समानकर्तृत्वमुदीरयन्ति तदुक्तिनिष्ठा शरणागतिस्सा ॥

"आचार्यनिष्ठा रचिता सुधीभिः क्वचिद्रहस्यादिषु साधु गीता ।
अतश्च लक्ष्मीनरसिंहभक्ताः तमार्यनिष्ठां क्वचिदाश्रयन्ते ॥

"आचार्यनिष्ठेति तु बोधकत्वपर्यन्तमेवेति वदन्ति सन्तः ।
भाष्यार्थमन्त्रार्थविबोधनाच्च शिष्या गुरुम् प्रार्थयितुं यतन्ते ॥

"काचिन्निषादी तनयं प्रसूते कश्चिन्निषादस्तु कषायपायी ।
इत्यादि लोकोक्तिविरोधसत्वादाचार्यनिष्ठा न समञ्जसेति ॥

'शास्त्रफलं प्रयोक्तरि' इति मीमांसासूत्रोक्तन्यायविरोधात् 'मुनिर्मनुते मूर्खो मुच्यते इति लौकिकन्यायविरोधाच्चेति । केचिदिति मत्कृते आचार्यवैभवप्रकाशे (ஸ்ரீ அகோபில மடம் 38-வது பட்டம்) उक्तः अत्रानुसन्धेयः ॥

ननु " सिद्धिर्भवति वा नेति सम्शयोच्युतसेविनां ।
न सम्शयोत्र तद्भक्तपरिचर्यारतात्मनाम् ॥" इत्यादि शास्त्रमाचार्यनिष्ठायां प्रमाणमिति चेन्न । 'न हि निन्दा निन्द्यं निन्दितुम् प्रवर्तते । अपि तु निन्दितादितरत् प्रशंसितुम्' इति न्यायेन भगवद्भक्तां स्तोतुमेव तत् । न त्वुक्तिनिष्ठादूषणपरमिति ॥

---

## द्वैतम् नानाशब्दाधिकरणम् । (१७३)

## ओं नानाशब्दादिभेदात् । (४२५)

**तारतम्येन भूमाऽयं उपास्यो गुणपूर्णतः ।**
**शब्दानुमानप्रत्यक्षैः तारतम्यप्रतीतितः ॥ १५० ॥**

**अ-र्थः** । भूमगुणोपास्तावपि यथा योग्यं तारतम्यप्रतीतेः भूमगुणोऽपि तारतम्येनोपसंहृत्योपास्य इत्यर्थः ।

" शब्दोनुमा तथैवाक्षो योग्यता भेदतस्सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥
अतः पूर्णत्वमीशस्य नानैवेषां प्रदृश्यते ।
अतः फलस्य नानात्वं नानैवोपासनं यतः ॥"

इति वचनात् भूमगुणविशिष्टोपासनमपि नानैवेति प्रतीयते ।

सूत्रार्थः । नानाशब्दादिभेदात्–पूर्णत्वगुणः भूमा–नाना=तारतम्येनोपास्यः, शब्दादिभेदात्=शब्दानुमानप्रत्यक्षादिभेदात् ॥

---

## अद्वैतम् विकल्पाधिकरणम् । (१३४)

## विकल्पोऽविशिष्टफलत्वात् । (४१८)

**समुच्चयो न विद्यानां स्वप्राप्तौ ज्योतिरादिवत् ।**
**एकैवोपासितुर्विद्या नित्यरूपफलैक्यतः ॥ १५१ ॥**

**अ - र्थः** । ब्रह्मप्राप्तिसाधनानां विद्यानां बहूनां श्रुतत्वात् ब्रह्मनिष्ठस्य उपास्या विद्या एकैव, उत सर्वाः इति विशये स्वर्गप्राप्तौ अग्निहोत्र-दर्शपूर्णमास-ज्योतिष्टोमादि करणवत् ब्रह्मविद्यानिष्ठस्य अनेकविद्या समुच्चय इति प्राप्ते, एकैव विद्या अनुष्ठेया, ब्रह्मप्राप्तिरूपफलस्य नित्यत्वात् । स्वर्गादेर्हि अनित्यफलत्वात् तत्र यागसमुच्चये स्वर्गानुभाव्यं फलं अधिकमनुभूयते । तत्र समुच्चयो न्याय्य एव । इह तु एकरूपत्वात् फलस्य विद्यानां मध्ये एकैवानुष्ठेया इति ॥

---

### अद्वैतम् काम्याधिकरणम् । (१३५)

**काम्यास्तु यथाकामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् । (४१९)**

**काम्यास्तु सर्वविद्यासु समुच्चीयेत कामतः ।**
**विकल्पहेत्वभावान्न यथाकामं समुच्चयः ॥ १५२ ॥**

**अ - र्थः** । 'स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' (छा. ३-१५-२) 'स यो नामब्रम्हेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकाम-चारो भवति' (छा. ७-१-५) इत्यादि काम्यासु विद्यासु नित्यैकरूपब्रह्मप्राप्त्य-भावात् यथाकामं विद्यासमुच्चयो वा न समुच्चयो वा इति ॥

---

### विशिष्टाद्वैतम् विकल्पाधिकरणम् । (१०७)

**विकल्पोऽविशिष्टफलत्वात् । (४११)**

**काम्यास्तु यथाकामं समुच्चीयेरन् वा पूर्वहेत्वभावात् । (४१२)**

**एकस्मिन् पुरुषे प्रयोजनवती सर्वत्र विद्याभवेत् ।**
**स्वर्गाद्येकफलाभिलाष्यपि नरः दर्शादिकृद्दृश्यते ॥१५३॥**
**मैवं स्वर्गफलं न नित्यमिह तु ब्रह्मैव नित्यं फलम् ।**
**विद्यैकैव नरे विकल्पविषया काम्यास्समस्ता अपि ॥१५४॥**

**अ - र्थः** । ब्रह्मविद्यानां सर्वासां एकस्मिन्नुपासके समुच्चय सम्भवः, उत प्रयोजनाभावात विकल्प एवेति संशये स्वर्गादिरूपफले अग्निहोत्र-दर्शपूर्ण-

मासादि समुच्चयो दृष्टः । तद्वत् अत्रापीति प्राप्ते, अत्र ब्रह्मविद्याफलस्य सर्वत्र एकरूपत्वात् यया कया च विद्यया मोक्षः सिद्धयत्येवेति न समुच्चयः, अपि तु विकल्पः । तत्र तु स्वर्ग-पुत्र-पशु-धनादिफलस्य भिन्नत्वात् अनित्यत्वाच्च तत्र समुच्चयो, विकल्पो वा यथाकामं न्याय्यः । इति ॥

---

## द्वैतम् विकल्पाधिकरणम् । (१७४)

### ओं विकल्पोविशिष्टफलत्वात् । (४२६)

**विघ्नध्वंसकफलावाप्त्या स्वयोग्योपासनेष्वपि ।**
**नृसिंहरामकृष्णादि बिम्बोपास्तिरपीष्यते ॥ १५५ ॥**

**अ - र्थः** । स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवति । विघ्नध्वंसादिविशेषफलापेक्षया सम्भवति ।

" मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।
नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये ॥
उपास्यते तथा योगं न वा फलविभेदतः ॥"

सूत्रार्थः । विकल्पः=नृसिंहरामादिबिम्बोपासनं विद्यानिष्ठस्य व्यवस्थितविकल्पो भवति । विशिष्टफलत्वात्=दुरितादिनिवृत्तिरूप विशेषफलवत्त्वात् ॥

यस्य विघ्नध्वंसः संभावित, तेन नृसिंहादि बिम्बध्यानं कर्तव्यम् । यस्य तु न तेन सामान्योपासनं कर्तव्यमित्यर्थः ॥

---

## द्वैतम् काम्याधिकरणम् । (१७५)

### काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् । (४२७)

**मुक्त्यन्यकामास्सर्वेऽपि गुणान् काम्यान् विचिन्तयेत् ।**
**मोक्षार्थिभिस्तु नोपास्याः प्रीत्यर्थाश्चेन्न दुष्यति ॥ १५६॥**

**अ - र्थः** । काम्यसाधनभूताः भगवद्गुणाः तदभिलाषिभिरेव समुच्चयेनोपास्याः, अकामैः मुमुक्षुभिः तादृशगुणाः नोपास्याः । केवलभगवत्प्रीत्यर्थं मुमुक्षुभिरपि ते उपास्या इति ॥

" यस्य यस्य हि यः कामः तस्य तस्य ह्युपासनम् ।
तादृशानां गुणानां च समाहारं प्रकल्पयेत् ॥

अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ।
तुष्ट्यर्थमीश्वरस्यैव न चोपासा विदुष्यति ॥"

सूत्रार्थः । काम्याः='वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् । वसुसिद्धिमवाप्नोति' इत्याद्युक्ताः काम्याः श्रीकरादि भगवद्रूपगुणाः, यथाकामं=कामनानुसारेण, समुच्चीयेरन्=अमुमुक्षुभिरुपास्येरन्, न वा=मुमुक्षुभिः न समुच्चीयेरन्, पूर्वहेत्वभावात्=मोक्षव्यतिरिक्तादि कामनाभावात् इत्यर्थः ॥

---

**अद्वैतम् यथाश्रयभावाधिकरणम् । (१३६)**

**अङ्गेषु यथाश्रयभावः । (४२०) शिष्टेश्च । (४२१)**
**समाहारात् । (४२२) गुणसाधारण्यश्रुतेश्च । (४२३)**
**न वा तत्सहभावश्रुतेः । (४२४) दर्शनाच्च । (४२५)**

**कर्माङ्गभूतोद्गीथादि समुच्चीयेत नैव वा ।**
**गोदोहनादिवत्तत्तु यथाकामं भवेदिति ॥ १५७ ॥**

**अ-र्थः** । उद्गीथाश्रया उपासनाः वेदत्रयविहिता एकस्मिन् कर्मणि समुच्चीयेरन् वा यथाकामं वा भवेयुः इति संशये पुरुषार्थत्वादुपासनानां क्रतौ वेदान्तरोत्पन्नस्तोत्रशास्त्रादिवत् उपासनायां वेदान्तरोक्तानां सहपाठाभावात् एकेन ऋत्विजा कृतमपि कर्म सफलं भवतीति श्रवणाच्च कर्माङ्गाश्रयोपासनाः यथाकामं समुच्चयो विकल्पो वा ॥

**विशिष्टाद्वैतम् यथाश्रयभावाधिकरणम् । (१०८)**

**अङ्गेषु यथाश्रयभावः । (४१३) शिष्टेश्च । (४१४)**
**समाहारात् । (४१५) गुणसाधारण्यश्रुतेश्च । (४१६)**
**न वा तत्सहभावाश्रुतेः । (४१७) दर्शनाच्च । (४१८)**

**क्रत्वङ्गेष्वाश्रितोद्गीथविद्या गोदोहनादिवत् ।**
**पुरुषार्था यथाकामं समुच्चयविकल्पधीः ॥ १५८ ॥**

**अ-र्थः** । क्रत्वङ्गाश्रिता उद्गीथाद्युपास्तयः 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् पुरुषार्थतया यथाकामं उपादेया, उत क्रत्वर्थतया नियमेनोपादेया इति विशये 'यदेव विद्यया करोति' इति फलविलम्बराहित्यरूप फलकामनायामेव विद्याविधानात् गोदोहनादिवत् पुरुषार्थत्वाद्विद्यानां फलेच्छायां सत्यामेव विद्योपास्तयः । न क्रत्वङ्गभूता इति न नियमेनोपास्याः ॥ इति ॥

### द्वैतम् अङ्गाधिकरणम् । (१७६)

**ओं अङ्गेषु यथाश्रयभावः । (४२८) ओं शिष्टेश्च । (४२९)**
**ओं समाहारात् । (४३०) ओं गुणसाधारण्यश्रुतेश्च । (४३१)**

**विष्णवङ्गदेवास्सूर्याद्याः ध्येया एव यथाश्रयम् ।**
**मुमुक्षुभिस्सर्वगुणाः साधारण्यात् परस्य च ॥ १५९ ॥**

अ - र्थः । 'चक्षोस्सूर्यो अजायत, मुखादिन्द्रश्चाग्निश्च' इत्यादि श्रुति-प्रसिद्धाः विष्णवङ्गभूताः सूर्यादिदेवताः परमेश्वराङ्गत्वेनोपास्या एव । अङ्गदेव-गुणानामपि परमेश्वरचिन्तने उपसंहर्तव्या एव । 'यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव' इति पौत्रायणश्रुतेः ।

"अङ्गैः *पराद्ये हि देवा विसृष्टाः तत्तद्गुणान् परमे संहरेत् ।
तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत ॥"

इति श्रुत्या च "साधारण्यात् सर्वगुणाः परस्य समाहार्याः तत्त्वदृशो मुमुक्षोः" इति माण्डव्यश्रुतेश्च सूर्याद्यङ्गदेवगुणाः परमपुरुषे उपास्याः ।

सूत्रार्थः । अङ्गेषु=चक्षुरादिभगवदङ्गेषु, यथाश्रयभावः='चक्षोस्सूर्यो अजायत' इत्यादिना उक्तप्रकारेण अङ्गदेवतानां उपसंहारः कर्तव्येत्यर्थः ॥ शिष्टेश्च= अङ्गदेवतोपसंहारविधेश्च । 'यस्मिन्यस्मिन्नित्यादि श्रुतेरित्यर्थः ॥ समाहारात्= देवैरपि अङ्गदेवतोपासना कर्तव्येत्यर्थः । 'अङ्गैः परादि'ति श्रुतेः ॥ गुण-साधारण्यश्रुतेश्च=भगवद्गुणानां उपास्यत्वेन साम्यश्रुतेश्च । साधारण्यादिति श्रुतेरित्यर्थः । सूर्याद्याश्रय चक्षुरादि भगवदङ्गानामपि भगवद्गुणत्वात् अङ्गाश्रित देवतोपास्तिः कार्या ॥

---

### द्वैतम् न वाधिकरणम् । (१७७)

**ओं न वातत्सहभावश्रुतेः । (४३२)**
**ओं दर्शनाच्च । (४३३)**

**देवतानां सर्वगुणोपास्तिरन्येषु नैव हि ।**
**सत्यो ज्ञानः परो मोदः आत्मेतिध्यानदर्शनात् ॥ १६० ॥**

---

* परमपुरुषादित्यर्थः ।

**अ - र्थः ।** देवेतरैः मुमुक्षुभिः अङ्गदेवतोपसंहारो न कार्यः । अनेकशाखोक्तगुणोपसंहारस्य सहाश्रवणात् । देवतानां 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित् समुपासीत धीरः सर्वैगुणैर्देवगणा उपासते' इति कमठश्रुतेः ॥

सूत्रार्थः । अङ्गाश्रयदेवतोपसंहारः—न वा—देवेतरैः न वा कार्यः, अतत्सहभावश्रुतेः—अन्यैस्साकं देवैः उपास्तिश्रवणाभावश्रुतेः, देवैरेव अङ्गदेवतोपास्तिः कर्तव्या । तदुपास्तिफलयोग्यत्वाद्देवानां । तदुपासनायां देवादीनामेव शक्तिः । नेतरेष्वित्यर्थः । देवैरेव यथाश्रयभावः उपसंहारः कार्य इति "सत्योज्ञानः" इति श्रुतौ सर्वैर्गुणैर्देवगणा इति दर्शनाच्च ॥

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां दानाधिकारिणां

**विद्वन्मण्डमण्डनाख्यविरुद् विद्यावारिध्याख्यविरुदालंकृतानां**

मतत्रयनिरूपकाणां कालि. वङ्गीपुरं. **रङ्गाचार्याणां** कृतिषु

**॥ इति मतत्रयसारसंग्रहे तृतीयाध्याये तृतीयः पादः ॥**

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

கோவாபரேடிவ் பிரஸ், புதுக்கோட்டை.

॥ श्रीः ॥

# ॥ मतत्रयसारसंग्रहे ॥

## ॥ तृतीयाध्याये—चतुर्थः पादः ॥

### अद्वैतम् पुरुषार्थाधिकरणम् । (१३७)

पुरुषार्थोऽतश्शब्दादिति बादरायणः । (४२६)
शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः । (४२७)
आचारदर्शनात् । (४२८)
तच्छ्रुतेः । (४२९)
समन्वारम्भणात् । (४३०)
तद्वतो विधानात् । (४३१)
नियमाच्च । (४३२)
अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । (४३३)
तुल्यं तु दर्शनम् । (४३४)
असार्वत्रिकी । (४३५)
विभागश्शतवत् । (४३६)
अध्ययनमात्रवतः । (४३७)
नाविशेषात् । (४३८)
स्तुतयेऽनुमतिर्वा । (४३९)
कामकारणे चैके । (४४०)
उपमर्दश्च । (४४१)
ऊर्ध्वरेतस्तु च शब्दे हि । (४४२)

त्रैय्यन्तविज्ञानमिह स्वतन्त्रं आत्माप्तये साधनमाह सूत्रम् ।
यो ब्रह्मवित् ब्रह्म स एति शोकं तरत्यथो आत्मविदित्यतश्च ॥ १

यज्ञादिकर्तुस्स्तवनार्थमेषा कर्माङ्गभूतोपनिषच्च कृत्स्ना ।
कर्मानुतिष्ठन्त इहाम्बरीष-वैदेहमुख्या विबुधा अभूवन् ॥ २ ॥

**ज्ञानी तु संसारि विभिन्न एव कर्मानपेक्षा यतयोपि दृष्टाः ।**
**अस्माकमत्र प्रजया फलं किं इत्यादिना ज्ञानत एव मुक्तिः ॥३॥**

**अधिकरणार्थः ।** औपनिषदमात्मज्ञानं स्वतन्त्रमेव पुरुषार्थसाधनं । न कर्मद्वारेणेति आह । 'तरति शोकमात्मवित्' (छा. ७-१-३) 'स यो ह वैतत् परमं ब्रह्म वेद ब्रह्मैव भवति' (मु. ३-२-९) 'ब्रह्मविदाप्नोति परं' (तै. २-१-१) इत्यादिभिः स्वतन्त्र ज्ञानादेव मोक्षोक्तेः इति बादरायणमतम् ।

जैमिनेस्तु उपनिषदुक्तं विज्ञानं सर्वं कर्मशेषं, फलश्रुतिस्तु अर्थवादः । "जनको ह वैदेहो बहुदक्षिणेन यज्ञे ।" "कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।" इत्यादि श्रुतिस्मृतिभिः जनकाम्बरीषादयः ब्रह्मनिष्ठा अपि कर्मानुतिष्ठन्त एवासन् । "यदेव विद्यया करोति" (छा. १-१-१०) "तं विद्याकर्मणि समन्वारभेते" (बृ. ४-४-२) 'कुटुम्बे शुचौ देशे स्वाध्याय-मधीयानः' (छा. ८-१५-१) 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यादिना कर्मणां विद्याशेषत्वमेव अवगम्यत इति मतम् ।

बादरायणस्य तु कर्मकर्ता आत्मा संसारी, ज्ञनी तु अन्यः, यागादेः फलं स्वर्ग-पुत्र-पश्वादि संसारिफलं, ज्ञानी तु तत्त्वमसीत्यादिना ब्रह्मैक्यवानेव । ज्ञानिनः कर्म विरुद्धमेवेति ज्ञानमेव मुक्तेः स्वतन्त्रं साधनं । न कर्मद्वारापि । कावषेया नाम केचन ऋषयः ब्रह्मनिष्ठाः 'किमर्था वयं यक्ष्यामहे, किमर्था वयं अध्येष्यामहे, किं प्रजया करिष्यामः' इत्यादिना कर्माननुतिष्ठन्त एव ब्रह्मनिष्ठा आसन्निति श्रुतेश्च । 'यदेव विद्यया करोति' इति प्रकृतोद्गीथविद्यामात्र-विषयम् । 'तं विद्या कर्मणी समन्वारभेते' इति प्रयतः विद्याकर्मणोः सह-गमनश्रवणं च कर्मनिष्ठं कर्मानुसरति, विद्यानिष्ठं विद्यानुसरतीत्यर्थः । 'कुर्वन्नेवेह कर्माणि' इति (ईशा-२.) अविदुष एव, कर्मस्तुत्यर्था वा । कर्म-रहितेषु सन्यासिप्रभृतिष्वपि 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. ४-४-२२) इत्यादि श्रुत्या मुक्तिश्रवणाच्च कर्म न साधनं मुक्तेः, अपि तु स्वतन्त्रं ज्ञानमेवेति सिद्धान्तः ॥

---

अद्वैतम्　परामर्शाधिकरणम् ।　(१३८)

परामर्शं जैमिनिरचोदनाच्चापवदति हि ।　(४४३)
अनुष्ठेयं बादरायणस्साम्यश्रुतेः ।　(४४४)
विधिर्वा धारणवत् ।　(४४५)

न च सन्यासाश्रमोऽस्ति धर्मस्कन्धास्त्रयस्स्मृताः ।
सर्वाश्रमविधानं तूपरिधारणवत् स्मृतम् ॥ ४ ॥
प्रजातन्तुं न विच्छिन्द्यात् लोकोऽपुत्रस्य नेति चेत् ।
सन्यासाश्रवबाधास्ति मंत्रे ते स्तुतिबोधके ॥ ५ ॥

**अधिकरणार्थः** ।　'त्रयो धर्मस्कन्धाः' (छा. २-२३-२) 'वीरहा वा एष देवानां' (तै-संहि) 'प्रजातन्तुं माव्यवच्छेत्सीः' (तै. १-११-१) 'नापुत्रस्य लोकोऽस्ति' इत्यादि श्रुतिस्मृतिभिः धर्मस्कन्धत्वेन आश्रमत्रयस्यैवोक्तेः सन्यासाश्रम एव नेति तन्निष्ठस्य मोक्षकथा नैवेत्याक्षेपे सन्यासाश्रमो अस्त्येव । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. ४-४-२२) इत्यादिना सन्यासाश्रमनिष्ठस्य मोक्षविधानात् धर्मस्कन्धाः इत्यत्रापि सन्यासाश्रमविधिरभ्युपेयः । तपश्श्रद्धाप्रधानात् आश्रमस्य । 'उपरि हि देवेभ्यो धारयति' इत्यत्र *अप्राप्तोपरिधारणविधिवत् । 'ब्रह्मसंस्थो अमृतत्वमेति' इति श्रुतिश्च सन्यासाश्रममेव वदति । अन्या प्रजातन्तुमित्यादि श्रुतिः गृहस्थाश्रमस्तुत्यर्थैवेति । ऊर्ध्वरेतस्स्वपि ब्रह्मविद्याश्रुतिदर्शनात् । इति ॥

---

द्वैतम्　पुरुषार्थाधिकरणम्　।　(१७८)

ओं पुरुषार्थोऽतःशब्दादिति बादरायणः ।　(४३४)
ओं शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ।　(४३५)
ओं आचारदर्शनात् ।　(४३६)
ओं तच्छ्रुतेः ।　(४३७)

* सन्यासाश्रमविधिरस्त्येव ।

ओं समन्वारम्भणात् । (४३८)
ओं तद्वतोविधानात् । (४३९)
ओं नियमाच्च । (४४०)
ओं अधिकापदेशात्तु बादरायणस्यैवं तद्दर्शनात् । (४४१)
ओं तुल्यं तु दर्शनम् । (४४२)

सर्वेषां पुरुषार्थानां प्राप्तिर्विष्णुप्रदर्शनात् ।
''यं यं लोकमि''ति श्रुत्या बादरायणसम्मतम् ॥ ६ ॥

ज्ञानादेव विमुक्तिस्स्यात् स्वर्गादिः कर्मणः फलम् ।
आचारदर्शनाच्छ्रुत्या कर्माङ्गं ज्ञानमाह *सः ॥ ७ ॥

ज्ञानाङ्गात्कर्मणस्सर्वं ज्ञानेसत्यधिकं फलम् ।
मतभेदस्य सर्वेऽपि वेदव्यासमतं मतम् ॥ ८ ॥

**अधिकरणार्थः** । पुरुषार्थावाप्तिः विष्णुदर्शनादेव । 'यं यं लोकं मनसा संविभाति, विशुद्धसत्व कामयते यंश्चकामान् तं तं लोकं जायते तांश्च कामान् तस्मादात्मजं ह्यर्चयेत् भूतिकामः' इति शब्दात् । ज्ञानस्यैव मोक्षसाधनत्वं । तथापि स्वर्गादेरपि कर्मशेषत्वेन साधनं भवति ज्ञानं । †'स्वर्गं धनात् देहतो वै गृहाच्च, प्राप्स्यन्ति धीराः न त्वधीराः कुतश्चित्' इति जैमिनिमतम् । ज्ञानिनामेव देवानां कर्माचरणदर्शनात् 'यदेव विद्यया करोति' इति विद्यावत्कर्मण एव वीर्यवत्तररूपफलवत्वश्रुतेश्च । शरीरवियोगकाले कर्मानुगमनश्रुतेः कर्मण एव शुभाशुभफलप्रदत्वश्रुतेश्च "ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ।" इति ज्ञानिन एव कर्मविधानाच्च, 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः' इति कर्मकरणनियमाच्च ज्ञानाङ्गकं कर्म पुरुषार्थसाधनमिति जैमिनिमतम् ।

* सः=जैमिनिः ।
† धनात्=बहुवित्तव्ययात्, देहात्=शरीरप्रयासात्, गृहात्=गृहस्थाश्रमाच्च, धीराः=ज्ञानिनः इत्यर्थः ।

'ज्ञानादेव स्वर्गो, ज्ञानादेवापवर्गः, ज्ञानादेव सर्वेकामास्स्सम्पद्यन्ते तथापि यथा यथा कर्मकरोति तथा तथाऽधिकारो भवति' इति श्रुत्या ज्ञानमेव पुरुषार्थ-साधनं, ज्ञानिन एव कर्माचरणे अधिकं फलम् । धर्मपुत्रादीनां राजसूयादि-यागकरणेन फलाधिक्यदर्शनात् ज्ञानिन एव कर्मकरणमिति बादरायणमतम् । केषाञ्चित् जैमिनिप्रभृतीनां कर्मैव फलप्रदमिति मतम् । केषाञ्चित् ज्ञानमेवेति । केषाञ्चित् ज्ञानसहितकर्मैवेति स्थितम् । तथापि

" स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् ।
अनन्ताकाशवत्पश्यन् निखिलं पुरुषोत्तमः ॥
ज्ञानेनैवाप्यते सर्वं कर्मणात्वधिकं भवेत् ।
इति प्राह महायोगी पुमर्थानां विनिर्णयम् ॥
ज्ञानिनामेव देवानां विशेषः कर्मभिर्भवेत् ।
चीर्णेकृते वा ज्ञानस्य न विशेषोस्ति कर्मणि ॥" इत्यादि वचनेभ्यः

ज्ञानमेव सर्वपुरुषार्थसाधनम् । 'ज्ञानिनामेव देवानां कर्माचरणमिति श्रुत्या अवगम्यते । इति ॥

" देवर्षिमानुषादीनां तत्तज्जात्यानुसारतः ।
जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन ॥
सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः ।
बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते ॥

इति अणुव्याख्यानोक्तरीत्या सर्वेषां पुरुषार्थानां ज्ञानमेव साधनम् । देवादीनां विशेषः । जैमिन्युक्तिश्च विरोधिसद्भावे आश्रीयते । अतः कर्मापि स्वर्ग-साधनं, ज्ञानसहितकर्मापि मोक्षसाधनम् । कर्मसहितज्ञानं विशेषमोक्षसाधनं, केवलज्ञानं मोक्षसाधनमेव इत्यधिकरणार्थसंग्रहः ॥

सूत्रार्थः स्पष्टमिति न विवृतः ॥

---

द्वैतम् असार्वत्रिक्यधिकरणम् । (१७९)

ओं असार्वत्रिकी । (४४३)

ओं विभागश्शतवत् । (४४४)

ओं अध्ययनमात्रवतः । (४४५)

सर्वेषामधिकारो न ज्ञाने देवशतस्य तु ।
यथा सोमाधिकाराप्तिः वैष्णवस्याधिकारिता ॥ ९ ॥

येनाधीताः कृत्स्नवेदाः भवेज्ज्ञानेऽधिकारवान् ।
स एव नास्त्यन्त्यवर्णजातस्येति श्रुतौ श्रुतः ॥ १० ॥

**अधिकरणार्थः ।** ज्ञाने सर्वेषामधिकारो न ।

"नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।
सोमाधिकारो वेदोक्तः ब्रह्मणी द्वे शताधिके ॥
यथा तथैवासंख्येयाः प्रजास्तासु कियान् जनः ।
ज्ञानाधिकारी संप्रोक्तः विष्णुपादैकसंश्रयः ॥"

इति वचनात वैष्णवस्यैव ज्ञाने अधिकारः । न सार्वत्रिकी अधिकारिता । यथा नवकोटिदेवमध्ये शतसंख्याक देवगणस्यैव सोमयागे अधिकारः, शतदेवगणाधिके ब्रह्मणि, चतुर्मुखश्च विष्णुश्च तयोरपि सोमे अधिकारः ब्रह्मा च ब्रह्म ब्रह्मणी तद्वत् असंख्येय प्रजासु विष्णुपादभक्तस्यैवाधिकारः ।

"अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।
ब्रह्मज्ञाने तु वेदोक्ते ह्यधिकारी सतां मतः ॥"

'पठेद्वेदानथार्थानधीयीत, अथ विचार्य ब्रह्म विन्देत्' इति श्रुतेः वेदतदर्थाध्ययननिष्ठस्य विष्णुभक्तस्य गुरुभक्तस्य ब्रह्मविद्यायामधिकारः, नान्त्यजातीनां

इति सूत्रार्थस्स्पष्टः ॥ शतदेवास्तु—

प्रथानवायुर्मरुतोऽश्विनौ च वस्वर्करुद्राः पितरो गुरुश्च ।
द्यावापृथिव्यौ ऋभवोपि विश्वेदेवाश्शतं सोमसवाधिकारिणः ॥

" मरुद्रुद्रादित्यवसुविश्वेदेवा बृहस्पति ।
ऋभ्वश्विनौ च रोदस्यौ पितृपाश्च शतं सुराः" इति

तत्वदीपिकायामुक्ताः ॥

पञ्चाशन् मरुतः — एकादशरुद्राः — द्वादशादित्याः — अष्टौवसवः — दशविश्वेदेवाः — बृहस्पतिः एकः — ऋभुगण एकः — द्यावापृथिव्यौ द्वे—अश्विनौ द्वौं, पितृपास्त्रयः इत्येताः सोमार्हशतदेवताः ।

---

## विशिष्टाद्वैतम् पुरुषार्थाधिकरणम् । (१०९)

पुरुषार्थोऽतश्शब्दादिति बादरायणः । (४१९)
शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः । (४२०)
आचारदर्शनात् । (४२१)
तच्छ्रुतेः । (४२२)
समन्वारम्भणात् । (४२३)
तद्वतो विधानात् । (४२४)
नियमात् । (४२५)
अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । (४२६)
तुल्यं तु दर्शनम् । (४२७)
असार्वत्रिकी । (४२८)
विभागश्शतवत् । (४२९)
अध्ययनमात्रवतः । (४३०)
नाविशेषात् । (४३१)
स्तुतयेऽनुमतिर्वा । (४३२)

कामकारेणचैके । (४३३)
उपमर्दश्च । (४३४)
ऊर्ध्वरेतस्सु च शब्दे हि । (४३५)
परामर्शं जैमिनिरचोदनाच्चापवदति हि । (४३६)
अनुष्ठेयं बादरायणस्साम्यश्रुतेः । (४३७)
विधिर्वा धारणवत् । (४३८)

**विद्यात एव पुरुषार्थ इति ब्रवीति काचिच्च कर्मण इतीह किमत्र साधु ।**
**विद्याङ्गकात् कर्मण एव युक्तं तदानुगुण्योपनिषत् प्रदृष्टा ॥ ११ ॥**

**एषोऽग्निमुद्वासयते स वीरहान्यत्र तीर्थेभ्य इति श्रुतिभ्याम् ।**
**गार्हस्त्यधर्माचरणस्य बोधात् सन्यासिधर्मस्य विरोधभावः ॥१२॥**

**परिव्रजेदेव यदा विरक्तिः तदेतिशाखान्तरमेव वक्ति ।**
**तथा परामर्शकवेदवाक्ये विधिः *प्रकल्प्योपरिधारणे व ॥ १३ ॥**

**अधिकरणार्थः ।** पुरुषार्थः केवलविद्यातः, उत विद्याङ्गकात् कर्मण इति संशय्य विद्यात एव पुरुषार्थ इति बादरायणः ।

जैमिनिस्तु विद्यायाः कर्तृसंस्कारमुखेन क्रत्वनुप्रवेशबोधात् यागादि कर्मण एव पुरुषार्थः । यथा कृष्यादेः मर्दनादेश्च व्रीह्यादिकं सौख्यादिकं च भवति, तद्वत् । ब्रह्मनिष्ठाः जनकादयोऽपि कर्मनिष्ठा एव दृश्यन्ते । विद्यावत एव कर्मविधानाच्च । यावदायुषं कर्म कुर्वन्नेव वर्तितव्यमित्यादि श्रुतेश्च इति जैमिन्यभिप्राये प्राप्ते स्वाभिप्रायमाह, विद्यात एव सर्वपुरुषार्थ इति । कर्मणा आराधितानां सर्वेषां देवानां अन्तर्यामी सन् कर्मानुगुणं कर्मकृद्भ्यः फलं ददातीति शास्त्रात् । कर्माकरणेनापि केवलज्ञानिनः मुक्तिमापुरिति श्रुतिषु दृश्यन्ते । ज्ञानिनामपि कर्मकरणं उपासनासिद्ध्यर्थम् । कर्मकुर्वन्नेवेति श्रुतिश्च कर्मस्तुत्यर्थैव ।

* उपरि हि देवेभ्यो धारयति इत्यस्य 'अधस्तात्समिधं धारयन्ननुद्रवेत्' इति पूर्ववाक्येन सम्बन्धे सत्यपि अप्राप्तं उपरिधारणमिति धारयतीति लटि विद्ध्यर्थक लेट्त्वाश्रयण-मिवेत्यर्थः । इवेत्यर्थकः व शब्दः ॥

ऊर्ध्वरेतस्सु आश्रमेष्वपि ब्रह्मविद्यादर्शनात् 'अधस्तात् समिधन्धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र अनुवादसरूपे देवानामुपरिधारणे धारयतीति लटि श्रवणेऽपि धारयेदिति विध्यर्थ लिङिति यथा वा कल्प्यते तथा 'त्रयो धर्मस्कन्धाः' इत्याद्याश्रमपरामर्शकवाक्ये सन्यासाश्रमविधिः कल्प्यत एव । तदुक्तं 'विधिस्तु धारणेऽपूर्वत्वात्' इति पूर्वकाण्डे । अपि च 'ब्रह्मचर्यं समाप्य गृहीभवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् ।' (जाबालोप-४) इति जाबालोपनिषदि सर्वाश्रमविधिसत्वाच्च विद्यात एव पुरुषार्थ इति सिद्धम् ॥

---

## द्वैतम्　नाविशेषाधिकरणम् । (१८०)

## नाविशेषात् ।　(४४६)

**अर्थे धर्मे च विज्ञाने नरर्षि त्रिदशाः क्रमात् ।**
**अधिकारिण इत्थं हि श्रेयानिति यथोत्तरम् ॥ १४ ॥**

**अधिकरणार्थः ।** पुरुषार्थसाधने अधिकारः देवादीनां तुल्यो न । सर्वत्र तारतम्यवत्त्वात् । 'अथ पुमर्थसाधनानि अर्थो धर्मो ज्ञानमित्युत्तरोत्तरं, तत्र अधिकारिणो मनुष्याः, ऋषयः, देवाः इत्युत्तरोत्तरमिति कौण्डिन्यश्रुतेः ॥

**सूत्रार्थः ।** नाविशेषात्—ज्ञानेऽधिकारः—साम्येन न भवति, अविशेषात् ज्ञानतारतम्यश्रुतिभङ्गप्रसङ्गात् । अध्ययन-भक्ति-शमदमादि-विष्णुपादैकसंश्रयत्व-रूपयोग्यताविशेषवानेव अधिकारीत्यर्थः । अर्थधर्मज्ञानेषु उत्तरोत्तरं श्रेयस्करं अधिकारिषु मनुष्य-ऋषि-देवेषु उत्तरोत्तरं अतिशयिताधिकारिण इत्यर्थः ॥

---

## अद्वैतम्　स्तुतिमात्राधिकरणम् । (१३९)

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ।**　(४४६)

**भावशब्दाच्च ।**　(४४७)

उद्गीथादौ रसतमप्रभृतीनां विधिस्त्विह ।
विध्येकवाक्ये सत्येव स्तुतिर्युज्येत नान्यथा ॥१५॥

**अधिकरणार्थः** । 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा. १-१-३) 'इयमेवर्गग्निस्साम' (छा. १-६-१) इत्येवमादयः उद्गीथादिस्तुत्यर्था वा उत उपासना विध्यर्था वेति संशये पूर्वकाण्डे जुह्वादिस्तोत्रवत् एता अपि स्तुत्यर्था एवेति प्राप्ते उपासना विध्यर्था एव । 'विधिना-त्वेकवाक्यत्वात्' इति पूर्वमीमांसा सूत्रेण देशान्तरविहितोद्गीथादीनां देशान्तर-पठिता स्तुतिः तदेकवाक्यशेषत्वे सत्येव युज्यते । 'उद्गीथमुपासीत' (छा. १-१-१) 'सामोपासीत' (छा. २-१-१) इत्यादि उद्गीथोपास्तिफलश्रवणाच्च उद्गीथविधानार्था एव इति ॥

---

**विशिष्टाद्वैतम् स्तुतिमात्राधिकरणम् । (११०)**

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् । (४३९)**
**भावशब्दाच्च । (४४०)**

क्रत्वङ्गभूतोद्गीथादौ रसादिगुणदृष्टयः ।
कर्तव्या इति विज्ञेयाः स्तुतिमात्राप्रबोधिकाः ॥ १६ ॥
उपासीतेत्यादिविधेः भिन्नप्रकरणेऽपि सः ।
कल्प्य एवेति तत्रेयं विधिनेत्येकवाक्यतः ॥ १७ ॥

**अधिकरणार्थः** । 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा. १-१-३) इत्यादिवाक्यानि क्रत्वङ्गभूतोद्गीथादि स्तुतिमात्र-पराणि, अथवा उद्गीथादिषु रसतमादि दृष्टिविधानपराणीति संशय्य उद्गीथादौ रसतमादीनां शास्त्रान्तरेणाप्राप्तत्वात् रसतमादिदृष्टिविधानार्थानीति, न स्तुति-मात्रपराणि इति । प्रतिप्रकरणं 'उपासीत', 'विद्यात्' इत्यादि विधिप्रत्यय-दर्शनाच्च, वीर्यवत्तरत्वादि फलस्यापि दृष्टत्वाच्च इति ॥

---

**अद्वैतम्　पारिप्लवाधिकरणम् । (१४०)**

**पारिप्लवार्था इति चेन्न विशेषितत्वात् । (४४८)**
**तथा चैकवाक्यतोपबन्धात् । (४४९)**

**प्रतर्दनाद्याख्यकथाः समस्ताः विद्याविधानैकसमन्वयास्ताः ।**
***पारिप्लवार्था न भवेयुरत्र मन्त्रादिचारित्रकथाविशेषात् ॥ १८ ॥**

**अधिकरणार्थः** ।　'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः' (बृ. ४-५-१) 'प्रतर्दनो ह वै दैवोदासिः ।'' (कौ. ३-१) 'जानश्रुतिर्ह पौत्रायणः' (छा. ४-१-१) इत्याद्याख्यायिका उपनिषत्सु दृष्टाः । ताः पारिप्लवार्था वा विधिविधानार्थावेति संशये सर्वाण्याख्यानानि पारिप्लवे शंसन्ति इति पारिप्लवे विनियोगात् पारिप्लवार्था एवेति प्राप्ते विद्याविधानार्था एव, न पारिप्लवार्थाः । श्रौते 'पारिप्लवमाचक्षीत' इत्यारभ्य 'मनुर्वैवस्वतो राजा' इत्यादि विशेष कथा एव पठिताः । न तु उपनिषद्गताः कथाः । यथा 'सर्वे ब्राह्मणाः भोजयितव्याः' इत्युक्ते निमन्त्रितसर्वब्राह्मणानामेव भोजनं, न तु सर्वशब्देन सामान्यसर्वब्राह्मणानां भोजनं, तद्वत् उपनिषत्सु पठिताः कथाः विद्यैकवाक्यतां गताः 'आत्मा वा अरे द्रष्टव्यः' इत्यादि ब्रह्मविद्याविधानार्था एव । इति ॥

---

**विशिष्टाद्वैतम्　पारिप्लवार्थाधिकरणम् । (१११)**

**पारिप्लवार्था इति चेन्न विशेषितत्वात् । (४४१)**
**तथा चैकवाक्योपबन्धात् । (४४२)**

**विद्यासमीपे पठितास्समस्ताः आख्यायिका राजकृताश्वमेधे ।**
**पारिप्लवार्था इति नैवमत्र विद्याविधानैकसमन्वयार्हाः ॥ १९ ॥**

**आख्यानानि च सर्वाणि शंसन्तीति विधाय च ।**
**मनुर्यमश्च वरुणः इत्याद्याख्यानपाठतः ॥ २० ॥**

---

* यागे यजमानस्य निद्राद्यभावाय कथाश्रवणम् ।

**तत्र संकुचितस्सर्वः विद्यासङ्गं न चार्हति ।**
**विद्याप्रवृत्तिसिद्ध्यर्थं विद्यामाहात्म्यबोधकाः ॥ २१ ॥**

**अधिकरणार्थः ।** उपनिषत्सु प्रतर्दनादिकथाः श्रुताः । ताः विद्याविध्यर्था उत पारिप्लवार्था इति संशय्य विद्याविधानार्था एवेति सिद्धान्तितम् । पारिप्लवप्रकरणे 'मनुर्वैवस्वतः' इत्यादि विशेषकथाशंसनस्यैव प्रतीतेः । राजाश्वमेधे राज्ञः कालक्षेपार्थं 'पारिप्लवमाचक्षीत, सर्वाण्याख्यानानि शंसन्ति' इत्यभिधाय 'प्रथमेऽहनि मनुर्वैवस्वतो राजेत्याह, द्वितीयेऽहनि यमो वैवस्वतो राजेत्याह, तृतीयेऽहनि वरुण आदित्य इत्याह', इत्यादिवाक्यशेषात् सर्वशब्दस्य प्रकृतपारिप्लवरूप कथाविशेष एव सर्वशब्दसंकोच अभ्युपगम्यते, तद्वत् विद्यासमीपपाठात् कथानां विद्याविध्यर्थत्वमेवोचितम् ॥

---

**अद्वैतम् अग्नीन्धनाधिकरणम् । (१४१)**

**अत एव चाग्नीन्धनाद्यनपेक्षा । (४५०)**

**सर्वाण्याश्रमकर्माणि विद्या नापेक्षते ध्रुवम् ।**
**विद्यातः पुरुषार्थस्तु बादरायणसम्मतः ॥ २२ ॥**

**अधिकरणार्थः ।** विद्यात एव पुरुषार्थ इति पूर्वमुक्तत्वात् विद्यया स्वार्थब्रह्मप्राप्तिसिद्धौ अग्नीन्धनादीनी आश्रमकर्माणि नापेक्षते । इति ॥

---

**विशिष्टाद्वैतम् अग्नीन्धनाधिकरणम् । (११२)**

**अत एव चाग्नीन्धनाद्यनपेक्षा । (४४३)**

**उर्ध्वरेतः प्रभृतयः दृश्यन्ते ज्ञानिनः श्रुतौ ।**
**अग्निहोत्रादिकर्मापि विद्या नापेक्षते *फले ॥ २३ ॥**

* फले=विद्याफले मोक्षेत्यर्थः ॥

**अधिकरणार्थः ।** ऊर्ध्वरेतसः आश्रमिणः सन्ति इति 'ब्रह्मसंस्थोऽमृतत्वमेति' (छा. २-२३-१) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. ६-४-२२) इत्यादि श्रुतिभ्यः ज्ञायन्ते । तस्मात् ब्रह्मविद्या अग्न्याधानादि-कर्म नापेक्षते इत्यर्थः ॥

---

## अद्वैतम् सर्वापेक्षाधिकरणम् । (१४२)

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ।** (४५१

**शमदमाद्युपेतस्यात्तथापि तु तद्विधेस्तदङ्गतया-तेषामवश्यानुष्ठेयत्वात् ।** (४५२)

**अश्वस्य स्यन्दने योगः युज्यते न च लाङ्गले ।**
**विद्योत्पत्तेश्च करणं यज्ञाद्याचरणं श्रुतम् ॥ २४ ॥**

**स्वाश्रमार्हाणि कर्माणि स्वनुष्ठेयानि नित्यशः ।**
**यज्ञेन वेत्तुमिच्छन्ति शान्तोदान्त इति श्रुतेः ॥ २५ ॥**

**अधिकरणार्थः ।** 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ. ४-४-२२) 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादि श्रुतिस्मृतिभ्यः सर्वाण्याश्रमकर्माणि, कर्मणः साक्षान्मोक्षसाधनत्वाभावेऽपि विद्योत्पत्तिसिद्धये अनुष्ठेयान्येव । यथा अश्वः रथचर्यायामेव युज्यते, न तु लाङ्गलाकर्षणे, योग्यतावशात् , तद्वत् आश्रमकर्म विद्याफलसिद्धौ नापेक्ष्यते, विद्योत्पत्तावपेक्ष्यत एव । 'शान्तोदान्त उपरतस्तितिक्षुः' इत्यादिना आत्मसाक्षात्कारे शमदमादीनां साधनत्वेनविधानात् शमादयोऽपि ब्रह्मनिष्ठेनानुष्ठेया एव । इति ॥

---

## विशिष्टाद्वैतम् सर्वापेक्षाधिकरणम् । (११३)

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । (४४४)**

**वेदानुवचनेनैतं ब्राह्मणा इति वेदतः ।**
**स्वार्हकर्मयुता विद्या सिद्ध्यत्यश्वो यथा †गतौ ॥ २६ ॥**

**अधिकरणार्थः** । विद्या यज्ञादि सर्वकर्मापेक्ष्यैव मोक्षं साधयति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिश्रुतेः । अतः कर्मवत्सु गृहस्थेषु नित्यनैमित्तिक सर्वकर्मापेक्ष्यैव विद्या फलवती । यथा गमनसाधनभूतो अश्वः स्वपरिकरबन्धपरिकर्मापेक्षः, एवं मुक्तिसाधनभूता विद्याऽपि नित्यनैमित्तिक-कर्मापेक्षा भवति ।

"यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणां ॥"

इत्यादि स्मृतेश्च इति ॥

---

**विशिष्टाद्वैतम् शमदमाद्यधिकरणम् । (११४)**

**शमदमाद्युपेतस्स्यात् तथापि तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् । (४४५)**

**कर्मणां च शमादीनां विद्याङ्गत्वं कथं भवेत् ।**
**द्वयोर्भिन्नौ हि विषयौ विहिताविहितेष्वपि ॥ २७ ॥**

**अधिकरणार्थः** । गृहस्थस्य शमादयोऽपि विद्याङ्गतया अनुष्ठेयाः । "तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षुस्समाहितो भूत्वा" (बृ. ६-४-२३) इत्यादिश्रुतेः । कर्माणि च विद्योत्पत्तये अनुष्ठेयानीत्युक्तम् । तत्र कर्माणि बाह्ये-न्द्रियविषयाणि, शमदमादयः मानसविषयाणि । कथं एकस्मिन् विषये शमादेः कर्मणश्च संभव इति चेत् विहितकर्मकरणानन्तरं यः समयः, तस्मिन् समये शान्त्यादय इति परस्परविरोधाभावात् उभयमप्येकस्मिन् संभवत्येव ॥

---

† यथा गतौ=परिकरयुक्त अश्वः गमने साधनं भवति, न केवलो अश्वः ।

## अद्वैतम्　सर्वान्नानुमत्याधिकरणम् । (१४३)

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । (४५३)**

**अबाधाच्च । (४५४)**

**अपि च स्मर्यते । (४५५)**

**शब्दश्चातोऽकामकारे । (४५६)**

**न त्यजेत् काञ्चनस्त्रीमित्यागमं बाधते यथा ।**
**अशुद्धान्ननिषेधं च ज्ञानिसर्वान्नभोजनम् ॥ २८ ॥**
**सर्वान्नानुमतिर्ब्रह्मविदः प्राणात्यये स्मृता ।**
**जग्धं भवति नानन्नं इति विद्यास्तुतिं वदेत् ॥ २९ ॥**

**अधिकरणार्थः** । 'न ह वा एवं विदि किञ्चनानन्नं भवति' (छा. ५-२-१) 'न ह वाऽस्यानन्नं जग्धं भवति' (बृ. ६-१-१४) इत्यादिना ब्रह्मविदः सर्वान्नानुमितिः श्रूयते । यथा 'न काञ्चनापरिहरेत्तद्व्रतं' (छा. २-१३-२) इति वामदेवविद्याविषयेण सर्वयोषिदपरिहारवचनेन गम्यागम्यविभागशास्त्रसामान्यं बाध्यते तद्वत् प्राणविद्या विषयेण सर्वान्नभक्षणवचनेन भोज्याभोज्यविभागशास्त्रं बाध्येत इति प्राप्ते, प्राणविदः सर्वान्नानुमतिः न विधीयते । लिङ्-लोट्-तव्यप्रत्ययाभावात् । प्राणविद्यानिष्ठस्य प्राणात्यये निषिद्धान्नभोजनेऽपि न दोष इत्येवार्थः । कुत इति चेत् चाक्रायणब्रह्मवित् प्राणात्यय एव निषिद्धाच्छूद्रात् माषान् गृहीत्वा भुञ्जानः अनुपानमकुर्वन् प्राणधारणमात्रं कृत्वा अन्यत्र राजानं प्रति गतवानिति श्रूयते । ब्रह्मविद्यानिष्ठस्य प्राणात्यय एव निषिद्धभोजनानुमतिः दृष्टा । किं पुनः प्राणविद्यानिष्ठस्य सर्वान्नानुमतिर्भवेद्वा । 'सुरापाः क्रिमयो भवन्ति अभक्ष्यभक्षणात्, तस्माद्ब्राह्मणः सुरां न पिबेत् ।' निषेधशास्त्रप्राबल्यात् सर्वान्नानुमतिर्न ।

"जीवितात्ययमापन्नः योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥"

इत्यादि स्मृतिभिः प्राणात्यय एव निषिद्धान्नभोजने दोषाभावप्रतिपादनात् प्राणविद्यानिष्ठस्य प्राणात्यय एव निषिद्धान्नभोजने न दोष इति प्राणविद्यानिष्ठस्तुत्यर्था सा श्रुतिः ॥

---

**विशिष्टाद्वैतम् सर्वान्नानुमत्यधिकरणम् । (११५)**

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । (४४६)**
**अबाधाच्च । (४४७)**
**अपि स्मर्यते । (४४८)**
**शब्दश्चातोऽकामकारे । (४४९)**

**सर्वान्नभोजनं प्राणविद्यानिष्ठस्य कीर्त्यते ।**
**ब्रह्मविद्यास्थितस्यापि आपद्येवेति विश्रुतम् ॥ ३० ॥**
**किं पुनः प्राणनिष्ठस्य प्राणनाशे तथान्नभुक् ।**
**न दोषभाक् स्यात् ज्ञानीहाऽहारशुद्धाविति श्रुतेः ॥ ३१ ॥**

**अधिकरणार्थः ।** प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः आपद्विषयैव । ब्रह्मविद्यानिष्ठस्यापि चाक्रयणस्य आपद्येव निषिद्धकुल्माषखादन श्रुतेः । 'न वा अजीविष्यमिमानखादन्....कामो म उदपानम् । (छा. १-१०-३) इति श्रुतेः ब्रह्मविद्यानिष्ठस्यैव 'आहारशुद्धौ सत्वशुद्धिः' इत्यादि श्रुतेः । 'तस्माद्ब्राह्मणः सुरान्न पिबति, पाप्मना नोत्सृजा' इति कामकारस्य निषेधाच्च । इति ॥

---

**अद्वैतम् आश्रमकर्माधिकरणम् । (१४४)**

**विहितत्वाच्चाश्रमकर्मापि । (४५७)**
**सहकारित्वेन च । (४५८)**
**सर्वथापि त एवोभयलिङ्गात् । (४५९)**
**अनभिभवं च दर्शयति । (४६०)**

**कर्मानपेक्षते विद्या ह्याश्रमोऽपेक्षते ध्रुवम् ।**
**यावज्जीवश्रुतेरेतं वेदानुवचनेन च ॥ ३२ ॥**

**विद्याफलस्य साध्यत्वात् विद्योत्पत्तेस्तु साधनम् ।**
**एकस्य तूभयार्थत्वं खादिरादिवदिष्यते ॥ ३३ ॥**

**अधिकरणार्थः** । अमुमुक्षोः मुमुक्षोश्च आश्रमकर्माणि नित्यानि अनुष्ठेयानि । मुमुक्षोरपि विद्योत्पत्तौ सहकारित्वेन विधानाच्च । न च कर्मणः नित्यानित्यफलसंयोगविरोधः । विद्याफलस्य असाध्यत्वात् । विद्योत्पत्तेरेव वेदानुवचनादिकं साधनम् । 'यावज्जीवमग्निहोत्रं जुहोती'ति 'तमेतं वेदानुवचनेने'ति श्रुतिभ्यां 'खादिरं वीर्यकामस्य यूपो भवति' इतिवत् विद्योत्पत्तेः स्वर्गादेश्च वेदानुवचनादिकत्वस्य साधनत्वे न दोष इत्यर्थः । इति ॥

---

**विशिष्टाद्वैतम् विहितत्वाधिकरणम् । (११६)**

**विहितत्वाच्चाश्रमकर्मापि । (४५०)**
**सहकारित्वेन च । (४५१)**
**सर्वथापि त एवोभयलिङ्गात् । (४५२)**
**अनभिभवञ्च दर्शयति । (४५३)**

**यज्ञादिकर्माङ्गिकविद्ययैव ब्रह्माप्यते तर्हि न चाश्रमाङ्गम् ।**
**कर्माऽऽश्रमायापि भवेच्च विद्यासिद्ध्यौ च दध्यादिवदर्थभेदात्* ॥**

**अधिकरणार्थः** । यज्ञादीनि कर्माणि अमुमुक्षुणा केवलाश्रमिणाप्यनुष्ठेयानि उत नेति चिन्तायां 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना जीवननिमित्ततया नित्यवद्विहितत्वात् अमुमुक्षुणाप्यनुष्ठेयानि । विद्यासहकारितया विद्योत्पत्तिसिद्धये मुमुक्षुणाप्यनुष्ठेयानि । यथा अग्निहोत्रादयः यावज्जीवमिति श्रुत्या नित्यवदनुष्ठेयाः । "अग्निहोत्रं जुहुयात् स्वर्गकामः' इति स्वर्गेच्छाया-

---

* अर्थभेदात्=फलभेदादित्यर्थः ॥

मपि यथा अनुष्ठेया भवन्ति, 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादिवत् विनियोगपृथक्त्वेन उभयैरप्यनुष्ठेयानि । 'यज्ञेन दानेन' इत्यादि श्रुतेः, 'धर्मेण पापमपनुदति' इत्यादि श्रुतेश्च ॥

---

द्वैतम् स्तुत्यधिकरणम् । (१८१)

ओं स्तुतयेनुमतिर्वा । (४४७)
ओं कामकारेण चैके । (४४८)
ओं उपमर्दं च । (४४९)
ओं ऊर्ध्वरेतस्सु च शब्दे हि । (४५०)
ओं परामर्शं जैमिनिरचोदना चापवदति हि । (४५१)
ओं अनुष्ठेयं बादरायणस्साम्यश्रुतेः । (४५२)
ओं विधिर्वा धारणात् । (४५३)
ओं स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् । (४५४)
ओं भावशब्दाच्च । (४५५)
ओं पारिप्लवार्था इति चेन्नविशेषितत्वात् । (४५६)
ओं तथा चैकवाक्योपबन्धात् । (४५७)
ओं अत एव चाग्नीन्धनाद्यपेक्षा । (४५८)
ओं सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । (४५९)
ओं शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया – तेषामवश्यानुष्ठेयत्वात् । (४६०)
ओं सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । (४६१)
ओं अबाधाच्च । (४६२)
ओं अपि स्मर्यते । (४६३)
ओं शब्दश्चातो कामचारे । (४६४)
ओं विहितत्वाच्चाश्रमकर्मापि । (४६५)
ओं सहकारित्वेन च । (४६६)

**ज्ञानिनां कामचरणं स्तुत्यर्थं न विधायकम् ।**
**क्रियावदूर्ध्वरेतेभ्यो गुह्यं वक्तव्यमित्यतः ॥ ३५ ॥**

**सन्ध्यावन्दनकर्माद्यं शुद्धस्यैव विधीयते ।**
**निषिद्धं कामचरणं स्वाध्यायविधिवत्तु वा ॥ ३६ ॥**

**प्रातरुत्थायादिवेदात् ज्ञानी मोक्षार्ह ईरितः ।**
**ज्ञानिनो हीनवृत्तेश्च मुक्तावानन्दह्रस्वता ॥ ३७ ॥**

**अग्निहोत्राद्यपेक्षास्ति सर्वान्नानुमतिस्तु न ।**
**स्वार्हकर्मादिकृज्ज्ञानी सर्वेभ्यः परमो मतः ॥ ३८ ॥**

**अधिकरणार्थः** । ज्ञानिनः यथेष्टाचरणं ज्ञानिनस्स्तुत्यर्थम् । अनुमतिमात्रं वा । यथेष्टं कामचरणमपि केचिद्वदन्ति । कामचाराणां ज्ञाने नाधिकारः । "य इमं परमं गुह्यं ऊर्ध्वरेतस्सु भाषयेत् ।
न तथा विद्यते भूयान् यं प्राप्यान्येऽपि भूयसे ॥"
इति सन्यासिनां ज्ञाने अधिकार इति ज्ञायते । ज्ञानिनां निषिद्धकर्म कर्तव्यमिति चोदना न । 'प्रातरुत्थाय सन्ध्यामुपासीत, यत्सन्ध्यामुपासते ब्रह्मैव तदुपासते' इत्यादि श्रुत्या जैमिनिः ज्ञानिनां कामाचरणं मन्यते ।

बादरायणस्तु ज्ञानिनः कर्माप्यनुष्ठेयमिति मन्यते । यथा वेदावधारणं त्रैवर्णिकानां विहितं नान्येषां, एवं ज्ञानिनां स्वस्वाश्रमकर्मप्रवृत्तिर्विहितैव ।

"स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता ।
नाशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना ।
इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चन ॥"

इति शास्त्रात् विष्णोरेव स्वेच्छाप्रवृत्तिः । अन्येषां तु शास्त्रविधिनैव स्वस्वकर्मकार्यम् । न तु स्वेष्टतः । क्वचिच्छ्रुतं स्वेच्छाकरणं च स्तुतिमात्रमेवेति न । परवशत्वात् । सर्वविध्यतिक्रमणं परब्रह्मण एव स्तुतिमात्रम् । नान्येषां

विधीनां विषयास्त्वन्ये ब्रह्मणस्स्वेच्छया कृतौ । परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता ॥' इति ब्रह्मतर्कवचनात् । श्रुतयः *चञ्चलार्थाः श्रुताः, तथा हि ज्ञानी विधिना कर्म कुर्यात्, स्वेच्छया वा कुर्यात्, न कुर्याद्वा । निषिद्धाचारेऽपि न दोषभाक् । निषिद्धाचरणे दोषभाक् च इति चेन्न । 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति, विधिनियताः, अनियताः स्वेच्छानियता इति ; विधिनियता मनुष्याः, अनियता हि देवाः, ब्रह्मैव स्वेच्छानियतः' इति विशेषवचनेन श्रुतिवाक्यानां एकवाक्योपबन्धात् सर्वाः श्रुतयः उपपन्ना एव । ज्ञानिनः मोक्षदाने अग्निहोत्राद्यपेक्षा वर्तते ।

" येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥
स्वेच्छानुवृत्त्यैव भवेत् ब्रह्मणः प्रायशस्तथा ।
देवानामपि सर्वेषां विशेषादुत्तरोत्तरम् ॥" इति प्रमाणात् ।

ज्ञानोत्पत्तौ सर्वधर्मापेक्षा च अस्त्येव । ज्ञानी शमदमाद्युपेत एव भवेत् । ज्ञानिनः सर्वान्नानुमतिश्च आपत्काल एव । अन्याय्याकरणमेव ज्ञानसाधनम् ।

" अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥"

कामचारकामवादकामभक्षाणां निषेधाच्च । ज्ञानिनां निषिद्धाकरणेन केवलं न मोक्षः । अपि तु विहितकर्माचरणादेव । राज्ञः यथा मन्त्री तथा यज्ञादिकर्माऽपि ज्ञानिनः सहकारीत्यर्थः ।

" ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोपि तु ।
आनन्दो ह्रासतेऽकार्यात् शुभं कृत्वा तु वर्धते ॥" इति ॥

प्रमाणात् ज्ञानी-मनुष्यः, विहितं-स्वार्हकर्म कुर्यादेव । निषिद्धं त्यजेदेव । स्वेच्छाचरणं त्यजेदेव । ज्ञानोपदेशं च ऊर्ध्वरेतःप्रभृतिषु तत्समानेषु कुर्यात् । इत्यधिकरणार्थः ॥ सूत्रार्थो स्पष्टः ॥

---

* पारिप्लवार्थाः ।

## अद्वैतम् विधुराधिकरणम् । (१४५)

अन्तरा चापि तु तद्दृष्टेः । (४६१)

अपि च स्मर्यते । (४६२)

विशेषानुग्रहश्च । (४६३)

अतस्त्वितरज्ज्यायो लिङ्गाच्च । (४६४)

**विद्यावन्तोपि दृश्यन्ते रैक्कवाचक्नवीमुखाः ।**
**तस्मादकृतदारस्य विधुरस्याधिकारिता ॥ ३९ ॥**
**ब्रह्मविद्यासु जप्येन ब्राह्मणस्सिद्ध्यतीत्यतः ।**
**अनाश्रमीतिवचनादापद्विषयमेव तत् ॥ ४० ॥**

**अधिकरणार्थः ।** संपद्रहितानां अन्यतमाश्रमप्रतिपत्तिहीनानां विधुरादीनामपि ब्रह्मविद्यायामधिकारो अस्ति । रैक्क-वाचक्नवी-भीष्मादीनां शास्त्रे ब्रह्मविद्याधिकारदर्शनात् ।

" जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यात् *मैत्रोब्राह्मण उच्यते ॥"

इत्यादि स्मृत्या अनाश्रमित्वेऽपि तेषां जपोपवास-देवताराधन-दानादिकर्मभिः ब्रह्मविद्या सिद्ध्यतीति ॥

" अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः ॥"

" संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत् " इत्यादि स्मृत्या 'तेनैति ब्रह्मवित्-पुण्यकृत्-तैजसश्च (बृ. ४-४-९) इत्यादि श्रुत्या च आश्रमित्वमेव ज्यायः । अनाश्रमित्वं तु आपद्विषयम् ॥

---

## विशिष्टाद्वैतम् विधुराधिकरणम् । (११७)

अन्तरा चापि तु तद्दृष्टेः । (४५४)

---

* मैत्रो ब्राह्मणः इत्यस्य अहिंसकः ब्राह्मण इत्यर्थः ॥

अपि स्मर्यते । (४५५)
विशेषानुग्रहश्च । (४५६)
अतस्त्वितरज्ज्यायो लिङ्गाच्च । (४५७)

अन्तरावर्तमानानां ब्रह्मविद्याधिकारिता ।
रैक्व-भीष्मादिवत्सिद्धा ज्यायस्याश्रमनिष्ठता ॥ ४१ ॥

**अधिकरणार्थः ।** विधुरादीनामपि ब्रह्मविद्यायामधिकारः । रैक्व-भीष्म-संवर्तादिवत् । 'यज्ञेन दानेन तपसाऽनाशकेन' इति दानादिभिरपि विद्यानुग्रहत्वोक्तेः । 'जप्येनापि च संसिद्ध्येत्' इत्यादि स्मृत्या ब्राह्मणः ब्रह्मविद्यानिष्ठः जप्येन- जपाद्यनुग्रहीतविद्यासिद्धो भवतीत्यर्थः । 'तपसा ब्रह्म-चर्येण श्रद्धया विद्यया आत्मानमन्विष्येत्' इत्यादिना च । तथापि अनाश्रमि-त्वं आपद्विषयमेव । 'अनाश्रमी न तिष्ठेत' इत्यादि निषेधात् । निवृत्तब्रह्म-चर्यस्य मृतभार्यस्य च अवैराग्ये सति दारालाभः आपदिति तद्विषयकमेव तत् इति ॥

---

द्वैतम् उभयलिङ्गाधिकरणम् । (१८२)

ओं सर्वथापि तु त एवोभयलिङ्गात् । (४६७)
ओं अनभिभवं च दर्शयति । (४६८)
ओं अन्तरा चापि तु तद्दृष्टेः । (४६९)
ओं अपि स्मर्यते । (४७०)
ओं विशेषा अनुग्रहं च । (४७१)
ओं अतस्त्वितरज्ज्यायो लिङ्गाच्च । (४७२)
ओं †तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाऽभावेभ्यः । (४७३)

सर्वसाधनसंपन्नो योग्यो विज्ञानमाप्नुयात् ।
देवीं देवाः प्राप्नुवन्ति ह्यसुरास्तद्विरोधिनीम् ॥ ४२ ॥

† देवमनुष्यासुरादिस्वभावाः तद्विपरीतस्वभावाः न कदापि भवेयुरिति तात्पर्यम् ॥

**आसुरीं न सुरा यान्ति दैवीं दितिसुता अपि ।**
**शापाभिभूतदेवास्तु प्रह्लादाद्यास्समाभवन् ॥ ४३ ॥**

**अतस्तेषां च सुगतिः व्यत्ययो न भवेत्तयोः ।**
**चतुर्मुखोपदिष्टोपि ज्ञानीन्द्रो न विरोचनः ॥ ४४ ॥**

**अधिकरणार्थः** । देशकालगुरूपसदनाद्यङ्गोपेत श्रवणमननादिरूप महाप्रयत्ने सत्यपि ज्ञानयोग्या एव ज्ञानं प्राप्नुवन्ति । न त्वयोग्याः । अयोग्याः प्रयत्नं कुर्वन्ति चेत् विपरीतज्ञानमेव लभेरन् । यथा चतुर्मुखोपदेशसाम्येऽपि इन्द्रो ज्ञानमाप, विरोचनः विपरीतज्ञानमाप । देवाः दैवीं सम्पत्तिमेवाभिगच्छन्ति, असुराः आसुरीं सम्पत्तिं अभिगच्छन्ति । सम्यग्ज्ञानविपरीतज्ञानयोः मध्यवर्तिनामपि ज्ञाने अधिकाराभाव एव ।

" असुरा आसुरेणैव स्वभावेन च कर्मणा ।
ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ॥"

" देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।
सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥"

" नानयोरन्यथा भावः कदाचित् क्वापि विद्यते ।
मानुषा मिश्रमतयः विमिश्रगतयोपि च ॥" इत्यादि प्रमाणात् ।

" असुरान् दमयन् विष्णुः स्वपदं च सुरान्नयन् ।
पुनः पुनर्मानुषांस्तु सृतावावर्तयत्यसौ ॥"

इत्यादि वचनाच्च । असुराः बहवः, देवाः स्वल्पाः । तस्मात् बहुलसङ्गं न कुर्यात् । " असुरा बहुला यस्मात् तस्मान्न जनतामियात् ।"
जनानां समूहो जनता । "नासुरा दैवीं न देवा आसुरीं, न मनुष्या दैवीं आसुरीं च गतिं ईयुः, आत्मीयामेव जातिमनुभवन्ति । इति श्रुतेः स्वस्वजात्यतिक्रमः तेषां न भवत्येव । प्रह्लादादीनां ज्ञाने अधिकारिता तु शापाभिभूताः देवा एव प्रह्लादादयो अभवन् । अतः शापमोक्षे तेषां ज्ञानान् मोक्षः

युक्त एव । "श्रृण्वे वीर उग्रमुग्रं दमायन् अन्यमन्यमति नेनीयमानः,
एधमानद्विलुभयस्य राजा चोष्कूयेते विश इन्द्रो मनुष्यान्"
इति श्रुतेश्च । (ऋग्वेदं ६-४७-१६)

इन्द्रः = परमैश्वर्ययुक्त, वीरः = नृसिंहः, उग्रमुग्रम् = सर्वदुष्टप्रकृतीन्, दमायन् = दमयन्नित्यनरकं प्रापयन्, अन्यमन्यं = दुष्टविपरीतान् सत्स्वभावान् सर्वान्, अतिनेनीयमानः = सर्वसंसारत्यजनपूर्वकं स्वपदं नयन्, एधमानद्विट् = स्वयोग्यातिरेकेण वर्धमानस्य द्वेष्टा, श्रृण्वे = वेदादिषु श्रूयते । यतः— उभयस्य राजा = देवासुरवर्गस्य राजा, मनुष्यान् = मध्यमजीवान्, चोष्कूयते= संसार एव वर्तयति नृसिंहः इति श्रुत्यर्थः ॥

**सूत्रार्थः** । सर्वथापि तु त एवोभयलिङ्गात् = सर्वथापि=सर्वप्रयत्नेऽपि, त एव=ज्ञानयोग्या एव ज्ञानं प्राप्नुवन्ति, उभयलिङ्गात् = इन्द्रविरोचनदृष्टान्तात्,

अनभिभवञ्च दर्शयति = असुराः न दैवीं योनिमाप्नुवन्ति, सुराः नासुरीं योनिं । दर्शयति = तदर्थश्रुतिर्दर्शयति ॥

अन्तरा चापि तु तद्दृष्टेः । अन्तरा चापि = संयग्ज्ञानविपरीतज्ञानमध्यवर्तिनामपि—न ज्ञानेऽधिकारः । तद्दृष्टेः = तथैव श्रुतेः ॥

अपि स्मर्यते = "असुरा असुरेणैव" इति स्मृत्या च ॥

विशेषानुग्रहं च = "श्रृण्वे वीर" इत्यादि श्रुत्यर्थाच्च ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च = देवसंघात् असुरसंघो बहुलः । 'तस्मान्न जनतामीयात्' इति आसुरीं संपदं नाभिकांक्षेत इत्यर्थः ॥

तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः । देवानाम सुराभावः जैमिनेरपि सम्मतः, नियमातद्रूपभावेभ्यः = नासुरादैवीमिति नियमात्, अतद्रूपात् = 'नासुराणां दैवं रूपं' इति श्रुतेः । अभावात् = अभावशब्दपर्याया * अभूतिशब्दघटित 'तं भूतिरि'ति श्रुतेश्च ।'नासुराणां दैवं रूपं न देवाना-

* अभूतिकारकोस्माकमैश्वर्यादिगुणोज्जितः ।
इत्येवोपासते तस्मात् पराभूताश्च सर्वशः ॥ इति तदर्थः ॥

मासुरं, न चोभयं मनुष्याणां, यो यद्रूपः स तद्रूपः, निसर्गो ह्येष भवति' इति । तं भूतिरिति देवा उपासां चक्रिरे, ते बभूवुः, तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति, अभूरित्यसुराः ते पराबभूवुः' इत्यादि श्रुतेः देवासुराणां भावाभावप्रतिपादनात् । तस्मात् = देवानां भूतिरित्युपासकत्वात्, एतर्हि = अद्यापि, सर्वदेवोत्तमः सुप्तः = सुप्तजनेषुस्थितः—वायुः—भूरित्येव'= ज्ञानैश्वर्यादिप्रदस्सन्, तद्रूपश्चेत्येव, प्रश्वसिति = निश्वासनियमनपूर्वकं स्तौति ।

असुराः इत्यादि—एतद्विपरीतमित्यर्थः ॥

" देवानां भूतिरित्येव मनौ विष्णौ स्वभावतः ।
असुराणामभूतित्वेनैतन्नियमतोऽन्यथा ॥
देवाश्शापाभि भूतत्वात् प्रह्लादाद्या बभूविरे ।
अतस्सुगतिरेतेषां नान्यथा व्यत्ययो भवेत् ॥"

इत्यादि प्रमाणान्यनुसन्धेयानि ॥

---

## अद्वैतम् तद्भूताधिकरणम् । (१४६)

**तद्भूतस्य तु नातद्भावो जैमिनिरपि नियमात्तद्रूपाऽभावेभ्यः ।**

**स्वाश्रमाद्भ्रष्टचर्याणां विद्यास्वधिकृतिर्न हि ।** (४६५)
**यावन्मोक्षं स्वाश्रमोक्तकर्मकार्यमिति स्मृतेः ॥ ४५ ॥**

अ-र्थः । ऊर्ध्वरेतसः आश्रमाः सन्तीत्युक्तं पूर्वम् । तेभ्यः तेषां प्रच्युतिः अस्ति वा नवेति संशये 'तद्भूतस्य तु नातद्भावः । 'वानप्रस्थं सन्यासाश्रमं प्राप्तवतां पुनः प्रच्युत्यभाव एव । 'अरण्यमियात् इति पदं ततो न पुनरेयात्' इत्यादि निषेधशास्त्रात् । यत्पदमाश्रमः ततः पुनः नावर्तेतेत्यर्थः ॥

---

## अद्वैतम् आधिकारिकाधिकरणम् । (१४७)

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ।** (४६६)
**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ।** (४६७)

**भिक्षुर्वैखान सब्रह्मचारिणः प्रच्युता इति ।**
**मधुमांसाशनप्रायश्चित्तवत्तेषु निष्कृतिः ॥ ४६ ॥**

**अ - र्थः ।** नैष्ठिकब्रह्मचारिण: प्रच्युतौ सत्यां
" आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा ॥ इति प्राय-श्चित्ताभावस्मृतेः पतित एवेति केचित् । केचित् नैष्ठिकस्य प्रच्यवनं उपपातक-मेवेति यथा ब्रह्मचारिण: मधुमांसाशने व्रतलोपः पुनस्संस्कारश्चोपलभ्यते तद्वत् प्रायश्चित्तसद्भावं मन्यन्ते । भिक्षुवैखानसयोरपि 'वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत् ।' 'भिक्षुर्वानप्रस्थवत् सोमवल्लिवर्जं स्व-शास्त्रसंस्कारश्च ।' 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्धभमालभेत' इति वानप्रस्थ-भिक्षुब्रह्मचारिणां प्रायश्चित्तस्मरणात् ॥

---

## अद्वैतम् बहिरधिकरणम् । (१४८)

### बहिस्तूभयथापि स्मृतेराचाराच्च । (४६८)

**वैखानसो ब्रह्मचारी सन्यासी कृतनिष्क्रियः ।**
**एते सर्वे बहिष्कार्याः ब्रह्मविद्भिश्च सर्वदा ॥ ४७ ॥**

**अ - र्थः ।** पूर्वोक्ताः स्वाश्रमप्रच्युताः प्रायश्चित्तेन शुद्धा अपि ब्रह्मविद्भिः बहिष्कार्या एव । 'विशुद्धानपि धर्मतो न संपिबेत्'
" बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संपिबेत् ॥
प्रायश्चित्तेप्यप इत्येन यदज्ञानकृतं भवेत् ।
कामतो अव्यवहार्यस्तु *वचनात् इह जायते ॥"
'नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते – कल्मषं तु निर्हन्यते' इति मनुस्मृत्या-पस्तम्बादिवचनप्रामाण्यात् ॥

---

## विशिष्टाद्वैतम् तद्भूताधिकरणम् । (११८)

**तद्भूतस्य तु नातद्भावो जैमिनिरपि नियमात्तद्रूपाऽभावेभ्यः ।**
**न चाधिकारिकमपि पतनानुमानात्तदयोगात् । (४५९) [४५८**
**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् । (४६०)**
**बहिस्तूभयथापि स्मृतेराचाराच्च । (४६१)**

---

* वचनात्=बालघ्नांश्च आरूढपतितं विप्रं इत्यादेः ।

**विना गृहस्थं तृतयाश्रमस्थाः च्युतास्स्वधर्माद्यदि निष्क्रियाद्यैः ।**
**शुद्धा अपि ब्रह्मविदा सदा ते कार्या बहिर्ब्रह्म विचारहीनाः ॥ ४८ ॥**

अ - र्थः । आश्रमभ्रष्टानां ब्रह्मविद्यासु नाधिकार इत्युच्यते । 'सन्यस्याग्निं न पुनरावर्तयेत्', 'अरण्यमियात् ततो न पुनरेयात्' इत्यादिवचनात् । पूर्वकाण्डे षष्ठाध्याये 'अवकीर्णी पशुश्च तद्वत्' इति सूत्रे ब्रह्मचर्यभ्रष्टस्य प्रायश्चित्तमुक्तमिति चेत् "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चितं न पश्यामि येन शुद्धयेत् स आत्महा ॥"
इति आत्मशुद्धिलक्षणप्रायश्चित्तनिषेधात् नैष्ठिकब्रह्मचारिणः अन्यस्य उपकुर्वाणब्रह्मचारिणः प्रायश्चित्तविषयं तत्सूत्रमित्यर्थः ॥

मध्वशनप्रायश्चित्तादिवत् नैष्ठिकब्रह्मचारिणोऽपि प्रायश्चित्तसद्भावं केचिदिच्छन्ति । उभयपक्षेऽपि ब्रह्मविद्यासु भ्रष्टानां नाधिकार एव । शिष्टाः भ्रष्टैः सह व्यवहारादिकमपि नेच्छन्ति ।

" शरणागतबालस्त्रीघातकान् संवसेन्न तु ।
चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥"

'विशुद्धानपि धर्मतो न संपिबेत्' इत्यादिवचनैः भ्रष्टैस्सह संवासव्यवहारभोजनादिकं न कर्तव्यमिति बालघ्नादि तुल्यतोक्तेः शिष्टैः बहिष्कार्या एवेत्यर्थः ॥

---

## द्वैतम् आधिकारिकाधिकरणम् । (१८३)

**ओं न चाधिकारिकमपि पतनानुमानात्तदयोगात् । (४७४)**
**ओं उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् । (४७५)**
**ओं बहिस्तूभयथापि स्मृतेराचाराच्च । (४७६)**

**ब्रह्मैश्वर्यप्राप्तुमिच्छन् *पतत्येव न संशयः ।**
**स्वयोग्यमुक्तिकामस्तु न तु दुष्यति कुत्रचित् ॥ ४९ ॥**
**चतुर्मुखार्षगन्धर्वस्थानादन्यशुभेच्छया ।**
**स्वार्हविरुद्धकामश्च विकाम इति भण्यते ॥ ५० ॥**

अ - र्थः । ज्ञानिभिरपि परमात्मैश्वर्यं ब्रह्मादीनामैश्वर्यं च नाकांक्ष्यम् ,

* पतति=ज्ञानीति शेषः ।

“ न देवपदमन्विच्छेत् कुत एव हरेर्गुणान् ।
इच्छन् पतति पूर्वस्मात् अधस्ताद्यत्र नोत्थितिः ॥
स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि ।
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम् ॥”
“ अन्यत्र शुभमाकांक्षन् न पतेदविरोधतः ।”

इति स्मृतेः देवर्षिगन्धर्वाणां स्थानादन्यस्य शुभस्याकांक्षया न दोषः इत्यर्थः ॥

यजुर्वेदब्राह्मणे तृतीयाष्टके ‘अग्निर्नः पातु कृत्तिकाः’ इत्यारभ्य विष्णवे स्वाहा, यज्ञाय स्वाहा, प्रतिष्ठायै स्वाहा इत्यन्तानुवाकेषुमध्ये ‘अग्निर्वा अकामयत अन्नादो देवानां स्यामिति स एतमग्नये कृत्तिकाभ्यः पुरोडाशं अष्टाकपालं निरवपत् ततो वै सोन्नादो देवानामभवत्’ इत्यादिभिः अग्न्यादि देवताः सर्वाः स्वकीयं पदं प्राप्तुमेव यागादिकं कृत्वा पुनः स्वकीयं पदं प्रापुरिति स्पष्टमुच्यते। तदालोचनया अनादि जातिवर्णाश्रमाचारोद्योगविशिष्टा एव जीवा वर्तन्ते । तेषु कर्मणा यद्यन्यजन्मप्राप्ताश्चेत् , तादृशजन्मप्रहाणेन स्वकीय जात्युद्योगादि-प्राप्त्यर्थं विष्णूपासनां कृत्वा ज्ञानं संपाद्य स्वकीयजात्यादिप्राप्तिरेव तेषां मुक्ति-रिति सम्यक् ज्ञायते । अन्यथा अग्न्यादि देवताः स्वकीयोद्योगप्राप्तिं हित्वा तदुपरिवर्तमानं अन्यदीय पदं प्राप्तुं कुतो न यागं कुर्युः । अपि च ‘आसौ वा आदित्यो देव मधु’ इति छान्दोग्यस्थ मधुविद्यायां ‘वसूनामेव तावदाधि-पत्यं पर्येत’ ‘वसूनामेवैको भूत्वा’ इत्यादिना वस्वादिपदप्राप्तिरूपं फलम् , वस्वादीनां ब्रह्मोपासनया सिद्ध्यतीति उच्यते । तदालोचनया च स्वकीयपद-प्राप्तिरेव मुक्तिरिति तादृशाकांक्षैव युक्ता नत्वधिकाकांक्षेति तात्पर्यम् ॥

मुक्तौ तारतम्यम् । अन्यस्य अन्यपदानाकांक्षा । तादृशाकांक्षायां स्वपद-भ्रम्शः इत्यादीनां प्रमाणदिङ्मात्रं उदाह्रियते । ‘ सैषानन्दस्यमीमांसा भवति ’ इत्यारभ्य ‘स एको ब्रह्मण आनन्दः’ ‘श्रोत्रियस्य चाकामहतस्य’ इत्यन्तं प्रति-पर्यायं चकारोपेत वाक्यजातं । ‘यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एष एव परमानन्दः’ इत्यत्र ‘अवृजनाकामहतपदद्वयं च ।

“ यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः ।
स हि मुक्तो अकामहतः स हि कामैर्नहन्यते ॥
कामस्सङ्कल्प आनन्दः मुक्तानां तारतम्यतः ।
स्वरूपभूतस्ते सर्वे निर्दोषागुणरूपकाः ॥”

‘सा काष्ठा सा परागतिः’ इति तारतम्यान्तग एव विष्णुरिति । ‘अक्षण्वन्तः

कर्णवन्तस्सखाय: मनोजवेष्वसमा बभूवु:' । मनोजवेषु=ज्ञानेषु, आनन्देषु, वेगेषु च । विष्णुसमा न भवन्तीत्यर्थ: । 'क्रियावन्त: श्रोत्रिया: ब्रह्मनिष्ठा:' 'क्रियावानेष ब्रह्मविदां वरिष्ठ:' इत्यादि श्रुतय: ।

"मुमुक्षूणां सदाचारवैकल्यं यावदायुषम् ।
भवेद्यदि तदानन्दो न्यूनता भवति ध्रुवम् ॥
मुक्तानामपि सिद्धानां नारायणपरायण: ।
सुदुर्लभप्रशान्तात्मा कोटिष्वपि महामुने ॥
अधिकं तव विज्ञानं अधिका च गतिस्तव ।
साधनस्योत्तमत्वेन साध्यं उत्तममाप्नुयु: ॥"

"सर्वैगुणाः ब्रह्मणैवब्रह्मुपास्याः नान्यैर्देवैः किमु सर्वैमनुष्यैः ।"

"लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये ।"

"आनन्दे तारतम्यं स्यात् आचारे तारतम्यत: ।
तत्तद्योग्यतयापूर्तौ विष्णो: दृष्टिः प्रजायते ॥
शुभकर्मभिराधिक्यं विपरीतैर्विपर्यय: ।"

"उषा स्वाहा च पर्जन्यः" इत्यारभ्य

"एतेभ्योऽभ्युधिका श्रीस्तु सदामुक्ता विशेषतः ।
तत्समो नास्ति परमो हरिरेव न चापरः ॥"

इत्यादि पुराणादय: । 'अयोग्यमारोढुं प्रयतन् पतन् हि दृश्यते इति श्रुति: ।

"अयोग्यमिच्छन् पुरुष: पतत्येव न सम्शय: ।
तस्माद्योग्यानुसारेण सेव्यो विष्णुः सदैव हि ॥" इत्यादयश्च ॥

ननु मुक्तौ 'ब्रह्म वेद ब्रह्मैव भवती'त्यादि श्रुतिभि: चैतन्यमात्रं निजस्वरूपं प्रकाशत इति । कथं एतादृशो भेदविशेष: इति चेत् न । ब्रह्मैव इत्यस्य ब्रह्मसदृशो भवति केनचिदानन्देन, एवकारस्य सादृश्ये एव तात्पर्यम् । 'विष्णुरेव भवती'ति श्रुतौ विष्णुसदृश एव भवतीति अर्थदृष्टे: । न च मुक्तौ जीवानां एक प्रकार एव निजस्वभाव: विज्ञानघन एव इत्यादि श्रुतेरिति वाच्यम् । निषेधविभाग, सामान्यविभाग, विधिविभाग, क्रियाविभागानां श्रुत्यादिषु मुक्तौ जीवानां दर्शनात् पूर्वोक्तं सर्वं योयुज्यत एवेति ॥

**सूत्रार्थः** । न चाधिकारिकमित्यादि—आधिकारिकमपि=चतुर्मुखाद्यैश्वर्यं परमात्मैश्वर्यादिकं च, न च=नाकांक्ष्यं, तदयोगात्=तादृशेच्छाया: अयुक्तत्वात् । पतनानुमानात्=स्वार्हफलविनाशपूर्वकाद्ययोग्यगतिश्रवणात् ॥ उपपूर्वमपीत्येकेभावशमनवत्तदुक्तम् । एके=आचार्या:, उपपूर्वमपि=उपदेवादि पदमपि भावशमनवत्=वसिष्ठादिप्रधानऋषि पदवत् , नाकांक्ष्यम् । तदुक्तम्=

'यथर्षीन् प्रजापतीन् नाकांक्षेत्' इति इन्द्रद्युम्नश्रुत्युक्तत्वात् ॥

बहिस्तूभयथापि स्मृतेराचाराच्च । बहिः=ब्रह्मदेवर्षिगन्धर्वपदेभ्यः, बहिः= शुभाकांक्षायां पतनं न । उभयथापि स्मृतेराचाराच्च ज्ञानभक्त्यादि विषये आकांक्षायामनाकांक्षायामपि पतनाभावस्मृतेः आचाराच्च=नानात्वमेवकामानां इत्यादि वचनात् ॥

---

## अद्वैतम् स्वाम्यधिकरणम् । (१४९)

**स्वामिनः फलश्रुतेरित्यात्रेयः । (४६९)**
**आर्त्विजमित्यौडुलोमिस्तस्मै हि परिक्रियते । (४७०)**
**श्रुतेश्च । (४७१)**

**उद्गीथचिन्ता ऋत्विग्भिः वृतैः कार्या न यज्वना ।**
**ऋत्विग्गतं सर्वफलं यजमानस्य कथ्यते ॥ ५१ ॥**

**अ-र्थः** । अङ्गोपासनाः 'ऋग्विजो वृणीते' इति वृतैः ऋत्विग्भिरेव कार्याः । 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासत' इति 'यजमानायैव तामाशासत इति होवाच' इति । 'तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काम-मागायानि' (छा. १-७-८) इत्यादिना ऋत्विग्गतमपि फलं यजमानस्यैवेत्युक्तेः ॥

---

## विशिष्टाद्वैतम् स्वाम्यधिकरणम् । (११९)

**स्वामिनः फलश्रुतेरित्यात्रेयः । (४६२)**
**आर्त्विजमित्यौडुलोमिस्तस्मै हि परिक्रियते । (४६३)**

**ऋत्विक्कार्यन्तु यागाङ्गभूतोद्गीथादि चिन्तनम् ।**
**यागीयसर्वकर्मार्थं वृणीते ऋत्विजो मखी ॥ ५२ ॥**

**अ-र्थः** । कर्माङ्गाश्रयोद्गीथाद्युपासनाः यजमानेन कर्तव्याः, उत ऋत्विग्भिः इति विशये उपासनेषु फलश्रवणात् फलस्य यजमानगामित्वात् यजमानेन कर्तव्या इति प्राप्ते 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यादिना ऋत्व-धिकृत ऋत्विक्कर्तव्या एव । ऋत्विगाशास्यं फलं सर्वं यजमानगाम्येवेति न दोषः ॥

---

## द्वैतम् फलश्रुत्यधिकरणम् । (१८४)

**ओं स्वामिनः फलश्रुतेरित्यात्रेयः । (४७७)**

ओं आर्त्विजमित्यौडुलोमिस्तस्मै हि परिक्रियते । (४७८)
ओं सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् (४७९)

विद्याफलं तु देवानां आत्रेयो मन्यतो श्रुतेः ।
ऋत्विजां फलदृष्टेश्च प्रजानां च फलं लघु ॥ ५३ ॥
यथा राज्ञः प्रजाः शिष्याः गुरोस्तद्वत् प्रजा इमाः ।
देवानां सहकारित्वे श्रुतास्तेषां महत्तरम् ॥ ५४ ॥
प्रजानां तु फलं स्वल्पं गुरुशिष्यवदिष्यते ।
गुरुर्महत्तरः प्रोक्तः तस्मात् देवा महत्तराः ॥ ५५ ॥

**अ - र्थः** । देवा एव ब्रह्मविदः, देवानामेव ब्रह्मप्राप्तिः, देवा एव ज्ञानिन इत्यात्रेयः मन्यते । सत्रयागेषु 'सर्वे यजमानाः सर्वे ऋत्विजः' इति न्यायात् प्रजानामपि ज्ञानसत्त्वात् तासामपि ब्रह्मप्राप्तिर्भवतीति औडुलोमिर्मन्यते । यथा गुरुः शिष्याय ज्ञानमुपदिशन् महत्तरं फलं लभते शिष्यः स्वल्पफलं, तद्वत् देवानां ज्ञानादिकर्मणि सह कार्यान्तरत्वेन विधीयन्ते प्रजाः । यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते तद्वत् देवसहकारिप्रजानामपि फलं भवति ।

" विहितस्सहकारित्वे सहकार्यन्तरं प्रजाः ।
धातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि ॥
तस्माच्छ्रुतं फलं तासामाचार्याणां महत्तरम् ।
ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम् ॥"

इत्यादि प्रमाणात् देवानां महत्तरं फलं, तदाश्रितप्रजानां च स्वल्पं फलं, तत्रापि आचार्यस्य महत्तरं फलमिति तारतम्यात् सर्वे फलवन्त इत्यर्थः ॥

**सूत्रार्थः** । स्वामिनः फलश्रुतेरित्यात्रेयः । फलमिति पृथक् पदं–लुप्त-प्रथमान्तं, 'ब्रह्मविदाप्नोति परं' इति ज्ञानफलं, स्वामिनः=देवानामेव, श्रुतेः = 'स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः' इति श्रुतेः । स्वामीति पदं देववाचकम् ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते–ज्ञानफलं–आर्त्विज्यं=अयजमानऋत्विजां फलम् । तस्मै हि=ज्ञानार्थमेव । परिक्रियते= देवैः ज्ञानफलं संपाद्यत इत्यर्थः ॥ सहकार्यन्तर इत्यादि–तद्वतः=प्रजावतो राज्ञः शिष्यवतो गुरोश्च, विध्यादिवत्=पालने ज्ञाने च प्रजानां शिष्याणां च, सहकार्यन्तर विधिः=सहकारिविशेषत्वेन विधानं, पक्षेण तृतीयं=मुख्यपक्षत्वे

तृतीयं मुक्तिरेवेत्यर्थः, इदमेव बादरायणमतम् । प्रजानामपि ज्ञाने सति मुक्तिरेव फलं न त्वन्यदिति तात्पर्यार्थः ॥

---

अद्वैतम् सहकार्यन्तरविध्यधिकरणम् । (१५०)

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । (४७२)**
**कृत्स्नभावात्तु गृहिणोपसंहारः । (४७३)**
**मौनवदितरेषामप्युपदेशात् । (४७४)**

**विद्यावतस्साधनतोपि मौनं विधीयते बाल्यवदेव वेदे ।**
**मुनेस्तु विद्या न परस्य चेन्न विद्यासमाना हि पराश्रमेषु ॥ ५६ ॥**

**गृहस्थेष्वेव विद्योपसंहारश्रुतिरस्ति चेत् ।**
**सर्वधर्मस्थितेस्तत्र सर्वेषामेव सूचनम् ॥ ५७ ॥**

**अ-र्थः** । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्य अथ मुनिः, अमौनं च मौनं च निर्विद्य अथ ब्राह्मणः' (बृ. ३-५-१) इत्यत्र ब्रह्मविद्यायाः सहकारिणः मौनस्य विधिः अङ्गीकर्तव्यः बाल्यपाण्डित्यविधिवत् । मुनिशब्दस्य मननान्मुनिरिति व्युत्पत्त्या 'मुनीनामप्यहं व्यासः' इत्यादिषु ज्ञानोत्तमेषु प्रयोगदर्शनेऽपि अत्र मौनमिति तृतीयं विद्यासहकारि विधेयमेव । एवं सर्वाश्रमे ब्रह्मविद्यासिद्धौ 'अभिसमावृत्य कुटुम्बे शुचौ देशे' इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, न पुनरावर्तते' इति गृहस्थाश्रमे ब्रह्मविद्योपसंहारः कथं संभवतीति चेत्, तत्र गृहस्थाश्रमे सर्वधर्मस्य विद्यमानत्वात् तेनोपसंहारः क्रियते । स च अन्याश्रमाणामपि ब्रह्मविद्या सूचक एव । इतराश्रमाणामपि 'त्रयो धर्मस्कन्धाः' इत्यत्र तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयः, 'ब्रह्मसंस्थो अमृतत्वमेति' इत्यादि श्रुतिभिः मौनविधिवत् इतरेषामप्याश्रमाणामुपदेशात् ॥

---

## विशिष्टाद्वैतम् सहकार्यन्तरविध्यधिकरणम् । (१२०)

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । (४६४)**
**कृत्स्नभावात्तु गृहिणोपसंहारः । (४६५)**
**मौनवदितरेषामप्युपदेशात् । (४६६)**

विद्यावतश्शमादिश्च यज्ञादिश्चाङ्गादि च ।
सहकारितया मौनं बाल्यात्पाण्डित्यतः पृथक् ॥ ५८ ॥

**विधेयं सहभावाच्च ब्राह्मणानामिदं समम् ।**
**गृहिणा चोपसंहारः कृत्स्नधर्मस्य तत्स्थितेः ॥ ५९ ॥**

**अ - र्थः ।** 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' (बृ. ५-५-१) इत्यत्र मुनिशब्दोत्तरं लिङाद्यभावात् मननानुवाद एवेति प्राप्ते विद्यावतः यज्ञादिशमदमादि विधिवत् सहकार्यन्तरं मौनं तृतीयमपि विधीयत इति 'अथ मुनिस्स्यात्' इत्यध्याहृत्य कल्प्य एव विधिः । ब्रह्मचारि-वानप्रस्थ-सन्यासाश्रमेष्वपि ब्रह्मविद्यादर्शनात् छान्दोग्ये यावदायुषं गृहस्थाश्रमधर्मनिष्ठस्यैव ब्रह्मविद्योपसंहारः कथं संगच्छत इति चेत् यज्ञादिसर्वधर्मस्य तत्र दर्शनात् तेनोपसंहारः, नत्वन्यनिषेधपर इति तात्पर्यात् ॥

---

## द्वैतम् कृत्स्नभावाधिकरणम् । (१८५)

**ओं कृत्स्नभावात्तु गृहिणोपसंहारः । (४८०)**
**ओं मौनवदितरेषामप्युपदेशात् । (४८१)**

**गृहस्थस्यैवोत्तमत्वं छान्दोग्यश्रुतिगोचरम् ।**
**"कृत्स्ना ह्येते च यतयः" इति श्रुत्याऽमृतान्धसाम् ॥ ६० ॥**

**चत्वारोप्याश्रमास्सन्ति देवा एवेति वेदतः ।**
**देवास्सर्वाश्रमस्था हि कर्म कुर्वन्ति चोत्तमाः ॥ ६१ ॥**

**अ - र्थः ।** छान्दोग्ये गृहस्थानामेव मुक्तिरिति श्रूयते । स च कृत्स्नगृहस्थान् देवानपेक्ष्यैव मुक्त्युपसंहारः क्रियते । 'कृत्स्ना ह्येते गृहिणो देवाः

कृत्स्नाह्येते यतयोत एतेषां न पुत्रादायमुपयन्ति न चैते गृहान्विसृजन्ति' इत्यादि श्रुतेः । तर्हि गृहस्थाःयतयश्चैव नत्वन्याश्रमनिष्ठा इति चेन्न, 'देवा एव ब्रह्मचारिणः, देवा एव गृहस्थाः, देवा एव वनस्थाः, यथा ह्येते मुनयः एवं सर्ववर्णाः सर्वाश्रमाः इत्यादि श्रुतेः देवेषु सर्वाश्रमश्रुतेः ॥

**सूत्रार्थः** । कृत्स्नभावात्तु गृहिणोपसंहारः । —कृत्स्नभावात्तु = कृत्स्नगृहस्थाश्रमधर्मवत्त्वात्, गृहिणा = गृहस्थेन, उपसंहारः = " न च पुनरावर्तते " इत्याद्युपसंहारः ॥ मौनवदितरेषामप्युपदेशात् । —मौनवत् = यतित्ववत्, इतरेषामप्युपदेशात् = 'देवा एव ब्रह्मचारिणः, देवा एव गृहिणः, देवा एव वानप्रस्थाः, देवा एव सन्यासिनः' इत्याद्युपदेशात् चत्वारोप्याश्रमाः देवेषु सन्तीत्यर्थः ॥

---

## अद्वैतम् अनाविष्काराधिकरणम् । (१५१)

### अनाविष्कुर्वन्नन्वयात् । (४७५)

**अनुष्ठेयं बाल्यमिति ब्रह्मनिष्ठस्य कथ्यते ।**
**डम्भदर्पादिराहित्यं तत्स्वेच्छा चरणं न हि ॥ ६२ ॥**

**अ - र्थः** । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ. ३-५-१) इति श्रुत्या ब्रह्मनिष्ठस्य बाल्यविधानं प्रतीयते । तत्र बाल्यशब्दार्थः शैशवकृत्यं वा, उत स्वप्राभवानाविष्करणं वेति संशये लोके कामचारवदभक्षणादिकं बाल्यमिति प्रसिद्धम् । तदेवात्र "ज्ञानाग्निसर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति गीतावचनात् गाह्यमिति प्राप्ते डम्भदर्पादिराहित्यमेव बाल्यशब्दार्थः, तदेव ज्ञानिना अनुष्ठेयं, लोकप्रसिद्धबाल्यशब्दार्थगृहणे ज्ञानाभ्यासो न संभाव्यते ।

" यं न सन्तं न चान्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥
गूढधर्माश्रितो विद्वानज्ञानचरितं चरेत् ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥"

" अव्यक्तलिङ्गोऽव्यक्ताचारः नाविरतो दुश्चरितात् नाशान्तो नासमाहितः " इत्यादि श्रुतिस्मृतिभिः ब्रह्मनिष्ठस्य कामचारादिकं निषिद्धमेव । अतः ब्रह्म-

निष्ठस्य यावदायुषं शास्त्रीयकर्माचरणं, शास्त्रनिषिद्धानाचरणं च कुर्वन् डम्भादि-राहित्यवान् ज्ञानं संपादयेत् इत्येव शास्त्रतात्पर्यात् इत्यर्थः ॥

" ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः एकैकश्च चतुर्विधः ॥"

तत्र ब्रह्मचारिणो वृत्तिभेदाः, गायत्राः, ब्राह्माः, प्राजापत्याः, बृहन्निति । गृहस्थ-वृत्तिभेदाः वार्तावृत्तयः, शालीनवृत्तयः, यायावराः, घोरसन्यासिकाश्चेति । वानप्रस्थवृत्तिभेदाः वैखानसाः, औदुम्बराः, बालखिल्याः, फेनपाश्चेति । यतिवृत्तिभेदाः, कुटीचक, बहूदक, हंस परमहंसा इति । एते सर्वेऽपि स्वीयशास्त्राविरुद्धं कर्म कुर्वन्त एव ब्रह्मज्ञानिनो भवेयुरिति ॥

---

## विशिष्टाद्वैतम्　अनाविष्काराधिकरणम् । (१२१)

### अनाविष्कुर्वन्नन्वयात् । (४६७)

**कामचारादिकं बाल्यं किमु डम्भादि हीनता ।**
**ज्ञानिनस्स्वीयमहिमप्रकाशाभाव एव तत् ॥ ६३ ॥**

**दुश्चरित्रान्निवृत्तस्य शान्तचित्तस्य योगिनः ।**
**प्रज्ञानाद्ब्रह्मलाभोक्तेः बाल्यं गर्वादिहीनता ॥ ६४ ॥**

**अ-र्थः** । ब्रम्हनिष्ठस्य बाल्यविधिः श्रूयते । तच्च बाल्यं डम्भादिरहित-त्वमेवेति निश्चीयते । 'नाविरतो दुश्चरितात्', 'आहारशुद्धौ सत्वशुद्धिः' इत्यादि श्रुतिभ्यः कामचारादिबाल्यकृत्यस्य निषेधात् । अतः अहं ब्रम्हवित्, अभिजनविद्यावान् इत्यादि गर्वानाविष्करणमेव बाल्यशब्दार्थः इति सिद्धम् ॥

---

## द्वैतम्　अनाविष्काराधिकरणम् । (१८६)

### अनाविष्कुर्वन्नन्वयात् । (४८२)

**गुरुश्च ब्रह्मविज्ञानं न सर्वेभ्यो दिशेत् स्वयम् ।**
**योग्याय ऋजवे ब्रूयात् नायोग्याय कदाचन ॥ ६५ ॥**

**अ-र्थः ।** ब्रह्मज्ञानोपदेशश्च सच्छिष्यायैव प्रसिद्ध सभाचत्वरादिस्थानेषु प्रकाशमकुर्वाणस्सन्नेव रहसि कर्तव्यः । 'विद्या ह वै ब्रह्मणमाजगाम । गोपाय मा शेवधिष्टेहमस्मि । अनार्यकायानृजवे शठाय । न मां ब्रूयाः ऋजवे ब्रूहि नित्यम् ॥' इत्यादि प्रमाणात् अयोग्यानामुपदेशो न कार्य इति सिद्धम् ॥

**सूत्रार्थः ।** अनाविष्कुर्वन्नन्वयात्=गुरुः—सामान्यतः=सर्वत्र विद्यां—अना-विष्कुर्वन्=प्रकाशमकुर्वाणस्सन्—रहसि सच्छिष्यायोपदिशेत् । अन्वयात्= अनर्थप्राप्त्यभावरूपान्वयात् । यत्र कुत्रचित् स्थित्वा उपदेशे अयोग्यानामपि ज्ञानोत्पत्तिस्स्यात् । तथा सति गुरोरनर्थप्राप्तिस्स्यात् ॥

अत एव ऋग्वेदे (२-२३-१६) 'मानस्तनेभ्यो ये अभिद्रुहस्पदे निरा-मिणो रिपवो अन्येषु जागृधुः, एषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ॥ अथोपशमेनापरता मनुष्याः ये धर्मिणो ब्रूहि तेभ्यस्सदानः । आदेवाना मोहते वित्रयो हृदि ब्रह्मणस्पते न परं साम्नो विदुरिति ॥'' एतत् मन्त्रद्वयं पठितम् । एतदर्थश्च हे ब्रह्मणस्पते ! वेदस्य पते वायो ! निरामिणः— भगवदुत्तमतत्वज्ञानिनः, रिपवः=तद्विरोधिनः, अन्येषु=भोगेषु, जागृधुः=अभि-लाषांचक्रुः । अभिद्रुहस्पदे=अत्यन्त विष्णुवैष्णवद्रोहफलस्य नित्यनिरतिशय-दुःखाकरे तमसि-स्थातुमर्हा इति शेषः । मानस्तेनेभ्यः - मा - न - स्तेनेभ्यः= सदा सद्विलक्षणं अनिर्वाच्यं च जगत् ब्रह्मनिर्गुणम् , इत्युपदेष्टृभ्यः "किं तेन नाकृतं पापं चोरेणात्मापहारिणा ॥'' इति अन्यथा उपदेष्टृभ्यः 'एषां नैतत् नापरं किञ्चनैकं' इति वदद्भ्यः कदाचिदपि, नः=अस्मान्—मा ब्रूहीत्यर्थः । हे बृहस्पते ! हे वाण्याः ( बृहत्याः ) पते वायो ! ये उपशमेन=विष्णुभक्त्या, उपरताः = विष्णौ रताः, मनुष्याः=मननशीलाः, धर्मिणः = निष्कामशीलाः, तेभ्यः सदा नः ब्रूहि । ये च देवानां हृदि, त्रयः=सकारान्तनपुंसकलिङ्गं त्रं वरं यं नियामकं ब्रम्हेत्यर्थः । हृदि—वि-आ-ओहते—हृदिव्योहते=हृदि वहन्ति, साम्नः—विष्णोः परं, परं—उत्तमम् , न विदुः—न जानन्ति । तेभ्यः नः सदा ब्रूहीत्यर्थः । विद्येति——विद्या=विद्यादेवता, ब्राह्मणं=वायुं, आजगाम हे वायो ! मां गोपाय रक्ष, अहं ते शेवधीः निधिभूतोस्मि । मां अनार्यकाय=अयोग्याय, अनृजवे=विपरीतचित्तवृत्तये, शठाय=दोषदर्शे, न ब्रूयाः इति विद्यादेवता प्रार्थनावचनमिति ॥

---

## अद्वैतम्　ऐहिकाधिकरणम् । (१५२)

### ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । (४७६)

**विद्याफलं त्वैहिकमेव वा स्यात् आमुष्मिकं वा प्रतिबन्धहानौ ।**
**गर्भस्थितस्सन्नपि वामदेवः यद्ब्रह्मभावं समवाप तस्मात् ॥६६॥**

अ-र्थः । विद्या इहैव जन्मनि सिद्ध्यति उत अमुत्रापीति संशये विद्या इह जन्मनि सिद्ध्यति, प्रारब्धप्रतिबन्धाभावे । प्रतिबन्धे सति अमुत्रापि गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती श्रुतिः, जन्मान्तरे विद्योत्पत्तिं दर्शयति । अतश्च विद्याफलमैहिकं आमुष्मिकं वेति स्थितम् इति ॥

---

## विशिष्टाद्वैतम्　ऐहिकाधिकरणम् । (१२२)

### ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । (४६८)

**ऐहिकामुष्मिकफला विद्या फलवती तदा ।**
**प्रतिबन्धविनाशस्स्यात् यदेहामुत्र वा भवेत् ॥ ६७ ॥**

अ-र्थः । अभ्युदयफला विद्या इह जन्मनि प्रारब्धप्रतिबन्धाभावे फलं ददाति । प्रतिबन्धे सति अन्यजन्मनि । इति ॥

---

## द्वैतम्　ऐहिकाधिकरणम् । (१८७)

### ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । (४८३)

**प्रारब्धप्रतिबन्धे स्यात् ब्रह्मदर्शनमैहिकम् ।**
**प्रतिबन्धस्य सत्त्वे तु दर्शनं त्वन्यजन्मनि ॥ ६८ ॥**

अ-र्थः । 'आत्मा वा अरे द्रष्टव्ये'ति ब्रह्मदर्शनं इहैव जन्मनि प्रारब्धप्रतिबन्धाभावे भवेत् । तत्सत्त्वे तु जन्मान्तरेऽपि वा ।

"श्रुत्वात्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत् ।
यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य ॥"

इति श्रुतेः ॥ स्पष्टस्सूत्रार्थः ॥

---

## अद्वैतम् मुक्तिफलानियमाधिकरणम् । (१५३)

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । (४७७)**

**इह वाऽमुत्र वा विद्या सिद्ध्यतीति तथा फले ।**
**मोक्षे स नियमो नात्रेत्येकलिङ्गावधारणात् ॥ ६९ ॥**

**अ - र्थः** । मुक्तिलक्षणे विद्याफले ऐहिकामुष्मिकविशेषप्रतिपत्तिनियमो न । सगुणासु विद्यासु तथात्वेऽपि निर्गुणविद्यायां ब्रह्मैव हि मुक्त्यवस्था । सम्यग्ज्ञानं यदा, तदा मुक्तिरेवेति एकलिङ्गत्वावधारणात् । 'स एष नेति नेत्यात्मा', 'यत्र नान्यत् पश्यति', 'ब्रह्मैवेदममृतम्' इत्यादि श्रुतिभ्यः इति ॥

---

## विशिष्टाद्वैतम् मुक्तिफलाधिकरणम् । (१२३)

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । (४६९)**

**मुक्तिसाधनविद्यापि प्रतिबन्धे निराकृते ।**
**सिद्ध्यत्येवेति सूत्रस्य फलं किमिति चोच्यते ॥ ७० ॥**

**ब्रह्मवित् पापवर्गाणामनन्तानां महीयसां ।**
**संभवात्तदभावे स्यात् इति सूत्रफलं विदुः ॥ ७१ ॥**

**अ - र्थः** । मुक्तिफलाब्रह्मविद्या पूर्वाधिकरणेनैव प्रतिबन्धे सति जन्मान्तरे प्रतिबन्धाभावे तदानीमेव सिद्ध्यतीति, एवं मुक्तिफलेत्यतिदेशसूत्रेण किं प्रयोजनमिति चेत् सर्वेभ्यः कर्मभ्यः कर्मसमुच्चितज्ञानस्य प्रबलत्वात् प्रतिबन्धकाभावात् इहैव सिद्ध्यतीति काचिदाशङ्का भवत्येव । तथापि ब्रह्मविद्यायाः प्रबलत्वेऽपि प्रबलेभ्यः सर्वेभ्यः पाप्मभ्यः प्रबलब्रह्मविदपचाराणासंभवात् मुक्तिफलानियमकथनार्थं इति । सूत्रम् सफलमेव ।

" घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथाहम् ।
स पापकृत् ब्रह्मदवाग्निदग्धः वध्यश्च दण्ड्यश्च न चास्मदीयः ॥"

इत्यादि भारतप्रमाणात् भगवदनुग्रहविरोधि ब्रह्मविदपचारसंभवात् । इति ॥

शार्ङ्गिन्! तवाद्यकरुणावशतस्तृतीया-
　ध्यायोपि पूर्तिमगमन् मतसंग्रहेस्मिन् ।
वैराग्यबुद्धिरभवन् मम नाकलोके
　जाता त्वदीयगुणविग्रहलोकनेच्छा ॥

---

द्वैतम्　मुक्तिफलाधिकरणम् । (१८८)

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । (४८४)

एवं प्रारब्धकर्मान्ते मुक्तिर्भवति धीमताम् ।
अन्त्यदेहस्य पतनं यदा मोक्षस्तदा भवेत् ॥ ७२ ॥

**अ - र्थः** । मुक्तिरूपफलमपि प्रारब्धकर्माभावे शरीरपातानन्तरमेव भवति । तत्सत्त्वे जन्मान्तरेष्विति अनियमः ।

" अवसन्नं यदारब्धंकर्म तत्रैव गच्छति ।
न चेत् बहूनि जन्मानि प्राप्यैवान्ते न संशयः ॥" इति

अनियमप्रमाणात् । 'धर्मे स्वर्गं, विधर्मे निरयमेत्येव, ब्रह्मसंस्थो अमृतत्वमेत्येव' इति श्रुत्या " विद्वानमृतमाप्नोति नात्र कार्या विचारणा " इति शास्त्राच्च ब्रह्मनिष्ठस्य मोक्षस्सिद्धः इति ॥

ननु चतुर्मुखस्य सर्वगुणोपासकत्वेनोत्तमत्वात् तस्य प्रारब्धं कर्म चतुर्मुखपदमेव तदवसाने तस्य मोक्षः । तथैवेन्द्रादीनामपि ज्ञानित्वेन तेषां च निषिद्धाचरणाभावात् तत्तत्पदावसाने तेषामपि 'ब्रह्मणा सह ते सर्वे' इति वचनेन ब्रह्मलोकप्राप्तिद्वारा मोक्ष इति शास्त्रं चेत् ।

" ब्रह्मचर्मशिरःपट्टी दिक्पालोर्ध्वाङ्गभूषणः ।
द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः ॥
नृसिंहरूपी सर्वेषां भित्वा ताभिरलंकृतः ।
नृत्यते प्रलये देवः स्वयं कृष्णादिरूपवान् ॥
अदग्ध्वैव तनुं याति नित्यानन्दस्वरूपतः ।
लक्ष्मीकान्त समन्ततोपि कलयन्नैवेशितुस्ते समं
　पश्याम्युत्तमवस्तु दूरतरतोपास्तं रसो योऽष्टमः ।
यद्रोषोत्करदक्षनेत्रकुटिल प्रान्तोत्थिताग्निस्फुरत्-
　खद्योतोपमविष्पुलिङ्गभसिता ब्रम्हेशशक्रोत्कराः ॥"

इति आचार्यवचनादिभिः ब्रम्हेशादीनां विष्णावपचारकरणं ततश्च तन्नाशः

इत्यादि प्रतिभाति । तत् कथं युक्तमिति चेत् नैवम् । पौण्ड्रकवासुदेववत् तन्नामधारिणः असुरा एव ते तत एव श्री नृसिंहरोषाग्निना दग्धा इत्यर्थात् न दोषः इति ॥

" शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ।
मिथ्याज्ञानेन च तमोज्ञानेनैव परं पदम् ॥
यदि तस्माद्विरक्तस्सन् ज्ञानमेव समाश्रयेत् ।
सर्वावस्था प्रेरकश्च सर्वरूपेष्वभेदवान् ॥
सर्वदेशेषु कालेषु स एकः परमेश्वरः ।
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥
सच्चिदानन्द आत्मेति मनुष्यैस्तु सुरेश्वरैः ।
यथाक्रमं बहुगुणैः ब्रह्मणात्वखिलैर्गुणैः ॥
उपास्यस्सर्ववेदैश्च सर्वैरपि यथा बलम् ।
ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम् ॥
सर्वेऽपि पुरुषार्थास्स्युः ज्ञानादेव न संशयः ।
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ॥
गुणदोषैस्सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥"

॥ इति एतदध्यायसंग्रहः अणुभाष्योक्तेः ॥

**॥ इति मतत्रयसारसंग्रहे तृतीयाध्याये चतुर्थः पादः ॥**

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां दानाधिकारिणां

**विद्वन्मण्डमण्डनाख्यबिरुद विद्यावारिध्याख्यबिरुदालंकृतानां**

मतत्रयनिरूपकाणां कालि. वङ्गीपुरं. **रङ्गाचार्याणां** कृतिषु

॥ मतत्रयसारसंग्रहः संपूर्णः ॥

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

கோவாபரேடிவ் பிரஸ், புதுக்கோட்டை.

॥ श्रीः ॥

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# ॥ मतत्रयसारसंग्रहे ॥

## ॥ चतुर्थाध्याये — प्रथमः पादः ॥

श्रीमन्नृसिंह श्रीशार्ङ्गिन् सर्वविघ्ननिवारक ! ।
मतत्रयसारस्य शेषपूर्तिं कुरु द्रुतम् ॥

अद्वैतम् आवृत्त्यधिकरणम् – १५४

ओं ॥ आवृत्तिरसकृदुपदेशात् । (४७८)
लिङ्गाच्च । (४७९)

गतो विद्यासु सर्वासु विचारस्साधनाश्रितः ।
फलाश्रयो विचारस्तु तृतीये संभविष्यति ॥ १ ॥
यद्ब्राह्मणो वेदनमुच्यते तत् सकृत्कृतं वाऽऽसकृदेव वेति ।
ब्रह्मापरोक्ष्यं हि फलं तु तस्यावघातवद्वेदनमभ्यसेत्तु ॥ २ ॥
वाक्यार्थज्ञानतो मुक्तेः आवृत्त्या किं फलं भवेत् ।
मैवं तत्त्वमसीत्यस्याप्यावृत्तिः श्रुतिविश्रुता ॥ ३ ॥
वाक्यार्थज्ञानसंपत्तिः वेदनाभ्यसनाद्भवेत् ।
प्रायेण मन्दप्रज्ञा ये तेषामावृत्तिरिष्यते ॥ ४ ॥

**अधिकरणार्थः ।** "आत्मा वा अरे द्रष्टव्यः" (बृ. ४–५–६) "तमेव धीरो विज्ञाय" (बृ. ४-४-२१) 'सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः' (छा. ८-७-१) इत्यादौ ज्ञानसंपादनं सकृत्कृतमेव उत आवृत्त्या वेति संशये यथा यागादौ प्रयाजादि यागाः सकृदेवानुष्ठेयाः, तद्वत् सकृदेवेति प्राप्ते ज्ञानावृत्तिः कर्तव्या । "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादि श्रुतिभ्यः ज्ञानावृत्तिरेव प्रतीयते । यथा 'व्रीहीनवहन्ति' इत्यत्र तण्डुलादि

निष्पत्तिपर्यन्तं अवघातादयो आश्रियन्ते तथा ब्रह्मसाक्षात्कारपर्यन्तं ज्ञानावृत्तिः कर्तव्या । प्रयाजादयस्तु अङ्गत्वेन श्रुताः सकृदेवेति न दोषः ।

यदि 'तत्वमसि' इत्यादिना जन्यं, ज्ञानं 'तं विद्याकर्मणी समन्वारभेते' इत्यादि श्रुत्या, 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते' इति स्मृत्या च पूर्वसुकृतवशात् साक्षात्कारजनकं भवेत्, तदा तस्य नावृत्तिः । प्रायेण मन्दप्रज्ञा हि लोके दृश्यन्ते । बहूनामुपकाराय प्रवृत्तत्वाच्छास्त्रस्य सामान्येन मन्दप्रज्ञानां आवृत्तिविधानार्थमिदमधिकरणम् । इति ॥

---

**विशिष्टाद्वैतम् आवृत्त्यधिकरणम् । (१२४)**

**शार्ङ्गिन्! सपरिवारं त्वां प्रपद्ये शरणं मुदा ।**
**शेषस्तुरीयाध्यायोत्र लिख्यते फलकामिना ॥**

**आवृत्तिरसकृदुपदेशात् । (४७०)**
**लिङ्गाच्च । (४७१)**

**तृतीये लक्षणे पूर्वं साङ्गा विद्या विचारिता ।**
**विद्याफलं चतुर्थेऽत्र सविशेषं विचिन्त्यते ॥ ५ ॥**

**सकृत्कर्तव्यमेवात्र वेदनं नाभ्यसेदिति ।**
**ब्रम्हैव वेद यो ब्रह्म सयुक्त्युक्तः न चास्ति तत् ॥ ६ ॥**

**विजातीयप्रत्ययार्थध्यानादेव विमोक्षणम् ।**
**आवृत्त्यैव तु साध्यं तत् ध्यानोपास्त्यादिनोच्यते ॥ ७ ॥**

**अधिकरणार्थः** । 'तमेवं विदित्वाऽतिमृत्युमेति' (श्वे. ३-८) 'ब्रह्म वेद ब्रह्मैव भवति' (मु. ३-२-९) इत्यादि विहितं वेदनं सकृत्कृतमेव फलवत् उत असकृत् कृतमिति । असकृत्कृतमेव फलवदिति सिद्धान्तः । 'निदिध्यासितव्यः' इत्यादिना विहितं ज्ञानं असकृदावृत्तसन्ततस्मृतिरूपमिति । 'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैष्षड्भिरङ्गै-

निष्पाद्यते तथा' ॥ इति विष्णुपुराणश्लोके प्रथमैष्षड्भिः अङ्गैः ध्यानं निष्पद्यते इत्यर्थात् असकृदावृत्तिरेव संपाद्येति निश्चीयते । 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादि वेदनस्य 'तादृगेव भवति' 'परमं साम्यमुपैति' इत्यादि श्रुत्यैकार्थाय अत्रत्य एव शब्दस्य इवार्थकमाश्रित्य ब्रह्मसदृशो भवतीत्यर्थः ॥

---

द्वैतम् आवृत्त्यधिकरणम् । (१८९)

ओं आवृत्तिरसकृदुपदेशात् । (४८५)

ओं लिङ्गाच्च । (४८६)

**कर्मनाशाद्द्वयफलं चतुर्थेऽस्मिन्निरूप्यते ।**
**श्रवणाद्येकवारेण न फलप्राप्तिरिष्यते ॥ ८ ॥**
**'ऐतदात्म्यमिदं सर्व'मसकृत् पठितं श्रुतौ ।**
**'भृगुर्वै वारुणिरि'ति गुरूपसदनश्रुतेः ॥ ९ ॥**
**नित्यशः श्रवणाद्येव कार्यं मोक्षार्थिभिस्स्वयम् ।**
**ब्रह्मणो दर्शनं यावत् ध्यानाद्यभ्यसनं भवेत् ॥ १० ॥**

**अधिकरणार्थः ।** 'आत्मा वा अरे द्रष्टव्यः' इत्यादिना विहितश्रवणादिकं 'स य येषो अणिमा ऐतदात्म्यमिदं सर्वं' इत्याद्यसकृदुपदेशात्, 'भृगुर्वै वारुणिः स तपो तप्यत, पुनरेव वारुणं पितरमुपससार' इत्यादिना पुनः पुनः गुरूपसत्या श्रवणाद्यावर्तनदर्शनात् 'नित्यशः श्रवणं चैव मननं ध्यानमेव च । कर्तव्यमेव पुरुषैः ब्रह्मदर्शनमिच्छुभिः ।' इति प्रमाणाच्च ध्यानावृत्तिः कर्तव्या ॥

---

अद्वैतम् आत्मत्वोपासनाधिकरणम् । (१५५)

आत्मेतितूपगच्छन्ति ग्राहयन्ति च । (४८०)

**ध्यानं कथं कार्यमहं तदन्यः मत्तोन्य आत्मेत्यहमेव वा सः ।**
**ब्रह्माहमस्म्येषत एवमाद्यैः अहं परात्मेति विचिन्तनीयः ॥ ११ ॥**

**अधिकरणार्थः ।** परमात्मा चिन्तनीय इत्यत्र अहं परमात्मा इति वा, मत्तो अन्यः परमात्मा इति वेति विशये 'त्वं वाऽहमस्मि भगवो देवते,

अहं वै त्वमसि देवते' (बृ. ५-७-२२) इति 'अहं ब्रह्मास्मि' 'एष त आत्मा सर्वान्तरः (बृ. ३-४-१) 'तत्सत्यं स आत्मा तत्त्वमसि' (छा. ६-८-७) इत्यादि श्रुतिभिः अहमात्मेत्येव ध्येयः। इति ज्ञायते ॥

---

**विशिष्टाद्वैतम्** आत्मत्वोपासनाधिकरणम्। (१२५)

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च। (४७२)**

**उपासकस्यात्मतया परात्माध्येयश्शरीरी निरुपाधिकस्सः।**
**देहस्य नैजस्य यथाऽयमात्मा स्वात्मान्तरात्मा स तथाह्युपास्यः ॥१२॥**

**अधिकरणार्थः।** उपासकः जीवात्मा स्वदेहस्य यथा स्वयमात्मा तथा स्वात्मनोऽपि परमात्मा आत्मा इत्येव उपासीत इत्यर्थः। 'य आत्मनि तिष्ठन्' इत्यादिना शिष्येभ्य एवमेवोपदिशन्ति च। इति ॥

---

**द्वैतम्** आत्माधिकरणम्। (१९०)

**ओं आत्मेति तूपगच्छन्ति ग्राहयन्ति च। (४८७)**

**आत्मा विष्णुरितिध्येयः आत्मेत्युपदिशेद्गुरुः।**
**'आत्मा ह्येवैष भवति'त्यादिमानात् गुरूक्तितः ॥ १३ ॥**

**अधिकरणार्थः।** उपासकैः आत्मा विष्णुरिति ध्येयः। आत्मा विष्णुः मम स्वामीति ध्येयः, नान्यं चिन्तयेत् इति शिष्येभ्यः उपदिशन्तीत्यर्थः। 'आत्मेत्येवोपास्यः', 'आत्माह्येवैष भवति' इति ग्राहयन्ति च इत्यादि प्रमाणात्। इति ॥

---

**अद्वैतम्** प्रतीकाधिकरणम्। (१५६)

**न प्रतीके न हि सः। (४८१)**

**मन आदि प्रतीकोपासनेष्वात्ममतिर्न हि।**
**प्रतीकसदृशो ध्याता तदात्मेति न चिन्तयेत् ॥ १४ ॥**

**अधिकरणार्थः** । स यो नामब्रह्मेत्युपास्ते (छा. ७-१-५) इत्यादौ प्रतीकोपासने आत्मेत्येवोपासना कार्या । नामादीनां ब्रह्मविकारत्वेन ब्रह्मत्वोपपत्तेः इति प्राप्ते प्रतीकोपासने नात्ममतिः कार्या । नामादीनां ब्रह्मविकारत्वाभ्युपगमे प्रतीकाभावप्रसङ्गात् । अतः प्रतीकेषु आत्मदृष्टिः न क्रियते । इति ॥

---

**अद्वैतम्** **ब्रह्मादृष्ट्यधिकरणम्** । (१५७)

**ब्रह्मदृष्टिरुत्कर्षात्** । (४८२)

**नामादौ ब्रह्मदृष्टिस्स्यात् न ब्रह्मणि तथा विधा ।**
**निकृष्टे तु समुत्कृष्टदृष्टिः कार्येति शास्त्रतः ॥ १५ ॥**

**अधिकरणार्थः** । 'आदित्यो ब्रह्मेत्यादेशः' (छा. ३-१९-१) इत्यादौ आदित्यादौ ब्रह्मदृष्टिः कर्तव्या न ब्रह्मणि आदित्यादि दृष्टिः । उत्कृष्टदृष्टिः निकृष्टे कर्तव्या इति न्यायात् । प्रतीकोपासकस्य फलदाता तु ईश्वर एव । 'फलमत उपपत्तेः' इत्यत्रोक्तमेव ॥

---

**विशिष्टाद्वैतम्** **प्रतीकाधिकरणम्** । (१२६)

**न प्रतीके न हि सः** । (४७३)

**ब्रह्मदृष्टिरुत्कर्षात्** । (४७४)

**नामब्रह्म मनोब्रम्हेत्युपास्तौ नात्मचिन्तनम् ।**
**नामादौ ब्रह्मदृष्टिर्हि विपरीते निकृष्टता ॥ १६ ॥**

**अधिकरणार्थः** । 'मनोब्रह्मेत्युपासीत' (छा. ३-१८-१) इत्यादि प्रतीकोपासनेषु प्रतीक एवोपास्यः न ब्रह्म । प्रतीकोपासनं चाब्रह्मणि ब्रह्मदृष्ट्या अनुसन्धानम् । उपास्य प्रतीकस्य उपासितुरात्मत्वाभावात् न तथा अनुसन्धेयम् । मन आदिषु ब्रह्मदृष्टिरेव युक्ता । न ब्रह्मणि मन आदि दृष्टिः । इति ॥

---

द्वैतम् न प्रतीकाधिकरणम् । (१९१)

न प्रतीके न हि सः । (४८८)

**नामब्रम्हेत्याद्युपास्तौ नामादौ वर्तते हरिः ।**
**प्रथमान्ताविभक्तिश्च सप्तम्यन्ते समर्थिता ॥ १७ ॥**

**अधिकरणार्थः ।** नामादि प्रतीके ब्रह्मदृष्टिर्नकार्या । नामादौ ब्रह्म वर्तत इति ध्येयम् । 'नामादि प्राणपर्यन्तं उभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिः अबुधानां भविष्यति ॥' 'नामादि स्थितिरेवात्र ब्रह्मणो हि विधीयते । सर्वथा प्रथमा यस्मात् सप्तम्यर्था ततो मता ॥" इति सिद्धान्तात् ।

छान्दोग्ये 'नाम ब्रह्मेत्युपास्ते' इत्यारभ्य 'प्राणं ब्रह्मेत्युपास्ते' इत्यन्त-वाक्यसमूहे प्रथमान्तद्वितीयान्तपदानां सप्तम्यन्त एवार्थः । प्रथमाविभक्तिश्च सर्वविभक्त्यर्थप्रतिपादिकेति सर्वत्र सप्तमी विभक्तिरेवाङ्गीकार्या इत्यर्थः ॥

सूत्रार्थः स्पष्टः ।

---

द्वैतम् ब्रह्मदृष्टयधिकरणम् । (१९२)

ओं ब्रह्मदृष्टिरुत्कर्षात् । (४८९)

**सर्वैर्विष्णौ ब्रह्मदृष्टिः कार्या ब्रह्म महत्स्मृतम् ।**
**आत्मोपास्तावपि ब्रह्मध्यानयुक्तं हि युज्यते ॥ १८ ॥**

**अधिकरणार्थः ।** सर्वैः विष्णावेव ब्रह्मदृष्टिः कार्या, ब्रह्मणः उत्कृष्ट-त्वात् । 'ब्रह्मदृष्ट्या सदोपास्यो विष्णुस्सर्वैरपि ध्रुवम् । महत्त्ववाची शब्दोऽयं महत्वज्ञानमेव हि ॥ सर्वतः प्रीतिजनकं अतस्तत्सर्वथा भवेत् । आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत् ॥' इति ब्रह्मतर्कप्रमाणात् ब्रह्मशब्दार्थविशिष्टं आत्मेत्युपासनं कार्यम् ॥

---

**अद्वैतम्	आदित्यादिमत्यधिकरणम् । (१५८)**

**आदित्यादिमतयश्चाङ्ग उपपत्तेः । (४८३)**

**तमुद्गीथमुपासीतेत्यादित्यादि मतिस्तु सा ।**
**उद्गीथादिषु कर्तव्या कर्मर्धिर्विद्ययोच्यते ॥ १९ ॥**
**अनङ्गसंश्रयार्कादिमतिरुद्गीथ एव सा ।**
**निर्देशानां व्यत्ययेपि तुल्या युक्तिर्हि दृश्यते ॥ २० ॥**

**अधिकरणार्थः ।** 'य एवासौ तपति तमुद्गीथमुपासीत' (छा. १-३-१) 'लोकेषु पञ्चविधं सामोपासीत' (छा. २-२-१) 'इयमेवर्गग्निः साम' (छा. १-६-१) इत्यादौ अङ्गाश्रय उपासनादौ आदित्यादौ उद्गीथादि दृष्टिः, उत उद्गीथातौ आदित्यादि दृष्टिरिति संशये, अत्र उत्कर्ष निकर्षाभावात् उभयथापि उपासनं संभवतीति प्राप्ते उद्गीथादिषु अर्कादिमतयः क्षिप्येरन् । अर्कादि-ज्ञानैः संस्क्रियमाणा उद्गीथादिः कर्मसमृद्धिं करोति । 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति श्रुतेः । उद्गीथाद्यपेक्षया देवतायाः उत्कर्षत्वात् । कर्मसमृद्धिफलेष्वेवं भवतु । स्वतन्त्रेष्वुपासनेष्वपि कथमिति चेत् तत्रापि तथैव भवेत् । द्वितीया निर्देशसाम्यात् ॥

---

**विशिष्टाद्वैतम्	आदित्याधिकरणम् । (१२७)**

**आदित्यादिमतयश्चाङ्ग उपपत्तेः । (४७५)**

**कर्माङ्गभूतोद्गीथाद्यौ आदित्यादिमतिर्भवेत् ।**
**देवताराधनद्वारा फलसिद्धिप्रतीतितः ॥ २१ ॥**

**अधिकरणार्थः ।** यागाङ्गभूतोद्गीथोपास्तौ आदित्यादि दृष्टिः कार्या । फलसाधनत्वेन देवताया उत्कर्षात् ॥

---

**द्वैतम्	आदित्याधिकरणम् । (१९३)**

**ओं आदित्यादिमतयश्चाङ्ग उपपत्तेः (४९०)**

**'चक्षोस्सूर्यो मुखादिन्द्रः' इति विष्ण्वङ्गदेवताः ।**
**मुमुक्षुभिर्विमुक्त्यर्थं स्मर्तव्याश्च तदाश्रिताः ॥ २२ ॥**

**अधिकरणार्थः ।** 'चक्षोस्सूर्यो अजायत मुखादिन्द्रश्चाग्निश्च' इत्याद्युपासनं देवानामेव कार्यं । स्वोत्पत्तिस्थानत्वात्, स्वाश्रयात्, मुक्तौ तत्र लयस्यापेक्षितत्वाच्च उपपन्नं तेषां तथोपासनं । 'आधिव्याधिनिमित्तेन विक्षिप्तमनसोपि तु । गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु । स्मर्तव्यं सततं तत्तु न कदाचित् परित्यजेत् । अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते । सोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु । तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः । तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः ॥' इति प्रमाणात् ॥

**सूत्रार्थः ।** आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥—आदित्यादि इति लुप्ततृतीयाबहुवचनं । आदित्यादिभि=देवैः, अङ्गे=विष्णोरङ्गे, मतयः=आदित्यादिमतयः, कार्या । उपपत्तेः=उपपन्नत्वात्—यस्य यतः उत्पत्तिः तस्य तत्र लयः ॥

---

**अद्वैतम्** असीनाधिकरणम् । (१५९)

आसीनस्सम्भवात् । (४८४)
ध्यानाच्च । (४८५)
अचलत्वं चापेक्ष्य । (४८६)
स्मरन्ति च । (४८७)

**प्रतीकाद्यं तत्त्वमसीत्याद्यं चोपासनं कथम् ।**
**कार्यं निश्चलमासीनः ध्यायेदिति विधीयते ॥ २३ ॥**

**अधिकरणार्थः ।** सम्यग्दर्शनव्यतिरिक्तोपासनेषु आसीनः शयानो वा तिष्ठन् वा उपासनं कुर्यात् इति सामान्यतः प्राप्ते समानप्रत्ययप्रवाहकरणं उपासनं गच्छतो धावतो वा तिष्ठतो वापि न संभवति । चित्तविक्षेपकत्वात् ।

अतः आसीन एव उपासनं कुर्यात् । ध्यायति बकः इत्यादौ यथावा निश्चलत्वं दृश्यते तद्वत् 'ध्यायीत' इत्यादि विधानात् 'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' इति गीतावचनाच्च पद्मकाद्यासननिष्ठस्यैव उपासना संभवतीति योगशास्त्रोक्तेश्च ॥

' स्वस्तिकं गोमुखं पद्मं वीरसिंहासने यथा ।
भद्रं मुक्तासनं चैव मयूरासनमेव च ।
सुखासनसमाख्यं च नवमं मुनिपुङ्गव ॥ '

इति नवविधासनानि तल्लक्षणानि च जाबालदर्शनोपनिषदि द्रष्टव्यानि ॥

---

**विशिष्टाद्वैतम्**　　**असीनाधिकरणम् । (१२८)**

**आसीनस्सम्भवात् । (४७६)**
**ध्यानाच्च । (४७७)**
**अचलत्वञ्चापेक्ष्य । (४७८)**
**स्मरन्ति च । (४७९)**
**यत्रैकाग्रता तत्राविशेषात् । (४८०)**

**निश्चलत्वे ध्यानसिद्धिः असीनस्यैव संभवेत् ।**
**उपविश्यासने युञ्ज्यात् योगं सापाश्रयो बुधः ॥ २४ ॥**

**अधिकरणार्थः ।** उपासनं तैलधारावदविच्छिन्नस्मृतिसन्तानरूविजातीयप्रत्ययान्तराव्यवहितं तच्च पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रयस्य आसीनस्यैव संभवति । न तु देशकालादि नियमः । मनोनुकूल इति वाक्यशेषात् ॥

---

**द्वैतम्**　　**आसीनाधिकरणम् । (१९४)**

**ओं आसीनस्संभवात् । (४९१)**
**ओं ध्यानाच्च । (४९२)**
**ओं अचलत्वं चापेक्ष्य । (४९३)**

**ओं स्मरन्ति च ।　　(४९४)**

**ओं यत्रैकाग्रता तत्राविशेषात् । (४९५)**

**आसीनेनैव निध्यानं कार्यं चित्तं तदा स्थिरम् ।**
**एकाग्रतामतिर्यत्र तत्र ध्यानं प्रकीर्तितम् ॥ २५ ॥**

**विष्णुध्याने देशकालनियमादि प्रदर्शनम् ।**
**मनः प्रसादसिद्ध्यर्थं न तु देशादिना फलम् ॥ २६ ॥**

**अधिकरणार्थः ।** सर्वदोपासनं कुर्वन्नपि आसीनो विशेषतः कुर्यात् ।

"स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।
स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ॥
नैरन्तर्यमनोवृत्तेः ध्यानमित्युच्यते बुधैः ।
आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥
स्थितस्य गच्छतो वापि विक्षेपस्यैव सम्भवात् ।
स्मरणात् परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः ॥
अचलं चेच्छरीरं स्यात् मनसश्चाप्यचालनम् ।
चलने तु शरीरस्य चञ्चलं च मनो भवेत् ॥
समं कायशिरोग्रीवं धारयन्नचलां स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
तमेव देशं सेवेत तं कालं तामवस्थितिम् ।
तानेव भोगान् भुञ्जीत मनो यत्र प्रसीदति ॥
नहि देशादिभिः कश्चित् विशेषस्समुदीरितः ।
मनः प्रदर्शनार्थं हि देशकालादि चिन्तना ॥"

इत्यादि प्रमाणैः मनोनुकूलदेशे योगशास्त्रोक्तासनमासीनः उपासनं कुर्यात् इत्यर्थः ॥

---

**अद्वैतम्** **एकाग्रताधिकरणम् । (१६०)**

**यत्रैकाग्रता तत्राविशेषात् । (४८८)**

**चित्तस्यैकाग्रता यत्र तत्रैवोपासना स्मृता ।**
**प्राची दिगादिनियमो न मनः प्रियताश्रिता ॥ २७ ॥**

**अधिकरणार्थः** । उपासनेषु यथा यागादिकरणे 'प्राचीनवंशं करोति'; 'वसन्ते ज्योतिषा यजेत' इत्यादि दिग्देशकालादि नियमः आश्रितः, तद्वत् अत्र न । 'मनोनुकूले नतु *चक्षुःपीडने, गुहानिवाताश्रयणे प्योजयेत्' इति उपासनाविधायकवाक्यशेषात् चित्तस्य एकाग्रता यत्र भवति तत्रैवोपासनं कर्तव्यमिति प्रतीतेः ॥

---

**अद्वैतम्** **आप्रायणाधिकरणम् । (१६१)**

**आप्रायणात्तत्रापि हि दृष्टम् । (४८९)**

**सम्यग्दर्शनपर्यन्तं तत्त्वमस्यादि चिन्तनम् ।**
**प्रागुक्तैवाभ्युदयफलोपास्तिरत्र विचार्यते ॥ २८ ॥**
**'तावत्क्रतुर्हामुं लोकं' प्रेत्येत्यदि त्रयीवशात् ।**
**आप्रयाणादुपास्तिस्स्यात् मृतिकाले च तत्स्मृतेः ॥ २९ ॥**

**अधिकरणार्थः** । पूर्वोक्तोपासनवृत्तिरेव अभ्युदयफला चिन्त्यतेऽत्र । ऐहिकामुष्मिकफलोद्देशेन क्रियमाणं उपासनं आमरणात् कर्तव्यम् । अन्त्यज्ञानवशात् अदृष्टफलप्राप्तेः । 'यच्चित्तः तेनैष प्राणमायाति, प्राणस्तेजसा युक्तः, स आत्मना यथा संकल्पितं लोकं नयति' इत्यादि श्रुत्या जन्मान्तरोपभोग्यफलसाधनकर्मणः मरणकालेऽपि सच्चित्तगतत्वेन श्रूयमाणत्वात् । 'स यावत्क्रतुः अयमस्माल्लोकात् प्रैति' इति

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरं ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥"

इत्यादि प्रमाणात् आमरणं ध्यानं दृश्यते ॥

---

* चक्षुःपीडनः = मशकः ॥

**विशिष्टाद्वैतम्** **आप्रयाणाधिकरणम् । (१२९)**

**आप्रयाणात् तत्रापि हि दृष्टम् । (४८१)**

**ध्यानावृत्तिरहन्येव पक्षे मासेऽथवेति न ।**
**प्राणोत्क्रमणपर्यन्तं ध्यानं श्रुत्या विधीयते ॥ ३० ॥**

**अधिकरणार्थः ।** पूर्वोक्तोपासनाऽऽवृत्तिः एकस्मिन्नहन्येव परिसमापनीया उत आप्रायणादिति संशये 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते' (छा. ८-१५-१) इत्यादि श्रुत्या आमरणमावृत्तिः कर्तव्या इति ॥

---

**द्वैतम्** **आप्रायणाधिकरणम् । (१९५)**

**ओं आप्रायणात्तत्रापि हि दृष्टम् । (४९६)**

**उपासनादिकं कार्यं यावन्मुक्ति मुमुक्षुभिः ।**
**ओंकारं प्रायणान्तं च ध्यायीतेति विधानतः ३१**

**अधिकरणार्थः ।** 'स यो ह वै तद्भगवान् मनुष्येषु प्रायणान्तं ओंकारं अभिध्यायीत' 'सर्वदैनमुपासीत' यावद्विमुक्तिः मुक्ता अपि ह्येनमुपासते ।'

" श्रुणुयाद्यावदज्ञानं मतिर्यावदयुक्तता ।
ध्यानं च यावदीक्षा स्यात् नैक्षा कचन बाध्यते ॥"
" दृष्टतत्त्वस्य च ध्यानं यदादृष्टिर्न विद्यते ।
भक्तिश्चानन्तकालीनापरमे ब्रह्मणि स्फुटा ॥
आविमुक्तेर्विधिर्नित्यं स्वत एव ततः परम् ॥

इत्यादि श्रुतिस्मृतिप्रमाणैः मुक्तिपर्यन्तं विष्णूपासनं कर्तव्यम् । मुक्तैरपि विष्णूपासनोक्तेः इति ॥

---

**अद्वैतम्** **तदधिगमाधिकरणम् । (१६२)**

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । (४९०)**

**ब्रह्मज्ञाने च संप्राप्ते दुरितक्षय उच्यते ।**
**विद्वांसं न स्पृशेत् पापं पद्मपत्रे जलं यथा ॥ ३२ ॥**

**अधिकरणार्थः** । ब्रह्मविद्याऽधिगमे सति पापं क्षीयते वा न वेति विशये 'न हि कर्म क्षीयते' इत्यादि स्मृत्या पापफलस्यानुभवादेव नाशोक्तेः न क्षीयते इति प्राप्ते ब्रह्माधिगमे सति उत्तरपूर्वाघयोः अश्लेषविनाशौ भवत इति सिद्धान्तः । 'यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते' (छा. ४-१४-३) 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. २-२-८) इत्यादि श्रुतेः । तस्माद्ब्रह्माधिगमे दुरितक्षयो भवति ॥

---

**विशिष्टाद्वैतम्** **तदधिगमाधिकरणम्** । (१३०)

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** । (४८२)

**पदवित्तं विदित्वा 'न कर्मणा लिप्यते' बुधः ।**
**इति श्रुत्या ब्रह्मविदोप्यश्लेषो हानिरंहसः ॥ ३३ ॥**

**अधिकरणार्थः** । 'तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन' 'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा. ५-२४-३) इत्यादि श्रुतिभ्यः विद्या प्राप्तौ उपासकस्य विद्यागौरवात् उत्तराघस्याश्लेषः पूर्वाघस्य विनाशश्च भवतः । 'नाभुक्तं क्षीयते कर्म कल्प कोटिशतैरपि' इत्यादि शास्त्रं तु कर्मणां फलजननसामर्थ्यद्रढिमविषयमिति न विरोधः । इति ॥

---

**अद्वैतम्** **इतरासंश्लेषाधिकरणम्** । (१६३)

**इतरस्याप्येवमसंश्लेषः पाते तु** । (४९१)

**एष एते पुण्यपापे तरतीत्यादिनेतरत् ।**
**पुण्यं बुधं न बध्नाति देहपाते विनश्यति ॥ ३४ ॥**

**अधिकरणार्थः** । विद्यानिष्ठस्य पापवत् पुण्यस्यापि अश्लेषविनाशौ भवतः । 'उभे उ हैवैष एते तरति' (बृ. ४-४-२२) 'क्षीयन्ते चास्य कर्माणि' (मु. २-२-८) 'नैनं सेतुमहोरात्रे तरतः' (छा. ८-४-१) इत्यादि श्रुतिभ्यः पुण्यस्यापि पाप्मशब्देन ग्रहणं कृत्वा तद्विनाशोक्तेः । शरीरपाते तु मोक्ष एवेत्यर्थः । इति ॥

---

**विशिष्टाद्वैतम्    इतराधिकरणम् । (१३२)**

**इतरस्याप्येवमसंश्लेषः पाते तु । (४८३)**

**निवर्तन्ते च पाप्मानः इति श्रुत्या विपश्चितः ।**
**शरीरपातादूर्ध्वं तु नश्यन्ति सुकृतानि च ॥ ३५ ॥**

**अधिकरणार्थः ।** विद्यया उपासकस्य पुण्यस्यापि अश्लेषविनाशौ भवतः । 'सर्वे पाप्मानो अतो निवर्तन्ते' (छा. ८-४-१) 'तत्सुकृतदुष्कृते धूनुते' (कौषी. १-४) इत्यादि श्रुतेः । शरीरपातादूर्ध्वं सुकृतानि नश्यन्तीत्यर्थः 'तत्सुकृतदुष्कृते धूनुते' इत्यत्र तच्छब्दस्य, तत्=सः उपासकः इति वा तस्मिन् समये इति वा तदा वा इत्यर्थः ॥

---

**अद्वैतम्    अनारब्धकार्याधिकरणम् । (१६४)**

**अनारब्धकर्ये एव तु पूर्वे तदवधेः । (४९२)**

**अनारब्धफले एव पुण्यपापे विनश्यतः ।**
**आरब्धयोः स्थितिं ब्रूते न विमोक्ष्ये इति श्रुतिः ॥ ३६ ॥**

**अधिकरणार्थः ।** पूर्वोक्त पुण्यपापविनाशः अनारब्धफलयोः पुण्यपापयोर्विनाशः उत अनारब्धफलयोरिति संशये अप्रवृत्तफलयोरेव पुण्यपापयोः सञ्चितयोः ज्ञानोत्पत्तेः प्राक् विनाशः न तु आरब्धकार्ययोः । 'प्रारब्धं भोगतो नश्येत्' 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' (छा. ६-१४-२) इत्यादि शास्त्रात् प्रारब्धशरीरान्त एव मोक्ष इति प्रतीतेः ॥

---

**विशिष्टाद्वैतम्    अनारब्धकार्याधिकरगम् । (१३२)**

**अनारब्धकार्ये एव तु पूर्वे तदवधेः । (४८४)**

**ब्रह्मविद्या मुमुक्षोश्च सर्वं पापं व्यपोहति ।**
**नानारब्धफले एव नश्यतो देहसुस्थितेः ॥ ३७ ॥**

**अधिकरणार्थः** । उपासकस्य उक्तः सर्वपापविनाशः अप्रवृत्तफलक एव । ' तस्य तावदेवचिरं यावन्नविमोक्ष्ये अथ संपत्स्ये ' (छा. ६-१४-२) इति प्रारब्धशरीरपातविलम्बावधिश्रुतेः । इति ॥

---

अद्वैतम् अग्निहोत्राद्यधिकरणम् । (१६५)

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । (४९३)**

**अतोऽन्यापि ह्येकेषामुभयोः । (४९४)**

**नित्याग्निहोत्रादिकं च कर्तव्यं ज्ञानसिद्धये ।**
**पूर्वपुण्यादि नाशोत्र श्रुत्यैव प्रतिपादितः ॥ ३८ ॥**

**अधिकरणार्थः** । ब्रह्मविद्यानिष्ठस्य सर्वपुण्यविनाशोक्तौ सत्यामपि नित्याग्निहोत्रादिकं सन्ध्यावन्दनादिकं स्वस्वाश्रमकर्म कर्तव्यमेव । ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन (बृ. ४-४-२२) इति श्रुत्या विद्यासिद्धये यज्ञदानादिकं कर्तव्यमिति प्रतीतेः । तर्हि पुण्यपापाश्लेषविनाशौ कथमुपपद्येत इति चेत् नित्यकर्मणः व्यतिरिक्ताः साधुकृत्याः ऐहिकामुष्मिकप्रयोजनाः अनन्ता अनारब्धफलाः सम्भवन्तीति तद्विषयके ते इति ॥

---

अद्वैतम् विद्याज्ञानसाधनत्वाधिकरणम् । (१६६)

**यदेव विद्ययेति हि । (४९५)**

**उभौ विद्वानविद्वांश्च मुमुक्षू कुरुतस्सदा ।**
**ज्ञानद्वारा च कर्मेदं मुमुक्षोरुपकारकम् ॥ ३९ ॥**

**अधिकरणार्थः** । पूर्वोक्तं अनुष्ठेयं नित्याग्निहोत्रादिकं विद्यानिष्ठस्यैव उत अविद्यानिष्ठस्यापि इति विशये उभयेषामपि विहितमेव । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०) इति विद्यासंयुक्तस्य कर्मणः वीर्यवत्तरत्वाभिधानेन विद्याविहीनस्यापि अग्निहोत्रादि कर्म कर्तव्यमिति प्रतीयते । इति ॥

---

**विशिष्टाद्वैतम्** **अग्निहोत्राद्यधिकरणम् । (१३३)**

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । (४८५)**

**अतोऽन्यापि ह्येकेषामुभयोः । (४८६)**

**यदेव विद्येति हि । (४८७)**

**आश्रमोक्तानि कर्माणि न त्यजेरन् विपश्चितः ।**
**ब्रह्मविद्योत्पादकानि तानि कार्याणि कालतः ॥ ४० ॥**

**पूर्वपुण्यं विनष्टं च फलं विद्या भविष्यति ।**
**प्रतिबद्धफलं कर्म शत्रुमित्रादि गोचरम् ॥ ४१ ॥**

**अधिकरणार्थः ।** स्वस्वाश्रमधर्माः विदुषः विद्याख्यकार्यायै अनुष्टेया एव । तमेतमित्यादि श्रुतेः । 'सुहृदस्साधुकृत्यां' (छा. १-१-१०) इति श्रुतिस्तु विद्याधिगमात्पूर्वं प्रबलकर्मप्रतिबद्धफलक साधुकृत्या विषया । 'यदेव विद्यया करोति' इति श्रुत्या प्रतिबद्धफलक पुण्यसत्त्वस्य ज्ञापनात् । इति ॥

---

**अद्वैतम्** **इतरक्षपणाधिकरणम् । (१६७)**

**भोगेन त्वितरे क्षपयित्वा सम्पद्यते । (४९६)**

**प्रारब्धं कर्मभोगेन क्षपयित्वा ततश्शुचिः ।**
**मायानिवृत्त्या ब्रम्हैव सन् ब्रह्माप्येति पण्डितः ॥ ४२ ॥**

**अधिकरणार्थः ।** ज्ञानी आरब्धेफले पुण्यपापे उपभोगेन विनाश्य ब्रह्मैव सन् ब्रह्म संपद्यते इति ॥

---

**विशिष्टाद्वैतम्** **इतरक्षपणाधिकरणम् । (१३४)**

**भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते । (४८८)**

**प्रारब्धस्य फलं ज्ञानी भुक्त्वा देहावसानतः ।**
**विद्याफलं मुक्तिरूपं आप्नोतीतीह कथ्यते ॥ ४३ ॥**

अधिकरणार्थः । आरब्धकार्ये पुण्यपापेऽपि प्रारब्धशरीरान्ते विनश्यतः । 'तस्य तावदेव चिरं' (छा. ६-१४-२) इति प्रारब्धशरीरावसानावधि विलम्बश्रुतेः । प्रारब्धस्य भोगेनैव नाशोक्तेः ॥

---

द्वैतम्　　तदधिगमाधिकरणम् । (१९६)

ओं तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । (४९७)
ओं इतरस्याप्येवमसंश्लेषः पाते तु । (४९८)
ओं अनारब्धकार्ये एव तु पूर्वे तदवधेः । (४९९)
ओं अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । (५००)
ओं अतोन्यदपीत्येकेषामुभयोः । (५०१)
ओं यदेव विद्ययेति हि । (५०२)
ओं भोगेन त्वितरे क्षपयित्वाथ संपत्स्यते । (५०३)

उत्तराघस्य चाश्लेषः पूर्वाघस्य विनाशनम् ।
एवं पुण्यस्यचाश्लेषः *पाते शत्रुवृषस्य च ॥ ४४ ॥
अप्रारब्धफले एव पुण्यपापे विनश्यतः ।
अग्निहोत्रादि कर्मापि कार्यं मोक्षस्य सिद्धये ॥ ४५ ॥
मुक्त्ययोग्यं च यत्पुण्यं तन्मित्राय प्रदीयते ।
ज्ञानिना रचितं पुण्यं स्वल्पं तद्वीर्यवत्तरम् ॥ ४६ ॥
प्रारब्धे पुण्यपापे ये क्षपयित्वाथ भोगतः ।
स्वयोग्यतानुसारेण प्राप्नोति ब्रह्म वा तमः ॥ ४७ ॥

अधिकरणार्थः । उपासकस्य ब्रह्मदर्शने उत्तरपापाश्लेषः पूर्वपाप-विनाशश्च भवति । 'तद्यथा पुष्करपलाश' इत्यादि श्रुतिभ्यः । पुण्य-स्याप्येवं असंश्लेषः पाते

"यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः ।
एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम् ॥" इति प्रमाणात् ।

---

* पाते=तमः प्रवेशकाले आसन्ने सतीत्यर्थः ।

" यदनारब्धपापं स्यात्तद्विनश्यति निश्चयात् ।
पश्यतो ब्रह्मनिर्द्वन्द्वं हीनं च ब्रह्मपश्यतः ॥"

" द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः ।
तस्याप्यारब्धकार्यस्य न विनाशोस्ति कुत्रचित् ॥"

" आरब्धयोश्च नाशस्स्यादल्पयोः पुण्यपापयोः ॥" इति ।

'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोन्यद्वा कर्माकृतम्' । यदिह वाप्यनेवं विन्महत्पुण्यं कर्म करोति तद्धास्यांततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्मक्षीयते अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' इति ।

" अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति ।
किमु पापं परब्रह्मज्ञानिनो नात्र संशयः ॥"

" अल्पमात्रकृतो धर्मः भवेत्ज्ञानवतो महान् ।
महानपि कृतो धर्मः अज्ञानान्निष्फलो भवेत् ॥"

" आरब्धपुण्यपापस्य भोगेन क्षपणादनु ।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ॥"

" ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः ।
नियमेन भवेन्नात्र कार्या काचिद्विचारणा ॥"

इति श्रुतिस्मृतिपुराणवचनैः ज्ञानी प्रारब्धंकर्म भोगेन क्षपयित्वा प्रारब्धावसाने स्वस्वयोग्यां मुक्तिमाप्नोति । पापिनां तु प्रारब्ध देहावसाने तमसि प्रवेश इत्युक्तेः ॥

॥ इति मतत्रयसारसंग्रहे चतुर्थाध्याये प्रथमः पादः ॥

# ॥ मतत्रयसारसंग्रहे ॥

## ॥ चतुर्थाध्याये — द्वितीयः पादः ॥

### अद्वैतम् वागधिकरणम् । (१६८)

**वाङ्मनसि दर्शनाच्छब्दाच्च । (४९७)**
**अत एव च सर्वाण्यनु । (४९८)**

**जीवस्य देहादुत्क्रान्तौ वाग्वृत्तिः पद्यते हृदि ।**
**चित्ताद्वाचो जन्यभावाल्लयो हृदि न युज्यते ॥ ४८ ॥**

**अधिकरणार्थः ।** अत्र अपरासु विद्यासु फलप्राप्तये देवयानं अवतारयिष्यन् यथाशास्त्रं उत्क्रान्तिक्रमं अन्वाचष्टे । 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ।' (छा. ६-८-६) इति । अत्र प्रयतः पुरुषस्य 'वाङ्मनसि सङ्गच्छते' इति श्रूयते । तत्र वागिन्द्रियव्यापारस्य मनसि सङ्गमो वा उत वागिन्द्रियस्य वेति संशये वाग्वृत्तिरेव मनसि सम्पद्यत इति सिद्धान्तः । उत्तरत्र 'अविभागो वचनात्' इति सूत्रेण विभागाभावस्यैवोक्तेः पूर्वत्रोक्ता सम्पत्तिरपि वृत्तिसंपत्तिरेव न तु लय इति । मनसः वाचः उत्पत्त्यभावात् मनसि लयो न युज्यते । किञ्च 'तस्मादुपशान्त तेजाः पुनर्भवमिन्द्रियैः मनसि सम्पद्यमानैः' इति (प्रश्न. ३-९) सर्वेन्द्रियाणां मनसि सम्पत्तिः श्रूयते । तदेव ज्ञापयति सम्पत्तिशब्दार्थः वृत्तिसंपत्तिरिति ॥

---

### विशिष्टाद्वैतम् वागधिकरणम् । (१३५)

**वाङ्मनसि दर्शनाच्छब्दाच्च । (४८९)**
**अत एव सर्वाण्यनु । (४९०)**

**वागिन्द्रियं च विदुषः उत्क्रान्तौ युज्यते हृदि ।**
**अत्र संपत्तिशब्दार्थः संयोगः कथ्यते बुधैः ॥ ४९ ॥**

**अधिकरणार्थः ।** विदुषः गतिप्रकारं चिन्तयितुं आरभते । तत्रचोत्क्रान्तिः – 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' (छा. ६-८-६) इति वाचः मनसि संपत्तिः वाग्वृत्तिमात्रविषया न । अपितु वाक्स्वरूपविषया । 'वाङ्मनसि सम्पद्यते' इति दर्शनाच्छब्दाच्च । दृश्यते वागिन्द्रिये उपरतेऽपि मनः प्रवृत्तिरिति दर्शनं । 'वाङ्मनसि सम्पद्यते' इति शब्दः । मनो जन्यत्वाभावात् वाचः कथं मनसि सम्पत्तिरिति चेत् सम्पत्तिशब्दस्य संयोगः एवार्थः । न तु लय इत्यविरोधः । अत एव सर्वेन्द्रियाणां मनसि सम्पत्तिः 'तेजो ह वा उदानः' इत्यारभ्य इन्द्रियैः मनसि सम्पाद्यमानैः इति श्रुत्या उच्यते ॥

---

**द्वैतम् वागधिकरणम् । (१९७)**

**ओं वाङ्मनसि दर्शनाच्छब्दाच्च । (५०४)**

**ओं अत एव च सर्वाण्यनु । (५०५)**

**"कर्मक्षयस्तथोत्क्रान्तिः मार्गो भोगश्चतुष्टयम् ।**
**फलं मोक्ष इति प्रोक्तं क्रमात्पादेषु चिन्तिताम् ॥ ५० ॥',**

**"देवानां मार्ग उद्दिष्टः नार्चिरादिर्न च क्रमः ।**
**उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः ॥ ५१ ॥"**

**"सृष्टृष्वेव च सृज्यानां प्रवेशे ब्रह्मणो लये ।**
**इति नीतिविदां वाक्यान्नृणामुत्क्रान्तिरिष्यते ।**
**देवानां मोक्ष उत्क्रान्तिः नृणां पादेऽत्र चिन्त्यते ॥ ५२ ॥"**

**मनोऽभिमानिरुद्रेऽस्मिन् वागुमा संप्रलीयते ।**
**यथानुकूलमग्न्यादौ लीयन्ते सर्वदेवताः ॥ ५३ ॥**

**अधिकरणार्थः ।** वागभिमानिनि उमादेवता मनोभिमानिनि रुद्रे विलीयते । वाचो मनोवशत्वदर्शनात् । तस्य यावन्न वाङ्मनसि सम्पद्यते इति शब्दाच्च ।

" उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः ।
तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयते ॥"

सर्वाणि दैवतानि च अत एव शब्दात् विलीयन्ते अग्नौ । 'अग्नौ सर्वे देवा विलीयन्ते, अग्निरिन्द्रे, इन्द्र उमायां, उमा रुद्रे विलीयते । एवमन्यानि दैवतानि यथानुकूलं' इति गौपवनश्रुतिः । देवानां मोक्ष उत्क्रान्तिश्च अस्मिन् पादे उच्यते इत्यन्तं भाष्यम् । अत्र देवानां उत्क्रान्तिमार्गयोरभावात् देवानामिति पदस्य आवृत्त्या देवानां=सुराणां, देवानां=ज्ञानिनां इत्यर्थो अभ्युपेयः । अत्र देवानां मोक्षः, ज्ञानिनामुत्क्रान्तिः चिन्त्यत इत्यर्थः । अत्र लयक्रमो द्विविधः । गरुडमार्गद्वारेण, शेषमार्गद्वारेणेति । देवानां मध्ये अग्नौ प्रथमं लयः, अग्निः सूर्ये, सूर्यो गुरौ, गुरुः इन्द्रे, इन्द्रः सौपर्ण्यां, सौपर्णी गरुडे, गरुडः वाण्यां, वाणी चतुर्मुखे, चतुर्मुखः रमाद्वारा विष्णौ इति गरुडमार्गः । शेषमार्गस्तु प्रथमं वरुणस्य सोमे लयः, सोमस्य अनिरुद्धे लयः, अनिरुद्धस्य कामे, कामस्य वारुण्यां, वारुण्यास्तु शेषे लयः, शेषस्तु वाण्यां, वाणी वायौ । अन्येषां तु गरुडमार्गे, केषांचित् शेषमार्गे प्रवेशः । तत्र प्रमाणं च ।

" सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीं ।
तया सुपर्णं सह तेन वाणीं ब्रह्माणमेतद्गत एव याति ॥"
" सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ च वारुणीम् ।
साशेषदेवं सगिरं च सैव वायुं विशत्यञ्ज इतीह निर्णयः ॥"

इति ग्रन्थान्तरे विस्तरो द्रष्टव्यः ॥

सूत्रस्थ वाक्पदेन सूत्रस्थ मनः पदेन च उमा रुद्रौ यथा वा गृह्यते तद्वत् सुपर्णी सुपर्णावपि गृह्येते । वारुणी शेषावपि गृह्येते इति वक्तव्यम् । तत्र प्रमाणादिकमन्यत्र द्रष्टव्यम् ।

" तस्मादशेषा गिरिजां प्रविश्य तयैव रुद्रं सह तेन वाणीम् ।
तया पतिं प्राप्य सहैव तेन लयं हरौ यान्ति समस्त जीवाः ॥"

इति प्रमाणात् जीवाः विमुक्तिकाले गिरिजाद्वारा गच्छन्ति । देवानां मध्ये सोमादि देवाः वरुणद्वारा वाणीशेषद्वारा गच्छन्ति । सूर्यादिदेवताः अग्नि-द्वारा सुपर्णीं सुपर्णद्वारा गच्छन्ति इति 'तानि परे तथा ह्याह' इत्यत्र अणु-व्याख्याने एतद्विस्तरो द्रष्टव्यः ॥

---

## अद्वैतम् मनोधिकरणम् । (१६९)

### तन्मनः प्राण उत्तरात् । (४९९)

**मनोवृत्तेर्लयः प्राणे न मनो लय इष्यते ।**
**प्राणान्मनस उत्पत्तिः नैव वेदे प्रदृश्यते ॥ ५४ ॥**

**अधिकरणार्थः ।** 'मनः प्राणे' (छा. ६-८-६) इत्यत्र पूर्ववत मनसो वृत्तिसम्पत्तिः प्राणे । उत वृत्तिमनसो प्राणे सम्पत्तिरिति विचारे मनसो वृत्तिरेव सम्पद्यते । प्राणप्रकृतित्वाभावात् मनसः । 'अन्नमयं हि सोम्य मन अपोमयः प्राणः' (छा. ६-५-४) 'आपश्चान्नमसृजन्त' इति श्रुतिभ्य मनसः प्राणप्रकृतित्वं परम्परया अवगतमिति चेत् परम्परया प्राणे सम्पत्तिर्न-युज्यते । वृत्त्यन्वयेपि शब्दो दृश्यते । 'वृत्तिमतोरभेदोपचारात्' इति पूर्वसूत्रे दर्शितम् ॥

---

## विशिष्टाद्वैतम् मनोधिकरणम् । (१३६)

### तन्मनः प्राण उत्तरात् । (४९१)

**संयुज्यते मनः प्राणे "मनः प्राण" इति श्रुतेः ।**
**प्राणस्य मनसोप्यद्भिः अन्नेनाप्यायनं स्मृतम् ॥ ५५ ॥**

**अधिकरणार्थः ।** 'मनः प्राण' इति वाक्येऽपि पूर्ववत् मनसः प्राणे सम्पत्तिः । अत्रापि प्राणप्रकृतित्वाभावात् मनसः । अपि तु आहंकारिकत्वात् । आकाशविकारत्वाच्च प्राणस्य । अत्रापि संपत्तिशब्दस्य संयोग एवार्थः इति ॥

---

**द्वैतम् मनप्राणाधिकरणम् । (१९८)**

**ओं तन्मनः प्राण उत्तरात् । (५०६)**

**मनोभिमानी रुद्रश्च प्राणे वायौ विलीयते ।**
**उदेति रुद्रो वायोश्च मनः प्राण इति श्रुतेः ॥ ५६ ॥**

**अधिकरणार्थः ।** 'वायोर्वावरुद्रउदेतिवायौविलीयतेतस्माद्दाहुर्वायुः-देवानांश्रेष्ठ' इति कौण्डिन्यश्रुत्या मनोभिमानी रुद्रः वायौ विलीयते । इति ॥

---

**अद्वैतम् अध्यक्षाधिकरणम् । (१७०)**

**सोऽध्यक्षे तदुपगमदिभ्यः । (५००)**

**भूतेषु तच्छ्रुतेः । । (५०१)**

**नैकस्मिन् दर्शयतो हि । (५०२)**

**तेजसि प्राण इत्युक्तिः जीवसम्पत्तिमब्रवीत् ।**
**प्राणसंपृक्तजीवश्च भूतसूक्ष्मेषु सङ्गतः ॥ ५७ ॥**

**अधिकरणार्थः ।** प्राणस्तेजसीति श्रुतौ प्राणस्य तेजस्येव वृत्त्युपसंहारः उत देहेन्द्रिय पञ्जराध्यक्षे जीव इति संशये श्रुतिवाक्यात् तेजस्येव लय इति प्राप्ते, सः – प्रकृतः प्राणः, अध्यक्षे – विज्ञानात्मनि, अवतिष्ठते । तदुपगमादिभ्यः – 'एवमेवेमं आत्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति, यत्रैतत् ऊर्ध्वाच्छ्वचासी भवति' इत्यादि श्रुतिभ्यः जीवात्मन्येव प्राणसंपत्तिरिति ज्ञायते । 'प्राणस्तेजसि' इति श्रुतिस्तु सर्वशाखा प्रत्ययन्यायेन श्रुत्यन्तरालोचनया विज्ञानात्मनि लयस्य प्रतिभानात् अध्यक्षप्रधानमाश्रित्य तदुच्यत इति गौण्या नेतव्या । प्राणसंपृक्तोऽध्यक्षश्च तेजश्शब्दोपलक्षित भूतसूक्ष्मेषु वर्वत इत्यर्थः । 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रेण तेजसि सर्वभूतसत्त्वात् इत्यर्थः ॥

---

**विशिष्टाद्वैतम् अध्यक्षाधिकरणम् । (१३७)**

**सोध्यक्षे तदुपगमादिभ्यः । (४९२)**

**प्राणस्तेजसि सम्पत्तिः अध्यक्षे जीव एव सा ।**
**तथा हि यमुना सिन्धुं गच्छतीति प्रयोगवत् ॥ ५८ ॥**

**अधिकरणार्थः** । 'प्राणस्तेजसि' इति श्रुतौ प्राणस्य तेजसि लय इति प्राप्ते सः — प्राणः अध्यक्षे—करणाधिपे जीवे, सम्पद्यत इत्यर्थः । प्राणस्य जीवेन सह स्थितिगमनोत्क्रान्त्यादि श्रुतिभ्यः । यथा यमुना गङ्गया संयुज्य सागरं गताऽपि यमुना सागरं गच्छति इतिवत् प्राणस्तेजसि इति श्रुत्यर्थः ।

---

द्वैतम् अध्यक्षाधिकरणम् । (१९९)

**ओं सोऽध्यक्षे तदुपगमादिभ्यः । (५०७)**

**सोऽध्यक्षे लीयते प्राणः विष्णूपगमनादिभिः ।**
**प्राणं सर्वे समायान्ति प्राणस्स परमात्मनि ॥ ५९ ॥**

**अधिकरणार्थः** । 'मुक्तास्सन्तोऽग्निमाविश्य देवास्सर्वेऽपि भुञ्जते अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोपि । आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् ॥' इति प्रमाणात् सः — प्राणः अध्यक्षे—परमात्मनि लीयते । तदुपगमादिभ्यः 'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति, प्राणं देवा अनुप्राणन्ति' इत्यादि श्रुतिभ्य इत्यर्थः । 'प्राणस्तेजसि' इति श्रुतिविरोध इति चेन्न । 'सर्वेशितुश्च सर्वादेः तस्यान्यत्र लयः कथम् ॥' इति प्राणस्य तेजसि लयोमार्गमात्रमुदाहृतं इत्युक्तत्वान्न विरोधः ॥

---

विशिष्टाद्वैतम् भूताधिकरणम् । (१३८)

**भूतेषु तच्छ्रुतेः । (४९३)**

**नैकस्मिन् दर्शयतो हि । (४९४)**

**प्राणश्च जीवसंयुक्तः भूतसूक्ष्मेषु पद्यते ।**
**भूतसूक्ष्माण्याह तेजः त्रिवृत्करणवेदतः ॥ ६० ॥**

**अधिकरणार्थः** । 'प्राणस्तेजोसि' इति श्रुतौ जीवसंयुक्त प्राणस्य तेजस्सम्पत्तिः तेजोमात्र एव न । अपि तु तेजोपलक्षित भूतसूक्ष्मेषु । पृथिवीमयः आपोमयः तेजोमय इति सञ्चरतो जीवस्य सर्वभूतमयत्वश्रुतेः । 'नाना वीर्याः पृथग्भूताः ततस्ते संहतिं विना । नाशक्नुवन् प्रजास्स्रष्टुम-समागम्य कृत्स्नशः ॥' इत्यादिना एकैकस्य भूतस्य कार्याक्षमत्वात् तेजश्शब्दः भूतसूक्ष्मोपलक्षक इत्यर्थः ॥

---

**द्वैतम् भूताधिकरणम् । (२००)**

**ओं भूतेषु तच्छ्रुतेः । (५०८)**

**देवानामितरेषां च भूतेषु लय उच्यते ।**
**परमात्मनि भूतानां परस्यास्तोदयो न हि ॥ ६१ ॥**

**अधिकरणार्थः** । भूतेषु अन्येषां देवानां लयः । 'भूतेषु देवा विलीयन्ते, भूतानि परे, न पर उदेति नास्तमेति एकल एव मध्ये स्थाता' इति बृहच्छ्रुतेः । इति ॥

---

**द्वैतम् नैकस्मिन्नधिकरणम् । (२०१)**

**ओं नैकस्मिन् दर्शयतो हि । (५०९)**

**देवानामपि सर्वेषां नैकस्मिन् लय उच्यते ।**
**लयक्रमस्तु देवानां महोपनिषदि श्रुतः ॥ ६२ ॥**

**अधिकरणार्थः** । एकस्मिन् भूते सर्वेषां देवानां न लयः । 'पृथिव्यां ऋषयो विलीयन्ते, वरुणेऽश्विनौ' इत्यादि श्रुतेः । तत्र तत्र निर्दिष्टक्रमेण लयक्रमो ज्ञातव्यः । इति ॥

---

**अद्वैतम् आसृत्युपक्रमाधिकरणम् । (१७१)**

**समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य । (५०३)**

**विदुषोऽविदुषश्चैव समानोत्क्रान्तिरिष्यते ।**
**नाडीप्रवेशमारभ्य देवयानायनं सतः ॥ ६३ ॥**

**अधिकरणार्थः ।** ज्ञानिनः कर्मिणश्च उत्क्रान्तिः तुल्यैव । विदुषः मूर्धन्यनाडीप्रवेशमारभ्य देवयानेन पथा गमनमिति विशेषः । अविदुषस्तु 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैः' इति श्रुत्या भूतसूक्ष्मविशिष्टः पुनः देहं प्राप्तुं संसारे स्थितिः । विदुषोपि अपरविद्यानिष्ठस्य विद्या सामर्थ्यात् अन्तिमशरीरमदग्ध्वा सृत्युपक्रमः भूताश्रयत्वं आभूतसंप्लवस्थानं अमृतत्वप्रेप्सा च । इति ॥

---

**अद्वैतम् संसारव्यपदेशाधिकरणम् ।** (१७२)

**तदाऽपीतेस्संसारव्यपदेशात् ।** (५०४)
**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ।** (५०५)
**नोपमर्देनातः ।** (५०६)
**अस्यैव चोपपत्तेरेष ऊष्मा ।** (५०७)

**तेजःपरस्यामित्युक्तेः आत्यन्तिकलयो न सः ।**
**तत्वज्ञानोदयं यावत् सुषुप्तावपि तिष्ठति ॥ ६४ ॥**
**स्वच्छत्वानुपलब्धिभ्यां सूक्ष्मं तत्तेज इष्यते ।**
**सूक्ष्मदेहस्यैष ऊष्मा स्पर्शेन ज्ञायते ततः ॥ ६५ ॥**

**अधिकरणार्थः ।** सप्राणं सकरणग्रामं भूतान्तरसहितं साध्यक्षं तेजः मृतस्य पुंसः परस्यां देवतायां संपद्यत इति 'तेजः परस्यां देवतायां' (छा. ६-८-६) इति श्रुत्या निर्णीतम् । सा सम्पत्तिः परदेवतायां लयः अविभागापत्तिः । परदेवतैव सर्ववस्तुजातस्य प्रकृतिरित्युक्तत्वात् इति प्राप्ते आत्यन्तिकलयो न । किन्तु विभागेन अवस्थानमेव तेज आदिभूतसूक्ष्मस्य संसारमोक्षपर्यन्तम् । सुषुप्तौ प्रलयेच यथा बीजावशेषः अभ्युपगम्यते तद्वत्

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम् ॥"

(कठ. ५-७) इत्यादि श्रुतेः । सूक्ष्मत्वात् तदा तेज आदेरनुपलब्धिः । सूक्ष्म-शरीरज्ञापकं तु 'उष्ण एव जीविष्यन् शीतो मरिष्यन्' इत्यादि श्रुतिः । इति ॥

---

**अद्वैतम् प्रातिषेधाधिकरणम् । (१७३)**

**प्रतिषेधादिति चेन्न शारीरात् । (५०८)**
**स्पष्टो ह्येकेषाम् । (५०९)**
**स्मर्यते च । (५१०)**

**गत्युत्क्रान्ती ज्ञानिनो न स्तोत्र ब्रह्म समश्नुते ।**
**नापक्रामन्ति तस्माच्च प्राणास्तेनैव सन्ति च ॥ ६६ ॥**
**प्रक्षीण सर्वकर्मायं ब्रह्मभूतः क्वयाति सः ।**
**तद्ब्रह्मविदो यानमुत्क्रान्तिश्चेति निर्णयः ॥ ६७ ॥**

**अधिकरणार्थः ।** परब्रह्मविदोऽपि देहात् प्राणानां उत्क्रान्तिरस्त्येव । शाखान्तरे ' न तस्मात् प्राणाः उत्क्रामन्ति ' इति श्रुतिसत्त्वात् तदर्थानुसारेण आत्मनः उत्क्रान्तिर्नास्तीत्येवार्थः । शरीरात् प्राणोत्क्रमणमस्त्येव । 'न तस्य प्राणा उत्क्रामन्ति' (बृ. ४-४-६) इति श्रुत्यविरोधाय 'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः' इत्याद्य-विरोधाय आत्मनः गत्युत्क्रान्ती न भवत इति । शुकस्य गत्युत्क्रान्ति श्रवणं तु 'दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्' इति स्मृत्या स्वयोगप्रभाव-दर्शनायेति न विरोधः । इति । अपदस्य ब्रह्मविदः इत्यर्थः ब्रह्मप्राप्तिसाधन-ज्ञानेच्छवोविमुह्यन्तीत्यर्थः ॥

---

**विशिष्टाद्वैतम् आसृत्युपक्रमाधिकरणम् । (१३९)**

**समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य । (४९५)**
**तदापीतेस्संसारव्यपदेशात् । (४९६)**
**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । (४९७)**
**नोपमर्देनातः । (४९८)**

**अस्यैव चोपपत्तेरूष्मा ।** (४९९)

**प्रतिषेधादिति चेन्न शरीरास्पष्टो ह्येकेषाम् ।** (५००)

**स्मर्यते च ।** (५०१)

**ब्रह्मात्रैतीत्यतो विद्वान् प्राणोत्क्रान्ति निषेधतः ।**
**इत्येतदनुपोष्याङ्गमित्युत्क्रान्तिस्समा तयोः ॥ ६८ ॥**

**विदुषोऽविदुषः प्राणाः उत्क्रामन्त्येव देहतः ।**
**नोत्क्रामन्त्यात्मतः प्राणाः अत्र ब्रम्हेति तत्समः ॥ ६९ ॥**

**अधिकरणार्थः ।** उत्क्रान्तिः विद्वदविदुषोस्समाना उत अविदुष एवेति चिन्तायां 'अत्र ब्रह्म समश्नुते' (कठ. २-६-१४) 'न तस्य प्राणा उत्क्रामन्ति' इत्यादि श्रुत्या विदुषः उत्क्रान्त्यभावश्रवणात् अविदुष एवेति प्राप्ते गत्युपक्रमात् प्राक् 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (कठ. २-६-१६) इति श्रुत्या विदुषामविदुषां च उत्क्रान्तिस्समानेति गम्यते । 'अत्र ब्रह्म समश्नुते' इति तु उपासनाकाले ब्रह्मानुभवविषय इत्यर्थः । अर्चिरादिना मार्गेण देशविशेषं गतस्यैव मुक्तिः । अत्र ब्रह्मेत्यमृतत्वप्राप्तिस्तु अदग्धदेहस्यैवेति ज्ञायते । विदुषोपि सूक्ष्मशरीरानुवर्तनं विरजानदीगमनपर्यन्तमस्तीति गम्यते । 'न तस्य प्राणाः' इति श्रुतिः शरीरात् प्राणानामुत्क्रान्तिः भवत्येव आत्मतः प्राणानामुत्क्रान्तिः नेति वक्तीत्यर्थः । अत एव

"मनसि करणग्रामं प्राणे मनः पुरुषे च तं
झटिति घटयन् भूतेष्वेनं परे च तमात्मनि ।
स्वविदविदुषोरित्थं साधारणे सरणेर्मुखैः
नयति परतो नाडीभेदैः यथोचितमीश्वरः ॥"

इति पूर्वाचार्यैरुक्तम् ॥

---

## द्वैतम् समनाधिकरणम् । (२०२)

ओं समनाचासृत्युपक्रमादमृतत्वं चानुपोष्य । (५१०)
ओं तदपीतेः संसारव्यपदेशात् । (५११)
ओं सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । (५१२)
ओं नोपमर्देनातः । (५१३)
ओं अस्यैव चोपपत्तेरूष्मा । (५१४)
ओं प्रतिषेधादिति चेन्न शारीरात् । (५१५)
ओं स्पष्टोह्येकेषाम् । (५१६)
ओं स्मर्यते च । (५१७)

लक्ष्म्या विष्णोर्न संसारः नित्यमुक्तामृतौ स्मृतौ ।
श्रीतत्वादधिकं सूक्ष्मं विष्णोर्ज्ञानादिनाऽऽगतम् ॥ ७० ॥
स्वातन्त्र्यादिगुणान् हित्वा समाना विष्णुना रमा ।
ब्रह्माद्या असमा एव प्रकृतिस्तु समात्समा ॥ ७१ ॥

**अधिकरणार्थः** । लक्ष्मीः विष्णुना समाना देशकालव्याप्त्या संसाराभावाच्च स्वत एव अमृत इति श्रुतेश्च । लक्ष्म्यपेक्षया ब्रह्मणो अधिकं तु सूक्ष्मं । ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यं च । लक्ष्म्या विलीनमनसः संसारव्यपदेशात् केनचिदंशेन असमाचेत्यर्थः । 'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तौ असमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेती'ति सौपर्णश्रुतेः ।

"सर्वतः प्रकृतिस्सूक्ष्मा प्रकृतेः परमेश्वरः ।
ज्ञानानन्दौ तथैश्वर्यं गुणश्चान्येऽधिकाः प्रभोः ॥"

"द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च" इत्यादि श्रुतिभ्यो विष्णुनिष्ठविशेषगुणाविरोधेनेव समानायाः लक्ष्म्याः साम्यमवगम्यतेत्यर्थः । किञ्च ब्रह्मणः समनायाः—लक्ष्म्याः ऊष्मवत्त्वमनूष्मवत्त्वं च दृश्यत इति लक्ष्म्याः विष्णुसाम्यमुच्यते । 'असमो

वा एष भवती'ति लक्ष्म्याः साम्यनिषेधो न । अपि तु जीवस्यैव विष्णुना साम्यनिषेधो उच्यते । 'असमो वा एष परमो न हि कश्चिदेवं दृश्यते । सर्वेह्येते अणवो जायन्ते म्रियन्ते च छिद्रा ह्येते भवन्ति ।' इत्यादि श्रुतेः ।

" मत्स्यःकूर्मवराहाद्याः समाविष्णोरभेदतः ।
ब्रह्माद्यास्त्वत्समाः प्रोक्ताः प्रकृतिश्च सनाऽसमा ॥"

इति पुराणात् । 'अथातः समाश्चासमाश्चाभिधीयन्ते समासमाश्चाथ' इत्यारभ्य 'अथ समासमा प्रकृतिर्वाव समासमा सैषा हि नित्याऽजरा तद्वशा च' इत्यादि श्रुत्या च विष्णुना लक्ष्मी समासमा इत्यर्थः ।

**सूत्रार्थः** । समना चासृत्युपक्रमादमृतत्वं चानुपोष्य=समः - न - यस्याः सा-समना देशकालव्याप्त्या सदृशः लक्ष्म्याः विष्णुरेवेत्यर्थः । समना= लक्ष्मीरित्यर्थः । ना—नरौ—नरः – ना इत्यस्य परमपुरुष इत्यर्थः । 'छन्दोवत् सूत्राणि भवन्ति' इति महाभाष्यात् समना इत्यत्र बहुव्रीहिः समासाश्रयणेऽपि 'न दृतश्चेति न कप् प्रत्ययः ।' 'ऋन्नेभ्यो ङीम'पि न । समना=लक्ष्मीः आसृत्युपक्रमात्=संसाराभावात् विष्णुना समेत्यर्थः । अनुपोष्य चामृतत्वं=अनुपास्यैव लक्ष्म्याः मोक्ष इत्यर्थः 'नित्यमुक्तौ' इति श्रुतेः इत्यर्थः । अनुपोष्येति शब्दनिष्पत्तिस्तु आसधातोः आकारस्य अकारादेः सकारस्य षत्वे च सिद्ध्यति । छान्दसि प्रक्रिया च कल्पनीयेत्यर्थः ।

तदपीतेः संसारव्यपदेशात्—तस्यां-अपीतिः=तदपीतिः तस्याः=तदपीतेः= लक्ष्म्यां लीनस्य संसारश्रवणात् परमात्मलीनस्य संसाराभावाच्च लक्ष्मी विष्णुना समाऽसमेत्यर्थः ॥

अन्यानि सूत्राणि स्पष्टार्थानि ॥

---

## अद्वैतम् वागादिलयाधिकरणम् । (१७४)

### तानि परे तथा ह्याह । (५११)

**दशेन्द्रियाणि भूतानि मनो ब्रह्मणि षोडश ।**
**लीयन्ते ब्रह्मविद्ब्रह्मसम्पद्यत इति श्रुतेः ॥७२ ॥**

**अधिकरणार्थः ।** 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्रश्न. ६-५) इति ब्रह्मेन्द्रियाणि दश, भूतानि पञ्च, मन एकं, इति षोडशकलाः विद्वन्निष्ठाः परस्मिन् लीयन्ते इत्यर्थः । क्वचित् पञ्चदशकला इत्युक्तिस्तु प्राणमनसोः एकप्रकृतित्वं विवक्षया उपपद्यते । 'यथा नद्यस्स्यन्दमानास्समुद्रायणाः समुद्रं प्राप्य अस्तं गच्छन्ति, तथा विद्वान् नामरूपे विहाय निरञ्जनः परमं साम्यमुपैति' इति श्रुत्यविरोधाय षोडशकलानां नामरूपे अपि भित्वा विद्वान् अकलः अमृतो भवतीत्यर्थः । 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादि श्रुतेः ॥

---

## विशिष्टाद्वैतम् परसम्पत्त्यधिकरणम् । (१४०)

### तानि परे तथा ह्याह । (५०२)

**सप्राणः करणाध्यक्षः परमात्मनि लीयते ।**
**सुषुप्ताविव मध्येऽपि सम्पत्तिः श्रमहानये ॥ ७३ ॥**

**अधिकरणार्थः ।** सकरणग्रामः स प्राणः करणाध्यक्षः जीवात्मा शरीरादुत्क्रान्तिवेलायां परमात्मनि संपद्यते । 'तेजः परस्यां देवतायां' (छा. ६-८-६) इति श्रुतेः इत्यर्थः ॥

न च उत्क्रान्तिसमये परमात्मसंपत्तौ सत्यां देवयानगमन विशिष्टदेशप्राप्तिरूपमोक्षः कथमुपपद्यते इति वाच्यम् । यथा वा सुषुप्तौ परमात्मसंपत्तिः श्रमापनोदनायेति अभ्युपगम्यते तथा शरीरात् मूर्धन्यनाडीप्रवेशपर्यन्तं संजातश्रमापनोदनाय मध्ये परमात्मसंपत्तिरिति पूर्वोक्तदोषानापत्तेः । अत एव

" दहरकुहरे देवस्तिष्ठन्निषद्वरदीर्घिका
निपतितनिजपत्यादित्सावतीर्णपितृक्रमात् ।
धमनमिह नस्तस्मिन् काले स एव शताधिका-
मकृतकपुरप्रस्थानार्थं प्रवेशयति प्रभुः ॥"

इति पूर्वाचार्योक्तप्रकारेण स्थूलशरीरविशिष्टं जीवात्मानं पृष्ठभागस्थितस्थूणास्थानीय प्रधानास्थिलयं मथित्वा उद्धृत्य शताधिकनाडीप्रकाशनद्वारा देवयानप्रापणसमये जीवस्य मथनजातश्रमापनोदनाय तस्मिन् काले परमात्मसम्पत्तिः युज्यत एवेत्यर्थः ॥

---

**द्वैतम् तानि पराश्रिकरणम् । (२०३)**

**ओं तानि परे तथा ह्याह । (५१८)**

**सर्वे देवा भूतलीनाः प्राणद्वारा परात्मनि ।**
**लीयन्ते प्राणमाविश्य देवे मुक्ता इति श्रुतेः ॥ ७४ ॥**

**अधिकरणार्थः** । 'भूतेषु लीयन्ते' इत्युक्ता देवाः चतुर्मुखद्वारा विष्णौ संपद्यन्त इत्यर्थः । 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्य' इति श्रुतेः । प्राणमाविश्य चतुर्मुखद्वारा इत्यर्थः ॥

---

**अद्वैतम् अविभागाधिकरणम् । (१७५)**

**अविभागो वचनात् । (५१२)**

**नामरूपे च भिद्येते सोऽमृतो भवतीत्यतः ।**
**परब्रह्मणि लीनानामविभागस्स्मृतः श्रुतौ ॥ ७५ ॥**

**अधिकरणार्थः** । विदुषः ब्रह्मणि उक्तः कलाप्रलयः सावशेषो वा निरवशेषो वेति संशये निरवशेष एव । 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' (प्रश्न. ६-५) इति श्रुतेः अविभाग एव लय इत्यर्थप्रतीतेः ॥

---

**विशिष्टाद्वैतम् अविभागाधिकरणम् । (१४१)**

**अविभागो वचनात् । (५०३)**

**आत्मनः परसम्पत्तिः अपृथक्भाव इष्यते ।**
**पुनस्सृष्ट्याद्यवचनात् संसर्गो ब्रह्मणस्तु सा ॥ ७६ ॥**

**अधिकरणार्थः ।** भूतसूक्ष्मविशिष्टजीवात्मनः परमात्मसम्पत्तिः पूर्वोक्ता परमात्मनो अविभागावस्थैवात्र । अविभागः-अपृथक्भाव एव । वाङ्मनसि सम्पद्यत इत्यत्रस्थ सम्पद्यत इति पदस्य तेजः परस्यां देवतायां इत्यत्रापि अनुषङ्गात् पुनस्सृष्ट्याद्यवचनात् उत्क्रान्तिवेलायां जीवस्य कारणापत्तिप्रयोजनाभावाच्च अपृथक्भावरूपसंसर्गविशेष एव 'सम्पद्यत' इति पदस्य अर्थ इत्यङ्गीकरणीयम् । अनुषक्तपदस्य अर्थवैरूप्ये प्रमाणाभावात् । इति ॥

---

## द्वैतम् अविभागाधिकरणम् । (२०४)

## ओं अविभागो वचनात् । (५१९)

**सत्यकामादयस्सर्वे मुक्तौ जीवस्य विश्रुताः ।**
**विष्णोः कामानुगुण्येन भवन्तीति विनिर्णयः ॥ ७७ ॥**

**अधिकरणार्थः ।** मुक्ताः सत्यकामत्वादिगुणविशिष्टा भवन्ति भगवदिच्छानुगुण्येन । 'एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसंकल्पा †'यथानिकाममन्तर्बहिः परिचरन्ति' इति श्रुतेः । ‡'कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः' इति श्रुतेश्च ।

'मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु ।
कामानुकूलकामत्वं नान्यत्तेषां विधीयते ॥' इति वचनाच्च ॥

---

## अद्वैतम् तदोकोधिकरणम् । (१७६)

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया । (५१३)**

**विद्वान् मूर्धन्यनाड्यैव निष्क्रामति परात्मनः ।**
**उपासनप्रसक्तस्य कृपया भासते गतिः ॥ ७८ ॥**

---

† यथानिकामं=यथेच्छं, अन्तः=ईश्वरदेहान्तः, बहि=तद्बहिश्च-परिचरन्ति ॥

‡ मृत्योः=मारकस्य, विष्णोः, कामेन=इच्छया, मे कामः=मदीय इष्टफलं, आगात्=प्राप्तं । मे हृदयं=मदीयेच्छाऽपि, हृदयं मृत्योः=मारकस्य विष्णोरिच्छयैव भवतीत्यर्थः ॥

**अधिकरणार्थः** । अत्र अपरविद्या विषयः चिन्त्यते । विद्वदविदुषोः उत्क्रान्तिः आसृत्युपक्रमात् समाना इत्यप्युक्तम् । इदानीं उपसंहृतेन्द्रियादेः शरीरात् उच्चिक्रमिषतः विज्ञानात्मनः आयतनं हृदयमिति प्रसिद्धम् । "एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः" (बृ. ४-४-२) इति उत्क्रमणनियमाभावः यद्यपि दृश्यते । तथापि 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ।' (छा. ८-६-६) इति श्रुत्यैकार्थ्यात् शतातिरिक्तया एकशततम्या नाड्या विद्वान् निष्क्रामति हार्दानुग्रहात् प्रकाशित नाडीद्वारस्सन् इति नियम एव । अविदुष एव अन्यस्थानात् निर्गमनमित्यर्थः ॥

---

## विशिष्टाद्वैतम् तदोकाधिकरणम् । (१४२)

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया । (५०४)**

**परब्रह्मानुग्रहेण मूर्ध्निनाडीं शताधिकाम् ।**
**प्रविश्योपासको याति देवयानगतिं प्रति ॥ ७९ ॥**

**अधिकरणार्थः** । उपासकः हृदयान्तर्याम्यनुग्रहेण प्रकाशित शताधिकमूर्धन्यनाड्या निष्क्रम्य अर्चिरादिगतिं प्राप्नोतीत्यत्रोच्यते । 'शतं चैका च हृदयस्य नाड्यः' (कठ. २-६-१६) इत्यादि श्रुत्या ॥

---

## अद्वैतम् रश्म्यधिकरणम् । (१७७)

**रश्म्यनुसारी । (५१४)**

**निशिनेतिचेन्न सम्बन्धस्य यावद्देहभावाद्दर्शयति च । (५१५)**

**दिवा मृतस्य विदुषः रश्मिसङ्गो न चान्यदा ।**
**रात्रिं दिवं रश्मिसत्त्वात् रश्मिद्वारैव गच्छति ॥ ८० ॥**

**अधिकरणार्थः** । विदुषः रात्रौ मृतस्य नास्ति देवयानगतिः । रश्मिद्वाराभावात् । 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति श्रुतेः । निशि सूर्यरश्मिसम्बन्धाभावात् इति प्राप्ते, रात्रिं दिवं सूर्यरश्मिसत्त्वात् रश्मिद्वारैव गच्छति । 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' (छा. ८-६-५) आभ्यो नाडीभ्य प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः (छा. ८-६-२) इत्यादिभिः नाडीरश्मीनां सदा सम्बन्धदर्शनात् ।' इति ॥

---

## विशिष्टाद्वैतम् रश्म्यधिकरणम् । (१४३)

### रश्म्यनुसारी । (५०५)

**रात्रौ मृतानां विदुषां नास्ति रश्मिसृतिर्न हि ।**
**ऊष्मोपलब्ध्या रात्रौ च सन्ति सूर्यस्य रश्मयः ॥ ८१ ॥**

**रात्रौ वा दिवसो वापि यथाकर्म त्यजन् तनुम् ।**
**रश्मिद्वरा देवयानं प्राप्नोतीति विनिर्णयः ॥ ८२ ॥**

**अधिकरणार्थः** । 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिरूर्ध्वमाक्रमते' (छा. ८-६-५) इति श्रुत्या रात्रावपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावदर्शनात् 'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' (छा. ८-६-२) इति श्रुत्या सूर्यरश्मीनां नाडीनां च सर्वदा सम्बन्धदर्शनाच्च । विद्वान् रश्म्यनुसार्येव गच्छति । नाडीषु सृप्ताः सम्बद्धा इत्यर्थः ॥

---

## विशिष्टाद्वैतम् निशाधिकरणम् । (१४४)

**निशिनेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च । (५०६)**

**गर्हितं रात्रिमरणमिति श्रुत्या विपश्चितः ।**
**न दोषस्तद्विवचनं अविद्वद्विषयं स्मृतम् ॥ ८३ ॥**

**अधिकरणार्थः ।** 'दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ॥'

(छा. ६-१४-३) इति श्रुत्या रात्रौ मृतस्य ब्रह्मप्राप्तिर्नेत्यत्र उत्तरं, निशिनेतीति । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा. ६-१४-२) इति श्रुतिः उपासकस्य चरमशरीरवियोगमेवापेक्षते, न तु देहवियोगकालादिकं । तत्तु प्रारब्धकार्यत्वात् यदा तदा वा भवेत् इति । दिवाचेत्यादिस्मृतिश्च अविद्वद्विषयमिति विद्वान् यदा तदा वा मृतोऽपि ब्रह्म प्राप्नोतीति सिद्धान्तः ॥

---

**द्वैतम् तदोकोधिकरणम् । (२०५)**

**ओं तदोकोग्रज्वलनं तत्प्रकाशितद्वारोविद्यासामर्थ्यात् तच्छेष-गत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया । (५२०)**

**ओं रश्म्यनुसारी । (५२१)**

**ओं निशिनेतिचेन्न सम्बन्धात् । (५२२)**

**ओं यावद्देहभावित्वाद्दर्शयति च । (५२३)**

**ओं अतश्चायनेपि हि दक्षिणे । (५२४)**

**विष्णुप्रकाशितद्वारा दक्षिणे चायने निशि ।**
**पञ्चाधिकशतं सूर्यरश्मयो देहसङ्गताः ॥ ८४ ॥**

**तद्वारोपासकास्सर्वे निर्गच्छन्ति न चेतरे ।**
**ज्ञानिनां निर्गतेः कालनियमो नासतस्तु सः ॥ ८५ ॥**

**अधिकरणार्थः ।** आत्मनां शरीरादुत्क्रान्तिकाले विष्णुप्रकाशित-द्वारस्सन् ब्रह्मरन्ध्रेण निष्क्रम्य सूर्यरश्मिद्वारा रात्रावपि रश्मिसम्बन्धवन्तः दक्षिणायने मृता अपि रश्मिसम्बद्धा एव निष्क्रम्य विष्णुं प्राप्नुवन्ति इत्यर्थः ।

" यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरं ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥"

इति विद्याविशेषगत्यनुसरणात् ' आचार्यस्तु ते गतिं वक्ता ' इति सत्यकाम-वचनाच्च

" हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु ।
उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेत् ॥"

'सहस्रं वा आदित्यस्य रश्मयः आसु नाडीष्वातताः तत्र श्वेतस्सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति' 'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तते' इति ।

* " शतं पञ्चैव सूर्यस्य दक्षिणायणरश्मयः ।
तावान्त एव निर्दिष्टाः उत्तरायणरश्मयः ॥
" ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् ।
महर्लोकादिगन्तारः उत्तरायणरश्मिभिः ॥
" निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः ।
उत्तरं दक्षिणमिति त एव तु निगद्यते ॥"
" न तु कालविशेषोस्ति ज्ञानिनां नियमात् फलम् ।
ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ।
अत्युतमानां केषांचित् न विशेषोस्ति कालतः ॥"

इत्यादि श्रुतिस्मृतिभ्य इत्यर्थः ।

ज्ञानिनो जीवाः यदा तदा वा मृता अपि सूर्यरश्मिद्वारा अन्तर्यामि-प्रकाशितब्रह्मरन्ध्रद्वारा ब्रह्म प्राप्नुवन्ति । निशिमरणं दक्षिणायने मरणं च अत्युत्तमज्ञानिनां न दोषाय । इति ॥

---

* आदित्यस्य रश्मयः दक्षिणायने पञ्चशतानि प्रकाशन्ते । पञ्चशतान्येव उत्तरायणे प्रकाशन्ते । आहत्य सूर्यस्य सहस्रं रश्मयः । महर्लोकस्य पुनरावृत्तिलोकत्वात् महर्लोकस्य इति पदस्य चित्रगुमानय इत्यादाविव अतद्गुणसंविज्ञान बहुव्रीह्या.श्र-यणात् जनादिलोको ग्राह्य इत्यर्थः । ज्ञानिनां नियमेन मोक्षप्राप्त्या भीष्माद्य-पेक्षया अत्युत्तमानां न कालविशेषनियमापेक्षा इति भावः ॥

अद्वैतम् दक्षिणायनाधिकरणम् । (१७८)

अतश्चायनेऽपि दक्षिणे । (५१६)

योगिनः प्रतिस्मर्यते स्मार्ते चैते । (५१७)

दक्षिणाख्यायने विद्वान् मृतो विद्याफलं लभेत् ।
अग्निरित्यादिवचनं न श्रौतं बाधते ध्रुवम् ॥ ८६ ॥
भीष्मप्रतीक्षा स्वच्छन्दमरणख्यापनाय हि ।
यत्र कालेति कालाभिमानिदेवपरा स्मृतिः ॥ ८७ ॥

अधिकरणार्थः । दक्षिणायने मृतौ विद्वान् विद्याफलं प्राप्नोत्येव । भीष्मस्य उत्तरायणकालमरणप्रतीक्षादर्शनं तु पितृप्रसादलब्धस्वच्छन्दमरण-ख्यापनाय ।

"यत्र कालेत्वनावृत्तिं आवृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥"

इति अपुनरावर्तये कालविशेषनियमः कथमुपपद्यत इति चेत् उपासनाकाले योगिनः प्रति कालविनियोगो अनावृत्तये स्मर्यते एतच्च गीतावचनं स्मार्तं साङ्ख्ययोगनिष्ठप्राशस्त्यपरं दक्षिणायनरात्र्यादौ मृतस्य विदुषः विद्याफलं सिद्ध्यतीति श्रुत्युक्तं न बाधत इत्युक्तमेव । किञ्च कालाभिमानिदेवतापरत्वं चास्येति न कोपि दोषः । इति ॥

---

विशिष्टाद्वैतम् दक्षिणायनाधिकरणम् । (१४५)

अतश्चायनेऽपि दक्षिणे । (५०७)

योगिनः प्रति स्मर्यते स्मार्ते चैते । (५०८)

मृतोऽयने दक्षिणेऽपि विद्वान् ब्रह्माधिगच्छति ।
चन्द्रसङ्गो विश्रमाय वाक्यशेषत्तथा श्रुतः ॥ ८८ ॥
कालप्रतीक्षा भीष्मस्य महिम्नो ज्ञापनाय सा ।
अग्निरित्यादि गीता तु ध्यानाय विदुषस्स्मृत ॥ ८९ ॥

**अधिकरणार्थः ।** 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति' ( तै-ना. ५२ अनु.)

" अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥"

इत्यादिना दक्षिणायनमृतविदुषः ब्रह्मप्राप्तिर्न युज्यत इति चेन्न । 'तस्माद्ब्राह्मणो महिमानमाप्नोति' ( तै-ना. ५२ अनु. ) इति पूर्वोक्तश्रुतिवाक्यशेषात् चन्द्रमसं प्राप्तस्यापि ब्रह्मप्राप्त्युक्तेः । भीष्मादिनालोके धर्मप्रवर्तनाय उत्तरायणप्राशस्त्यप्रदर्शनाय उत्तरायणप्रतीक्षेति । गीतावाक्यं उपासकस्य देवयानपितृयाणस्मरणार्थमिति न तद्विरोधश्च । इति ॥

---

## द्वैतम् योग्यधिकरणम् । (२०६)

**ओं योगिनः प्रति स्मर्यते स्मार्ते चैते । (५२५)**

**ज्ञानयोग्यग्निरित्यादिगतिं ध्यायीत सर्वदा ।**
**कर्मयोगी स्मरेन्नित्यं भूमादीनीति कथ्यते ॥ ९० ॥**

**अधिकरणार्थः ।** ' अग्निर्ज्योतिरहश्शुक्लः ', ' धूमो रात्रिस्तथा कृष्णः ' इत्यादि स्मृत्युक्तेः ब्रह्मचन्द्रगती ज्ञानयोगिनः कर्मयोगिनश्च प्रत्यपि स्मरणनिमित्ते श्रूयेते ।

" गत्यनुस्मरणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।
अननुस्मरणात् काले स्मरणं प्राप्य वै गतिः ॥"

इति प्रमाणात् ज्ञानयोगी गत्यनुस्मरणात् ब्रह्म गच्छति । कर्मयोगी गत्यनुस्मराणात् चन्द्रं गच्छति । अननुस्मरतः ज्ञानयोगिनः कर्मयोगिनश्च जन्मान्तरे स्मरणं प्राप्यैव गतिर्भवेदित्यर्थः ॥

**॥ इति मतत्रयसारसंग्रहे चतुर्थाध्याये द्वितीयः पादः ॥**

---

# ॥ मतत्रयसारसंग्रहे ॥

## ॥ चतुर्थाध्याये—तृतीयः पादः ॥

### अद्वैतम् अर्चिराद्यधिकरणम् । (१७९)

**अर्चिरादिना तत्प्रथितेः । (५१८)**

**सगुणब्रह्मविदुषः पन्थानोऽनेकधा श्रुताः ।**
**अर्चिरादिगतिस्त्वेका ब्रह्मप्रपदनी श्रुता ॥ ९१ ॥**

**अधिकरणार्थः** । सगुणब्रह्मनिष्ठस्य ब्रह्मप्राप्तिसाधनमार्गाः श्रुतिषु बहुधाभिन्ना दृश्यन्ते । अर्चिरादिका एका, 'स अग्निलोकमागच्छती'-त्यपरा । 'स वायुमागच्छति' इत्यन्या । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' इति च । तथापि अर्चिरादिना एकेन मार्गेणैव विद्वांसो गच्छन्तीति अनेक-श्रुत्यर्थपर्यालोचनया निर्णीयत इत्यर्थः ॥

---

### विशिष्टाद्वैतम् अर्चिराद्यधिकरणम् । (१४६)

**अर्चिरादिना तत्प्रथितेः । (५०९)**

**ब्रह्मविद्यासु गतयः ब्रह्मनिष्ठस्य दर्शिताः ।**
**भिन्नप्रकारा अप्येताः अर्चिराद्या विनिश्चिताः ॥ ९२ ॥**

**अधिकरणार्थः** । उत्क्रान्तस्य विदुषः मार्गप्रकाराः ब्रह्मलोकगमन-साधनभूताः श्रुतिषु बहुधा दर्शिता अपि अर्चिरादिः एक एव मार्गः सर्वत्र दृश्यत इति अर्चिरादिमार्गेणैव ब्रह्म गच्छति विद्वान् । इति ॥

---

## द्वैतम् अर्चिरधिकरणम् । (२०७)

### ओं अर्चिरादिना तत्प्रथितेः । (५२६)

**अर्चिषं प्रथमं ज्ञानी याति वायुं न गच्छति ।**
**धूमादि कर्मिणां चैव ज्ञानिनामर्चिरादयः ॥ ९३ ॥**

**अधिकरणार्थः** । अस्मिन् पादे मार्गो गम्यं चोच्यते । अत्र 'तेऽर्चिषमभिसंभवन्ति' इति श्रुतिः विदुषः अर्चिमार्गप्राथम्यं वक्ति । 'यदा ह वै पुरुषो अस्माल्लोकात् प्रैति स वायुमागच्छति' इति वायुप्राथम्यं काचन श्रुतिः वक्ति । तथापि

"द्वावेव मार्गौ प्रथितौ अर्चिरादिविपश्चिताम् ।
धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ॥"

इति प्रमाणात् उत्क्रान्तः ज्ञानी अर्चिरादिना मार्गेणैव ब्रह्म गच्छति । ज्ञानिनां अर्चिरादिमार्गः, कर्मिणां धूमादि मार्ग इति मार्गद्वयस्यैव श्रवणात् । वायुस्तु आतिवाहिक एव, न मार्गः ।

"अग्निर्ज्योतिरिति द्वेधैवार्षिषः संप्रतिष्ठितिः ।
अग्निं गत्वा ज्योतिरिति प्रथमं ब्रह्म संव्रजन् ॥"
"एकस्मिंस्तु पुरे संस्थः द्विरूपोऽग्नेः सुतो महान् ॥"

इति शास्त्रात् अग्निशब्दस्य 'अग्निर्ज्योतिः' इति स्मृतौ अग्नेः प्राथम्यश्रवणेऽपि अग्निपुत्रस्य अर्चिषः द्वेधा अवस्थानात् ज्ञानी प्रथमं अग्निं गत्वा ततोज्योतिरिति प्रतीयमानेऽपि एकस्मिन्नगरे द्विरूपेणावस्थानात् अग्निज्योतिरिति 'तेऽर्चिषमि'ति च न विरुद्धमित्यर्थः । एक एव अर्चिरादिर्मार्ग इति सिद्धान्तात् ॥

---

## अद्वैतम् वाय्वधिकरणम् । (१८०)

### वायुमब्दादविशेषविशेषाभ्याम् । (५१९)

**अर्चिरादिगतेः पाठोभिन्नोऽभिन्नो हि दृश्यते ।**
**संवत्सरो देवलोकः वायुरादित्य इत्ययम् ॥ ९४ ॥**

क्रमस्सम्पादनीयोत्र विशेषणविशेषतः ।
वायुमब्दादितीदं तु देवलोकोपलक्षणम् ॥९५ ॥

अधिकरणार्थः । 'मासेभ्यस्संवत्सरं संवत्सरादादित्यं' (छा. ५-१० १-२) 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ. ५-१०-१) 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं' (कौषी. १-३) इत्यादयः भिन्नभिन्नाः श्रूयन्ते । तत्र क्रमः अवश्यमङ्गीकरणीयः । तत्र उत्तरायणानन्तरं संवत्सरः, संवत्सरादनन्तरं वायुः, स एव देव लोकशब्देनाप्युच्यते । 'मासेभ्यो देवलोकं, देवलोकादादित्यं' (बृ. ६-२-१५) इति श्रुतेः । तदनन्तरं आदित्यं गच्छतीति क्रमनिर्णयः अविशेषविशेषाभ्यामित्यर्थः ॥

---

विशिष्टाद्वैतम् वाय्वधिकरणम् । (१४७)

वायुमब्दादविशेषविशेषाभ्याम् । (५१०)

पाठभेदेप्यर्चिरादेः अविरुद्धक्रमादिह ।
संवत्सरात्परं वायुः तस्मादादित्य इष्यते ॥ ९६ ॥
वायुश्च देवलोकश्च पर्यायो ज्ञायते श्रुतेः ।
गृहानामेष देवानां पवते योयमित्यतः ॥ ९७ ॥

अधिकरणार्थः । विदुषां अर्चिरादिमार्गेण गमने निश्चितेऽपि 'मासेभ्यः संवत्सरं संवत्सरादादित्यम्' (छा. ४-१५-५) मासेभ्यो देवलोकं देवलोकादादित्यम्' (बृ. ८-२-१५) 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' इत्यारभ्य 'स आदित्यमागच्छति' (बृ. ७-१०-१) इत्यादिना संवत्सरादित्यवायूनां क्रमभेदो उच्यते । तत्र वायुदेवलोकयोः पर्यायत्वेन 'योऽयं पवते एष देवानां गृहाः' इति श्रुत्या संवत्सरादनन्तरं वायुमागत्य तदनन्तरं आदित्यं प्राप्नोतीति क्रमो निर्णीयत इत्यर्थः ॥

---

## द्वैतम्   वायुशब्दाधिकरणम् । (२०८)

### ओं वायुशब्दादविशेषविशेषाभ्याम् । (५२७)

**ज्ञानी देहाद्विनिष्क्रान्तः प्राप्नोत्यर्चिषमग्रतः ।**
**तस्मादुत्क्रम्य वायुं च द्वितीयं प्राप्यमाप्नुयात् ॥ ९८ ॥**

**अधिकरणार्थः ।** ज्ञानी देहादुत्क्रम्य अर्चिषं प्राप्य 'अर्चिषो वायुं गच्छति स वायुमागच्छति' इति वायुशब्दात् 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह आपूर्यमाणपक्षं' इति विशेषवचनाच्च 'अर्चिषो अहः, वायोरहः' इति श्रुत्योरविरोधाय अर्चिषः परं वायुमागच्छतीति निर्णयः क्रियते । 'स इतो गतो द्वितीयां गतिं' इति विशेषवचनात् ॥

---

## अद्वैतम्   तडिदधिकरणम् । (१८१)

### तडितोऽधिवरुणस्सम्बन्धात् । (५२०)

**आदित्याच्चन्द्रमास्तस्मात् विद्युत्पाशी ततः परम् ।**
**इन्द्रः प्रजापतिश्चेति क्रमनिर्धारणं स्मृतम् ॥ ९९ ॥**

**अधिकरणार्थः ।** 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं' (छा. ४-१५-५) इत्यादिना विद्युतः उपरि वरुणः, तदुपरि इन्द्रः, तदुपरि प्रजापतिरिति क्रमनिर्णयः । तडितः वरुणस्य च संबन्धो विद्यते । 'तेजो वावाऽद्भ्यो भूयः तद्वा एतद्वायुं' इत्यारभ्य 'तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्वेति' (छा. ७-११-१) इति ब्राह्मणात् जलाधिपतिः वरुण इति प्रसिद्ध्या च विद्युत उपरि वरुणो निवेशयितव्यः । एनयोस्सम्बन्धश्च 'चत्वारि वा अपाँ रूपाणि, मेघो विद्युत् स्तनयित्नुः वृष्टिः' (तै-आरुण) इत्यादिना वेदितव्यः ॥

---

विशिष्टाद्वैतम् वरुणाधिकरणम् । (१४८)

तडितोऽधि वरुणस्सम्बन्धात् । (५११)

निशापतेः परं विद्युत् तदूर्ध्वं वरुणस्स्मृतः ।
तस्मात्परं बिडौजाश्च तत्परं तु प्रजापतिः ॥ १०० ॥

अधिकरणार्थः । 'स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं' (कौषी. १. अ. ३) इति श्रुतौ क्रमव्यत्यासो दृश्यते । तथापि विद्युतः उपरि वरुणः निवेशयितव्यः । मेघोदरवर्तित्वाद्विद्युतः । वरुणेन संबन्धः लोकवेदयोः प्रसिद्धः । तदुपरि इन्द्रः, तदुपरि प्रजापतिः इति क्रमो विज्ञेयः ॥

---

द्वैतम् तटिदधिकरणम् । (२०९)

ओं तटितोऽधि वरुणः सम्बन्धात् । (५२८)

वत्सरात्तटितं प्राप्य तटितो वरुणं तथा ।
इति क्रमस्तु विज्ञेयः युक्तिन्यायाऽगमादिभिः ॥ १०१ ॥

अधिकरणार्थः । 'मासेभ्यसंवत्सरं, संवत्सरात् वरुणलोकं, वरुणलोकात् प्रजापतिलोकं' इति कौण्डिन्यश्रुतौ संवत्सरात्परं वरुणलोकः पठितः । 'संवत्सरात् तटितमागच्छति, तटितः प्रजापतिलोकं' इति गौपवनश्रुतौ संवत्सरादुपरि तटितः पाठो दृश्यते । तटितः परः प्रजापतिलोकश्च । तत्र क्रमः कथमिति चिन्तायां तटितो उपरि वरुण इति निश्चीयते । तयोरेव संबन्धो दृश्यते । 'तटिताह्यूह्यते वरुणलोकः तटिदुपरिमुक्तमयो राजते तत्रासौ वरुणो राजा सत्यानृते विविंचति' इति उपरिसम्बन्धत्वश्रुतेः । तटिद्द्वारा वरुणस्य प्राप्यत्वबोधनात् इत्यर्थः ॥

[सत्यानृते=प्रजाकृते सत्यानृते, विविंचति=विवेचयति, 'कस्सत्यं जगाद को वाऽनृतं जगाद' इति विवेचयतीत्यर्थः]

---

## अद्वैतम् आतिवाहिकाधिकरणम् । (१८२)

आतिवाहिकास्तल्लिङ्गात् । (५२१)
उभयव्यामोहात् तत्सिद्धेः । (५२२)
वैद्युतेनैव ततस्तच्छ्रुतेः । (५२३)

अर्चिरादय एते च नेतारो देवतास्स्मृताः ।
न भोगभूमयश्चिह्नभूता गमयितृश्रुतेः ॥ १०२ ॥

**अधिकरणार्थः ।** किमेते अर्चिरादयः मार्गचिह्नभूताः भूमयो वा गन्तॄणां नेतारो वेति विशये 'स एतान् ब्रह्म गमयति' (छा. ४-१५-५) इति गमयितृत्वश्रवणात् आतिवाहिका एव । अग्निलोकं प्राप्तः अयं ज्ञानी अग्निना अतिवाह्यते, स वायुलोकं प्राप्तः वायुना अतिवाह्यत इत्यादि ऊहितव्यम् । विद्युत्पुरुषस्यैव साक्षात् ब्रह्मलोकगमयितृत्वं । वरुणेन्द्र प्रजापतयस्तु तत्साहाय्यका इति वेदितव्यम् । इति ॥

---

## विशिष्टाद्वैतम् आतिवाहिकाधिकरणम् । (१४९)

आतिवाहिकास्तल्लिङ्गात् । (५१२)
वैद्युतेनैव ततस्तच्छ्रुतेः । (५१३)

अमानवान्तार्चिराद्याः स्वप्राप्तावतिवाहिकाः
न युक्ता ब्रह्मणा सर्वे देवा एव भवन्ति ते ॥ १०३ ॥
साक्षाद्ब्रह्मसमीपं तु भक्तं विद्युन्नयत्यसौ ।
वरुणाद्यास्साधकास्ते विद्युतः कीर्तिताः श्रुतौ ॥ १०४ ॥

**अधिकरणार्थः ।** अर्चिरादयः मार्गचिह्नभूताः उत भोगभूमयः अथ वोढार इति । ब्रह्मप्रेप्सतां आतिवाहिका एते । ब्रह्मणा एतेषां ज्ञानिनामतिवहने नियुक्ता इत्यर्थः । विद्युत्पुरुषः वरुणेन्द्रप्रजापतिसहायेन साक्षात् एनान् ब्रह्म प्रापयतीत्यर्थः । " तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति " (छा. ४-१५-५) इति श्रुतेः ॥

'अर्चिर्वासरशुक्लपक्षषडुदङ्मासाश्च संवत्सरं
वायुं भास्करचन्द्रविद्युदुदपान् सेन्द्रं प्रजानां पतिम् ।
गत्वाथो विरजां विमुञ्चति तनुं सूक्ष्मां ततोऽमानव-
स्पर्शाक्षालितवासनास्सुकृतिनो गच्छन्ति विष्णोः पदम् ॥'

'भूलोकेशाग्नयोष्टौ प्रथममहरतः पूर्वपक्षस्सितात्मा
मासाष्षड्वत्सरोथो दशतनुपवनः सैक आदित्यवर्गः ।
चन्द्रो विद्युज्जलेशः स मरुदधिपतिः स प्रजानामधीशः
ते मार्गस्यार्चिरादेरतिवहनविधौ विश्वनेत्रा नियुक्ताः ॥'

'ज्वलनदिवसज्योत्स्नापक्षोत्तरायणवत्सरान्
पवनतपनप्रालेयांशून् क्रमादचिरद्युतिम् ।
जलधरपतिं देवाधीशं प्रजापतिमागतः
तरति विरजां दूरे वाचस्ततः परमाद्भुतम् ॥'

इत्येतैः पूर्वाचार्यश्लोकैः अवगन्तव्यः ॥

---

**द्वैतम् आतिवाहिकाधिकरणम् । (२१०)**

**ओं आतिवाहिकस्तल्लिङ्गात् । (५२९)**

**ओं उभयव्यामोहात्तत्सिद्धेः । (५३०)**

**द्वितीयप्राप्य वायुर्यः आतिवाहिक ईरितः ।**
**अन्त्यश्रुतो मुख्यवायुः तेनैव ब्रह्म गच्छति ॥ १०५ ॥**

**अधिकरणार्थः ।** 'स वायुमागच्छती'ति प्रथमं श्रूयते । 'उत्क्रान्तो विद्वान् परमभिगच्छन् विद्युतमेव अन्ततः उपगच्छति द्यौर्वाव विद्युत् तत्पतिं वायुं उपगम्य तेनैव ब्रह्म गच्छति' इति अन्त्येऽपि वायुः श्रुतः । तत्र पूर्वोक्त आतिवाहिकवायुरेव अन्त्ये पठितवायुः उत अन्यो वेति व्यामोहे अयमपि पूर्वोक्त आतिवाहिक एवेति निर्णीयते ।

"उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योसौ नाम्नातिवाहिकः ॥"
"ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥"
"सोमं वैश्वानरं चन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥"

इति प्रमाणात् उभावपि वायुरेवेत्यर्थः ।

'द्यौर्वाव विद्युत् तत्पतिं वायुमि'ति वायोः दिवस्पति विशेषणात् द्युशब्दस्य वाणीवाचित्वेन वाणीपतिं वायुमित्यर्थात् वायुरेवेत्यर्थ इति ज्ञायते ॥

---

**द्वैतम् वैद्युताधिकरणम् । (२११)**

**ओं वैद्युतेनैवततस्तच्छ्रुतेः । (५३१)**

**विद्युद्गमयति ब्रह्म वायुश्चापि कथं भवेत् ।**
**विद्युत्पतिर्वायुरेव 'स एनानि'ति विश्रुतः ॥ १०५ ॥**

**अधिकरणार्थः** । विद्युत्पतिना वायुनैव ज्ञानी ब्रह्मसमीपं नीयत इत्यर्थः । 'स एनान् ब्रह्म गमयति' इति श्रुतेः ।

"विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिः तमृते प्राणनायकम् ॥"

[ स एनान् ब्रह्म गमयति=मुख्यवायुः अप्रतीकालम्बान् परं ब्रह्म, प्रतीकालम्बनान् कार्यं ब्रह्म गमयतीत्यर्थः । प्राणनायकम्=इन्द्रियस्वामिनमित्यर्थः ॥

---

**अद्वैतम् कार्याधिकरणम् । (१८३)**

**कार्यं बादरिरस्य गत्युपपत्तेः ।** (५२४)
**विशेषितत्वाच्च ।** (५२५)
**सामीप्यात्तद्व्यपदेशः ।** (५२६)

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् । (५२७)
स्मृतेश्च । (५२८)
परं जैमिनिर्मुख्यत्वात् । (५२९)
दर्शनाच्च । (५३०)
न च कार्ये प्रतिपत्त्यभिसन्धिः । (५३१)

नेतारो सगुणं ब्रह्म गतिलोकादि दर्शनात् ।
अकार्यं ब्रह्म तत्रत्य ब्रह्मणैक्यमवाप्नुयुः ॥ १०७ ॥

अधिकरणार्थः । 'स एनान् ब्रह्म गमयति' (छा. ४-१५-५) इत्यत्र ब्रह्मशब्दश्रवणात् गतिश्रवणाच्च सगुणं अपरं ब्रह्मैव अमानवः गमयति इति बादरिमतम् । गन्तव्यप्रदेशत्वात् कार्यब्रह्मणः ब्रह्मगमयतीति ब्रह्मशब्दश्च परब्रह्मसामीप्यादुपपद्यते ।

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति स्मृत्या कार्यब्रह्मणा सह पुनरावृत्त्यभावेन परब्रह्मणा ऐक्यमाप्नुयुः इति ॥

जैमिनिस्तु ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यप्रयोगात् परब्रह्मैव प्रापयति अमानव इति मन्यते । तथापि पूर्वोक्तं बादरिमतमेव स्वमतमिति अनेकोपनिषद्वाक्यादवगम्यत इति ॥

---

## अद्वैतम् अप्रतीकालम्बनाधिकरणम् । (१८४)

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्
तत्क्रतुश्च । (५३२)
विशेषं च दर्शयति । (५३३)

प्रतीकोपासनायास्तु नामाद्यास्संप्रकीर्तिताः ।
न तान् ब्रह्म नयन्त्येते किन्तु ब्रह्मगुणाकरम् ॥१०८॥

**अधिकरणार्थः ।** अमानवः सर्वान् विकारालम्बनान् ब्रह्मलोकं प्रापयति, उत कांश्चिदेवेति विशये अप्रतीकालम्बनान्, नामाद्युपासकान् वर्जयित्वा, नयतीति बादरायणाभिप्रायः । 'तं यथा यथोपासते तदेव भवति इति श्रुतेः ॥

---

## विशिष्टाद्वैतम् कार्याधिकरणम् । (१५०)

**कार्यं बादरिरस्य गत्युपपत्तेः ।** (५१४)

**विशेषितत्वाच्च ।** (५१५)

**सामीप्यात्तु तद्व्यपदेशः ।** (५१६)

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ।** (५१७)

**स्मृतेश्च ।** (५१८)

**परं जैमिनिर्मुख्यत्वात् ।** (५१९)

**दर्शनाच्च ।** (५२०)

**न च कार्ये प्रत्यभिसन्धिः ।** (५२१)

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ।** (५२२)

**विशेषश्च दर्शयति ।** (५२३)

**चतुर्मुखोपासका ये ब्रह्मलोकान् नयन्ति तान् ।**
**तत्र स्थित्वा तेन साकं साक्षाद्ब्रह्म नयन्ति ते ॥ १०९ ॥**
**ब्रह्मात्मकं च स्वात्मानं परं ब्रह्म च ये बुधाः ।**
**उपासते तानुभयान् ते नयन्त्यातिवाहिकाः ॥११०॥**

**अधिकरणार्थः ।** अर्चिरादिकः आतिवाहिकगणः चतुर्मुखब्रह्मोपासकानेव नयतीति बादरिमतम् । परब्रह्मोपासकानेव नयतीति जैमिनिमतम् । बादरायणमतं तु तत्क्रतुन्यायात् प्रकृतिवियुक्तमात्मानं ब्रह्मात्मकं उपासीनान् परंब्रह्मोपासीनांश्च नयतीति । नामादिप्रतीकोपालम्बनान् केवलं वा अचिद्वस्तु ब्रह्मदृष्ट्या उपासीनांश्च न नयतीति ॥

---

## द्वैतम्　कार्याधिकरणम् । (२१२)

ओं कार्यां बादरिरस्य गत्युपपत्तेः ।　(५३२)
ओं विशेषितत्वाच्च ।　(५३३)
ओं सामीप्यात्तु तद्व्यपदेशः ।　(५३४)
ओं कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ।　(५३५)
ओं स्मृतेश्च ।　(५३६)
ओं परं जैमिनिर्मुख्यत्वात् ।　(५३७)
ओं दर्शनाच्च ।　(५३८)
ओं न च कार्ये प्रतिपत्त्यभिसन्धिः ।　(५३९)
ओं अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च
दोषात्तत्क्रतुश्च ।　(५४०)
ओं विशेषं च दर्शयति ।　(५४१)

चतुर्मुखं नयत्येषः विद्युत्पुरुष इत्यपि ।
परब्रह्मसमीपे हि विरिञ्चे वर्तते ततः ॥ १११ ॥
चतुर्मुखेन तेनैव साकं ब्रह्म प्रयाति सः ।
साक्षात् परंब्रह्मनेता विद्युत्पुरुष उच्यते ॥ ११२ ॥
कार्यब्रह्मणि विश्वासो मुमुक्षोर्न हि युज्यते ।
अप्रतीकालम्बनास्तु परं नयति वैद्युतः ॥ ११३ ॥

अधिकरणार्थः । बादरिः कार्यब्रह्म गमयति विद्युत्पतिरिति मन्यते ।
" ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात् क्वचित् ।
यद्यपि ब्रह्मदृष्टिस्स्यात् ब्रह्मलोकमवाप्नुयात् ॥" इति प्रमाणात् ।
'ब्राह्मणं चतुर्मुखं प्राप्नोति ब्राह्मणं चतुर्मुखं' इति कौषारवश्रुतेश्च । 'ब्रह्मविदाप्नोति परं' इति व्यपदेशस्तु तस्य एव ब्रह्म प्राप्नोतीत्यर्थादुपपद्यते । 'अथ सह ब्रह्मणा परमभिगच्छन्ति' इति सौपर्णश्रुत्या अध्यक्षेण ब्रह्मणा सह गच्छन्ति इति । 'ब्रह्मणा सह ते सर्वे' इति श्रुतिस्मृत्यादेः ।

जैमिनिस्तु परब्रह्मैव गमयतीति मन्यते ।

" यदुपास्ते पुमान् जीवन् यत्प्राप्तुमभिवाञ्छति ।
यच्च पश्यति तृप्तस्सन् तत्प्राप्नोति मृतेरनु ॥" इति पाद्मवचनात्

परब्रह्मोपासकः परब्रह्मैव प्राप्नोतीति ॥

बादरायणस्तु "प्रतीकं देह उद्दिष्टः येषां तत्रैव दर्शनम् ।
न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥"
"अप्रतीका देवतास्तु ऋषीणां शतमेव च ।
राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ॥"
एतेऽधिकारिणोव्याप्त दर्शनेऽन्ये न तु क्वचित् ।
अयोग्यदर्शने यत्नात् भ्रंशः पूर्वस्य चापि तु ॥
अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।
स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद्ब्रह्म स लोक ताम् ॥
ब्रह्मणा सह संप्राप्ते संहारे परमं पदम् ॥"

इत्यादि प्रमाणात् अप्रतीकालम्बनान् परं नयति विद्युत्पतिरिति मन्यते । 'यत्क्रतुर्भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसम्पद्यते' इत्यादि श्रुतेश्च । अत्र कर्मशब्दः उपासनापरः ।

'अन्तःप्रकाशाः बहिःप्रकाशाः सर्वप्रकाशाः । देवा वा सर्वप्रकाशाः, ऋषयो अन्तःप्रकाशाः, मनुष्या एव बहिःप्रकाशा' इत्यादि श्रुतेः मनुष्याः स्वयोग्योपासनं कृत्वा स्वयोग्यां मुक्तिं प्राप्नुवन्ति इति ॥

'सिद्धान्तनिर्णीतिकराः प्रतीकं देवादिकं तद्गत एव ये नराः । उपासते ते परतस्समाप्नुयुः ब्रह्माणमस्मान् मतिमाप्य विष्णुं । प्राप्स्यन्त्यतोन्येपितमाप्य तस्मात् हरिं गता मुक्तिभाजः परं ते ॥' इति अनुव्याख्यानोक्तरीत्या चतुर्मुखमुपास्य तस्मात् ज्ञानं प्राप्य विष्णुं भजन्त इति कार्यब्रह्मप्राप्तिपरमिति बादरिमतमपि युक्तमिति भावः । सर्वेषामपि सत्यलोके चतुर्मुखोपदेशः ।

" ज्ञानं चतुर्मुखात् प्राप्यमुच्यते नात्र संशयः ।
उपदेशाद्ब्रह्मणस्तु सर्वेषामेव मुक्तये ॥"

इति प्रमाणात् । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते परात्मानः प्रविशन्ति परम्पदम् ॥'

[ परात्मनः=परमात्मचिन्तकाः, परस्य=ब्रह्मायुषः, अन्ते=शतसंवत्सरान्ते, प्रतिसञ्चारे=प्रलये सति चतुर्मुखेन सह ब्रह्म प्रविशन्तीत्यर्थः । ]

" तथापि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते " इत्यादि प्रमाणाच्च वैद्युतः चतुर्मुखलोकमेव स्वं प्राप्तान् नयतीति सिद्धान्तः ॥

**॥ इति मतत्रयसारसंग्रहे चतुर्थाध्याये तृतीयः पादः ॥**

---

## ॥ मतत्रयसारसंग्रहे ॥

### ॥ चतुर्थाध्याये—चतुर्थः पादः ॥

**अद्वैतम् सम्पद्याविर्भावाधिकरणम् । (१८५)**

सम्पद्याविर्भावस्स्वेन शब्दात् । (५३४)
मुक्तः प्रतिज्ञानात् । (५३५)
आत्मा प्रकरणात् । (५३६)

**ज्योतिः परं प्राप्य विमुक्त आत्मा स्वेनैव रूपेण च केवलेन ।**
**निष्पद्यतेऽपूर्वगुणेन नेति ज्योतिः परात्मेति च सिद्ध्यतीह ॥११४**

**अधिकरणार्थः ।** निर्गुणविद्याफलैकदेशान्तरं ब्रह्मभावाविर्भावः सगुण-विद्याफलञ्च सर्वेश्वरतुल्यभोगभाक्त्वं इदानीं चतुर्थे पादे चिन्त्यते । 'एष संप्रसादो अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र श्रूयमाणा अभिनिष्पत्तिः केनचिदागन्तुकेन विशेषेण विशिष्टा आहोस्वित् आत्ममात्रेणेति संशये केवलेनैवात्मना आविर्भवति न धर्मान्तरेण । 'स्वेन रूपेणाभिनिष्पद्यते' इति स्वशब्दविशेषण श्रवणात् । अन्यथा स्वशब्द-विशेषणं व्यर्थं स्यात् । 'अभिनिष्पद्यते' इति शब्दश्च नोत्पत्तिपर्यायार्थकः ।

यथा रोगनिवृत्तौ अरोगो अभिनिष्पद्यत इत्यत्रैव पूर्वावस्थापेक्षकार्थक एव । ‘ परंज्योतिरुपसंपद्यत ’ इति ज्योतिश्शब्दश्च प्रकरणात् आत्मन्येव वर्तत इति अविद्यानिवृत्तः मुक्तात्मैव अत्र श्रुतौ प्रतिपाद्यत इति ॥

---

## विशिष्टाद्वैतम् संपद्याविर्भावाधिकरणम् । (१५१)

**संपद्याविर्भावस्स्वेन शब्दात् । (५२४)**

**मुक्तः प्रतिज्ञानात् । (५२५)**

**आत्मा प्रकरणात् । (५२६)**

**विमुक्त आत्मा निजरूपभागित्युक्ते ह्युपासाफलमत्र नेति ।**
**न कर्मरुद्धं गुणजातमस्य कर्मण्यपास्ते पुनराविरासीत् ॥११५॥**

**अधिकरणार्थः** । अर्चिरादिना मार्गेण अपुनरावृत्तिलक्षणागतिरुक्ता पूर्वम् । इदानीं मुक्तैश्वर्यं चिन्त्यते । ‘परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते’ (छा. ८-१२-२) इति श्रुतिः परब्रह्मप्राप्तस्य साध्येन केनचिद्रूपेण संबन्धं वक्ति, उत स्वाभाविकस्वरूपाविर्भावमिति विशये साध्यरूपसंबन्धं वक्तीति युक्तम् । अन्यथा उपासनायाः फलाभावस्स्यात् इति पूर्वपक्षे, स्वाभाविकस्वरूपाविर्भावरूपं फलमेव वक्ति । ‘ स्वेन रूपेण ’ इति विशेषणात् । आगन्तुकविशेषपरिग्रहे स्वेनेति शब्दो व्यर्थस्स्यात् । प्रतिज्ञानाच्च बन्धनिवृत्तिरूपा मुक्तिरेव ‘अभिनिष्पद्यते’ इति शब्देनोच्यते । ‘युक्त्या अयमर्थो निष्पद्यते’ इत्यादौ स्वरूपाविर्भावेऽपि अभिनिष्पत्तिशब्दप्रयोगात् ।

“ यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्नज्ञानं आत्मनः क्रियते तथा ॥”

“ यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः ॥”

“ तथा हेयगुणध्वंसात् अवबोधादयो गुणाः ।
प्रकाशन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥”

इति कर्मणा तिरोहितानां ज्ञानानन्दादिगुणानां कर्मक्षये आविर्भावः सम्यगेवेति। अत एव "अकारार्थायैव स्वमहमथ मह्यं न निवहाः

नराणां नित्यानामयनमिति नारायणपदम्।

यमाहास्मै कालं सकलमपि सर्वत्र सकलासु

अवस्थास्वाविस्युः मम सहजकैङ्कर्यविधयः ॥"

इति पूर्वाचार्यैरपि स्वाभाविक कैङ्कर्याविर्भाव एव अभिनिष्पत्तिशब्दार्थो वर्णितः। इति ॥

---

## द्वैतम् सम्पद्याधिकरणम्। (२१३)

### ओं सम्पद्याविर्भावस्वेन शब्दात्। (५४२)

**ज्ञानी भवाब्धिं तीर्त्वैव प्राप्यब्रह्माविहाय तत्।**
**स्वेन रूपेण सम्पद्य भुङ्क्ते भोगान् बहून्निजान् ॥ ११६ ॥**

**अधिकरणार्थः।** मुक्तस्य भोगमहिमा अत्रोच्यते। 'स य एवं विद्वेवं मन्वानः एवं पश्यन्नात्मानं अभिसंपद्यैतेनात्मना यथाकामं सर्वान् कामान् अनुभवति' इति सौपर्णश्रुतिः। 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति छान्दोग्यश्रुतिः। 'एतं सेतुं तीर्त्वा अन्धस्सन् अनन्धो भवति' इति। 'इमां घोरामशिवां नदीं तीर्त्वा एतं सेतुमाप्य एतेनैव सेतुना मोदते प्रमोदते आनन्दी भवति।' इति च श्रुतिः मुक्तः संसारनदीं तीर्त्वा ब्रह्म सम्पद्य ब्रह्म अविहाय स्वस्वयोग्यानानन्दान् अनुभवतीति वक्तीत्यर्थः॥

---

## द्वैतम् मुक्ताधिकरणम्। (२१४)

### ओं मुक्तः प्रतिज्ञानात्। (५४३)

**"तत्र पर्येति" मुक्तोयं सर्वान् कामान् समश्नुते।**
**न संसारी प्रतिज्ञानात् अहरित्यादि वेदतः ॥ ११७ ॥**

**अधिकरणार्थः** । 'स तत्र पर्येति' इति श्रुतौ तच्छब्देन संसारी नोच्यते । अपि तु मुक्त एव । 'अहरहरेनमनुप्रविशति' इत्यारभ्य 'कामांश्चानुभवति' इति बृहच्छ्रुतौ मुक्त एव प्रतिज्ञायत इत्यर्थः ॥

---

द्वैतम् आत्माधिकरणम् । (२१५)

ओं आत्मा प्रकरणात् । (५४४)

**परंज्योतिः परात्मैव तत्प्राप्तिर्मुक्तिरीरिता ।**
**परमात्मा प्रकरणात् ज्योतिश्शब्देन कथ्यते ॥ ११८ ॥**

**अधिकरणार्थः** । 'परंज्योतिरुपसंपद्य' इति परंज्योतिश्शब्देन विष्णुरेवोच्यते । न त्वन्ये अग्निसूर्यादयः ।

"परंज्योतिः परंब्रह्म परमात्मादिका गिरः ।
सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन ॥" इति प्रमाणात् ॥

---

**अद्वैतम् अविभागेन दृष्टत्वाधिकरणम् । (१८६)**

**अविभागेन दृष्टत्वात् । (५३७)**

**ब्रह्मापृथक्भाव एव तत्त्वमस्यादि वाक्यतः ।**
**शुद्धोदके शुद्धजले तादृगेवेत्यतश्च सः ॥ ११९ ॥**

**अधिकरणार्थः** । 'स्वेन रूपेणाभिनिष्पद्यते' इति आत्मप्राप्तिः परस्मादात्मनः पृथगेव, उत अविभागेनैव अवतिष्ठतीति संशये 'तत्त्वमसि' (छा. ६-८-७) 'अहं ब्रह्मास्मि' (बृ. १-४-१०) 'यत्र नान्यत्पश्यति' (छा. ७-२४-१) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (बृ. ४-३-२३) 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' (कठ. ४-१५) इत्यादि श्रुतिभिः परमात्मना अविभागेनैव अवतिष्ठत इति प्रतीयते । भेदनिर्देशस्तु 'आत्मरतिः' 'आत्मक्रीडः' 'स्वे महिम्नि प्रतिष्ठितः' इत्यादिवत् अभेदेऽपि गौणप्रयोग इति ॥

---

## विशिष्टाद्वैतम् अविभागाधिकरणम् । (१५२)

### अविभागेन दृष्टत्वात् । (५२७)

**परमात्मशरीरस्सन् प्रत्यगात्मा परात्मना ।**
**अविभागेन साकं तद्गुणान् भुङ्क्ते प्रकारिणा ॥ १२० ॥**

**अधिकरणार्थः ।** मुक्तः स्वात्मानं ब्रह्मप्रकारतया ब्रह्माविभक्तं ब्रह्म तद्गुणादिकमनुभवति । 'तत्वमसि' 'सर्वं खल्विदं ब्रह्म' 'अन्तः प्रविष्टश्शास्ता जनानां' इत्यदि श्रुतिभिः 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रेण च मुक्तः ब्रह्मापृथक्भूतः ब्रह्मशरीरस्सन् ब्रह्म अनुभवतीति प्रतिपादितत्वात् । 'ब्रह्मणा सह विपश्चिता' इति श्रुतिस्तु पयसा सह ओदनं भुङ्क्ते इतिवत् भोग्यसाहित्यस्य ब्रह्मपर्यन्तत्वेऽपि सम्भवात् 'सह युक्तेऽप्रधाने' इति व्याकरणसूत्रेण ब्रह्मणः अप्राधान्यरूपदोषो न भवति ।

" श्रियः श्रीः श्रीरङ्गेशय तव च हृद्यां भगवतीं
श्रियं त्वत्तोप्युच्चैः वयमिह भणामः शृणुतराम् ।
दृशौ ते भूयास्तां सुखतरलतारे श्रवणतः
पुनर्हर्षोत्कर्षात् स्फुटतु भुजयोः कञ्चुकशतम् ॥ "
(श्रीगुणरत्नकोशे श्लो.-१.)

इति विष्णवपेक्षया लक्ष्म्याः उत्कृष्टवर्णने यथा न दोषः अपि तु उत्तमगुणायैवेति निर्णयः तद्वत् ब्रह्मापेक्षया ब्रह्मगुणानां उत्कृष्टवर्णने न दोषः अपि तु ब्रह्मगुणायैव भवतीति भावः ॥

---

## द्वैतम् अविभागाधिकरणम् । (२१६)

### ओं अविभागेन दृष्टत्वात् । (५४५)

**विष्णुना सह तत्रत्यान् भोगान् भुङ्क्ते स मुक्तिभाक् ।**
**परात्मना ये भुज्यन्ते भोगास्ते ज्ञानिनामपि ॥ १२१ ॥**

**अधिकरणार्थः** । मुक्तः स्वयोग्यतानुसारेण भगवद्भुक्त भोगवान् भवति

" मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित् ।
बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथञ्चन ॥ "

[तद्भोगान्=ईश्वरभोग्यान्, बहिष्ठान्=ईश्वरस्वरूपबहिर्भूतान्, आनन्दादीन्=ईश्वरस्वरूपानन्दादीन्, कथञ्चन=केनापि निमित्तेन, लेशतः=अविरोधेन-अनुभवन्ति ॥

---

### अद्वैतम् ब्राह्माधिकरणम् । (१८७)

**ब्राम्हेण जैमिनिरुपन्यासादिभ्यः ।** (५३८)
**चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ।** (५३९)
**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ।** (५४०)

**मुक्तोपहतपाप्मादिगुणवानाह जैमिनिः ।**
**चैतन्यमेवात्मरूपं तदैक्यं मुक्तिरित्यपि ॥ १२२ ॥**

**सगुणं निर्गुणं ब्रह्म बादरायण आह तत् ।**
**ब्राम्हैश्वर्याविरोधाय तदप्यस्तु न मुख्यतः ॥ १२३ ॥**

**अधिकरणार्थः** । स्वेन रूपेण आत्मा भवतीत्युक्तं पूर्वत्र । स एवात्र विशेषतः चिन्त्यते । 'य आत्मा अपहतपाप्मा सत्यकामस्सत्यसंङ्कल्पः' (छा. ८-७-१) 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः । (छा. ८-१२-३) इत्यादि श्रुतिभ्यः हेयप्रत्यनीककल्याणगुणविशिष्टरूपं ब्रह्म स्वयमपि अपहतपहत-पाप्मत्वादि सत्यकामत्वादि विशिष्टस्सन् अनुभवतीति जैमिनिर्मन्यते ।

'कृत्स्नः प्रज्ञानघन एव' इत्यादि श्रुतिभ्यः चैतन्यमात्रमेव ब्रह्म, तदैक्यमेव मुक्तिरिति औडुलोमिर्मन्यते ।

बादरायणस्तु उभयश्रुत्यविरोधाय व्यवहारापेक्षया सगुणब्रह्मप्राप्तिः, वस्तुतः निर्गुणब्रह्मैक्यमेव मुक्तिरिति मन्यते ॥

---

## विशिष्टाद्वैतम् ब्राह्माधिकरणम् । (१५३)

ब्राम्हेण जैमिनिरुपन्यासादिभ्यः । (५२८)
चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । (५२९)
एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः । (५३०)

ब्रह्म सम्पद्य मुक्तात्मा भाति ब्रह्मगुणान्वितः ।
औडुलोमिस्तु चिन्मात्रं तदैक्यं मुक्तिमब्रवीत् ॥ १२४ ॥

तुल्यप्रमाणवेदानामविरोधेन वर्णणात् ।
सगुणं ब्रह्म निर्वक्ति तच्छरीरमिदं जगत् ॥ १२५ ॥

विज्ञानघन एवेति स्वायोगाभावमाह हि ।
बहुप्रमाणानुगुण्यात् सगुणं ब्रह्म निश्चितम् ॥ १२६ ॥

निषेधश्रुतयश्चात्र प्राकृतार्थपरा इति ।
असकृत् पूर्वमुक्तं हि तस्मात् स ब्रह्मणा सह ॥ १२७ ॥

अश्नुते सत्यकामादि जुष्टो ब्रह्मगुणान् बहून् ।
अप्राकृते तु वैकुण्ठे परमे व्योम्नि सूरिभिः ॥ १२८ ॥

**अधिकरणार्थः ।** मुक्तात्मनः स्वस्वरूपाविर्भावः अपहतपाप्मत्वसत्यसङ्कल्पत्वादिविशिष्ट इति जैमिनेरभिप्रायः । 'स यथा सैन्धवघनोऽनन्तरोबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. ६-५-१३) इति श्रुत्या चैतन्यमात्रमेव ब्रह्मस्वरूपमित्यौडुलोमिमतम् ।

बादरायणस्तु निखिलहेयप्रत्यनीककल्याणैकतानत्वादिगुणयुक्तं ब्रह्म इति स्थापितत्वात् मुक्तोपि अपहतपाप्मत्वसत्यसङ्कल्पत्वादिविशिष्टस्सन् ब्रह्म अनुभवतीति मन्यते । विज्ञानघन एवेति तु स्वायोग्यव्यवच्छेदपर एव । यथा रसवत्सु आम्रफलादिषु त्वगादि प्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्र एकरसत्वं तथा आत्मनोपि सर्वत्र विज्ञानस्वरूपत्वमस्तीति नेतर सत्यकामत्वादिगुणसत्ताविरोधो न । सैन्धवघने सर्वत्र रसैक्येऽपि रूपकाठिन्यादिसद्भावाविरोधः । तद्वदित्यर्थः ॥

" यत्सामान्यविशेषवर्त्मसु गुणप्रत्यासविध्यात्मसु
त्रैय्यन्तेषु जनार्दनप्रणयिषु प्राबल्यदौर्बल्ययोः ।
प्रस्तावं प्रतिपेदिरे कतिचानापच्छेदनीतिच्छलात्
मीमांसापदवीपरिश्रमकथादूरेषु तच्छोभते ॥

" यद्ब्रह्मणो गुणविकारशरीरभेद-
कर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषयाः न विरोधगन्धं
अर्हन्ति तन्न विधयः प्रतिषेधबाध्याः ॥"

" अग्नीषोमीयहिंसा निजविधिविहिता किं निषिद्धा न हिंस्यात्
भूतानीत्येतयोक्त्या पशुपदविषयश्छाग एव न्यरूपि ।
'छागो वा मन्त्रवर्णादि'ति च तदुभयन्यायतो हेयधर्म-
क्षेपार्था निर्गुणोक्तिः श्रुतशुभगुणके निर्मले ब्रह्मणि स्यात् ॥"

इति सगुणनिर्गुणश्रुतीनामविरोधः पूर्वाचार्यैरेव वर्णितः । तथा 'अहं ब्रह्मास्मि' इत्यत्र अहं शब्देन जीवः 'पुरुष एवेदं सर्वं' इति पुरुषशब्दः परमात्मपर इति प्रसिद्धः ॥

'पुरुषाः पूरुषा नराः' इति कोशात् पुरुषशब्दस्य जीववाचितया प्रसिद्ध्याधिक्यात् जीवपरमात्मनोरभेद एव तात्पर्यं श्रुतीनामिति परमतयुक्तिनिराकरणाय पठितश्लोकः —

" किं जीवः पुरुषोक्तिगोचर इति श्रीशोपि तद्गोचरः
जीवस्स्याद्गिरिशो ध्रुवो भवति किं तौ स्थाणुसंज्ञाविति ।
तक्षत्वाय घटेत किं *मुखभुवामाचर्यसंशब्दनं
मण्डूकत्वमुपैति किं हरिपदस्स्पर्शेन कण्ठीरवः ॥"

---

* मुखभुवां=ब्राह्मणानां, " ब्राह्मणोऽस्य मुखमासीत् " इति श्रुतेः ।

## द्वैतम् ब्राह्माधिकरणम् । (२१७)

**ओं ब्राम्हेण जैमिनिरुपन्यासादिभ्यः । (५४६)**
**ओं चिति मात्रेण तदात्मकत्वादित्यौडुलोमिः । (५४७)**
**ओं एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः । (५४८)**

**ज्ञानी मुक्तो विष्णुदेहं लब्ध्वा तद्देहवानयम् ।**
**भुङ्क्ते भोगान् ज्ञानरूपो ज्ञानदेहीति कश्चन ॥ १२९ ॥**

**मर्त्याद्विमुक्तश्चिन्मात्री चिन्मात्रेन्द्रियवानपि ।**
**विष्णुं प्रविश्य भोगान् सः भुङ्क्ते स्वेष्टानुसारतः ॥१३०॥**

**अधिकरणार्थः ।** मुक्तः कर्मप्राप्तदेहपरित्यागेन ब्रह्मशरीरान्तर्गतस्सन् ब्रह्मणा सह भोगान् भुङ्क्ते । 'स वा एष ब्रह्मनिष्ठः इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसंपद्य ब्रह्मणा पश्यति, ब्रह्मणा श्रृणोति ब्रह्मणैवेदं सर्वमनुभवति' इति माध्यन्दिनायनश्रुतेः ।

" आदत्ते हरिहस्तेन हरिदृष्टैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥"

इति स्मृतेश्च । इति जैमिनिः ।

'सर्वं वा एतदचित् परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते' इत्यादि श्रुत्या मुक्तः चिन्मात्रदेही सन् भुङ्क्ते इत्यौडुलोमिः ।

बादरायणस्तु उभयमप्यविरोधेन ब्रवीति ।

" मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः ।
चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥"

" तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् ।
कुर्वन्ति भुञ्जते भोगान् तदन्तर्बहिरेव वा ।
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः ॥" इत्यादि प्रमाणात् ॥

---

## अद्वैतम् सङ्कल्पाधिकरणम् । (१८८)

सङ्कल्पादेव तु तच्छ्रुतेः । (५४१)

अत एव चानन्याधिपतिः । (५४२)

मुक्तात्मनस्तु सङ्कल्पात् पित्राद्याः प्रभवन्ति ते ।
साधनान्यनपेक्ष्यैव ततोनन्याधिपोऽभवत् ॥ १३१ ॥

यथाऽगस्त्यो योगशक्त्या समुद्रमपिबत्तथा ।
दण्डकारण्यमप्यत्र जनवासमचीक्लृपत् ॥ १३२ ॥

तद्वज्ज्ञानी स्वविद्यायाः माहात्म्यात् सृजति स्वयम् ।
तस्मादनन्यापेक्षस्सन् सृष्ट्वाऽनुभवति स्वयम् ॥ १३३ ॥

अधिकरणार्थः । 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा. ८-२-१) इत्यादि श्रुत्या मुक्तः स्वसङ्कल्पादेव निमित्तान्तरानपेक्षस्सन् यथा अगस्त्यः स्वयोगमहिम्ना समुद्रमपिबत् कस्यचित् शापात् प्राणिनिवासानर्हमपि दण्डकारण्यं जनवासार्हं कारयामास तद्वत् इच्छानुगुण्येन सर्वान् सृष्ट्वा अनुभवति विद्यामाहात्म्यात् । 'सर्वेषु लोकेषु कामचारो भवति' (छा. ८-१-६) इत्यादिकमुपपद्यते ॥

---

## विशिष्टाद्वैतम् सङ्कल्पाधिकरणम् । (१५४)

सङ्कल्पादेव तच्छ्रुतेः । (५३१)

अत एव चानन्याधिपतिः । (५३२)

सत्यकामादि मुक्तस्य बाह्ययत्नानपेक्षया ।
स्वीयसंकल्पमात्रात् स्यात् स स्वराडिति वेदतः ॥ १३४ ॥

व्यवच्छिनत्त्यन्ययोगं एवकारोत्र विश्रुतः ।
निषेधस्य विधेश्चायं नार्होनन्याधिपो यतः ॥ १३५ ॥

**अधिकरणार्थः** । मुक्तमधिकृत्य 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' (छा. ८-१२-१) इति । तत्र 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छा. ८-२-१) इत्यादि श्रुत्यनुसारेण प्रयत्नान्तरानपेक्षस्सन् स्वयमेव सृष्ट्वा अनुभवति विधिनिषेधानर्हस्सन् । सत्यसङ्कल्पत्वश्रुतेः 'स स्वराट् भवति' (छा. ७-२५-२) इत्यनन्याधिपत्वश्रवणात् च । 'सङ्कल्पादेव' इत्यवधारणं तु अत्र अन्ययोगव्यवच्छेदपरं । 'विज्ञानघन एव' इत्यत्रेव न अयोगव्यवच्छेदपरम् । इति ॥

---

## द्वैतम् सङ्कल्पाधिकरणम् । (२१८)

**ओं सङ्कल्पदेव च तच्छ्रुतेः । (५४९)**

**मुक्तानां भोगसंप्राप्तौ यत्नापेक्षा न विद्यते ।**
**सङ्कल्पादेव पितरः उत्तिष्ठन्तीति वेदतः ॥ १३६ ॥**

**अधिकरणार्थः** । मुक्तानां पित्रादिभोगप्राप्तौ निमित्तान्तरापेक्षा न । 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इति श्रुतेः ॥

---

## द्वैतम् अनन्याधिपत्याधिकरणम् । (२१९)

**ओं अत एव चानन्याधिपतिः । (५५०)**

**सङ्कल्पादेव मुक्तानां स्वोत्तमानां पतिर्न हि ।**
**लक्ष्म्याः परो विष्णुरेव तदन्येषां यथाश्रुति ॥ १३७ ॥**

**अधिकरणार्थः** । मुक्तः 'अहं इयतामेव नियतस्स्यां इति सङ्कल्पात अथवा, अयं अस्माकमेव नियतस्स्यात् इति उत्तमानां सङ्कल्पाद्वा अनन्याधिपतिर्भवति । स्वोत्तमेभ्यः अन्यनियामकरहितो भवति ।

* " परमोधिपतिस्तेषां विष्णुरेव न संशयः ।
ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ॥"

---

* परमः=मायाः, लक्ष्म्याः, परः=उत्कृष्टः । चतुर्मुखेतरेषां चतुर्मुखः उत्तमः, अन्ये सर्वे यथायोग्यं उत्तमाः । विष्णुरेव सर्वेषां उत्तम इति ॥

ततः प्राणादिनामान्ताः सर्वेपि पतयः क्रमात् ।
आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् ।
एतेभ्योन्यः पतिर्नैव मुक्तानां नात्र संशयः ॥"

---

### अद्वैतम् अभावाधिकरणम् । (१८९)

**अभावं बादरिराह्येवम् ।** (५४३)
**भावं जैमिनिर्विकल्पामननात् ।** (५४४)
**द्वादशाहवदुभयविधं बादरायणोऽतः ।** (५४५)
**तन्वभावे सन्ध्यवदुपपत्तेः ।** (५४६)
**भावे जाग्रद्वत् ।** (५४७)

**"मनसैतानि"ति श्रुत्या मुक्तस्याङ्गादयो न हि ।**
**"स एकधे"त्यादिना च सन्ति देहेन्द्रियादयः ॥ १३८ ॥**
**सत्यसंकल्पवेदेन द्वितयं शास्त्रचोदितम् ।**
**सन्ध्ये जागरिते यद्वत् भावाभावौ तनोस्स्मृतौ ॥ १३९ ॥**

**अधिकरणार्थः** । सगुणब्रह्मप्राप्तविदुषः मोक्षे शरीरेन्द्रियादीनि सन्ति वा नवेति विशये 'मनसैतान् कामान् पश्यन् रमते' (छा. ८-१२-५) इति श्रुतौ मनस एव स्थितिरुच्यते । न शरीरेन्द्रियादेरिति ज्ञायते । 'स एकधा भवति त्रिधा भवति' (छा. ७-२६-२) इति श्रुत्यन्यथानुपपत्त्या शरीरेन्द्रियादेरपि भावं जैमिनिः मन्यते । बादरायणः पुनः मुक्तः सत्यसङ्कल्पस्सन् स्वेच्छानुगुण्येन शरीरेन्द्रियादिकं सृष्ट्वा विहरति असृष्ट्वा वा । यथा द्वादशाहसंज्ञक यागः सत्रमपि भवति, अहीनश्च भवति । उभयलिङ्गश्रुत्यविरोधात् । यथा सन्ध्ये स्वप्नस्थाने शरीरेन्द्रियविषयेषु अविद्यमानेष्वपि उपलब्धिमात्राः पित्रादयो भवन्ति एवं मोक्षेपीति जागरितस्थलेऽपि विद्यमाना एव पित्रादिकामाः भवन्ति तथा मुक्तस्यापि शरीरेन्द्रियादिभावे तदभावे च उपपत्तिरिति भावः ॥

---

विशिष्टाद्वैतम् अभावाधिकरणम् । (१५५)

अभावं बादरिराह ह्येवम् । (५३३)
भावं जैमिनिर्विकल्पामननात् । (५३४)
द्वादशाहवदुभयविधं बादरायणोऽतः । (५३५)
तन्वभावे सन्ध्यवदुपपत्तेः । (५३६)
भावे जाग्रवत् । (५३७)
प्रदीपवदावेशस्तथा हि दर्शयति । (५३८)
स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि । (५३९)

कर्मसम्पाद्यदेहश्च निषेधविषयः श्रुतः ।
अप्राकृतानेकदेहसद्भावप्रतिबोधिकाः ॥ १४० ॥

श्रुतयस्सन्ति तस्माच्च विमुक्ता बहुदेहिनः ।
स्वसृष्टान् भगवत्सृष्टान् यथाकामं हि भुञ्जते ॥ १४१ ॥

**अधिकरणार्थः ।** मुक्तस्य देहेन्द्रियाणि न सन्तीति बादरिः । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' (छा. ८-१२-१) 'अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपद्य' (छा. ८-१२-१) इत्यादि श्रुत्या शरीराभावरूप मोक्षस्य कथनात् । 'स एकधा भवति त्रिधा भवति पञ्चधा' (छा. ७-२६-२) 'सत्यकामस्सत्यसंकल्पः' इत्यादि श्रुत्या शरीरेन्द्रियाणि सन्तीति जैमिनिः मन्यते । अशरीरत्वादि श्रुतयः कर्मकृतशरीरनिषेधपरा इति भावः ।

बादरायणस्तु सङ्कल्पभेदेन द्वादसाहः सत्रयागः अहीनयागश्च यथा वा भवति तथा मुक्तस्य स्वसङ्कल्पात् उभयमपि भवतीति मन्यते । शरीराद्युपकरणाभावे यथा स्वप्ने 'अथ रथान् रथयोगान् पथस्सृजते' (बृ. ६-३-१०) इत्यादि श्रुतिभ्यः जीवात्मा परमात्मसृष्टाननुभवति तथा मुक्तोपि मोक्षे ईश्वरसृष्टेन पित्रादिना लीलारसं भुङ्क्ते । शरीरेन्द्रियसद्भावे जाग्रद्दशायामिव यथा दशरथ वसुदेवादि पितृलोकादिकं आत्मनः सृष्ट्वा परमात्मा तैः यथा लीलारसं भुङ्क्ते

तथा मुक्तानां परमात्मा स्वलीलयैव पितृलोकादिकं स्वयमपि सृजति कदाचित् परमपुरुषसङ्कल्पाधीनसङ्कल्पवन्तः मुक्ताश्च स्वयमेव सृष्ट्वा अनुभवन्ति ।

अणुपरिमाणोप्यात्मा मुक्तस्सन् प्रदीप इव स्वप्रभया देशान्तरावेशं शरीरान्तर्वर्ती सन् स्वचैतन्यरूपप्रभया सर्वमनुभवति इति

"बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवस्य विज्ञेयस्स चानन्त्यय कल्पते ॥"

(श्वे. ५. अ. ९.) इति श्रुत्य असुक्तस्य कर्मनियामकं मुक्तस्य तु स्वेच्छयैवेति बोधनात् नाणुत्वविरोध इति । 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' (छा. ७-२६-२) इति जीवस्य मुक्तौ सर्वज्ञत्वमप्युच्यते । 'प्राज्ञेनात्मना संपरिष्वक्तः न बाह्यं किञ्चन वेद नान्तरं' (बृ. ६-३-२१) इति श्रुतिस्तु सुषुप्तिविषया न मोक्षगतजीवविषया इति न कश्चिद्विरोधः । इति ॥

---

## अद्वैतम् प्रदीपाधिकरणम् । (१९०)

**प्रदीपवदावेशस्तथाहि दर्शयति । (५४८)**
**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि । (५४९)**

**सृष्ट्वा बहूनि देहानि प्रविश्यामीषु दीपवत् ।**
**विकारशक्तियोगाच्च मुक्तो भुङ्क्ते स्वविद्यया ॥ १४२ ॥**

**सगुणब्रह्मनिष्ठस्य मुक्तावेतादृशी कथा ।**
**"यत्वस्ये"त्यादि वेदात् ब्रह्माभेदो हि तात्विकः ॥ १४३ ॥**

**अधिकरणार्थः ।** मुक्तस्य शरीरेन्द्रियादिसत्त्वे आत्ममनसोः भेदानुपपत्तेः एकेन शरीरेण आत्मनो योगः अन्यानि शरीराणि निरात्मकानि * दारुयन्त्राणीवेति पूर्वपक्षे यथा एक प्रदीपः अनेकप्रदीभावमापद्यते विकारशक्तियोगात् एवं एकोपि विद्वान् विद्यासामर्थ्यरूपैश्वर्ययोगात् सर्वाणि शरीराणि प्रविश्य अनुभवति । 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' (छा. ७-२६-२) इत्यादि श्रुतेः । इदं सर्वं सगुणब्रह्मविषयम् । 'एतेभ्यो

---

* यथा दारुयन्त्रं तत्प्रयोक्त्रा चेतनेनाधिष्ठितं सत् तदिच्छानुगुणं चलति तद्वत् ।

भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' (बृ. २-४-१४) 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयात्' (बृ. २ ४-१४) इत्यादि श्रुत्या मुक्तस्य चैतन्यमात्रावगतेः । 'ब्रम्हैव सन् ब्रह्माप्येति' (बृ. ४-४-६) 'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ. ४-३-३२) इत्यादि श्रुतिभ्यः अद्वैतमेव सिद्धयतीत्यसकृदुक्तत्वात् । इति ॥

---

द्वैतम् अभावाधिकरणम् । (२२०)

ओं अभावं बादरिराह ह्येवम् । (५५१)
ओं भावं जैमिनिर्विकल्पालम्नानात् । (५५२)
ओं द्वादशाहवदुभयविधं बादरायणोतः । (५५३)
ओं तन्वभावे संन्ध्यवदुपपत्तेः । (५५४)
ओं भावे जाग्रद्वत् । (५५५)
ओं प्रदीपवदावेशस्तथा हि दर्शयति । (५५६)
ओं स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि । (५५७)

चिन्मात्रमेव मुक्तानां देहो नान्य इति श्रुतेः ।
ज्योतिर्मयश्च देहोस्ति 'स वा एष' इति श्रुतेः ॥ १४४ ॥

ज्योतिर्मयश्च चिन्मात्रं द्वितीयं द्वादशाहवत् ।
स्वप्ने देहाद्यभावेऽपि भोजनाद्यनुभूतिवत् ॥ १४५ ॥

स्वप्नवत्तन्वभावे च ज्ञानमात्रानुभूतिवत् ।
दीपवच्च प्रविश्यायं देहं भुङ्क्ते सुखादिकम् ॥ १४६ ॥

यथा दीपस्तैलमेव गृह्णाति न तु कार्ष्ण्यताम् ।
सर्वान् शोकान् सतीर्णो हि तत्पुण्यफलमश्नुते ॥ १४७ ॥

न दुःखचिन्ता यत्कात्र सुप्तौ मोक्षे च तच्छ्रुतेः ।
विचारो युज्यतेऽत्रेति सर्वं युक्तं समीरितम् ॥ १४८ ॥

**अधिकरणार्थः** । मुक्तस्य चिन्मात्रदेहमाह बादरिः । जैमिनिः मुक्तस्य चिद्देहं अचिद्देहं वा आह । बादरायणस्तु क्रत्वात्मकसत्रात्मकद्वादशाहवत् उभयमप्याह । स्वप्ने देहं विना भोगः यथा वा दृष्टः तथैव मुक्तावपीति युक्तिः ।

"एवं मुक्तावपि भवेत् विना देहेन भोजनम् ।
स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवत् भुक्त्वा त्यागः कदाचन ॥"

इति ब्रह्मवैवर्तप्रमाणात् कदाचित् शरीरं स्वीकृत्य सुखादिकं भुक्त्वा शरीरं त्यजति । शरीरप्रवेशेऽपि पुण्यभोगमेव अनुभवति । न तु दुःखं । यथा दीपः दीपिकादिषु प्रविष्टः दीपिकास्थं तैलाद्यं गृह्णाति न तु तैलादिगतकार्ष्ण्यादि तद्वत् । 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' इति श्रुत्या मुक्तौ सर्वशोकात्तीर्णेन मुक्तेन दुःखं नानुभूयतेति । सुषुप्तौ मोक्षे च दुःखाभावश्रवणात् ।

"तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः ।
सर्वदोषनिवृत्तस्ते गुणमात्रस्वरूपिणः ॥"

इत्यादिवचनात् । 'अत्र पिताऽपिता भवति अनन्वागतं पुण्येन अनन्वागतं पापेन' इत्यादिश्रुतेश्च । इति ॥

---

**अद्वैतम् जगद्व्यापारवर्जाधिकरणम् । (१९१)**

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ।** (५५०)
**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ।** (५५१)
**विकारावर्ति च तथा हि स्थितिमाह ।** (५५२)
**दर्शयतश्चैवं प्रत्यक्षानुमाने ।** (५५३)
**भोगमात्रसाम्यलिङ्गाच्च ।** (५५४)
**अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ।** (५५५)

**मुक्तानां ब्रह्मणश्चापि समानासृष्टिरत्र न ।**
**जगत्सृष्टिः ब्रह्मणस्तु *तदन्येषु समानता ॥ १४९ ॥**
**भोगेन साम्यं मुक्तानां ईश्वरेणेति कथ्यते ।**
**तत्स्थानात् पुनरावृत्तिः न हि किन्तु तदत्यये ॥ १५० ॥**
**तदध्यक्षेण साकं ते साक्षान्मुक्तिमवाप्नुयुः ।**
**एतदेवात्र वेदान्ते वेद्यं निर्णीयते बुधैः ॥ १५१ ॥**

**अधिकरणार्थः ।** सगुणब्रह्मविद्यानिष्ठानां ब्रह्मप्राप्तौ "आप्नोति स्वाराज्यं" (तै. १-६-२) 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै. १-५-३) इत्यादि श्रुत्या निरङ्कुशैश्वर्यप्राप्तिरिति प्रप्ते जगदुत्पत्त्यादि व्यापारं विना ऐश्वर्य-प्राप्तिः। जगत्सृष्ट्यादिकं तु ब्रह्मण एव । स्वाराज्यप्राप्तिश्रुतिस्तु आधिकारिक-विषया । यथा ब्रह्मणः सगुणं निर्गुणं इति रूपद्वयं तत्र सगुणब्रह्मप्राप्तो सावग्रहैश्वर्यमेव मुक्तस्य श्रुतिस्मृतिभ्यां सगुणब्रह्मभोगसाम्यमेव प्रतीयते । अनावृत्तिस्तु 'तयोर्ध्वमायन्नमृतत्वमेति' (छा. ८-६-६) 'तेषां न पुनरावृत्तिः' (बृ. ६-२-१५) 'एतेन प्रतिपद्यमानाः इमं मानवमावर्तं नावर्तन्ते' (छा. ४-१५-६) 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा. ८-१५-१) इत्यादि श्रुतिभ्यः सगुणब्रह्मप्राप्तस्य

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इत्यादिशास्त्रात्

कार्यात्यये सति तदध्यक्षेण साकं पुनरावृत्त्यभावेन निर्गुणब्रह्मैक्यरूपा मुक्तिः भवतीति सिद्धान्तः ।

'तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् ।' 'ब्रह्मवेद ब्रह्मैव भवति' 'त्वं स्त्री त्वं पुमानसि' त्वं कुमार उत वा कुमारी, त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुखः' 'तत्वमसि' इत्यादि श्रुत्या जीवब्रह्माभेद-सिद्ध्या मुक्तौ ब्रह्माभेद एवेति सिद्धान्तः । सगुणब्रह्मशरणानामपि अनावृत्तिः

* तदन्येषु=अणिमाद्यैश्वर्येषु ।

'तत्त्वमसी'ति वाक्यजन्य सम्यग्दर्शनाश्रयणेनैव साधिता । न तु साक्षादिति सिद्धम् । सम्यग्दर्शिनां तु आवृत्तिशङ्कैव नेति कैमुतिकन्यायसिद्धा निर्गुण-ब्रह्मनिष्ठानां मुक्तिः । दह्रादिविद्यानिष्ठानामेव अनावृत्तिः श्रुतिषु सूत्रेषु च वर्णिता । तेषामेव हि कल्पान्तरेऽपि आवृत्तिशङ्का भवत्येव । तत्त्वमसीति शाब्दापरोक्षज्ञानवतां 'ब्रह्मवेद ब्रह्मैव भवति' इति ऐक्यसिद्धेः आवृत्तिशङ्कैव नेति भावः ।

हेयोपादेयमिश्रसगुणब्रह्मनिष्ठानामपि अनावृत्तिसिद्धौ हेयोपादेयरहितब्रह्म-निष्ठानां अनावृत्तिः किमु वाच्यमिति भावः ।

यद्यपि तत्र कल्याणगुणविशिष्टं ब्रह्मैव तथापि तत्र ज्ञातृत्वभोक्तृत्वादि सत्वात् हेयमिश्रमेव ॥

अत्रायं संग्रहः —'तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः' इत्यीशावास्ये । 'यो सावसौ पुरुषस्सोहमस्मि' इति च । 'न तत्र चक्षुर्गच्छति नो मनः न विद्मो न विजानीमो यथैतदनुशिष्यात् अन्यदेव तद्विदितात् अथोविदितादधि' इत्यारभ्य 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपसते' इत्यादि केनोपनिषदि । यथोदके शुद्धे शुद्धमुदकं असिक्तं तादृगेव भवति । ब्रह्मप्राप्तो विरजोभूद्वि-मृत्युः' इति च कठोपनिषदि । 'स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एव-मेवास्य परिद्रष्टुः इमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येव प्रोच्यते स एषोकलोमृतो भवति' इति प्रश्नोपनिषदि । 'ब्रह्मैवेदं विश्वमिदं वरिष्ठं निरञ्जनः परमं साम्यमुपैति ब्रह्म वेद ब्रह्मैव भवति' इति मुण्डकोपनिषदि । 'ऐकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यते स आत्मा विज्ञेयः । अमात्रोव्यवहार्यो प्रपञ्चोपशम-श्शिवोद्वैतः । प्रपञ्चं यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैत-मद्वैतं परमार्थः ।' इति माण्डूक्योपनिषदि । 'अभयं प्रतिष्ठां विन्दते अथ सोभयं गतो भवति स एकः स य एवं वित्' इति तैत्तिरीयके । 'सर्वान् कामानाप्त्वामृतरसमभवत्' इत्यैतरेयोपनिषदि । 'सदेव सोम्येदमग्र आसीत

एकमेवाद्वितीयं' 'तत्त्वमसीत्यावृत्तिः' 'तरति शोकमात्मवित्' इत्यादि छान्दोग्ये। 'सोबिभेत् तस्मादेकाकी बिभेति स ह अयं ईक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यत् द्वितीयाद्वै भयं भवतीति' 'तद्यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्' 'अहं ब्रह्मास्मीति' 'अथात आदेशो नेति नेति' 'विज्ञानघन एव एतेभ्यो भूतेभ्यो समुत्थाय तान्येवानु-विनश्यति न प्रेत्य संज्ञास्ति' इति । 'योयमात्मा इदममृतं इदं ब्रह्म इदं सर्वं' इत्यस्यावृत्तिः 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यारभ्य 'अयमात्मा सर्वानुभूः इत्यनुशासनं' इति ॥

'एष त आत्मा सान्तरः अतोन्यदार्तं' इत्यस्य आवृत्तिः विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः नरिष्यत्यभयं वै जनकः प्राप्तोसि ब्रह्मैव सन् ब्रह्माप्येति' 'अथ मर्त्योमृतो भवति अत्र ब्रह्म समश्नुते' 'मनसैवा-नुद्रष्टव्यं नेह नानास्ति किञ्चन' 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' 'स वा एष महाजन आत्मा अजरोमरोमृतोभयो ब्रह्म अभयं वै ब्रह्म भवति य एवं वेद' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यारभ्य 'याज्ञ-वल्क्यो विजहार' इत्यन्तं । 'यो सावसौ पुरुषः सोहमस्मि' 'एको देवः सर्व-भूतेषु गूढः' 'साक्षी चेता केवलो निर्गुणश्च' इत्यादि बृहदारण्यके । 'दग्धे-न्धनमिवानलं' 'परेऽव्यये सर्व एकी भवति' 'सोहमस्मि' 'अहं मनुरभवं' 'तमेवैकं जानथ अन्या वाचो विमुञ्चथ' 'ब्रह्मैव सन् ब्रह्माप्येति' 'द्वैतिनो-तथ्यवादिनः' 'अहं हरिस्सर्वमिदं जनार्दनः' इत्यादि बहुश्रुति इतिहासपुराणा-दिभ्यः आत्मनो अन्यस्य अभावश्रवणात् 'सत्यानृते मिथुनीकृत्य अथः प्रजाः प्रजायन्ते' 'तमसा गूढं' 'तुच्छेनाभ्वपिहितं' 'अनृतेन प्रत्यूढाः' नीहारेण प्रावृताः इत्यादि श्रुतिभ्यः अविद्यामिश्रितः आत्मैव प्रपञ्चात्मना अवभासत इति सम्यक् प्रतीतेः अविद्यानिवृत्तिरेव मुक्तिरिति सिद्धौ मुक्तौ स्वयंप्रकाशं ज्ञान-मेवावशिष्यत इति ज्ञानपर्यायात्मैक्यमेव मुक्तिरिति सिद्धान्तः । तादृश ज्ञानं च असंवेद्यमेव । वेद्यत्वाभ्युपगमे मन इन्द्रियविशिष्टदेहसद्भावो अभ्युपगन्त-व्यस्स्यात् । तथा सति 'न ह वै सशरीरस्य' इति श्रुतिविरोधस्यात् । अस्मिन् मते अशरीरस्यैव मोक्ष इति सिद्धान्तात् ।

अत एव भगवत्पादैरपि

"मृल्लोहविष्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा ।
उपायस्सोवताराय नास्ति भेदः कथञ्चन ॥"

इति सम्प्रदायकृद्गौडपादकारिका स्वसिद्धान्तानुगुण्याय अनूदिता । अस्य अर्थश्च 'मृत्तिकेत्येव सत्यं' 'लोह एव सत्यं' 'यथाग्नेः विष्फुलिङ्गाः व्युच्चरन्ति' इत्यादि श्रुतिभिः या सृष्टिः अन्यथान्यथा उच्यते तादृशप्रकारः निर्विशेष-ब्रह्मणि बुद्ध्युत्पादनाय उपायत्वेन कथ्यते । न ब्रह्मभिन्नं वस्त्वस्तीति । परमते मुक्तौ अप्राकृतानेकशरीरकल्पना सर्वविधतारतम्यादिकं । अस्माकं तु सकलश्रुत्यन्तमुख्यतात्पर्यं अद्वैत ब्रह्मण्येवेति सर्वं समीचीनम् ॥

आत्मैकत्वविबुद्धयेऽखिलमिदं स्वाध्यस्तनिर्वासने
सूत्रं चान्यदपि प्रवर्तत इति श्रुत्यैव विज्ञायते ।
शुद्धात्मग्रहणे विमूढमतयः तेषां च मुक्त्यै क्रमात्
सूत्राण्याह महर्षिरत्र सगुणे तात्पर्ययुक्तानि सः ॥

जगन्निदानं ब्रम्हेति काकवद्देशमवत् स्मृतम् ।
ज्ञाने ब्रह्मणि संभाते ह्यविद्या नश्यति स्वयम् ॥

ब्रह्मोपास्तिं क्वचन सगुणं ब्रह्म तत्प्राप्त्युपायान्
अङ्गीकुर्मस्तदपि विगुणं ब्रह्म चिन्मात्रमन्यत् ।
मुक्तिर्मायाविहतिरितिनो विश्वमायानिवृत्तिः
भूयश्चान्ते भवति परमं साम्यमैक्यं चिति स्यात् ॥

मुक्तौ भेदाभ्युपगमे संसृत्या तुल्य एव सः ।
"स स्वराट् भवती"त्युक्तेः जीवो ब्रह्मैव नेतरत् ॥

मुक्तानां ब्रह्मसाम्यं तरतमसहितं द्वैतिनः केचिदाहुः
नाजानन् तत्र हेतुं श्रुतिरपि परमं साम्यमेतीति वक्ति ।
मुक्तात्मा तु स्वराडित्यपि वदति तथा ब्रह्म चैवाहमस्मी-
त्यस्माद्भेदो न मुक्तौ श्रुतिषु च तदिहाद्वैतमेव प्रसिद्धम् ॥

**पादार्थसंग्रहः –**

समन्वयोविरोधश्च साधनं फलमेव च ।
अध्यायानां चतुर्णां च क्रमादर्थः प्रकीर्तितः ॥
स्पष्टास्पष्टब्रह्मलिङ्गवाक्ये पूर्वे विचारिते ।
निर्विशेषपरं वाक्यं तच्छायापरकं परे ॥
स्मृत्यरोधस्सांख्यरीतिभूतभोक्त्रविरोधिता ।
जीवसंसारविषये गत्यवस्थे विचारिते ॥
ज्ञानभेदः पुरुषार्थः तृतीये लक्षणे गतः ।
ज्ञानावृत्तिर्देवयानं तत्क्रमः फलमेव च ॥
पादैष्षोडशभिश्चात्र ब्रह्मसूत्रेषु चिन्तिताः ।

---

**विशिष्टाद्वैतम् जगद्व्यापारवर्जाधिकरणम् । (१५६)**

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । (५४०)**
**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः । (५४१)**
**विकारावर्ति च तथा हि स्थितिमाह । (५४२)**
**दर्शयतश्चैवं प्रत्यक्षानुमाने । (५४३)**
**भोगमात्रसाम्यलिङ्गाच्च । (५४४)**
**अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । (५४५)**

**विमुक्तो ब्रह्मणा तुल्यः जगत्सृष्टिं करोति सः ।**
**सृष्टिप्रकरणे विष्णोरीक्षणादि निगद्यते ॥ १५२ ॥**
**जगद्व्यापारवर्जं तत् ब्रह्मतुल्यं समीरितम् ।**
**आधिकारिकलोकाश्च तेषां सन्तीति विश्रुतम् ॥ १५३ ॥**
**सोऽश्नुते निखिलान् कामान् ब्रह्मणा सह भोग्यतः ।**
**साम्यमाप्य कदाचिच्च निवर्तेत न मुक्तिभाक् ॥ १५४ ॥**

**अधिकरणार्थः** । 'निरञ्जनः परमं साम्यमुपैति' (मु. ३-१-३) इति परमपुरुषेण परमसाम्यं प्राप्तस्य मुक्तस्य जगद्व्यापारादावपि कर्तृत्वं स्यादिति प्राप्ते सृष्टिप्रकरणे ब्रह्मण एव श्रुतत्वात् 'यतो वा इमानि भूतानि' (तै. भृगु. १-अनु) ब्रह्मलक्षणस्य मुक्तात्मनि अभावाच्च जगत्सृष्टि तत्पालन तन्नियमन-लक्ष्मीपतित्व-मोक्षप्रदत्वादिकं विहाय भगवत्साम्यं प्राप्नोति मुक्त इति । मुक्तौ परमसाम्यापत्तिश्रुतेश्च तद्भिन्नत्वे सति तदङ्गगत भूयोधर्मवत्त्वं सादृश्यमिति सर्वैरङ्गीकृतत्वात् तादृगेव भवति न तु तदेव भवतीत्यर्थाच्च नैक्यमर्थः अपि तु भगवत्सदृशरूपवन्त एवेत्यर्थ इति निश्चीयते । अत एव

"सायुज्यसाधर्म्यसमानधर्म साम्यादिशब्दाः परमं च साम्यम् ।
तादृक् तु स स्यादिति चास्ति मुक्तौ नैक्यं श्रुतावस्ति तथा स्मृतौ वा ॥
"भवत्समाप्राकृतदेहभाजः सशङ्खचक्रा नम उक्तिनिष्ठाः ।
विपश्चिताऽऽनन्दभुजस्त्वयाते मुक्ताभवद्दास्यरता भवन्ति ॥

इति मोक्षविषयः आभ्यां श्लोकाभ्यां श्रीशार्ङ्गपाणिस्तवे (१४५-१४६) वर्णितः ।

'तस्य सर्वेषु लोकेषु कामचारो भवति' (छा. ७-२५-२) इत्यादि श्रुत्या हिरण्यगर्भादिलोक तत्स्थभोगादिप्राप्तिश्च मुक्तस्य भवति । जन्मादिविकारावर्तित्वरूप निखिलहेयप्रत्यनीककल्याणैकताननिरतिशयानन्दं ब्रह्म अनुभूय वैकुण्ठे वर्तत मुक्त इति ।

एतत् पादार्थसंग्रहः —

वितमसिपदे लक्ष्मीकान्तं विचित्रविभूतिकं
सचिवगमितस्स्पध्याविर्भूवत् सहजाकृतिः ।
स्फुटतदपृथक्सिद्धिः सिद्ध्यद्गुणाष्टक तत्फलो
भजति परमं साम्यं भोगेनिवृत्तिकथोर्ङ्गितम् ॥ इति पूर्वाचार्यैरुक्तः ।

'रसो वै सः रसंह्येवायं लब्ध्वाऽऽनन्दी भवति' (तै. आन. ७-२-१) इत्यादिनोच्यते । श्रुतिस्मृतिभ्यां मुक्तस्य सत्यसंकल्पत्वं जगद्व्यापारवर्जं परमपुरुषसाम्यं च ज्ञायते । उपासनया अन्तिमशरीरं परित्यज्य देवयानेन वैकुण्ठं प्राप्तं स्वशरीरभूतं मुक्तात्मानं स्वेच्छया वा तदिच्छया वा येनकेनचित् कारणेन

वा पुनस्संसारपदवीं न प्रापयति । 'स खल्वेवं वर्तयम् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा. ८-१५-१) इत्यादिश्रुतेः ।

"मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति स्मृतेश्च ।

'अजायमानो बहुधा विजायते' इति श्रुत्या भगवतः स्वेच्छया भूमाववतारे तदिच्छानुगुणस्वेच्छया मुक्ता अपि अप्राकृतविग्रहेण अवतरेयुः । तादृशशरीरे दुःखादिसंभावना च नेतीति क्वचित् परब्रह्मणः मुक्तानां च भूम्यादौ आविर्भावेपि न दोष इति सर्वं समञ्जसम् ॥

अत्र 'तमः परे देवे एकी भवति', 'ब्रह्मैव भवति', 'परमं साम्यमुपैति' इत्यादि श्रुतिभिः आत्मैक्यमेव मोक्ष इति केचिदूचुः । तत्रैतत् समाधानम् 'विष्णुमुखा वै देवाः छन्दोभिरिमाल्लोकान् अनपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानः छन्दोभिरिमाल्लोकान् अनपजय्यमभिजयति' इति याजुषपञ्चमकाण्डद्वितीयप्रपाठकप्रथमानुवाकश्रुत विष्णुरेवेत्यत्र एवशब्दस्य सदृशार्थ एव दृष्टः । "वानराणां नराणां च कथमासीत् समागमः ।" इति हनूमन्तंप्रति सीतापृष्टस्य समागमशब्दस्य 'रामसुग्रीवयोरैक्यं देव्येवं समजायत ।' इति हनूमदुक्तप्रतिवचनस्थैक्यशब्दे उपसंहारात् एकशब्दस्य संसर्गो वा स्नेहो वा अर्थ इति तत्र निश्चीयते ।

" एकीभूय नृपास्सर्वे ववृषुः पाण्डवं शरैः ।
एकीभूता तु सा सेना पाण्डवानभ्यवर्तत ॥"

इत्यादि भारते एकशब्दस्य एकस्थाने वासः अत्यनुकूलचित्तता इत्यर्थः निश्चीयते । न तु स्वरूपैक्यमिति, अत्रापि ब्रह्मैवेति एवशब्दस्य ब्रह्मसदृश एव भोगादिना भवतीत्यर्थः । एकीभवतीति एकस्थाने वासः भगवत्सङ्कल्पानुगुण सङ्कल्पश्चार्थ इति न श्रुतिस्मृतिविरुद्ध इति सर्वं समीचीनमिति ॥

" श्रीमद्रामानुजमुनिमते श्रीनिवासाभिधानं
तत्वं नारायण इति जगौ साधनं *तत्प्रपत्तिः ।

* प्रपत्तिशब्देन भक्तिरप्युच्यते ।

वैकुण्ठाख्ये परमनिलये दास्य कर्मैव मोक्षः
जीवामूलप्रकृतिरुदिता विष्णुमूर्तिश्च सत्या ॥"

"स्वतन्त्राङ्गप्रपत्तिभ्यां प्रपन्नावत्र तावुभौ ।
फलसाधनभक्तिभ्यां भक्तावपि च दर्शितौ ॥"

इत्याचार्योक्त्या भक्तोऽपि अङ्गप्रपदननिष्ठ इति सिद्धान्तात् ।

श्रीमद्व्यासमहर्षिणा विरचित श्रीब्रह्मसूत्रान्तरे-
ष्वेकं चापि न निर्गुणं वदति तच्चाद्यन्तयोस्सूत्रयोः ।
अर्थालोचनया विशिष्टविषयब्रह्मैव पापठ्यते
ज्ञेयायोग्यतया पृथक्त्वविरहादित्येव सूत्रं पठेत् ॥

जिज्ञासानावृत्तिशब्दौ ब्रुवाते
ध्येयं ब्रह्म ब्रह्मलोकाच्च्युतिं च ।
मध्यस्थान्यप्येतदर्हान् गुणांश्च
ज्ञेयाभावे सर्वशास्त्रं निरर्थम् ॥

शार्ङ्गिन्! मतत्रितयसंग्रहनामकेस्मिन्
ग्रन्थे चतुर्थमपि लक्षणमाप पूर्तिम् ।
शारीरकार्थपरिनिष्ठितकोविदस्य
ब्रह्माप्तिरूपफलवर्गविचारनाम ॥

---

## द्वैतम् जगद्व्यापारवर्जाधिकरणम् । (२२१)

**ओं जगद्व्यापारवर्जम् ।** (५५८)
**ओं प्रकरणादसन्निहितत्वाच्च ।** (५५९)
**ओं प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ।** (५६०)
**ओं विकारावर्तिं च तथा हि दर्शयति ।** (५६१)

**जगत्सृष्ट्यादिकं हित्वा भोगान् भुङ्क्ते हि मुक्तिभाक् ।**
**जीवस्य शक्त्यभावाच भोगसाम्यश्रुतेरपि ॥ १५५ ॥**
**ब्रम्हैव सर्वं सृजति न मुक्त इति सिद्ध्यति ।**
**प्रत्यक्षं जगदैश्वर्यं श्रूयते मुक्तिगामिनः ॥ १५६ ॥**
**तदाधिकारिकाणां तु न सर्वेषामिति श्रुतम् ।**
**मुक्ताधिकारिकाणां न जगद्व्यापार इष्यते ॥ १५७ ॥**

**अधिकरणार्थः** । मुक्तः सर्वान् कामानाप्त्वा अमृतस्सन्नपि सृष्ट्यादि-व्यापारव्यतिरिक्तानेव भोगाननुभवति । जीवस्य सृष्टिसामर्थ्याभावात् । स्वयोग्यानन्दादिकमेवानुभवति कचित् मुक्तस्य जगदैश्वर्यं श्रुतमपि आधिकारिक-मण्डलाधिपति चतुर्मुखस्यैव तत् । पुनस्संसारप्रापकव्यापारः मुक्तस्य न । स्वयोग्यनियामकत्वं मुक्तस्यभवत्येवेति ।

" स्वाधिकानन्दसंप्राप्तौ सृष्ट्यादि व्यापृतिष्वपि ।
मुक्तानां नैव कामस्स्यादन्यान् कामांस्तु भुञ्जते ।
तद्योग्या यो नैव तेषां कदाचित् कापि विद्यते ।
न चायोग्यं विमुक्तोपि प्राप्नुयान्न च कामयेत् ॥
ओमित्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥" इत्यारभ्य
" क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानाः कर्मजाश्चैव तात्विकाश्च शचीपतिः ।
रुद्रो ब्रम्हेति क्रमशः तेषु चैवोत्तरोत्तराः ।
स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् ॥"

इत्यादि प्रमाणात् मुक्तः स्वयोग्यानन्दमेव प्रार्थयते । तदेव प्राप्नोति । न तु स्वोत्तमानन्दादिकमिति ज्ञायते । इति ॥

---

## द्वैतम् स्थित्यधिकरणम् । (२२२)

**ओं स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने । (५६२)**
**ओं भोगमात्रसाम्यलिङ्गाच्च । (५६३)**

**तत्रानन्दमुखानां च वृद्धिर्ह्रासो न विद्यते ।**
**श्रुतिस्मृती दर्शयतः भोगमात्रेण तुल्यताम् ॥ १५८ ॥**

**अधिकरणार्थः** । मुक्तस्य आनन्दादीनां वृद्धिर्ह्रासश्च न विद्यते । 'स एष एतस्मिन् ब्रह्मणि सम्पन्नः न जायते न म्रियते, न हीयते न वर्धते स्थित एव सर्वदा भवति, दर्शन्नेव ब्रह्म दर्शन्नेवात्मानं तस्यैवं दर्शयतो नापत्तिः न विपत्तिः' इत्यादि जाबालश्रुतेः ।

" यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न हीयते यत्र गत्वा यत्र गत्वा न वर्द्धते ॥"

इति मोक्षधर्मवचनाच्च । मोक्षेऽपि हरेरुपासना भवत्येव । अपि तु कस्यापि साधनभूता न । प्राप्तसिद्धिकत्वात् । मोक्षे आनन्दादीनां वृद्धिह्रासाभावेऽपि आनन्दादि भोगमात्रं भवत्येव ।

" कुत एव तु दुःखं स्यात् सुखमेव सदोदितम् ।
भोगानां तु विशेषे तु वैचित्र्यं लभते क्वचित् ॥" इति प्रमाणात्

मुक्तस्य क्वचित्काले भोगवैचित्र्यविशेषलाभोपि भवतीति ज्ञायते । इति ॥

---

## द्वैतम् अनावृत्त्यधिकरणम् । (२२३)

**ओं अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । (५६४)**

**मुक्तस्य पुनरावृत्तिः न कदापि भविष्यति ।**
**आवर्तते न च पुनः कामानाप्त्वाऽमृतो भवेत् ॥ १५९ ॥**

**अधिकरणार्थः** । 'न च पुनरावर्तते न च पुनरावर्तते सर्वान् कामानाप्त्वाऽमृतस्समभवत्' इत्यादि श्रुतिभ्यः मुक्तः स्वाभिमानिदेवतापरं पराद्वारा चतुर्मुखं प्राप्य तत्र चतुर्मुखोपदेशात् ज्ञानाधिकस्सन् तेन सह विष्णुं प्राप्य नित्यामृतः आनन्दी भवति । न पुनः संसारं प्राप्नोतीति सिद्धम् ।

मुक्तिर्ज्ञात्वापि विष्णुं स्यात् शास्त्रं श्रुत्वा ततोधिकम् ।
मुक्तौ सुखं तत्पठतः ततोप्यधिकमिष्यते ॥
व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोधिकं तु देवानां मुख्या व्याख्याकृतो यतः ॥" इत्यादि प्रमाणात्

मनुष्याणां मुक्तौ तारतम्यं ज्ञातव्यम् । इति ॥

**एतदध्यायसंग्रहरूपं अणुभाष्यं लिख्यते –**

" विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम् ।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ॥

प्रारब्धकर्मणोन्यस्य ज्ञानादेव परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥

उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगान् तदन्तर्बहिरेव वा ॥

वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात् सुराः ॥

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा नरोच्चाद्याः ब्रह्मलोकात् सहामुना ॥

यथा सङ्कल्पभोगाश्च चिदानन्दशरीरिणः ।
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ॥

यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् ।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ॥

दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ।
पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः ।
कृतोयं प्रियतां तेन परमात्मा रमापति ॥" इति ॥

परस्मादात्मानो जगति च यथा भिन्नतनवः
तथा मुक्तौ स्वीयां तनुमनुगता प्राप्तनिलयाः ।
यथाचर्या भक्त्योः तरतमविशेषौ प्रभवतः
तथाऽऽनन्दे मुक्ताः तरतमविशिष्टाः दिवि बभुः ॥

यो लक्ष्म्याः परमस्स एव परमो ब्रह्मात्र विष्णुस्स्मृतः
ब्रह्माद्या विबुधास्ततर्षिपितरः भूपा नृदैत्यादयः ।
भिन्नास्तत्पदपालनादिकरणे मोक्षे स्वयोग्ये हरिः
तेषां भक्त्यनुसारियोग्यफलमप्येभ्यो ददाति प्रभुः ॥

एतत् सिद्धान्तसंग्रहश्च पूर्वैरुक्तः ।

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत् तत्वतः
भिन्नाः जीवगणाः हरेरनुचराः नीचोच्चभावं गताः ।
मुक्तिः नैजसुखानुभूतिरतुला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणं अखिलाम्नायैकवेद्यो हरिः ॥ इति शं ॥

श्रीरामानुजशङ्करार्यरचितं भाष्यद्वयं चिन्तितं
श्रीमध्वार्यकृतं च भाष्यमितरत्तद्ग्रन्थजातं तथा ।
प्रीतैस्तैर्गुरुभिः कृपापरवशैः संप्रेरितोहं सतां
प्रीत्यै तन्मतसंग्रहं स्वकरवं श्लोकैश्च वाक्यैर्युतम् ॥

राहौ मेषं प्रयाते बुधयुतकटके सूर्यजीवाब्जसिंह्ने
भौमौ कीटं प्रयाते शनियुतधनुषि द्वन्द्वलग्ने सशुक्रे ।
पूर्वाख्यक्षे च शुक्लप्रतिपदि च शनौ वत्सरे श्रीमुखाख्ये
भारद्वाजस्य गोत्रेऽजनि विबुधवरो वङ्गिवंशे विशुद्धे ॥

द्वैताद्वैतविशिष्टरूपसुमतत्रय्यन्तसंवेदिना
**दानाध्यक्षपदस्थितेन** विदुषां वैदुष्यशाणात्मना ।
**रङ्गाचार्य**विपश्चिता विरचितः त्रय्यन्तभाष्यत्रय
प्रोक्तार्थस्य सुखग्रहाय लघुभिः श्लोकैश्च साराह्वयः ॥

विचिन्त्य भाष्यत्रितयं तत्सारोयं प्रदर्शितः ।
प्रीयतां मानृसिंहोयं अन्तर्यामी मुदान्वितः ॥

यं कैलासपतिं ब्रुवन्ति सुधियः तं शङ्करार्यं गुरुं
यं वायोरवतारमाहुरपरं मध्वार्यमन्यादृशम् ।
यं रामानुजसंयमीन्द्रमविदुः शेषावतारं च तं
सेवे यत्कृपया मया विलिखितः पूर्णोभवत् संग्रहः ॥

यो *नामद्वयवान् द्विजो भवति तं पूर्णर्द्धिमाह श्रुतिः
स्पष्टीकर्तुमिमां नु मे गुरुरदाद्विद्वन्मनोरञ्जनम् ।
विद्वन्मण्डलमण्डनाख्यविरुदं विज्ञातसर्वागमः
विद्यावारिधिनामकस्य तदहं लक्ष्मीनृसिंहं भजे ॥

श्रीमच्छ्रीशठजिद्यतीन्द्रगुरुराट्पादारविन्दाश्रयं
श्रीमच्छ्रीशठकोपलक्ष्मणमुनेर्लब्धागमान्तद्वयम् ।
श्रीमद्वीररघूद्वहाद्यशठजिन्न्यस्तात्मरक्षाभरं
श्रीश्रीवासशठारिसंयमिगुरुं कारुण्यपूर्णं भजे ॥

॥ इति मतत्रयसारसंग्रहे चतुर्थाध्याये चतुर्थः पादः ॥

इति भारद्वाजकुलतिलकानां नवसालपुराधीशविद्वत्सभाध्यक्षाणां दानाधिकारिणां
विद्वन्मण्डमण्डनाख्यविरुद विद्यावारिध्याख्यविरुदालंकृतानां
मतत्रयनिरूपकाणां कालि. वङ्गीपुरं. रङ्गाचार्याणां कृतिषु

॥ मतत्रयसारसंग्रहः संपूर्णः ॥

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

* तस्माद्विनामा ब्राह्मणोर्धुकः । इति यजुषि. ६-२-१.

கோவாபரேடிவ் பிரஸ், புதுக்கோட்டை.

॥ श्रीः ॥

## ॥ मतत्रयसारसंग्रहे अधिकरणानां सूची ॥







ऐक्यमुद्रालयम्, पूर्वराजवीथी, नवसालनगरी.

**एतैः कृताः ग्रन्थाः —**

| | | |
|---|---|---|
| १. | मतत्रयसारसंग्रहः | १२–०–०. |
| २. | सिद्धान्तत्रयब्रह्मसूत्राधिकरणार्थसंग्रहः | १–८–०. |
| ३. | लक्ष्मीनृसिंहस्तवः | ०–१–०. |
| | (उत्तरभागः) | ०–८–० |
| ४. | श्रीविण्णगराधीशस्तवः (उप्पिलियप्पन् कोविल्.) | ०–८–०. |
| ५. | श्रीशार्ङ्गपाणिस्तवः (कुम्भकोणस्थ आलयः) | ०-१२-०. |
| ६. | श्रीगोसखस्तवः ( तेरळुन्दूर् ) | ०–८–०. |
| ७. | काञ्चीकामकोटिपीठाधिपति ( 68-வது பட்டம் ) जगद्गुरुयतिराजनवति (कुम्भकोणस्थ मठाधिपति) | ०–८–०. |
| ८. | यतिराजशतकम् श्रीभाष्यकार रामानुजार्यस्तवः | १–०–०. |
| ९. | श्रीमध्वभाष्यस्थाथशब्दार्थविचारः | ०–८–०. |
| १०. | श्री अहोबिलमठाधिपति 38-வது பட்டம் आचार्यवैभवप्रकाशः | ०-१२-० |
| ११. | अद्वैत-विशिष्टाद्वैत-पूर्वपक्षसिद्धान्तसंग्रहः | ०–४–०. |
| १२. | रहस्यत्रयसारप्रमाणगाथासंग्रहः ( தமிழ் ) | ०–८–०. |

प्राप्यस्थानम् :—

नवसाल्नगरी,
२७-४-४४.

**वि. रङ्गाचार्यः, दानाधिकारी,**
अम्बाळ्पुरं अग्रहारम्,
पुदुक्कोट्टै.

